## । श्रीशः पायात् विज्ञप्तिः ।

नमः श्रीमन्मध्वपद्भ्यो व्यध्वोद्धारिभ्य ईतितः ॥ यस्य धूलिकणाघाताः संकराऽनुगमा गतिम् ॥ १ ॥

विदांकुर्वन्तु वेदान्तगन्तृशन्तनवो भवन्तो मन्तुक्षन्तवः संक्षेपतो विज्ञप्तिम् । आसीच्चेदमसदागमागम्यमानाम्नातं संकरीकृतवर्णाश्रमं द्विजातिजातादिमदेवशातशास्त्रभ चलातलम् तदानीमात्मभ्वादिभिर्भूभवनसत्त्वसदनुकम्पाकम्पितस्वान्तैः स्तुतः श्रीभगवानाज्ञापयामास स्वसमोपसंगतं समीरणमवतरोत्तारय सन्तः शातय मणिमदाद्यसच्छा स्त्राञ्छात्रादिभिर्विस्तारय सद्धर्ममित्याज्ञापित एव भास्वान्नभस्वानानन्दतीर्थ आन्दोलितसन्मुख आनन्देऽसन्मुखानि । एवमुज्जीर्णमानमागत आगमे तदवनायावनावव तारयामासानेकदानवारीन् । यथाच प्रकृतकृतिविषयीभूतादिदेववादिनो वादिराजयतयो येषामियं कृतिर्यच्छ्रीरुक्मिणीशविजयो विजयते ।

इमे च श्रीहयास्यप्रसादात् श्रीवागीशयतीशान्तेवासित्वेन श्रीशतत्त्वं सस्वान्तं प्रकाशितवन्तः । एतेनैते रुक्मिणीशविजयकाव्यस्य षट् शतं शरदाऽगमन्निति मानसे सं निद्यते केचनेमान्पुनराम्नायान्तं निर्णेतुं श्रीमदानन्दतीर्था एवाऽवतीर्णा वदन्तीति किंवदन्ती चाकर्ण्यते ।

एतत्कृतयो बहूनि काव्यान्याख्यायिकाः शास्त्रनिर्णयनिर्णीताः सुप्रणीताः । तत्रत्यमेकतममिदं श्रीरुक्मिणीशविजयाख्यं काव्यं साक्षान्मूर्तिमद्भिरिव शब्दकाव्यालंका रध्वनिप्रबन्धादिभिरलमलंकृतं वाचकानां मनो निःसंशयं समुत्पन्नशास्त्रनिर्णयज्ञानं भक्तिश्रद्धायितं करोति । तथैतद्व्याख्याकारेणापि पुराणेतिहासकोशादिप्रमाणैः सम्य ग्व्याख्यातम् । एतत्काव्यं पूर्वं कदापि न मुद्रितं नाऽत्राऽस्मदीयमहाराष्ट्रेषु विशेषतः प्रसिद्धम् । अतो विश्वेभ्य एतत्सुधालाभाय एतदङ्कनं कर्तुमिच्छुभी रामतत्त्वप्रकाशाधिप सावन्तोपाख्यरामचन्द्रतनूजनिभिः आबाजीरायैर्महता कष्टेन द्रव्यव्ययदानादिना च कथंचित्सर्गशः प्राप्तम् । तन्मिलित्वा सर्वं पुस्तकं संगम्याऽत्र मुम्बय्यामङ्कनाय प्रेषितम् । तदायथामति क्लिष्टलेखालापनेन संशोध्य संमुद्रितम । अत्र मुद्रणकाले मन्मित्रवे०केशवाचार्यैस्तथा मदनुजवासुदेवाचार्यैरतीव साहाय्यमापादितम् एवंमेतत्

सावन्तोऽपाभिधोऽबाजीरामचन्द्रतनूजनिः । रामतत्त्वप्रकाशाख्यमुद्रायन्त्राधिपः सुधीः ।
बेळग्रामनिवासी यस्तेनाहं प्रेरितो मुदा । अशोधयं रुक्मिणीशविजयं व्याख्यया युतम् ॥

इति । अत्रदृष्टिदोषादक्षरयोजकादिदोषाद्वा कुत्रचिदशुद्धमापतितं चेत्क्षमन्तां भवन्तो भवन्त इति प्रार्थये इत्यशेषमतिमङ्गलम् ।

वैराजस्थ एेनापुरेउपाख्यबाळाचार्यतनूज उद्धवाचार्यः।

श्रीः । अथ रुक्मिणीशविजयविषयानुक्रमणीनिदर्शनम्-



इति विषयानुक्रमणी

श्रीवेदव्यासाय नमः । श्रीमध्वगुरुभ्योनमः ॥ हरिः ॐ ॥ दशनमुखदंगोष्ठंयस्यसौंदर्यवल्लीकुसुमवदभिरामं पंचबाणान्विधाय ॥ धनुरपिरतिजानिर्भूलतांव
ल्लवीनांनिवहमजयदस्मान्पात्वसौ रुक्मिणीशः ॥ १ ॥ वैरोचनिंविगतमानमथांडभंगं कृत्वासुधानिधिललामजटाजलौघम् ॥ योजीजनच्छिवविरिंचर
मावरार्च्यःपादःसदामुदमसौप्रददातुविष्णोः ॥ २ ॥ व्यासतापसपादाब्जंदोषावस्थाविवर्जितम् ॥ दासालिसेव्यंमत्स्वांतकासारेवर्ततांसदा ॥ ३ ॥ गंभीरचिज्ज
लोपेतंदुष्कृतक्षालनक्षमम् ॥ आनंदतीर्थदुग्धाब्धिंभजेहंबुद्धिशुद्धये ॥ ४ ॥ तपोविद्याविरक्त्यादिसद्गुणौघाकरानहम् ॥ वादिराजगुरून्वंदेहयपीवदयाश्रयान्
॥ ५ ॥ चित्रालंकाररम्याम्रुदुपदविलसन्नर्मगंभीरभावा सत्सर्गाश्चर्यबंधानवरसभरितास्तुल्यसंस्थानयुक्ता ॥ काव्यश्रीराविरासीद्यदमलहृदयाच्छ्रीपतेर्यत्र
वासः सोव्याच्छ्रीवादिराजामृतमयजलधिर्युक्तिरत्नाकरोनः ॥ ६ ॥ श्रीवादिराजयोगींद्ररचितंरसवत्तरम् ॥ गंभीरमर्थतःकाव्यंव्याकुर्वेहंयथामति ॥ ७ ॥
वादिराजोक्तिचातुर्यमशक्यंज्ञातुमंजसा ॥ तथापिवक्ष्येतच्छिक्षामनुसृत्यापिलेशतः ॥ ८ ॥ इहकविकुलाग्रगण्योवादिराजमुनीरुक्मिणीशविजयाख्यका
व्यंचिकीर्षुः प्रारिप्सितस्यकाव्यस्यनिर्विघ्नेनपरिसमाप्त्यर्थंप्रचयगमनार्थंचआशीर्नमस्क्रियावस्तुनिर्देशोवापितन्मुखमितिशास्त्रात्प्रबंधमुखलक्षणमाशीर्वादरू
पमंगलमाचरति । श्रीवेदांतेति । अत्र श्रीशब्दः पूज्यतावचनः श्रीवेदांताः वेदांताः उपनिषदएवमहाचलोमंदरपर्वतः तं परितः समंतात् अनित्यत्वलक्षणच
लनाभावादारण्यकत्वाद्वावेदांतानांमहाचलत्वोक्तिः । अभितःपरितइत्यादिनाद्वितीया । सूत्राहिपं सूत्राण्येवअहिपः सर्पश्रेष्ठः वासुकिरित्यर्थः । समुद्रमथन
समयेऽहिपस्यसूत्रात्मकत्वेनशब्दसाम्यात्सूत्राणामहिपत्वोक्तिः अहिवत्प्रतिवादिभयंकरत्वाद्वा । कीदृशंसूत्राहिपं सद्वातागमपोषितात्महृदयं सन्नुत्तमोवातः
सद्वातः मुख्यप्राणइत्यर्थः । सच्छब्दउत्तमंब्रूयादितिवचनात् । तस्यागमः शास्त्रंभाष्यादि । आगमस्त्वागमेशास्त्रेइत्यभिधानात् । तेनपोषितंआत्महृदयमाकूतंय
स्यसतथोक्तः । आकूतंहृदयेचित्तेइतिरत्नमाला । पूर्णबोधकृतभाष्यादिशास्त्रेणापव्याख्याननिरासपूर्वकंसूत्रार्थेप्रतिपादितेसूत्राभिप्रायः पुष्टोभवतीतिभावः ।
अहिपपक्षेसन्विषौषधिसंपर्कशून्योवातोवायुः सर्पस्यविषस्याबाधकत्वेपिविषांतरस्यानिष्टत्वादितिभावः तस्यागमः प्राप्तिस्तेनपोषितात्महृदयः पुष्टचेताः अ
हेः पवनाशित्वादितिभावः । एतादृशंसूत्राहिपं संयोज्य सम्यक्संबंधंकृत्वा प्रतिवाक्यंविचारंकृत्वेत्यर्थः । अन्यत्र परितोवेष्टनंकृत्वाकिंचिन्न्यूनतायांमथना
संभवादितिभावः । तत्पूर्वपक्षासुरैः तेषांसूत्राणांपूर्वपक्षाख्यदैत्यैर्दुष्टत्वान्मुखग्राहित्वादितिभावः । सिद्धांतोक्तिसुरेश्वरैश्चसिद्धांतेसिद्धांतांशेयाउक्तयस्ताएवसुरे

श्वराः देवश्रेष्ठानिर्दुष्टत्वात्पुच्छग्राहित्वादितिभावः । तैश्चमथितोविचारितः अन्यत्रालोडितः । गुणोद्यन्मणिः गुणाज्ञानानंदादयएव उद्यंतःप्रकाशमाना मण
योरत्नानि यस्यसतथोक्तः । रत्नंमणिर्द्वयोरश्मजातौमुक्तादिकेष्वपीत्यमरः । सच्छास्त्रेणब्रह्मविचारेसतिब्रह्मणोगुणपूर्णतासिध्यतीतिभावः । अन्यत्ररत्नाकरइ
त्यर्थः । एतादृशः कृष्णदुग्धांबुधिः कृष्णाख्यक्षीरसमुद्रः स्वीयानांभक्तानाममृतंमोक्षं अन्यत्रसुधांप्रयच्छतिददाति । संप्रदानविवक्षाभावान्नचतुर्थी । हिशब्दे
नकृष्णस्यमोक्षप्रदातृत्वंप्रसिद्धमितिद्योतयति । कृष्णदुग्धांबुधिर्मांपायाद्रक्षतादितियोजना । यथाक्षीरसमुद्रः मंदरंमंथानंवासुकिंचसूत्रंकृत्वादेवासुरैर्मथितः स्व
स्यवरुणत्वेनस्वकीयदेवानांपीयूषंप्रयच्छतितथाकृष्णोपिब्रह्मसूत्रनिर्णीतार्थवेदांतैरधिकारिभिः पूर्वपक्षसिद्धांतैश्चचर्चापूर्वकंविचारितोमोक्षंददातीतिसमुदायार्थः ।
अत्रकृष्णदुग्धांबुधिरित्यनेनकृष्णस्यकाव्यनायकत्वंउदधित्वनिरूपणेनतस्यगंभीरत्वंगुणोद्यन्मणिरित्यनेनगुणोत्तरत्वंचद्योत्यते । तेन इदंकाव्यंनकर्तव्यं का
व्यालापांश्चवर्जयेदितिस्मृत्यानिषिद्धत्वात् प्रयोजनाभावाच्चनखलुकाव्यकरणेकिमपिप्रयोजनमस्तिइतिशंकानिरस्ताभवति । तथाहिउत्तमनायकगुणकीर्त

**श्रीवेदव्यासाय नमः ॥ श्रीवेदांतमहाचलं हि परितः संयोज्य सूत्राहिपं सद्वातागमपोषितात्महृदयं तत्पूर्वपक्षासु
रैः॥ सिद्धांतोक्तिसुरेश्वरैश्च मथितो यः कृष्णदुग्धांबुधिः स्वीयानामममृतं प्रयच्छति स मां पायाद्गुणोद्यन्मणिः॥ १ ॥**

नस्य तस्माद्भारतसर्वात्माभगवान्हरिरीश्वरः श्रोतव्यःकीर्तितव्यश्चमंतव्यश्चेच्छताभयमितिस्मृत्याविहितत्वात् तदकर्तुः कउत्तमश्लोकगुणानुवादात्पुमान्विरज्ये
तविनातिमुग्धादितिभागवतेमिथ्याज्ञानित्वकथनेनविनोक्त्याअशोभनत्वकथनेनतस्यनिंदितत्वात् । कवेरल्पापिवाग्वृत्तिर्विद्वत्कर्णावतंसिनी नायकोयदिवर्ण्येत
लोकोत्तरगुणोत्तरइतिआलंकारिकैरप्युक्तत्वात् । निषेधशास्त्रस्यासत्काव्यविषयत्वात् । भगवद्गुणवर्णनात्मकंकाव्यंकर्तव्यं नापिप्रयोजनाभावः एतत्काव्येप्र
वृत्तस्यभगवन्महिमानुसंधानेनभगवतिभक्त्युदयात् । तथाकैवल्यलक्षणमुख्यफलस्यभगवद्गुणश्रवणेनपापपरिहारस्यशब्दार्थचमत्कारदर्शनेनसंतोषातिशयस्य
काव्यंयशसेर्थकृतेइत्यलंकारशास्त्रोक्तावांतरप्रयोजनस्यचसत्त्वात् एतदेवाभिप्रेत्यसर्गावसाने रोम्णांहर्षणकारिणीत्यादिवक्ष्यति । अतएवचादौशुभफलप्रदभूदेव
ताकगुरुवर्णत्रयात्मकमगणप्रयोगः कृतः । तदुक्तं शुभदोमोभूमिमयः सर्वगुर्मइतिच । अत्र संयोगःसर्वथात्याज्योवर्णानांकवितामुखइतित्याज्यत्वेनोक्तसंयुक्ता

क्षरप्रयोगोनदोषाय श्रीशब्दस्यमंगलार्थत्वात् तदुक्तं । देवतावाचकाःशब्दायेचभद्रादिवाचकाः तेसर्वेनैवनिंद्याःस्युर्वर्णतोगणतोपिवेति । अत्रोपमेयेकृष्णेउपमानस्यक्षीरसमुद्रस्यगांभीर्यादिसाधर्म्यात्क्षीरसमुद्रत्वाभिप्रायेणोपमाविषयभेदतिरोधानात् रूपकमलंकारः । तदुक्तं उपमैवतिरोभूतभेदारूपकमिष्यतइति । सद्रातागमेत्यादेःश्लिष्टत्वात् श्लिष्टपरंपरितं इदंचरूपकंनिरवयवंसावयवंपरंपरितंचेतित्रिविधं तत्राद्यकंकेवलंमालारूपकंचेतिद्विविधं द्वितीयंसमस्तवस्तुविषयमेकदेशविषयंचेतिद्विधा तृतीयंश्लिष्टाश्लिष्टशब्दनिबंधनत्वेनद्विविधंसत्प्रत्येकंकेवलमालारूपकत्वेनचतुर्विधं इत्यष्टौरूपकभेदाः लक्षणोदाहरणानिग्रंथविस्तरभियानात्रलिख्यंते । अस्मिन्नानावृत्तानि । लक्षणंतुतत्तच्छ्लोकव्याख्यानावसानेवक्ष्यते । श्लोकेस्मिन्शार्दूलविक्रीडितंवृत्तं सूर्याश्वैर्मसजाःस्ततः सगुरवः शार्दूलविक्रीडितमित्युक्तत्वात् ॥ १ ॥ विघ्नबाहुल्यशंकयास्वोपास्यदेवताकाव्यनायकीस्वाचार्यवाग्देवताभजनादिरूपमंगलानिकरोति सच्छास्त्रेत्यादिताटंकद्वये

**सच्छास्त्रोदितवर्त्मना पदमिदं ध्यायन्मदंकांकितो मन्मंत्रं जप शास्त्रसंपदमथो दास्यामि भाग्यैः सह ॥**
**तत्तत्त्वान्यपि बोधयामि तदनु प्राप्यो मदंघ्रिर्भवेदित्याघोषयतीव यः करचयैस्तं वाजिवक्त्रं भजे ॥ २ ॥**

स्यतैःपंचभिःश्लोकैः । सच्छास्त्रेति । सतानिर्दुष्टेनानर्थत्वादिदोषशून्येनोत्तममार्गप्रतिपादकत्वादुत्तमेनचसच्छास्त्रेणोपदिष्टंवर्त्ममार्गःतेनसच्छास्त्रोक्तप्रकारेणेत्यर्थः । मदंकांकितो मदंकाःशंखचक्रादिचिह्नानि ।उत्संगचिह्नयोरंकइत्यमरः तैरंकितश्चिह्नितःसन् । धृतोर्ध्वपुंड्रःश्रुतचक्रधारीविष्णुंपरंध्यायतियोमहात्मेतिश्रुतेः । इदंपदंपादंइत्यंगुल्यानिर्देशः । पदंव्याजांघ्रितच्चिह्नत्राणस्थानांशुलक्ष्मस्वितिभास्करः । ध्यायन्ध्यानंकुर्वन् मन्मंत्रंमत्प्रतिपादकप्रणवहयग्रीवादिमंत्रं । जपआवर्त्तिंकुरु । ध्यानपूर्वकजपस्यमहाफलहेतुत्वादितिभावः । अनंतरंशास्त्रसंपदंशास्त्राख्यायासंपत्तांभाग्यैर्धनादिसंपत्तिभिःसहदास्यामि । तदनुतदनंतरंतत्तत्वान्यपिप्रोक्तस्यशास्त्रस्यतत्त्वान्यपिअधीतार्थानपिबोधयामि । अपिशब्दःसमुच्चये । ततोमदंघ्रिःप्राप्योभवेत् मत्पदप्राप्तिलक्षणोमोक्षोभवेदित्यर्थः । इतिकरचयैःशंखाक्षमालापुस्तकज्ञानमुद्रासमेतैः । हस्तसमूहैः बलिहस्तांशवःकराइत्यमरः । चयःसमूहेप्राकारमूलेबंधेर्थसंग्रहइतिरत्नमाला । अधोमुखकनिष्ठांगुलियुक्तहस्तेनसच्छास्त्रोदितवर्त्मनापदमिदंध्यायन्नित्यस्यार्थः । शंखजपमालाहस्ताभ्यां मदंकांकितोमन्मंत्रंजपेत्यस्यार्थः । पुनःपुस्तकशंखहस्ताभ्यांशास्त्रसंपदंभाग्यैःस

हृदास्यामीत्यर्थः । शंखोनिधौचजलजेइत्यभिधानात्तद्युक्तहस्तस्यभाग्यसूचकत्वमुपपद्यते पुनर्ज्ञानमुद्रायुक्तहस्ताधोमुखकनिष्ठांगुलियुक्तहस्ताभ्यांतत्त्वा न्यपिबोधयामीत्यस्यार्थःसूचितः । वीरासनोपविष्टस्यदेवस्यपादाभिमुख्येनपुस्तकहस्तकनिष्ठांगुलेनखनितत्वान्मदंघ्रिःप्राप्योभवेदित्यर्थस्यसूचकत्वमुपपद्य ते पुनःशंखहस्तेनाघोषणंचसूचितमितिज्ञातव्यम् । एतेनहयग्रीवमूर्त्तेःसंस्थानविशेषोवर्णितोभवति योवाजिवक्त्रः एतादृशैःकरचयैरिममर्थमाघोषयतीव य थालोकेकश्चित्करपल्लवाभिज्ञःपुरुषःविवक्षितमर्थंहस्तव्यापारादिनादर्शयतितद्वदितिभावः तंवाजिवक्त्रंवाजिनोश्वस्यवक्त्रमिववक्त्रंयस्येतिसतथोक्तः तंभजेसेवे उत्तमपुरुषप्रयोगादस्मच्छब्दप्रयोगोध्याहार्यः । अत्रक्रियासंगतेवकारस्योत्प्रेक्षाव्यंजकत्वादुत्प्रेक्षालंकारः । तदुक्तं इवशब्दःक्रियायोगेउत्प्रेक्षाव्यंजकइ ति । यथार्थस्यान्यथाक्लृप्तिरुत्प्रेक्षासाभिधीयतेइत्युक्तेः । शंखादिधारणस्यप्रयोजनमुत्प्रेक्षतइतिफलोत्प्रेक्षेयम् । वृत्तंशार्दूलविक्रीडितं लक्षणंतूक्तमेव ॥ २ ॥ श्रयइति । सरागयोगिपूगोक्तस्तोत्रतोत्रवशं । सरागाअनुरागसहिताः । रागोनुरागेमात्सर्येइतिरत्नमाला । तेचयोगिनस्तपस्विनः । तपस्वीसंयमीयोगीतिधनं

## श्रये हयमुखं श्राव्यकाव्यमार्गसमाप्तये ॥ सरागयोगिपूगोक्तस्तोत्रतोत्रवशं महः ॥ ३ ॥

जयः । तेषांपूगोगणः । पूगस्तुक्रमुकेगणेइतिरत्नमाला । तेनोक्तंस्तोत्रंस्तुतिस्तदेवतोत्रंकशा । प्राजनंतोदनंतोत्रमित्यमरः । तद्वशंतदधीनम् । अनेनहय ग्रीवस्यभक्तवात्सल्यमुक्तंभवति । हयमुखंहयवदनाख्यंमहस्तेजः । कांत्युत्सवौतुमहसीइतिरत्नमाला । श्राव्यकाव्यमार्गसमाप्तये श्राव्योरमणीयोयःकाव्य मार्गस्तस्यसमाप्तयेसमाप्त्यर्थं । तादर्थ्येचतुर्थी । श्राव्येत्यनेनश्रवणयोग्यताप्रतीत्यामार्गस्यानभ्यस्तत्वंगम्यते । श्रयेआश्रयेभजामीत्यर्थः । यथालोकोनभ्य स्तमार्गगमनायपरिचयवंतमश्वंवशीकृत्यमध्येश्रमजनितालस्यांधकारयोर्विच्छेदायदीपिकांचश्रयतेतद्वदितिभावः । हयमुखस्यतेजोरूपत्वात्तदाश्रयणेनोभ यकार्यसिद्धिरितिज्ञातव्यम् । परिणामालंकारः । अत्रश्राव्यकाव्यरागपूगस्तोत्रतोत्रेत्यादौवर्णावृत्त्यावृत्त्यनुप्रासाख्यःशब्दालंकारश्च वर्णानामनेकधासादृश्य मनुप्रासः अयंचच्छेकवृत्तिलाटभेदेनत्रिविधः । वृत्तिर्नामरसविशेषविषयोव्यापारः । तद्वतीपुनर्वर्णरचनावृत्तिः साचपरुषकोमलमध्यवर्णारब्धत्वात्त्रिविधा । तदुपलक्षितवृत्त्यनुप्रासोपित्रिविधः । उदाहरणान्युत्तरत्रप्रदर्शयिष्यामः । वृत्तंतुपथ्यावक्त्रं युजोर्जेनसरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितमित्युक्तत्वात् ॥ ३ ॥

त्सरोवरमिवतस्यमध्येवर्त्ततइतिसत्संघमानससरोवरमध्यवर्ती। अन्यत्रसतांस्नानार्थमागतानामृषीणांसंघोयस्मिन्मानसाख्यसरोवरेतस्यमध्यवर्तीकृष्णस्यहरेरंघ्री चारुकमलेइवतत्रअर्पिताचित्तस्यचेतसोवृत्तिर्वर्त्तनंयेनसतथोक्तः शास्त्रस्यस्वरचितभाष्यादिशास्त्रस्यातिमंजूनिअत्यंतमनोहराणि कांतंमनोहरंरम्यंमनोज्ञंमंजु मंजुलमित्यमरः पदानिसुप्तिङंतरूपाणितैरंजितावशीकृतेत्यर्थः। रम्यारमणीयासंसत्सभायेनसतथोक्तः। सभासमितिसंसदइत्यमरः। रम्येत्यनेनसभायायोग्यत्वं गम्यतेअन्यथारंजनायोगात् एकस्यविश्वशब्दस्यशतार्थकथनेनसभांरंजितवानितिप्राचीनकथा अन्यत्रशास्त्रवत् अतिमंजूनिमनोज्ञानिपदानिगमनानि पदश ब्देनतज्जन्यगतयोलक्ष्यंते तैरंजितारम्यारसिकासंसद्येनसः स्वगतरक्तिम्नातिमंजूनिचरणानि। राजहंसास्तुतेचंचुचरणैर्लोहितैःसिताइत्यमरः। तैरंजितारम्यासं सद्येनेतिवा सप्रसिद्धोमध्वहंसः मध्वाख्योराजहंसः आस्माकहृत्सरसिजे अस्माकमिदमास्माकं युष्मदस्मदोरन्यतरस्यामितिविकल्पादणप्रत्ययः तस्मिन्नणि चयुष्माकास्माकावित्यास्माकादेशः आस्माकंचतद्धृच्चेत्यास्माकहृत्तत्रयत्सरसिजंतदेवसरसिजमितिवा तस्मिन्अस्तु अस्मद्ध्यानगोचरोभवत्वित्यर्थः प्रार्थ

**ताटंकद्वयशोभिकर्णयुगलं भ्राजद्दयावीक्षणं पूर्णेंदुद्युतिविद्रुमाधररुचा व्यामिश्रमंदस्मितम् ॥ ईष**
**त्कुंचितकुंतलं सतिलकं नासोल्लसन्मौक्तिकं भूयात्कूर्मसदृक्षगंडयुगलं वाणीमुखं श्रेयसे ॥ ६ ॥**

नायांलोट् सरोजासक्तचेतसोहंसस्यसरोजएवावस्थितिरस्तु चित्तेतिभावः श्लिष्टपरंपरितंरूपकमलंकारः वसंततिलकावृत्तं उक्तावसंततिलकातभजाजगौगइ त्युक्तेः ॥ ५ ॥ ताटंकेति ताटंकद्वयेनकर्णपत्रद्वयेनशोभिनोःकर्णयोःश्रोत्रयोर्युगलंयस्यतत्तथोक्तम्। भ्राजन्मनोहरंदययाकृपयायुक्तंवीक्षणंअवलोकनंयस्य तत् कृपादयानुकंपास्यादित्यमरः पूर्णेंदोःपूर्णचंद्रस्यद्युतिरिवद्युतिःकांतिर्यस्यतत्तथोक्तं।शोभाकांतिर्द्युतिश्छविरित्यमरः।विद्रुमवत्प्रवालवत् प्रवालंविद्रुमंस्त्रिया मित्यमरः। योधरोष्ठःओष्ठाधरौतुरदनच्छदौदशनवाससीइत्यमरः।तस्यरुचाकांत्याव्यामिश्रंमिश्रितंमंदस्मितंअल्पहसनंयस्यतत् ईषत्किंचिदग्रभागेकुंचितावक्री भूताः कुंतलाअलकाः यस्यतत् तिलकेनविशेषकेणसहितं तमालपत्रतिलकचित्रकाणिविशेषकमित्यमरः। नासायांनासिकायां घोणानासाचनासिकेत्यमरः ॥ ३ ॥
उल्लसत्प्रकाशमानंमौक्तिकाभरणंयस्यतत् कूर्मस्यकमठस्यसदृक्षंसदृशंगंडयुगलंकपोलयुग्मंयस्यतत् अधस्ताच्चुबुकंगंडकपोलौतत्परोहनुरित्यमरः वाणीमुखं

सिंजन्नूपुरेति । सिंजद्भ्यांध्वनद्भ्यांनूपुराभ्यांपादांगदाभ्यां । पादांगदंतुलाकोटिर्मंजीरोनूपुरोस्त्रियामित्यमरः । शोभिनौपादौकमलेइवेत्युपमितसमासः ।शोभिनौपादकमलेयस्याःसा तां मंदस्मितेनाल्पहासेनउद्यच्छोभमानंमुखंयस्याःसा ।स्वांगाच्चोपसर्जनादित्यादिनाङीष् । कुचयोस्तनयोर्भारेण । भारोभरेवीवधेचपलानांद्विसहस्रक इतिरत्नमाला । भीरुरिवभीरु कृशमित्यर्थः । विलसन्मध्यंयस्याः । क्वणतीकंकणेकरभूषणेयस्याःसा । कंकणंकरभूषणमित्यमरः । शंभुर्ब्रह्मा शंभूब्रह्मत्रिलोचनावित्यमरः सआद्यः प्रभृतिरेषांतैर्देवैः परिसेवितांनिरंतरंपूजितां । सुमनोहरंवसनंअंशुकंयस्याःसा । चैलंवसनमंशुकमित्यमरः । जांबूनदेनसुवर्णेनरुक्मंकार्तस्वरंजांबूनदमष्टापदोस्त्रियामित्यमरः । अलंकृतांभूषितांअंबांमातरं अंबामाताथबालास्यादित्यमरः । लंबालंबमानाअलकाश्चूर्णकुंतलायस्याःसाअ

सिंजन्नूपुरशोभिपादकमलां मंदस्मितोद्यन्मुखीं कंजाक्षीं कुचभारभीरुविलसन्मध्यां क्वणत्कंकणाम् ॥
शंभ्वाद्यैः परिसेवितां सुवसनां जांबूनदालंकृतामंबां तां प्रणतोस्मि कृष्णरमणीं लंबालकां रुक्मि
णीम् ॥ ४ ॥ सत्संघमानससरोवरमध्यवर्ती कृष्णांघ्रिचारुकमलार्पितचित्तवृत्तिः ॥ शास्त्रातिमंजुपदरं
जितरम्यसंसदास्माकहृत्सरसिजेस्तु स मध्वहंसः ॥ ५ ॥

लकाश्चूर्णकुंतलाइत्यमरः । कृष्णरमणींकृष्णस्यप्रियां । टिड्ढाणञित्यादिनाङीप् ।रुक्मिणींप्रणतोस्मि नमनस्यभक्तिश्रद्धातिशयपूर्वकत्वद्योतनायप्रेत्युपसर्गः अनेनरुक्मिण्याः सामान्यतः पादादिवर्णनंकृतंभवति । स्वभावोक्तिरलंकारः । यद्यद्वस्तुयथावस्थंतथातद्रूपवर्णनं स्वभावोक्तिरितिख्यातासैवजातिरितीर्यतइत्युक्तत्वात् । अत्रमाधुर्यसौकुमार्यौदार्यादिगुणयोगित्वाद्वैदर्भीरीतिः तदुक्तं सरसौयत्रशब्दार्थौमाधुर्यंश्रुतिमोदकृत् अनिष्ठुरैःश्रुतिसुखैर्वर्णैःस्यात्सुकुमारता । शब्दार्थयोर्गुणोत्कर्षोयत्रसास्यादुदारतेत्यादि एतैःसमग्रावैदर्भीवर्ण्यतेदशभिर्गुणैरिति एवमन्यत्रापिद्रष्टव्यम् । शार्दूलविक्रीडितम् ॥ ४ ॥ सदिति सतांमात्सर्यादिदोषरहितानांहरिभक्त्यादिगुणयुक्तानांवा सद्भावेसाधुभावेचेतिस्मृतेः संघः संघसार्थौतुजंतुभिरित्यमरः । तस्यमानसंमनः स्वांतंहृन्मानसंमनइत्यमरः त

वाण्याःसरस्वत्यामुखंवंदनंकर्तुं श्रेयसेविद्यासंपत्तयेनिःश्रेयसायचभूयात् आशीर्लिङि आशीरलंकारः अत्रद्राक्षापाकः अर्थगंभीरिमापाकः सद्विविधः द्राक्षापाकोनारीकेलपाकश्चेति । द्राक्षापाकः सविज्ञेयोबहिरंतः स्फुरेद्रसइत्युक्तत्वात् ॥ ६ ॥ चिकीर्षितंप्रतिजानीते श्रीनाथेति । श्रीनाथस्यलक्ष्मीपरिवृढस्य नाथःपरिवृढःप्रभुरित्यमरः । कीर्तिर्यशः महिमेत्यर्थः सैवांबुजंपुंडरीकं तस्यसेव्योभजनीयोगंधएकदेशआमोदश्च गंधोगंधकसंबंधामोदलेशस्मयेषुचेतिरत्नमाला । महिमैकदेशमित्यर्थः । तं स उत्तमाधिकारित्वेनप्रसिद्धोमुखवायुरेव सर्वंवाक्यंसावधारणमितिन्यायात् संगृह्यसम्यगुपादायज्ञात्वेत्यर्थः । स्वयोग्यहरिमहिमविषये मुख्यप्राणस्याज्ञानाद्यभावंसूचयितुंसमित्युपसर्गः विहर्तुंरंतुमीष्टेसमर्थोभवति कमलामोदमुपादायसंचरणेवायुरेवसमर्थोभवतीतिध्वनितोर्थः । उत्तमाधिकारिणो मुख्यप्राणस्यापिहरिमहिमैकदेशज्ञानंकिलकिमधमाधिकारिणामितिगंधपदप्रयोक्तुर्हृदयं । तर्हितूष्णींस्थातव्यमित्यतआह सोहमिति सोहमधमाधिकारित्वे

**श्रीनाथकीर्त्यंबुजसेव्यगंधं प्राणः स संगृह्य विहर्त्तुमीष्टे ॥ सोहं तदीयागमविस्तृतं तद्वाणीमुखं वासयितुं वृणोमि ॥ ७ ॥**

**हयास्यनासापुटजातवातविघातधूताघपलालजातः ॥ मुनीशवागीशसुतः सुरम्यां हरेः कथां शंसति वादिराजः ॥ ८ ॥**

नप्रसिद्धोप्यहंतदीयागमविस्तृतंतदीयेनमुख्यप्राणसंबंधिनाआगमेनशास्त्रेणविस्तृतंप्रकटीकृतमित्यर्थः तत्कीर्त्यंबुजसेव्यगंधं वाणीमुखं वाण्यावाचः मुखं वासयितुंपरिमलीकर्तुंवाक्शुद्ध्यर्थमित्यर्थः यथाविलासीकश्चित्पुरुषः कस्तूर्यादिपरिमलद्रव्यंविलासिनीमुखवासनार्थंसंगृह्णातितद्वदितिभावः वृणोमिवर्णयामि कृष्णमहिमवर्णनात्मकंकाव्यंकरोमीत्यर्थः यथावातानभिमुखस्यवायुनानीयमानकमलपरिमलानुभवस्यदुर्लभत्वेपितदभिमुखस्यसुलभत्वं तथाचार्यमतविमुखानामन्येषांहरिमहिमज्ञानंदुर्लभमप्याचार्यमतानुवर्तिनोममसुलभमितिभावः । रूपकपरंपरितंपर्यायोक्तमलंकारः पर्यायोक्तंतुगम्यस्यवचोभंग्यंतरेणयदित्युक्तत्वात् । इंद्रवज्रावृत्तं स्यादिंद्रवज्रायदितौजगौगइत्युक्तत्वात् ॥ ७ ॥ स्वस्यकाव्यकरणेप्रतिबंधाभावंसूचयन्नाह हयास्येति हयास्यहृद्गतस्य अश्वजात्यनुसारेणश्वसतोहयवदनस्य वाचोबभूवुरुशतीःश्वसतोस्यनस्तइतिस्मृतेः नासापुटान्नासिकारंध्राज्जातस्यवातस्यवायोर्विघातेनविघट्टनेनधूतानिकं

पितानिविनष्टानीत्यर्थः अघान्येवपापान्येवपलालानिनिष्फलतृणानिशुष्कतृणानीत्यर्थः । नालीनालंचकांडोस्यपलालोस्त्रीसनिष्फलइत्यमरः तेषांजातःस मूहोयस्यसतथोक्तः मुनीशोज्ञानिश्रेष्ठोवागीशोवागीशाख्योयतिस्तस्यसुतःशिष्यः सुरम्यामतिरमणीयांहरेःकृष्णस्यकथांचरित्रंकथयतिकाव्यमुखेनवर्णय ति अत्रहयास्यनासापुटजातवातविघातधूताघपलालजातइत्यनेनकाव्यकरणेप्रतिबंधकीभूतदुरितध्वंसः हयास्यनासापुटजातवातेत्यनेनदुरितध्वंसस्यापिह यास्यतज्जन्यमुख्यप्राणानुग्रहजन्यत्वं अघानांपलालत्वोक्त्याहरिमुख्यप्राणानुग्रहपात्रस्यदुरितनिराकरणंतृणप्रायं वादिराजइत्यनेनस्वस्यकाव्यकरणशक्तिः वागीशसुतइत्यनेनएतत्सर्वंस्वोपदेष्टृगुरुप्रसादायत्तं यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ तस्यैतेकथिताह्यर्थाइतिआचार्यवान्पुरुषोवेदेतिश्रुतेः।सुरम्यांकथामित्यने नकथायारमणीयत्वोक्त्यातत्कथनेऔत्सुक्यंच।शंसतीतिप्रथमपुरुषप्रयोगेणकाव्यकर्तृत्वंपरमात्मनएवमुख्यमितिद्योत्यते पदार्थीभूतदुरितध्वंसस्यहरिकथाक थनेहेतुत्वात् ।पदार्थहेतुकंकाव्यलिंगमलंकारः वृत्त्यनुप्रासाख्यशब्दालंकारश्च अनुप्रासालंकारोस्मिन्काव्येप्रायिकः गौडीरीतिःसमस्तामुद्भटपदामोजःकांतिस

## अपंडितेनापि मयार्जितेयं मुकुंदलीला कविकंठमाला॥ अकौशलेन ग्रथितेति जातिप्रसूनमालां किमु संत्यजंति॥९॥

मन्वितां महाप्राणाक्षरवतींगौडीमाहुर्बुधाइत्युक्तेः । उपेंद्रवज्रावृत्तं उपेंद्रवज्राजतजास्तुगोगइत्युक्तत्वात् ॥ ८ ॥ इदानींगर्वपरिहारायाह अपंडितेनेति । अपंडि तेनापिअप्राज्ञेनापि । धीरोमनीषीज्ञःप्राज्ञः संख्यावान्पंडितःकविरित्यमरः । मयाआर्जिता उपार्जिताकाव्यमुखेनवर्णितेत्यर्थः इयंबुद्धिस्थितत्वेन संनिहितामु कुंदस्यमोक्षप्रदस्यहरेर्लीलाविलासः।लीलाकेलीविलासश्चेतिभास्करः।हरिविलासवर्णनात्मकंकाव्यमित्यर्थः । कवीनांकंठमालाकंठभूषणंभवतु अस्मत्कृताव कौशल्येपिकवयोहरिकथात्वेनात्रादरंकुर्वंत्वित्यर्थः । अत्रनिदर्शनमाह अकौशलेनेति । नविद्यतेकौशलं चातुर्यंयस्यसतथोक्तः तेनग्रथितानिबद्धेतिकृत्वा जा तिप्रसूनमालांजातीकुसुममालां।प्रसूनंकुसुमंसुममित्यमरः।विदग्धाःसंत्यजंतिकिमु मालाकारस्याचातुर्येपिकुसुमेषुजातीकुसुमस्यश्रैष्ठ्यात्तत्प्रसूनलोभात्तत्प्रसू नमालांप्रतिगृह्णंत्वित्येवेत्यर्थः । निदर्शनमलंकारः तदुक्तं अर्थांतरमुपेतस्याकिंचित्तत्सदृशंयदि सदसद्वानिदृश्येतनिदर्शनमिदंस्मृतमिति । उपेंद्रवज्रा ॥ ९ ॥

नन्वपंडितकृतौदोषस्यसंभाविता... थं ...ादेयत्वमित्यतआह अपीति। हेबुधाः कोविदाः।सन्सुधीःकोविदोबुधइत्यमरः।प्रमादेनअनवधानतया प्रमादोनवधान तेत्यमरः आगतःप्राप्तोदोषःशब्दार्थनिष्ठोयस्याः तामपिइमांचिकीर्षितत्वेनबुद्धिसंनिहितांकवित्वश्रियंकवितासंपदंआद्रियध्वंउपादध्वं। कवित्वश्रियमित्यनेनक वित्वस्यबहुगुणयुक्तत्वसूचनेनएकोहिदोषोगुणसंनिपातेनिमज्जतीतिन्यायात्स्वल्पोदोषोनादरणीयइतिकवेर्भावः। अत्रनिदर्शनमाह पयोब्धिजाक्षीरसागरजन्या लक्ष्मीःचंचलताख्यदोषात् चांचल्यलक्षणदोषात् नश्रीरेकत्रतिष्ठतीतिप्रसिद्धेः विदग्धैः प्रौढैः उपेक्षणीयाकिं उपेक्षार्हाकिं नोपेक्ष्येत्यर्थः इवशब्दंविहायकेव लंदृष्टांतमात्रनिदर्शनात् निदर्शनमलंकारः ॥ १० ॥ कृतकाव्यपीठरचनः कथांप्रवयति। असंख्येति। इयंधराभूमिः धरावसुंधराधात्रीतिधनंजयः। नवि

अपि प्रमादागतदोषलेशामिमां कवित्वश्रियमाद्रियध्वम् ॥ बुधा विदग्धैः किमुपेक्षणीया पयोब्धिजा चंचलताख्यदोषात् ॥ १० ॥ असंख्यपापाचलकोटिभाजां दितेः सुतानां वशमागतेयम् ॥ असह्यभारा र्दितसर्वगात्री जगाम धात्री शरणं विरिंचम् ॥ ११ ॥ मुकुंदविद्वेषिभराभिनुन्ना बभूव सा क्षांतियुतापि खिन्ना ॥ तथा हि लोके पतिनिंदकेभ्यः पतिव्रतानामपरः क्व भारः ॥ १२ ॥

द्यतेसंख्यागणनायासांताः। पापान्येवअचलाः पर्वताः दुर्भरत्वात्पापानामचलत्वोक्तिः तेषांकोटयः संख्याविशेषाः प्रकर्षाश्चअसंख्याश्चताःपापाचलकोट यश्चताभजंतीत्यसंख्यपापाचलकोटिभाजःतेषां दितेःसुतानांदैत्यानांवश...गगताअतएवासह्यभारेणअर्दितंव्यथितंसर्वंसमस्तंगात्रंशरीरंयस्याः। अंगगात्रकंठेभ्य श्चेतिङीष्। गात्रंवपुःसंहननंशरीरंवर्ष्मविग्रहइत्यमरः। पापिष्ठत्वाद्दैत्यानांभारमसहमानासतीत्यर्थः विरिंचंब्रह्माणंशरणंरक्षकंजगाम शरणंगृहरक्षित्रोरित्यमरः अनुप्रासालंकारः॥ ११ ॥ मुकुंदविद्वेषित्वाद्दैत्यानांभूभारत्वंहार्दंलोकनीत्याउपपादयन्नाह मुकुंदेति। साभूः क्षांत्याक्षमयायुतापिसर्वंसहापीत्यर्थः मुकुंदविद्वेषि णांविष्णुद्वेषिणांदैत्यानांभरेणाभिनुन्नाविशीर्णाअतएवखिन्नादुःखिताबभूव इममर्थमर्थांतरन्यासेनद्रढयति। तथाहीति तद्युक्तंहि लोकेपतिव्रतानांसाध्वीनां

सतीसाध्वीपतिव्रतेत्यमरः।स्त्रीणांपतिनिंदकेभ्यः स्वपतीनांदूषकेभ्यः।कर्तरिचेतिषष्ठीसमासनिषेधस्यतत्प्रयोजकोहेतुश्चेतिसौत्रप्रयोगादनित्यत्वात्पतिनिंदकेभ्यइ त्यत्रषष्ठीसमासःसाधुः । अपरः अन्योभारः कुतः पतिव्रतानांपतिनिंदकाएवभारभूताइत्यर्थः भूमेरपिविष्णुपत्नीत्वाद्विष्णुद्वेषिणःपतिद्वेषित्वेनभारभूताइतिलौ किकं अतएवलोकइत्युक्तं आंतरंतुमुकुंदाभिधपरमपुरुषविद्वेषित्वेनदैत्यानांभूभारत्वमितिद्रष्टव्यं अतएवमुकुंदविद्वेषिभरेणेत्युक्तं अनुप्रासालंकारः ॥ १२ ॥

॥ ५ ॥

गौर्भूत्वाश्रुमुखीखिन्नेत्यादौभूमेर्गोरूपंधृत्वादैन्यमवलंब्यविष्णुसमीपगमनेनिमित्तमुत्प्रेक्षयन्नाह निशम्येति । मुकुंदंकृष्णंशरणंव्रजंतीसाधरातंमुकुंदंगोब्राह्म णमुख्यबंधुमनिमित्तबंधुं गोब्राह्मणहितायचेतिस्मृतेः निशम्यश्रुत्वाप्रथमोल्लंघनेकारणाभावात्गोरूपधराबभूव दीनानाथसमुद्धरणमितितन्नामसुपाठात् आ र्तभारापहंआर्तानांदीनानांभारापहंदुःखापहंनिशम्यदीनाचखिन्नाचबभूव ध्रुवंनिश्चयः ध्रुवमित्यस्योत्प्रेक्षाव्यंजकत्वाद्बभूवेतितिङंतपदस्यअनेकत्रसंबंधाद्दी

निशम्य गोब्राह्मणमुख्यबंधुं ध्रुवं मुकुंदं शरणं व्रजंती॥ बभूव गोरूपधरा धरा सा तमार्तभारापहरं च दीना ॥१३॥
विरिंचवैरिंचिमुखामरेशाः स्वपारतंत्र्यं भुवि दर्शयंतः ॥ हरिं धराकार्यकृते गृणंतः पुरान्निरीयुर्हृदि संस्मरंतः ॥ १४ ॥
सुरावली सा श्रुतिवर्ण्यवेषा नभस्तले नष्टतमिस्रजाले ॥ ययौ यतींद्रैरपि यत्नगम्यां पयोब्धिवेलां पतदूर्मिमालाम् ॥१५॥

पकोत्प्रेक्षयोःसंकरः ॥ १३ ॥ भूम्यागमनानंतरंब्रह्मादिभिः किंकृतमित्यतआह विरिंचेति । विरिंचोब्रह्मा विरिंचस्यापत्यंपुमान्वैरिंचिःशिवः तौमुखेमुख्यौये षांतेविरिंचवैरिंचमुखाः मुखंप्रधानेप्रारंभेवक्त्रेनिःसरणेपिचेतिरत्नमाला तेचतेअमरेशाः देवश्रेष्ठाः स्वपारतंत्र्यंपराधीनतांभुविजनान्प्रतिदर्शयंतः। कथंदर्शयंतः धराकार्यकृतेभूप्रयोजनार्थं अव्ययमेतत् हरिंदुःखहरणसमर्थंगृणंतःस्तुवंतः हृदिहृदयेतंहरिंस्मरंतः पुरान्निरीयुर्निर्जग्मुः भारजनितखेदपरिहारायस्वसमीपमाग तायाःधरायाःप्रयोजनार्थंस्वस्वपुरादन्यत्रनिर्गमनेनस्वेषांपारतंत्र्यंदर्शितंभवतीतिभावः अत्रस्तुवंतःस्मरंतोनिरीयुरित्यनेनविष्णुक्षेत्रयात्रायास्तत्स्तोत्रपाठतत्स्मर णपूर्वककर्तव्यत्वंध्वनितं अनुप्रासालंकारः ॥ १४ ॥ सुरावलीति । श्रुतिभिर्वेदैः श्रुतिःस्त्रीवेदआम्नायइत्यमरः वर्ण्योवेषः सहस्राक्षत्वाद्याकारोयस्याः

॥ ५ ॥

सासुरावलीसुराणांसमूहःनष्टतमिस्रजालेविनष्टांधकारगणे। जालंजालकइत्येतौगवाक्षानाययोर्गणइतिरत्नमाला। अनेनदेवतानांतेजोरूपत्वंगम्यते नभस्तले गगनतले। नभोंतरिक्षंगगनमित्यमरः।यतींद्रैरपिनिर्जितेंद्रियैर्योगिभिरपि। येनिर्जितेंद्रियग्रामायतिनोयतयश्चतइत्यमरः।यमनियमादिप्रयत्नवद्भिरितिवा।यतीप्रयत्ने इतिधातोः। तैरपियत्नगम्यांतपश्चरणादिप्राप्यांमुक्तस्थानत्वादितिभावः। पततांऊर्मीणांतरंगाणां।भंगस्तरंगऊर्मिर्वास्त्रियामित्यमरः।मालापङ्क्तिः यस्यांसा मालानूनतभूर्मालापङ्क्तौपुष्पादिदामनीतिभास्करः। पयोब्धिवेलांक्षीरसमुद्रतीरं वेलाब्धितीराभिवृद्ध्योःकालमर्यादयोरपीतिभास्करः। ययौप्राप। अनुप्रासालंकारः ॥ १५ ॥ ततइति ततःसमुद्रगमनानंतरंअब्जभूःअब्जात्भवतीत्यब्जभूरब्जंकमलंभूरुत्पत्तिस्थानंयस्येतिवाअब्जभूर्ब्रह्माक्षीरपयोधितीरेसमाधिंचित्तैकाग्र्यंआस्थायआधायसुष्ठुसंयतानिअक्षीणिइंद्रियाणियेनसतथोक्तः।अक्षमिंद्रियमक्षोनारथांगव्यवहारयोरितिभास्करः। स्थिरंदृढमासनंपद्माख्यंयस्यसतथो

ततोऽब्जभूः क्षीरपयोधितीरे समाधिमास्थाय सुसंयताक्षः ॥ स्थिरासनः प्राणगणान्नियम्य प्रचक्रमे प्रांजलिरात्मदीक्षाम् ॥ १६ ॥ यदा स पद्मासनसंस्थितोऽलं जजाप विद्यामितरैरवेद्याम् ॥ तदाप्रभृत्येव जगत्सु नूनं बभूव पद्मासनशब्दितोऽसौ ॥ १७ ॥ ॥ ७ ॥ ॥ ७ ॥

क्तःसन्प्राणगणान्श्वासोच्छ्वासान्नियम्यप्राणायामंकृत्वेत्यर्थः प्रांजलिर्निबद्धांजलिपुटःसन्आत्मदीक्षांआत्मनःपरमात्मनोविष्णोः दत्तंदुर्वाससंसोममात्मेशब्रह्मसंभवानितिभागवतेआत्मशब्दस्यविष्णौप्रयोगात्दीक्षांपूजांनियमंप्रचक्रमेउपक्रांतवान् उत्तमाधिकारिणश्चतुर्मुखस्यापिमहाप्रयत्नसाध्यत्वाद्धरिप्रसादस्य दौर्लभ्यंकिंवर्णनीयमितिभावः।क्रियाजातिरलंकारः ॥ १६ ॥ ब्रह्मादीनांदेवानांहरिभजकत्वेतत्तन्नाम्नामेवज्ञापकत्वमुत्प्रेक्षयन्नाह यदासपद्मासनेत्यादिरसापिपासेत्यंतैःश्लोकैः। यदायस्मिन्कालेसोऽब्जभूःपद्मासनसंस्थितःसन्शरीरार्जवसंपादकत्वेनचित्तस्वास्थ्यहेतुत्वाज्जपकालेपद्मासनस्यमुख्यत्वादितिभावः। इतरैःस्वाधमाधिकारिभिरवेद्यांज्ञातुमयोग्यांविद्यांपुरुषसूक्तमंत्रंजजापतदाप्रभृत्येवतत्कालमारभ्यैवसब्रह्माभुवनेषुजगत्सु। विष्टपंभुवनंजगदित्यमरः। पद्मासनश

ब्दितः पद्मासनइतिशब्दः पद्मासनशब्दः ससंजातोस्येतिपद्मासनशब्दितः तदभिधेयइत्यर्थः बभूवनूनंनिश्चयः ब्रह्मणःपद्मासनशब्दाभिधेयत्वेजपकाली नपद्मासनस्थितिरूपकारणोत्प्रेक्षयायतोयंहरिपूजात्मकजपकालीनपद्मसादृश्यासनस्थित्यापद्मासननामाबभूवअतोस्यहरिभजकत्वेपद्मासननामैवज्ञापकमि तिभावः। उत्प्रेक्षालंकारः पद्मासनशब्दस्यश्लिष्टत्वात्श्लिष्टगर्भितोयम् ॥ १७ ॥ तदेति सविरिंचिपुत्रःशिवस्तदन्यानि तस्माद्विष्णोरन्यानिहेयान्यनित्यत्वा दिदोषदुष्टत्वात् त्याज्यान्यंबरादिवस्तून्यपहायत्यक्त्वाऽरक्तचित्तः कामरहितांतःकरणःसन्। यणादेशःपरादिवदितिवचनान्नात्रयतिभंगदोषः। हरिंस्तुवन्दिग्व सनोदिगंबरोनंगजित्कामजिद्गिरीशोपिगिरिवाचिईशःसमर्थोगिरामीशइतिवा बभूवविष्णिवतरविषयपरित्यागाद्दिग्वसनः अरक्तचित्तत्वादनंगजिद्गीर्भिःस्तुतिकर

तदा तदन्यान्यपहाय हेयान्यरक्तचित्तः स विरिंचिपुत्रः ॥ स्तुवन् गिरीशोपि गिरा मुरारिमनंगजिद्दिग्व
सनो बभूव ॥ १८ ॥ तदैव शेषोजनि वायुभक्षः सहस्रनेत्रोपि तदैव नूनम् ॥ शतक्रतुः सुमनिविदूरभावा
बभूवुरस्वप्नपदाश्च देवाः ॥ १९ ॥ रसा पिपासोग्रभराशनाया विपद्य विष्णुं मनसाचलेन ॥ तदानुधावं
त्यचलेति सर्वसहेति नूनं जगदे जगत्याम् ॥ २० ॥ ॥ ५ ॥ ॥ ५ ॥

णाद्गिरीशश्चबभूवेतिक्रमालंकारेणसंकरः ॥ १८ ॥ तदैवेति शेषोनंतः यदाहर्यनुग्रहमाकांक्षमाणोवाताहारंकृत्वानिरशनव्रतंकृत्वातदैवारभ्यैववायुभक्षःपवना शननामाअजनि।सहस्रनेत्रोपिसहस्रंनेत्राणियस्यसइंद्रोपि। आखंडलःसहस्राक्षइत्यमरः। यदाहरिंस्तुत्वाशतक्रतुफलंप्राप्तवांस्तदैवशतक्रतुः शतक्रतुशब्दाभिधे योबभूव। सुप्तेःस्वप्नात् स्यान्निद्राशयनंस्वापःस्वप्नःसंवेशइत्यपीत्यमरः। विदूरोभावश्चित्तंयेषांतेसुमनिविदूरभावादेवाश्चअस्वप्नपदाः हरिपूजायांनिद्राजाड्यमपहा यजागरूकत्वादस्वप्नमनामानोबभूवुः अनुप्रासालंकारः ॥ १९ ॥ रसापिपासेति। रसाभूमिः रसाविश्वंभरास्थिरेत्यमरः। पिपासापातुमिच्छा उग्रः बहुतरो भरोभारः अशनायाबुभुक्षा पिपासाश्चउग्रभरश्चअशनायाश्चपिपासोग्रभराशनायाः अशनायोदन्यधनायाबुभुक्षापिपासागर्धेष्वितिबुभुक्षार्थेअशनयेति

निपातः । ताः विषयअचलेनस्थिरेणमनसाविष्णुमनुधावंतीस्मरंतीजगत्यांलोकेनदारभ्यपिपासादिसहिष्णुत्वात्सर्वंसहेतिअचलेनमनसास्मरणादचलेतिपदा भ्यांजगदेअभ्यधायिजनैरितिशेषः अनुप्रासालंकारः ॥ २० ॥ विद्यांतरंविहायब्रह्मणःपुरुषसूक्तविद्ययाउपासनेप्रयोजनमुत्प्रेक्षयन्नाह सहस्रकार्येष्विति । सहस्रनेत्राननपाणिपादः सहस्राणिनेत्राणिआननानिपाणयोहस्तायस्यसतथोक्तः सहस्रशब्दःप्रत्येकमभिसंबध्यते सभगवान्सहस्रकार्येषुसमर्थःशक्तः भूभार हरणेबहुकार्यसद्भावाद्बहुसाधनवताभवितव्यं भवान्तादृशइतिविज्ञापयितुंविधुंसूक्तगतांपुरुषसूक्तोक्तांस्तुतिंस्तोत्रंततानचकार पुरुषसूक्तेसहस्रशीर्षेत्यादिना बह्वाननाद्युक्तेरितिभावः उत्प्रेक्षालंकारः ॥ २१ ॥ देवानामुपासनाफलमाह तच्चित्तइति तद्ध्यानकल्पद्रुमः तेषांदेवानांध्यानाख्यकल्पवृक्षः तच्चित्तेतेषां देवानांचित्तेचित्तेषु जात्येकवचनं अंकुरितः अंकुरःसंजातोस्येत्यंकुरितः तदस्यसंजातंतारकादिभ्यइतजितिइतच् ध्यानस्यमानसत्वादितिभावः सुशोभ

सहस्रकार्येषु भवान्समर्थः सहस्रनेत्राननपाणिपादः ॥ इतीव विज्ञापयितुं विरिंचस्तुतिं स पुंसूक्तगतां ततान ॥ २१ ॥ तच्चित्तेंकुरितः सुभक्तिलतयाश्लिष्टः प्रमोदाश्रुभिः सिक्तः सत्पुलकालिमूलविततः कायप्रभापल्लवः ॥ ईषन्मीलितनेत्रकुड्मलयुतः शाखासहस्रोर्जितः प्राप्तः श्रीरमणद्विजेन फलितस्तद्ध्यानकल्पद्रुमः ॥ २२ ॥

नाभक्तिरेवलतातयाश्लिष्टः भक्तियुक्तस्यध्यानस्यमहाफलहेतुत्वादितिभावः प्रमोदाश्रुभिर्ध्यानजन्यानंदबाष्पैः सिक्तःआसिक्तः नासिकाग्रनिविष्टद ष्टेर्ध्यातुरश्रूणांहृदिनिपातनादितिभावः सतांहर्षोत्पन्नत्वाच्छोभनानांपुलकानांरोमोद्गमानांआलयःपङ्क्तयएवमूलानितैर्विततोव्यामः कायप्रभापल्लवः समा ध्यवस्थायांसमुत्पन्नांगकांतिलक्षणकिसलयंयस्यसतथोक्तः पल्लवोस्त्रीकिसलयमित्यमरः मुखेविकासोनेत्रेजलंगात्ररुहेषुहर्षइतिस्मृतेः अश्रुरोमोद्गमानां ध्यानकालीनत्वादितिभावः ईषत्किंचिन्मीलितानिनिमीलितानिलोचनान्येवकुड्मलानिमुकुलानितैर्युतः दिशश्चानवलोकयन्नितिस्मृतेः शाखासहस्रोर्जितः शाखानाम्यृगादिशाखानांसहस्रेणऊर्जितः शाखाविटपास्तेषां सहस्रेणऊर्जितः उन्नतः अनेनदेवानामुत्तमाधिकारित्वेनबहुशाखागतगुणोपसंहारेसामर्थ्य

मस्तीतिगम्यते सर्वशाखासंप्रत्ययःचोदनाद्यविशेषादितिसूत्रादितिभावः फलितः परिपाकावस्थांप्राप्तः कृष्णचित्ताकर्षणपटुतरत्वलक्षणफलेनसंपन्नइत्यर्थः श्रीरमणद्विजेनश्रीकांताख्यपक्षिणाद्वासुपर्णेतिश्रुतेः प्राप्तः परिपाकावस्थायांविष्णुःप्रसन्नस्तत्रागमदित्यर्थः फलनिष्पत्यनंतरंपक्षिणोवृक्षमाश्रयंतइतिभावः श्लिष्टपरंपरितं रूपकमलंकारः शार्दूलविक्रीडितंवृत्तम् ॥ २२ ॥ ततइति । करुणांबुराशिः कृपासमुद्रः हरिर्विरिंचपूर्वांश्चतुर्मुखमुख्यान्सुरान्समाश्वास्यसां त्वयित्वाधरांभूमिंगतक्लेशभरांगतःक्लेशस्यदुःखस्यभरोयस्यास्तांविधायकृत्वास्वकीयांस्वपत्नींमायांलक्ष्मीं मायानारायणीशानेतिमायाशब्दस्यलक्ष्म्यांप्रयो गात् । इतिवक्ष्यमाणप्रकारेणावोचत् ॥ २३ ॥ देवेष्विति । हरिर्देवेषुनिर्धारणेसप्तमी।धाताविरिंचःप्रभुरस्यधातुर्लक्ष्मीःप्रभुः प्रभ्वी वोतोगुणवचनादितिङीषोवैक

ततः प्रसन्नः करुणांबुराशिः सुरान्समाश्वास्य विरिंचपूर्वान् ॥ धरां गतक्लेशभरां विधाय स्वकीयमायां हरिरित्यवोचत् ॥ २३ ॥ देवेषु धाता प्रभुरस्य लक्ष्मीस्तस्याः प्रभुः सोहमितीव शंसन् ॥ आज्ञामजस्यैव ददावदृश्यो विज्ञेयमूर्तिः स्फुटमिंदिरायाः ॥ २४ ॥ त्वमेत्य देवक्युदरस्थगर्भं निधेहि रोहिण्युदरे स्वश क्त्या ॥ इतीरिता तं रमणं रमा सा प्रदक्षिणीकृत्य तथाकरोत्तत् ॥ २५ ॥

ल्पिकत्वात् तस्यालक्ष्म्याः सोहंप्रभुः स्वामीतिशंसन्निवकथयन्निवादृश्यःसन्नजस्यैवविरिंचस्यैवाज्ञांददौ इंदिरायालक्ष्म्याः स्फुटंस्पष्टंदृश्यादर्शनीयामूर्तिःश रीरंयस्यसतथोक्तःसन्नाज्ञांददौ अदृश्येनापिहरिणाजस्यैवाज्ञादानादन्येषांदेवानामदानात्तेभ्योविरिंचस्यैवोत्तमत्वं दृश्यात्ममूर्तिनालक्ष्म्याआज्ञादानाद्विरिंचाद पिलक्ष्म्याउत्तमत्वं आज्ञादानकर्तृत्वात्तस्याअपिस्वोत्तमत्वमुक्तमिवेतिभावः उत्प्रेक्षालंकारः ॥ २४ ॥ आज्ञादानप्रकारमाह त्वमेत्येति । हेदेवित्वंभूमिमेत्यदेवक्यु दरस्थगर्भंदेवक्यावसुदेवपत्न्याउदरस्थंजठरस्थितंगर्भंभ्रूणं गर्भोर्भकेनाद्यसंधौकुक्षौपनसकंटके भ्रूणेपवरकेचार्थैतिरत्नमाला स्वशक्त्यास्वसामर्थ्येनरोहिण्यु दरेरोहिण्याबलभद्रमातुरुदरेनिधेहिनिवेशयइतिहरिणेरितारमातंरमणंपतिंप्रदक्षिणीकृत्ययथाहरिणोक्तंतथातदकरोत् ॥ २५ ॥

आज्ञापयामासेति। सहरिः पुरास्वावतारात्पूर्वंशेषंमानुषेष्ववतारायआज्ञाप यामास कास्थत्ययादाममंत्रेलिटीत्याम्प्रत्ययः कृञ्चानुप्रयुज्यतेलिटीत्यस्तेरनुप्रयोगः। आज्ञप्तःशेषःरोहिण्युदरमेवउदयाद्रिस्तस्माज्जज्ञेप्रादुर्बभूव उदरोदयाद्रेरित्यनेनबलभद्रस्य चंद्रसाम्यंध्वन्यते।स्वावतारात्पूर्वंशेषंकुतःसंप्रेषयामासेतितत्राह संप्रेषयंतीति। नरेंद्राःमनुष्योत्तमाराजानः प्रयाणेउपस्थितेसतिनरैः स्वपुरुषैः स्वकीयांशय्यांपुरतः अयतएवसंप्रेषयंतिस्म स्मेत्यनेनलोकप्रसिद्धिंद्योतयति शेषस्यापिस्वशय्यात्वात्पूर्वंसंप्रेषयामासेत्यर्थः कृष्णावतारात्पूर्वंबलभद्रावतारेनिमित्तस्यउत्प्रेक्षितेनशय्यात्वेनाग्रतःप्रेषणस्यलोकनीत्यासमर्थनादुत्प्रेक्षामूलकोयमर्थांतरन्यासः ॥ २६ ॥ केशात्मनेति। श्रीशोलक्ष्मीपतिस्तस्मिन्बलभद्रेकेशात्मनाशुक्लकेशरूपेण नित्यमवतारसमाप्तिपर्यंतंसंनिहितःप्रविष्टःसन्स्वयमेवाग्रजत्वंस्वाग्रजत्वंस्वज्येष्ठत्वमित्यर्थः नूनंनिश्चयेनधत्तेबिभर्ति कृष्णावतारात्पूर्वंबलभद्राविष्टत्वेनस्वयमेवजातत्वादितिभाव सुखात्मासुखस्वरूपीबलभद्रमातूरोहिण्याः

**आज्ञापयामास पुरा स शेषं जज्ञे स रोहिण्युदरोदयाद्रेः॥ संप्रेषयंति स्म नरैर्नरेंद्राः शय्यां स्वकीयां पुरतः प्रयाणे॥ २६॥ केशात्मना संनिहितः स तस्मिञ्छ्रीशोग्रजत्वं स्वयमेव नूनम्॥ धत्ते विधत्ते बलभद्रमातुर्नित्यं स्वमातृत्वसुखं सुखात्मा ॥ २७॥ बलात्प्रगृह्य स्वकपाटपालौ निशाचरौ भूतलमेत्य दृप्तौ ॥ नृतस्करौ तौ विनिहत्य विष्णुर्निजौ निनीषन्निव गां गतोभूत् ॥ २८॥**

नित्यंसर्वदास्वमातृत्वंसुखंस्वस्यमातृभावेनयत्सुखंतद्विधत्तेकरोति स्वसंनिधानभरितबलभद्रदर्शनेनस्वदर्शनजन्यसुखंतस्याविधत्तइतिभावः बलभद्रेशुक्लकेशसंनिधानमस्तीतितात्पर्यार्थः धत्तेविधत्तेसुखंसुखात्मेत्यत्रोभयोर्व्यंजनयासादृश्याच्छेकानुप्रासः ॥ २७॥ हरेर्भुव्यवतारेप्रयोजनमुत्प्रेक्षयति बलादिति । विष्णुः स्वकपाटपालौस्वद्वारपालौजयविजयाख्यौबलाद्बलात्कारेणप्रगृह्यगृहीत्वायौनिशाचरौनिशायांरात्रौचरतइतिनिशाचरौराक्षसौ निशाचरावित्यनेनतयोश्चोरत्वंगम्यते चोराणामपिनिशाचरत्वात् । भूतलमेत्यशिशुपालदंतवक्ररूपेणभूमिंप्राप्यदृप्तावुन्मत्तौसंतौतिष्ठतः नृतस्करावित्यनेनानयोरद्भुतचोरत्वंध्वन्यते तौराक्षसौवि निहत्यनिजौस्वभृत्यौनिनीषन्निवनेतुमिच्छन्निवगांभूमिंगतःप्राप्तोभूत् । यथावीरोराजास्वपुरप्रवेशप्रतिबंधकर्तॄन्प्रगृह्यस्वविषयंनीत्वातिष्ठतोदृप्तांश्चो

सनकादिशापेनासुराक्रांतत्वेन भुवि जातयोर्जयविजययोः शापमोक्षार्थं भूमाववततारेतिता
रान्स्वयमेवागत्य विनिहत्य स्वभृत्यान्स्वपुरं प्रत्यानयतितद्वदितिभावः सनकादिशापेनासुराक्रांतत्वेन भुविजातयोर्जयविजययोःशापमोक्षार्थं भूमाववततारेतिता
त्पर्यार्थः उत्प्रेक्षालंकारः ॥ २८ ॥ नगर्भवासइति । विष्णुर्नैर्मलस्यनिर्गतंमलंप्रकृतिबंधलक्षणंयस्मात्सतथोक्तः हेतुगर्भविशेषणं तस्यममगर्भवासः गर्भेजठरे
वासः जराद्यांत्राद्याक्रांतत्वेनवासोवस्थानंनास्तीतियत् अदस्तद्बुधाञ्ज्ञानिनः प्रतिबोधयितुंहृदेव अभिप्रायेणेवफणीश्वरंशेषं गर्भगतं देवकीगर्भवर्तिनं [illegible]
धायकृत्वापश्चात्तंविकृष्य स्वयंदेवक्युदरेसन्निहितः प्रविष्टोबभूव । यथाराजाखलिनंगृहं दासीमुखाद्रजोनिस्सारणमार्जनादिकृत्वामालिन्य [illegible]
लीकृत्यपश्चात्स्वयंप्रविशतितद्वदितिभावः सन्निहितइत्यनेनगृहवत्प्रवेशनार्थं नतुजीववत्शुक्रद्वारायोनिप्रवेशइतिध्वन्यते पूर्ववदलंकारः ॥ २९ ॥ गर्भे
पीति । पद्मासनोविरिंचः सएवमुख्यःप्रधानोयेषांतेपद्मासनमुख्यास्तेचदेवाश्चपद्मासनमुख्यदेवाः गर्भेपिजठरेपिदुःखहेतुभूतस्थानेपीत्यर्थः [illegible]

न गर्भवासो मम निर्मलस्येत्यदो बुधान्बोधयितुं हृदेव ॥ फणीश्वरं गर्भगतं विधाय पुनः स्वयं संनि
हितो बभूव ॥ २९ ॥ गर्भेप्यदभ्रात्मसुखैकमूर्तिमभ्येत्य पद्मासनमुख्यदेवाः ॥ गीर्भिर्ववन्दुर्भवनिवासजा
तिनिर्भंगसिद्ध्यर्थमिवास्तुवंस्तम् ॥ ३० ॥

कमूर्तिम् । अदभ्रमनल्पमात्मसुखं स्वरूपसुखं आलायलेधृतौजीवेत्यभावे[illegible]मनीतिभास्करः तदेवएकामुख्या एकेमुख्यान्यकेवलाइत्यमरः [illegible]
थोक्तः अपरिमितस्वरूपानंदैकदेहइत्यर्थः तंविष्णुमभ्येत्यभवनूजायमानोगर्भनिवासः गर्भेजराद्यांत्रावृतत्वेनावस्थानंतस्माज्जायतइतिगर्भनिवासजा [illegible]
खंतस्यानिर्भंगोनितरांभंगःपराजयः विनाशइत्यर्थः भंगःखड्गेपराजयइतिरत्नमाला तस्यसिद्धिर्निष्पत्तिः तदर्थमिवगर्भवासजन्यदुःखपरिहार[illegible]
गीर्भिःसत्यव्रतंसत्यपरमित्यादिस्तुतिरूपाभिर्वाग्भिरस्तुवन्स्तोत्रमकुर्वन् यथाविलासेनकारागृहदर्शनार्थमागतस्यराज्ञस्तत्रत्यदुःखप्रदर्शनेनस्तुतौक्रियमाणा
यांप्रसन्नःसन्कारागृहेबद्धान्मोचयति तथापरमात्मापिगर्भवासजन्यदुःखप्रदर्शनेनास्माभिःस्तुतःसन्नस्मद्गर्भवासजन्यदुःखंपरिहरिष्यतीतिभावः गर्भेप्यद
भ्रात्मसुखैकमूर्तिमित्युपासनेनास्माकमपिगर्भवासजन्यदुःखपरिहारोभविष्यतीतितंयथायथोपासतेतथाभवतीतिश्रुतेरितिभावः ॥ ३० ॥

अथोइति । अथब्रह्मादिस्तुत्यनंतरंविष्णुर्जयंत्यांकृष्णाष्टम्यां कृष्णाष्टमीश्रावणेतुप्रदोषसहिताष्टमी जन्माष्टमीभवेत्सैवजयंतीरोहिणीयुतेतिस्मृतेः निशीथेऽर्द्धरात्रो अर्धरात्रनिशीथौद्वावित्यमरः देवक्युदरोदयाद्रेः देवक्युदरमेवोदयाद्रिः उदयपर्वतस्तस्मात् उदयाद्रेः शशीवचंद्रइवउदभूत् प्रादुर्बभूवशुक्रशो... तसंबंधेनोत्पत्त्यभावोनेनयोत्पत्ने सातिथिः अवतारतिथिः सानिशाचदिगष्टके दिशामष्टके अष्टदिक्षुस्थितान्रात्रिचरान्राक्षसान् जिगीषोर्जेतुमिच्छतः कृष्णस्य गुणोचितैवअन्वर्थैव जिगीषोरवतारकालत्वात्तिथेर्जयंतीत्वं अष्टदिक्षुस्थितान्दैत्यान्वधार्थमुद्यमस्यावतारकालत्वात्संख्यासाम्यादष्टमीत्वं... वः निशाचरजयिनानिश्यवतीर्णेनैवभवितव्यं अन्यथावैयधिकरण्यात् तस्यानिशायानिशात्वमप्युचितमितिभावः अनेनजयंतीनाम्न्यामष्टम्यांरात्रौकृष्णा

अथो जयंत्यामुदभून्निशीथे शशीव देवक्युदरोदयाद्रेः ॥ दिगष्टके रात्रिचरान् जिगीषोस्तिथिर्निशा सा च गुणोचितैव ॥ ३१ ॥ प्रथां यशोदासुत इत्युदारां करिष्यमाणो जननीमिवान्याम् ॥ स देवकीगर्भभवो नुगृह्णंस्ततान रोहिण्युदयप्रसिद्धिम् ॥ ३२ ॥ यदा हरिः प्रादुरभूत्कलाभिस्तदा समायव्ययवांश्च चंद्रः ॥ प्रियाप्रियास्येव निजान्वयोत्थमुकुंदवक्त्रेंदुकलावलोकात् ॥ ३३ ॥

वतारोजातइतिपौराणिकीकथासूचिता । जयंत्यादीनामन्वर्थउत्प्रेक्षितइत्युत्प्रेक्षालंकारः ॥ ३१ ॥ प्रथामिति । देवकीगर्भभवःसन्नुत्तरत्र यशोदायानंदपत्न्याः सुतइत्युदारामुत्कृष्टांप्रथांप्रसिद्धिंकरिष्यमाणःकृष्णः अन्यांदेवकीयशोदाव्यतिरिक्तांजननींमातरमनुगृह्णन्निवपरिगृह्णन्निवरोहिण्युदयप्रसिद्धिं रोहिणीनक्षत्रेस्वस्योदयप्रसिद्धिंततानचकार अन्यत्रप्रादुर्भूतोप्यहमन्यस्याअस्याःसुतइतियथाप्रथांसंपादयिष्यामितथारोहिणीनक्षत्रेप्रादुर्भूतः नामसाम्याद्रोहिण्यामुत्पन्नइतिप्रथयाबलभद्रमातरमप्यनुगृह्णामीत्यभिप्रायेणैवरोहिण्युदयप्रसिद्धिंततानेतिभावः प्रथामित्यनेनकृष्णस्ययथायशोदापुत्रत्वंप्रथामात्रंतथादेवकीसुतत्वमपिप्रथामात्रमितिध्वन्यते उत्प्रेक्षालंकारः ॥ ३२ ॥ अष्टमीचंद्रस्यार्धचंद्रत्वहेतुमुत्प्रेक्षयन्नाह यदेति । यदायस्मिन्कालेहरिःप्रादुरभूत् प्रादुर्बभूव तदानिजे

स्वकीयेअन्वयेकुले संततिर्गोत्रजननकुलान्यभिजनान्वयावित्यमरः उत्थस्यावतीर्णस्यमुकुंदस्यकृष्णस्यवक्त्रंइंदुरिववक्त्रेंदुः उपमितंव्याघ्रादीत्युपमितसमासः तस्यकलावलोकात्कांतिदर्शनात् प्रियमिष्टं अप्रियमनिष्टं तयोराप्तिः प्रियाप्रियाप्तिः तयेवकलाभिःषोडशैर्भागैः कलातुषोडशोभागइत्यमरः समायव्ययवान् आयोवृद्धिर्व्ययोह्रासः समौतुल्यौ आयव्ययौअस्यास्तीतिसमायव्ययवांश्चंद्रश्चप्रादुरभूत् परमात्मनःकृष्णस्यस्वकुलोत्थत्वात्कृष्णःसोमकुलेजातइतिप्र थायायशोलक्षणप्रियस्याप्तिः अतिशयितकांतियुक्तवक्त्रेंदुदर्शनेनपराजयलक्षणाप्रियस्यचावाप्त्येवशरीरार्द्धस्यापचयोजातइत्यर्थः हर्षशोकयोःशरीरोपच यापचयहेतुत्वादितिभावः ॥ ३३ ॥ तदैवेति । तत्कालएवस्वगीतनाट्येनतेनकरिष्यमाणं गीतंचनाट्यनृत्यंचतेनद्वंद्वैकवद्भावः विजेष्यमाणंतंकृष्णंबाल्येशैशवे

तदैव गंधर्वगणा जगुस्तं तिलोत्तमाद्या ननृतुस्तदैव ॥ स्वगीतनाट्येन विजेष्यमाणं तमात्मसात्कर्त्तुमिवा शु बाल्ये ॥ ३४ ॥ दिशो यशोभिः परिपूरयिष्यत्युदग्रचेष्टः स इति प्रहृष्टाः॥ रसा प्रसन्ना किल रंजितां मां करिष्यति स्वांघ्रितलश्रियेति ॥ ३५ ॥ तदैव देवा ववृषुः प्रसूनैर्हृदि स्मरंतो वचसा स्तुवंतः ॥ नगें द्रमैंद्रं भुवि नेष्यतोस्य मनः समुद्बोधयितुं पुरेव ॥ ३६ ॥

आशुत्वरयाआत्मसात्कर्तुमिवआत्मीयंकर्तुमिवकृष्णमभिकृत्यगंधर्वगणाःसुरगायकसमूहाः जगुर्गानंचक्रुः अप्सरस्त्रियश्चननृतुर्नृत्यंवितेनुः वयोविशेषेप्रौढ्य तिशयेनवशीकरणासंभवाद्बाल्यइत्युक्तं इदानीमस्मत्कृतनाट्येनआत्मसात्कृतस्यात्मीयत्वेनतद्विजयोस्मद्विजयएवेतिअभिप्रायेणेवेतिभावः अनेनजगुःकिन्न रगंधर्वाननृतुश्चाप्सरोगणाइतिपौराणिकीकथासंचारिता ॥ ३४ ॥ दिशइति । दिशःउपचेष्टः उत्कृष्टव्यापारःसकृष्णः यशोभिरस्मान्परिपूरयिष्यतीतिकृत्वाइ तीववाप्रहृष्टाःसंतुष्टाबभूवुः रसाभूमिः स्वांघ्रितलश्रियास्वपदतलकांत्यामांरंजितामलंकृतांकरिष्यतीतिशब्दस्यपूर्ववदर्थः प्रसन्नाकिल किलेत्यनेनदिशःप्रसेदुः महीमंगलभूयिष्ठेतिपौराणिकींकथांसूचयति । वस्तुतत्त्वमुत्प्रेक्षालंकारः ॥ ३५ ॥ ववृषुः कुसुमासारैरितिभागवतोक्तमुत्प्रेक्षयावर्णयति तदैवेति । तस्मिन्कालएव

कृष्णंहृदिचिन्तेस्मरंतः वाचास्तुवंतःसंतःऐंद्रंइंद्रसंबंधिनंनगेंद्रं महीरुहश्रेष्ठंपारिजातमित्यर्थः अगोनगश्चभुजगेभानौभूरुहिभूधरइतिभास्करः भुविनेष्यतः स्व
गृहंप्रत्यानेष्यतोस्यकृष्णस्यपुरापूर्वमेवमनःसमुद्बोधयितुंसम्यगुद्बुद्धंकर्तुमिवपुष्पाणिप्रदृश्यतेषुलोभमुत्पादयितुमिवेत्यर्थः प्रसूनैःकुसुमैर्वपुः ॥ ३६ ॥
कृष्णस्यवसुदेवपुत्रत्वमसहमानस्तदुपहसन्नाह पुत्रत्वादिति । शूरस्यापत्यंपुमान्शौरिः वसुदेवः तस्यपुत्रत्वादस्यकृष्णस्ययदिइहलोकेवासुदेवपदवीवासुदेव
पदाभिधेयतातर्हिसावसुदेवपदवीनोस्माकंपुत्रत्वकृतास्तु अस्मत्पुत्रत्वनिमित्तास्यात् । यद्ययंवसुदेवादुत्पन्नत्वाभावेपिवसुदेवस्यायंवासुदेवइतिव्युत्पत्त्या
वसुदेवपुत्रस्तर्ह्यस्माकमपिवसवश्चदेवाश्चवसुदेवाः वसुदेवानामयंवासुदेवइतिव्युत्पत्तिसंभवादस्मत्पुत्रःकिंनस्यादितिभावः । इतीतिवसवोष्टवसवस्तदितरे

पुत्रत्वादिह वासुदेवपदवी यद्यस्य शौरेस्तदा नःपुत्रत्वकृतास्तु सेति वसवो देवाश्च हृष्टा ध्रुवम्॥ यद्य
स्यानकदुंदुभीष्टशिशुता सोस्माकमेवं शिशुस्तर्हीत्यानकदुंदुभिध्वनिरभूद्योम्नि स्वयंभूदये ॥ ३७ ॥
शरीरकांत्या जलदः स्वजैत्रं निरीक्ष्य कृष्णं जलराशितीरे ॥ जगर्ज शक्त्या रहितस्य पुंसो जलांतिके
ष्वेव हि गर्जितानि ॥ ३८ ॥

देवाश्चस्वयंभूदयेसति स्वयमेवभवतिनान्येनेतिस्वयंभूस्तस्योदयेप्रादुर्भावेसतिहृष्टाबभूवुः ननुवसुदेवस्यायमितिव्युत्पत्तेरतिप्रसक्तत्वाद्वासुदेवशब्दाभिधेयत्वे
वसुदेवपुत्रत्वाभावेपिआनकदुंदुभेःशिशुरितिप्रथयावसुदेवपुत्रत्वंभवत्वित्यतआह यदीति । यद्यस्यकृष्णस्यउत्पत्त्यभावेपिनिर्निमित्तंआनकदुंदुभेर्वसुदेव
स्यइष्टशिशुताईप्सितशिशुत्वंतर्हिसकृष्णएवमस्माकंशिशुःकिंनस्यात् । अस्माकमपिआनकाश्चदुंदुभयश्चआनकदुंदुभयः आनकदुंदुभीनांभेरीणांध्वनिर्निर्घो
षोऽभूत् । आनकःपटहोऽस्त्रीस्याद्भेरीस्त्रीदुंदुभिःपुमानित्यमरः । वसुदेवसुतोनायंनायंगर्भेवसत्प्रभुरितिवचनान्नवसुदेवादुत्पन्नःकृष्णइतितात्पर्यार्थः । कृष्णा
वतारेसतिसंतोषातिशयेनदिविदेवावाद्यान्यवादयंतेतिपौराणिकीकथा ॥ ३७ ॥ शरीरकांत्येति । जलंददातीतिजलदोमेघः साम्यत्वोपपादनार्थमिदंजलदानस

मयेमेघस्यश्यामत्वात् शरीरकांत्येंद्रनीलसमानांगरुचा स्वजैत्रंजेतैवजैत्रः तूर्न्वतात्प्रज्ञादित्वादण् । तंकृष्णंनिरीक्ष्यदृष्ट्वाजलराशितीरेसमुद्रतीरे । अनेनजलश
ब्दस्यजलंनीरेजडेत्रिष्वित्यभिधानात् जडरूपार्थांतरप्रतीत्याजडानांराशिरितिसमुद्रस्यमूर्खत्वंगम्यते । जगर्जरसितानिचकार । तथाहिशक्त्यारहितस्यस्वजेतुः
प्रतिजयेसामर्थ्यहीनस्येत्यर्थः पुंसःपुरुषस्यगर्जितानिजल्पितानिजलांतिकेष्वेवमूर्खसमीपेष्वेव । यथालोकेकेनचित्पराजितःपुनस्तत्पराजयेऽसमर्थःस
न्स्वजैत्रापकर्षवचनानिमूर्खसमीपेकथयतितद्वदितिभावः । मेघगर्जितस्यपराजयहेतुकत्वोत्प्रेक्षयोत्प्रेक्षामूलकोर्थांतरन्यासः । जलपदस्यश्लिष्टत्वात्श्लिष्टग
र्भितोयम् । अनेनमंदंमंदंजलधराजगर्जुरनुसागरमितिभागवतकथासंचारिता ॥ ३८ ॥ ह्रदाजलरुहश्रियइतिभागवतोक्तमुत्प्रेक्षयति सरइति । निशिरा
त्रावपिसारसानांसरसीरुहाणां सारसंसरसीरुहमित्यमरः ओघैर्निवहैः । ओघःप्रवाहेनिवहइतिभास्करः । प्रसन्नंनिर्मलंसरःसरोवरं । ईशःसमर्थःकृष्णः रात्रौ

सरः प्रसन्नं निशि सारसौघैः स कामिनीभिः सह संप्रविश्य ॥ करिष्यतीशो मुखपद्मपुंजैरलंकृतं मामिति शंसतीव ॥ ३९ ॥ नभः प्रसन्नोडुगणं तदासीद्विभुत्वधर्मेण तमद्वितीयम् ॥ विलोक्य बालं भुवि तार हारविभुषितस्वांगमिव प्रहर्षात् ॥ ४० ॥

कामिनीभिः कांताभिः कामिनीललनाकांतेतिधनंजयः । मयिसंप्रविश्यआकंठमवगाह्यमुखपद्मपुंजैर्मुखान्येवपद्मपुंजाःकमलसमूहास्तैःसाधमैरलंकृतांकरि
ष्यतीतिशंसतीवकथयंतीव ॥ ३९ ॥ गगनंनिर्मलोडुगणोदयमितिभागवतोक्तमुत्प्रेक्षयन्नाह । नभइति । तदातस्मिन्कालेप्रसन्नानांमेघाद्यतरभावात्प्रकाश
मानानामुडूनांगणाःसमूहायस्मिंस्तत्प्रसन्नोडुगणंनभःगगनं नभोंतरिक्षंगगनमित्यमरः । पुराअवतारात्पूर्वंविभुत्वधर्मेण विभुत्वाख्योधर्मोविभुत्वधर्मःतेनव्याप
कत्वेनेत्यर्थः अद्वितीयमसदृशंतंकृष्णमिदानींभुविबालमल्पप्रदेशवर्त्तिनंशिशुंविलोक्यप्रहर्षात्पूर्वंस्वातिशयितविभुत्ववानिदानींस्वापेक्षयाल्पप्रदेशवर्तिजातइ
तिसंतोषात्तारहारविभूषितस्वांगमिव । ताराणिनक्षत्राण्येवहारामुक्तामालाः कनीनकर्क्षयोस्त्वेषद्वयोस्तारंतुरूप्यजइतिरत्नमाला। अथवातारहारैःशुद्धमौक्ति

कमुक्तादामभिः तारोमुक्तादिसंशुद्धौतरलेशुद्धमौक्तिकइतिभास्करः । नैर्विभूषितानिस्वांगानियस्यसतथोक्तमिवासीत् । यथाधनादिनास्वाधिकंदृष्ट्वाई र्ष्ययासंततःकश्चित्पुनस्तस्यन्यूनतायांप्राप्तायांहर्षादात्मानंवस्त्राभरणादिनाभूषयतितद्वदितिभावः ॥ ४० ॥ शिशुमिति । अथोक्तकृष्णावतारानंतरं वृद्धास्तपोज्ञान वयआदिभिरार्याःशिशुंशिशुरूपिणंपरमात्मानंवशीकर्तुंवशवर्तिनंकर्तुमयंकालोतःप्रयासोनास्ति बालकाहिकिंचिन्मधुरवचनफलदानादिनापिवशवर्तिनोभवं तीतिभावः । इतिबुद्ध्येवतुतुषुः संतुष्टाबभूवुः ब्रह्मादिभिरप्यतियत्नेनप्रसन्नीकर्तुमशक्यःपरमात्माइदानींशिशुस्वभावमनुकुर्वन्किंचित्फलप्रदानस्तुत्यादिनाप्र सन्नीकर्तुंशक्यइतिधियेवतुष्टाबभूवुरित्यर्थः । अनेनपत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छतीतिस्मृतेर्भक्तस्याल्पसाधनैरपिपरमात्मासंतुष्टोभवति । परमात्मनः कृष्णावतारेऽतिशयसौलभ्यंध्वन्यते । एषांवृद्धानामग्निः स्वयंधमन्यादिभिरुद्बोधंविनाप्राज्वलत्प्रजज्वालनचेत्स्वयंप्रज्वलनाभावेतेकृतार्थाः कृतस्यकर्म

**शिशुं वशीकर्तुमयं हि काल इतीव बुद्ध्या तुतुषुः स्म वृद्धाः ॥ उपेक्षयिष्यंति न चेत्कृतार्था इति स्वयं प्राज्वलदग्निरेषाम् ॥ ४१ ॥ प्रसूनवृंदानि विकंपयंस्तद्गृहं स्पृशन्सारसवारिसंगः ॥ ववौ मरुन्मामसुरा द्वियुक्तं करिष्यतीत्यंचनधीरिवास्य ॥ ४२ ॥**

णोर्थःप्रयोजनंयेषांतेतथोक्ताःसंतःमामुपेक्षयिष्यंति कृष्णदर्शनेनैवहोमादिसकलकर्मफलापेक्षयासहस्रगुणितफलप्राप्तेरितिभावः इतीवस्वयंप्राज्वलदित्युत्प्रे क्षा । अनेनमनांस्यासन्प्रसन्नानिसाधूनां अग्नयश्चद्विजातीनामितिभागवतकथासंचारिता ॥ ४१ ॥ प्रसूनेति । मरुद्वायुः प्रसूनवृंदानिकुसुमसमूहा न्विकंपयन्विधुन्वन् अनेनवायोःसौरभ्यंपुष्पमपातयित्वाकंपनमात्रेणमांद्यंचअंचनार्थंपुष्पसंग्रहणंचद्योत्यते । सारससरोवरसंबंधिचतद्वारिचतत्संगः संबंधोयस्य । अनेनशैत्यंपूजांकर्तुंस्नानमुदकादानंचद्योत्यते । तद्गृहंतस्यकृष्णस्यगृहंस्पृशन् । अनेनपूजार्थंप्रतिमास्पर्शोध्वन्यते । मामसुरादसुरेभ्यः जात्येकव चनं वियुक्तंकरिष्यतिअसुरान्हत्वाततः श्वासोच्छ्वासरूपिणंमांवियोजयिष्यति । दुर्जनसंसर्गोहिमहादुःखकरइतिभावः । इतिहेतोरस्यकृष्णस्यांचनेपूजनेधी

र्बुद्धिर्यस्यसइववव्वौ उत्प्रेक्षालंकारः। अनुष्णाशीतस्पर्शरूपस्वगुणत्यागेनपुष्पजलनिष्ठसौरभ्यादिगुणसंग्रहात्तद्गुणालंकारेणसंकरः । तद्गुणःस्वगुणत्यागाद न्योत्कृष्टगुणग्रहइत्युक्तत्वात् । ववौवायुःसुखस्पर्शः पुण्यगंधवहःशुचिरितिभागवतकथानेनसंचारिता ॥ ४२ ॥ जातइति । हरौजातेप्रादुर्भूतेसतिमे घाःसुष्ठुभक्त्यार्पितानिपुष्पाणांवर्षाणियैः तैर्गीर्भिःस्तुवद्भिःसुरसिद्धसंघैर्देवार्षिसमूहैर्विघ्नभीत्यास्वदृष्टपुष्पाणांमेघव्यवधानेकृष्णसमीपगमनविघातलक्षणविघ्न भियादूरेविधूताइवदंडादिनाअपसारिताइव अंबरांतादाकाशमध्यात् अंबरंव्योम्निवाससीत्यमरः । दिगंतंदिशामंतिकं अंतोस्त्रीनिश्चयेनाशेस्वरूपेप्रांतिकेहरेइ तिभास्करः। ययुःप्रापुः ॥ ४३ ॥ अजन्मनइति । नविद्यतेजन्मजननंयस्यसतथोक्तस्तस्यहरेर्जन्मकालेप्रादुर्भावकालेहि । हिशब्देनजननाभावस्यनजायतेन

जाते हरौ स्वार्पितपुष्पवर्षैर्गीर्भिः स्तुवद्भिः सुरसिद्धसंघैः॥ दूरे विधूता इव विघ्नभीत्या मेघा दिगंतं ययु रंबरांतात् ॥ ४३ ॥ अजन्मनस्तस्य हि जन्मकाले चराचरं तुष्टमभूत्किलेदम् ॥ तथाहि तुष्टिर्भुवि कस्य न स्यादद्दष्टपूर्वस्य निरीक्षणेन ॥ ४४ ॥ शरीरिणां स्थावरजंगमानां निरीक्षणेनैव विमोक्षदोहम् ॥ इती व विज्ञापयितुं स दृष्टो जहार पित्रोर्निगडस्य बंधम् ॥ ४५ ॥

म्रियतेवाकदाचिदितिस्मृतिप्रसिद्धिर्द्योत्यते। इदं चरतिगच्छतीतिचरं नचरतीत्यचरं चरंचाचरंचचराचरंद्वंद्वैकवद्भावः स्थावरजंगमात्मकंविश्वमित्यर्थः। तुष्टम भूत्किल। कृष्णावतारेसर्वप्राणिनांसंतोषोजातइति। किलेत्यैतिह्ये तथाहितयुक्तंहिपूर्वमदृष्टं अदृष्टपूर्वंसुप्सुपेतिसमासः। अजन्मनोजन्मविरुद्धत्वात्कदाप्यदृष्ट मितिभावः। तस्यनिरीक्षणेनदर्शनेनकस्यप्राणिनस्तुष्टिःसंतोषोनस्यात् अपूर्वदर्शनेनसर्वस्यापिसंतोषोजातइत्यर्थः। अर्थांतरन्यासः ॥ ४४ ॥ शरीरिणामिति । अहंस्थावरजंगमानांशरीरिणांदेहभृतांनिरीक्षणेनैवदर्शनेनैवनतुसाधनांतरेण । नान्यःपंथाअयनायविद्यतइतिश्रुतेर्विमोक्षदःसंसारबंधध्वंसकइतिविज्ञापयितुं दृष्टांतमुखेनकथयितुमिवसकृष्णःदृष्टःसन्पित्रोः माताचपिताचपितरौ पितामात्रेत्येकशेषः। तयोर्देवकीवसुदेवयोःनिगडस्यकंसकृतशृंखलायाबंधंजहारपरिह्

तवान् कृष्णजननानंतरंकंसकृतनिगडबंधोनिर्गतइतिपौराणिकीकथा ॥ ४५ ॥ एतत्पितृत्वमिति । तौपितरौदेवकीवसुदेवौएतस्यकृष्णस्यप्रथयादेवकीवसुदेवौकृष्णपितरावितिप्रसिद्ध्याउत्पन्नात्पापाद्दुरितादृयंनरकभीतिःस्यात् पापात्पापिष्ठात्कंसाद्भयंमरणलक्षणभयंस्यादितिवाइनिइतीव । गुणाढ्यंज्ञानानंदादिगुणसंपन्नंअतएवईडयंईशंत्वामिनंकृष्णं हेकृष्णत्वंज्ञानात्मकः ज्ञानस्वरूपीप्रकृतेर्विदूरः अस्यजगतस्तातःपिताइतीत्थंअस्तुतांअस्तौष्टाम् । ज्ञानात्मकत्वाद्युक्तगुणशिष्टस्त्वंआवयोरेतत्पितृत्वप्रथात्वप्रज्ञामादायेतिस्तुतिकर्त्रोर्भावः । अंतरालेबुद्धादेवतास्मरणस्तोत्रपाठादिकमेताभ्यांक्रियतइतिबहिःस्थितकंसभृत्यानांभ्रांतिमुत्पादयितुमितिभावः॥४६॥ ननुदेवक्याःपुत्रतांशुशुभेइतिकथंपुराणादिप्रसिद्धिरित्यतआह । यएषइति । यःपरमात्मापुदितिसंज्ञासंजातास्येतिपुत्संज्ञितःसच

एतत्पितृत्वप्रथया भयं स्यात्पापादितीड्यं पितरौ गुणाढ्यम् ॥ ज्ञानात्मकस्त्वं प्रकृतेर्विदूरस्तावस्तुतां तात इतीशमस्य ॥ ४६ ॥ य एष पुत्संज्ञितनारकस्थान्जनान्स्वनामस्मरणेन पाति ॥ स दृष्टिगः सन्वसुदेवपत्न्याः कथं न पुत्रः शतपत्रनेत्रः ॥ ४७ ॥ यदीयरूपं प्रकटीकरोति पिता स तस्येति हि वेदवादः ॥ तथाविधस्यानकदुंदुभेस्तत्पितृत्वमप्यस्तु न तेन हानिः ॥ ४८ ॥

सौनारकोनरकः स्यान्नारकस्तुनरकइत्यमरः। तत्स्थान्जनान्स्वनामस्मरणेननरकादुद्धृत्यरक्षतीत्यर्थः। सएषशतपत्रनेत्रः शतपत्रवत्कमलवन्नेत्रेयस्यसतथोक्तः सहस्रपत्रंकमलंशतपत्रंकुशेशयमित्यमरः । कृष्णःवसुदेवपत्न्यादेवक्यादृष्टिगोदृष्टिविषयःसन्पुत्रःपुतोनरकात्त्रायतइतिपुत्रःकथंनभवेद्भवेदेव नामस्मरणमात्रंकुर्वतामयंपुत्रःकथंदेवक्याःप्रत्यक्षीभूतःकृष्णःपुत्रोनभवेदित्यर्थः । पुतोनरकात्त्रायतइतिव्युत्पत्तिमादायपुराणादौदेवकीपुत्रत्वोक्तिरितिभावः । दृष्टिगइत्यनेनमाङ्मानइतिधातोर्मिनोतीतिव्युत्पत्त्यादेवक्यामातृत्वप्रसिद्धिरप्युपपद्यतइतिद्योत्यते। युक्तिरलंकारः दुर्घटार्थस्यघटनायुक्तिरित्युक्तत्वात्॥४७॥ देवक्यामातृत्ववद्वसुदेवस्यापिपितृत्वमुपपद्यतइत्याह यदीयेति । यःयदीयरूपंयस्यस्वरूपंप्रकटीकरोतितस्यपितेतिवेदवादःवेदवचनंहि हिशब्देनवेदस्यप्रसिद्धतामाह । क

विर्यः पुत्रः सईमाचिकेतयस्ताविजानात्सपितुःपितासत् । कविःसर्वज्ञःपुत्रश्चतुर्मुखःसएवविश्वमकरात्यस्ताविष्णोर्मूर्तीर्व्यजानाद्विज्ञापयामासअतएवसचतुर्मु खःपितुःस्वपितुर्विष्णोःपिताअसत्आसीदितिश्रुत्यर्थः । विद्यमानकृष्णस्वरूपप्रकटनमात्रकर्तुरानकदुंदुभेस्तत्पितृत्वंतस्यकृष्णस्यपितृत्वमप्यस्ति मिनोतीतिव्यु त्पत्त्यादेवक्यामातृत्ववद्वसुदेवस्यविद्यमानकृष्णरूपप्रकटनमात्रकर्तृत्वेनपितृत्वमप्यस्त्वित्यर्थः । तेनउक्तपितृत्वांगीकारेणवसुदेवादुत्पत्त्यनंगीकारिणांनोस्माकं हानिरनिष्टंनेत्यर्थः ॥४८॥ कृष्णस्योत्पत्तिरस्तीत्यज्ञप्रसिद्धिंएतेनेत्यादिकतिपयैःश्लोकैर्निराकरोति । एतेनेति । असौसूनुःपुत्रत्वेनाभिमतःकृष्णःहेअनघेदेवकिपु रापूर्वंतवपूर्वस्मिन्जन्मनीत्यर्थः अहमेतेनैवात्मनाशरीरेण त्वद्दृष्टिमार्गस्त्वदृक्गोचरोऽभवंआसम् । अधुनाइदानींतेनैवपूर्वंप्रदर्शितशरीरेणैवत्वद्दृष्टिगोचरःइत्यनेन प्रकारेणईरयन्वदन्स्वकांस्वकीयांजनिमुत्पत्तिं जनिरुत्पत्तिरुद्भवइत्यमरः । नमेने नांगीचकार । तदावांपरितुष्टोहममुनावपुषानघे । प्रादुरासंवरदराद्युवयोःकामदि

एतेनैव पुरात्मनाहमभवं त्वद्दृष्टिमार्गोधुना तेनैवासमितीरयन् जनिमसौ मेने न सूनुः स्वकाम् ॥ मातातं किल मानयंत्यभिनवं विश्वं यदित्यादिना प्राज्ञोसौ विनतः पिता च विदितोसीत्यादिभिस्तं गृणन् ॥ ४९ ॥

त्सया । तृतीयेस्मिन्भवेहंवैतेनैववपुषाधुना । सत्यंमेव्याहृतंसतिइतिभागवते । अनेनवपुषाऽनघेप्रादुरासंतेनैववपुषाइदानींप्रादुरासमित्यतीतवर्तमानकालद्वयसंबं धिशरीरैक्यं साहिप्रत्यभिज्ञाप्रदर्शिता कृष्णेनस्वजनस्यनिराकृतत्वान्नचप्रत्यभिज्ञाभ्रांतिः । सत्यंमेव्याहृतंसतीतिप्रत्यभिज्ञावचनस्याबाधितत्वलक्षणसत्यत्वोक्ते रितिभावः । मातामातृत्वेनाभिमतादेवकीतंअभिनवंमनोहरंकृष्णंविश्वंयदित्यादिना विश्वंयदेतत्स्वतनौनिशांतेयथावकाशंपुरुषःपरोभवान् । बिभर्तिसोयंममगर्भ गोभूदहोनृलोकस्यविडंबनंतदित्यादिनासक्तंस्तुवतीस्वतःकृष्णस्यजनिंनमेनेकिल । प्राज्ञःमनीषीअसौपिताचवसुदेवश्चविनतःप्रणतःसन्विदितोसीत्यादिभिःविदि तोसि भवान्साक्षात्पुरुषःप्रकृतेःपरःकेवलानुभवानंदस्वरूपःसर्वबुद्धिदृक्इत्यादिभिःश्लोकैःप्रकृतिविदूरत्वजगज्जन्मादिकारणत्वेनतंगृणन्स्तुवन्स्वतोपिजनिंनमे

ने । पितृभ्यांपुत्रेणचजननस्यानंगीकारात्नकृष्णस्यजनिरस्तीतिभावः ॥४९॥ नैरनंगीकारेप्याधुनिककल्पनयाकृष्णस्यजनिरस्तिइतिमंदाशंकांपरिहर्तुमाह । जानातीति । लोकेपरंकेवलं परोरिपरमात्मनोःकेवलेपरमव्ययमितिभास्करः । माताआत्मनःस्वस्माज्जातमुत्पन्नंजानाति । पितापिक्कचिदेवजानाति । प्रकृतेतुताभ्यांमातापितृभ्यामनंगीकृतकृष्णजन्मउक्तप्रकारेणनिराकृतांकृष्णस्योत्पत्तिंकोवापुमान्पुरुषःसाधयितुंप्रतिपादयितुंसमर्थः नकोपिसमर्थोभवतीत्यर्थः ॥५०॥ इतोपिकृष्णस्योत्पत्तिर्नसंभवतीत्याह । स्तुतिमिति । योसौकृष्णःस्वपित्रोःस्वस्यपितृत्वेनाभिमतयोर्देवकीवसुदेवयोःस्तुतिमवधार्यश्रुत्वापश्चादुपसंहरविश्वात्मन्नदोरूपमलौकिकमितिप्रार्थनानंतरंशिशुवेषधारीशिशोर्बालस्यवेषआकारस्तंधारयतीतिशिशुवेषधारीबभूव यदापित्रोःसंपश्यतोःस्वयमेवशिशुर्बभूवतदानंशिशुं

जानाति माता परमात्मजातं नूनं पितापि क्वचिदेव लोके ॥ ताभ्यामनंगीकृतकृष्णजन्म को वा पुमान्साधयितुं समर्थः॥ ५० ॥ स्तुतिं स्वपित्रोरवधार्य योसौ बभूव पश्चाच्छिशुवेषधारी ॥ असूत तं का नु तदा मृगाक्षी पुरा पुराणाकृतिमप्रमेयम् ॥ ५१ ॥ यदीह जातो वसुदेववीर्यात्तदा कुतस्तस्य विभूषणानि ॥ वरांबरं कौस्तुभरत्नमुग्रंसुदर्शनं शंखगदादिजातम् ॥ ५२ ॥

कानुमृगाक्षीस्त्रीअसूतसुषुवे षूङ्प्राणिगर्भविमोचनेइतिपठ्यतेतस्माद्धातोःकर्तरिलङ्स्वयमेवशिशुवेषधारित्वान्नकाप्यसूतेत्यर्थः । ननुमास्त्वेतस्योत्पत्तिः स्तुतिकालेविद्यमानस्यालौकिकमात्रस्योत्पत्तिरुच्यतइत्यतआह । पुरापूर्वंपुराणाकृतिःपुरातनशरीरंअप्रमेयंसाकल्येनज्ञातुमशक्यंतामपिकामृगाक्षीअसूत । ननुशंखचक्रपीतांबरादिधारिणोदिव्यदेहस्योत्पत्तिरुच्यतेउतपश्चात्शिशुवत्प्रतीतस्यवा नाद्यः तस्यपुराणाकृतित्वेनोत्पत्तेर्वक्तुमशक्यत्वात् । नद्वितीयः । तस्यस्वयमेवजातत्वस्य बभूवप्राकृतःशिशुरितिस्मृतिसिद्धत्वादितिभावः ॥ ५१ ॥ अलौकिकत्वेनोदितस्यापिरूपस्योत्पत्तिरुच्यतइतिमंदाशंकांपरिहर्तुमाह । यदीति । इहभूमौकृष्णोवसुदेववीर्याद्यदिजातस्तदातर्हितस्यजातस्यविभूषणादिमुकुटकुंडलादीनिवरंउत्तमंअबरंवस्त्रं अंबरंव्योम्निवाससीत्यमरः । कौस्तुभरत्नंउग्रत्न

काशमानंसुदर्शनंचक्रंशंखःपांचजन्यःगदाकौमोदकीआदिर्यस्यतत्सर्वंकुतःकस्माज्जातम् । नहिसुवर्णादीनांरेतोविकारत्वंदृष्टमितिभावः । तेषामनुत्पन्नत्वेअर्द्धज रतीयानुपपत्तेः तदाधारस्यदेहस्यानुत्पत्तेरेवोचितत्वादितिभावः । मुकुटकुंडलवरांबराद्यलंकारभरितत्वेनसुदर्शनाद्यायुधधारित्वेनचअवतीर्णस्यपरमात्मनोवसुदे ववीर्याद्रुत्पत्तिकथनमत्यसंगतमितिभावः आक्षेपालंकारः ॥ ५२ ॥ अहोइति । पिशाचाअपिग्रहाअपिशक्तियुताअंतर्द्धानप्रवेशनिर्गमनादिसामर्थ्ययुक्ताःसं तःदेहिदेहेशरीरिणांशरीरेगतंनिर्गमनंआगतमागमनंगतंचागतंचगतागतं नपुंसकेभावेक्तःएकवद्भावः ।लभंतेप्राप्नुवंति । नहिग्रहस्यप्रवेशोगर्भःपुनर्मंत्रादिनापसरणेउ त्पत्तिर्जायतेकिंतुतादृशशक्तियुक्तत्वात्प्रवेशनिर्गममात्रंहि । तर्ह्यनंतशक्तेरपरिमितसामर्थ्ययुक्तस्यपरमस्यसर्वोत्तमस्यकृष्णस्यबहिर्निर्गमएवदेवक्युदरात् बहिर

अहो पिशाचा अपि देहिदेहे गतागतं शक्तियुता लभंते ॥ अनंतशक्तेः परमस्य न स्यात्कुतो बहिर्निर्ग म एव तर्हि ॥ ५३ ॥ यदा नृसिंहाकृतिराविरासीत्पदाहतस्तंभवराद्धि पूर्वम् ॥ तदा नु का स्त्री सुषुवे मु कुंदं स कस्य वीर्यादजनिष्ट कायः ॥ ५४ ॥ तथैव माया हरिणोपदिष्टा बभूव नंदस्य कलत्ररत्ने ॥ हरि स्तुगित्यादिविमोहराशेर्भविष्यतोस्या इव मूलभूता ॥ ५५ ॥

पसर्पणमात्रंकुतःकस्मात्नस्यात् । अहोअल्पसामर्थ्ययुक्तपिशाचेषुविद्यमानोविश्वासोनंतबलेपरमात्मनिनास्तीतिपरमात्मनउत्पत्तिमंगीकुर्वतांपामराणांमौर्ख्यं महोआश्चर्यमित्यर्थः ॥५३॥ विष्णोःसर्वावतारेषुबहिर्निर्गममात्रंनतूत्पत्तिरित्यत्रनृसिंहावतारएवदृष्टांतइत्याह । यदेति । पूर्वंपूर्वस्मिन्कालेयदाहिरण्यकशिपुपा देनआहतस्ताडितोयःस्तंभवरःतस्मात्हिरण्यकशिपुपादेनताडितस्तंभइत्यपिपौराणिकीप्रथा । नृसिंहाकृतिःनृसिंहयोर्मनुष्यमृगेंद्रयोराकृतिर्यस्यसःयदाआवि रासीदाविर्बभूवतदाकानुस्त्रीकावानारी मुकुंदंप्रह्लादस्यमोक्षप्रदंनृसिंहंसुषुवेनकापीत्यर्थः । सकायःअर्धमनुष्यवदर्द्धंसिंहवत्प्रतीतदेहःकस्यपुरुषस्यवीर्याद्रेतसअ जनिष्टअजायत ॥५४॥ तथैवेति । हरिणोपदिष्टामायालक्ष्मीस्तथैवयथोपदेशंनंदस्यनंदगोपस्यकलत्ररत्नेभार्याश्रेष्ठे कलत्रंश्रोणिभार्ययोरितिविश्वः । रत्नंमणौ

चश्रेष्ठेचेतिरत्नमाला। बभूवदुर्गारूपेणाविर्बभूव। कथंभूता अस्यानंदपत्न्याभविष्यतउत्पत्स्यतःहरिस्तुगित्यादिविमोहराशेः तुकृतनयः तुक्तोकस्तनयश्चनंदनइ तिप्राज्ञैरपत्यंस्मृतमितिहलः। क्षुधितोभीतइत्यादिविमोहराशेर्भ्रांतिनिकायस्यमूलभूतेवआदिभूतेवमायामोहिनीतिभावः । कृष्णावतारसमयेव्रजेयशोदायांदु र्गाप्यजायतेतिपौराणिकीकथा ॥ ५५ ॥ यद्रीति। धीमान्विचक्षणःकृष्णःवसुदेवगृहेममयदिवासोवस्थानंस्यात्तर्हिकंसःसुहृद्वधक्लेशविमुक्तएव सुहृदांमित्राणां वधःस्वेनकरिष्यमाणस्तज्जन्योयःक्लेशस्तद्विदूरएववियुक्तएवयमातिथिर्यमस्यांतकस्यातिथिरातिथ्यार्हःस्यात् मित्रवधक्लेशमननुभूयपरेतोभवेदित्यर्थः अत्रम यिस्थितेमद्वधार्थमागतस्यकंसस्यवधोमयावश्यंकार्यः तथासत्यैकस्यैवकंसस्यनाशोभवेन्नपूतनाशकटादीनामितिवीक्ष्यविचार्यततस्तस्मात्स्थानाद्व्रजंगोष्ठंप्र

यदि स्म धीमान् वसुदेवगेहे वासो मम स्यादिह तर्हि कंसः ॥ सुहृद्वधक्लेशविदूर एव यमातिथिः स्याद् गमद्व्रजं ततः ॥ ५६ ॥ न कंसभीत्याभियौ व्रजं स स्वसंश्रितानामभयस्य कर्ता ॥ स्ववल्लभां नंदकल त्रजातां मनोरमां वीक्षितुमेव सोगात् ॥ ५७ ॥ कपाटमुद्घाट्य गृहाणि वर्त्म ददुः किलास्मै मम बुद्धिरि त्थम् ॥ वनस्पतीशो बहिरभ्रसंस्थस्तदीक्षणार्थी स्वयमुद्बिभेद ॥ ५८ ॥

ति।व्रजागोष्ठाध्वसंचयाइतिभास्करः। अगमत् ॥ ५६ ॥ नकंसभीत्येति। स्वसंश्रितानांस्वभक्तानांअभयस्यभयध्वंसस्यकर्ता कर्तृकर्मणोःकृतीतिषष्ठी। भयपरि हारकइत्यर्थः। कृष्णःकंसभीत्याव्रजंगोष्ठंनाभियौ । स्वाश्रितजनभयपरिहारकस्यकृष्णस्यकुतोभयमितिभावः। किंतुसः नंदकलत्रजातांनंदस्यकलत्रे भार्यायांजातांदुर्गारूपेणप्रादुर्भूतांमनोरमांस्ववल्लभांस्वस्यप्राणकांतांईक्षितुमेवअगात् । विलासिनोहिकामिनीःप्रतिरात्रौगच्छंतीतिभावः। विभावनमलंकारः उपेंद्रवज्रावृत्तं । उपेंद्रवज्राजतजास्ततोगावित्युक्तत्वात् ॥ ५७ ॥ कपाटेति। गृहाणिकपाटमुद्घाट्यउद्भिद्यकपाटंपिधानमपसार्येत्यर्थः अस्मैकृष्णायवर्त्म मार्गम्। अयनंवर्त्ममार्गाध्वपंथानःपदवीसृतिरित्यमरः। ददुः किलतत्रममबुद्धिरित्थंममेत्थंभातीत्यर्थः। बहिरभ्रसंस्थःबाह्याकाशस्थितोवनस्पतीशोवनस्पती

नांमहीरुहाणांईशःस्वामीचंद्रःतदीक्षणार्थींतस्यकृष्णस्यईक्षणंदर्शनंअर्थयतीतितदीक्षणार्थीसन्स्वयमेवैत्यतदुद्भिभेद वनस्पतीशइत्यनेनचंद्रस्यकपाटोद्भेदनेसा मर्थ्यंध्वन्यते ॥ ५८ ॥ करेनिधायेति । अद्भुतंबालंआश्चर्यशिशुंएनंकरेहस्तेनिधायबहिर्निःसरतोस्यशौरेर्वसुदेवस्यतद्गृहद्वारगणःतच्चतद्गृहंचतद्गृहंतस्यद्वारगणःद्वारसमूहःअंतरायोविघ्नोनाभूत् नबभूव । विघ्नोंतरायःप्रत्यूहइत्यमरः । तथाहिकरस्थदेवस्यकरस्थितदेवस्यांतरायःकुतः । देवतास्मरणवतामंतरायोनास्ति किलकिमुहस्तस्थितदेवस्येतिभावः । अर्थांतरन्यासः ॥ ५९ ॥ अगण्येति । जलदोमेघः गणयितुंयोग्यागण्याः नगण्याअगण्यास्ताश्चगाश्चगोकुलंचगोपाश्च अगण्यगोगोकुलगोपास्तेषांनाशंअभीप्सतावांछतास्वेनकरिष्यमाणमघमपराधंपूर्वंपरिहर्त्तुमिवाधिमार्गंमार्गमधिअधिमार्गं अव्ययंविभक्तीत्यादिनाऽव्ययीभा

करे निधायाद्भुतबालमेनमभूद्बहिर्निःसरतोस्य शौरेः॥ न तद्गृहद्वारगणोंतरायः करस्थदेवस्य कुतोंतरायः॥ ५९ ॥ अग
ण्यगोगोकुलगोपनाशमभीप्सता स्वेन करिष्यमाणम् ॥ अघं हि पूर्वं परिहर्त्तुमीषद्ववर्ष तस्मिञ्जलदोधिमार्गम् ॥ ६० ॥
यदेष देवेशितुरग्रजत्वं बभार रोहिण्युदयाद्रिचंद्रः ॥ अघस्य तस्य प्रशमेच्छयेव पथि व्रजंतं फणिपः सिषेवे ॥ ६१ ॥
विरिंचवैरिंचिमुखामरालिः प्रबोधयंतीव तदा ननाम ॥ पुराणपुंसः पुरुषोत्तमस्य नमस्कृतिं लोकविडंबनस्य ॥ ६२ ॥

वसमासः । मार्गेइत्यर्थः । तस्मिन्कृष्णेईषत्किंचिद्ववर्ष । इदानींमार्गमध्येगमनसमयेकिंचिज्जलप्रक्षेपेणकृतसेवामवलोक्यकरिष्यमाणमपराधंक्षमिष्यतीतिभावः ॥ ६० ॥ यदेषइति । फणिनःपातीतिफणिपः । आतोनुपसर्गेइतिकप्रत्ययेधातोराकारलोपः । एषःरोहिण्येवउदयाद्रिस्तत्रत्यश्चंद्रः रोहिणीसुतोबलभद्रःसन्देवानामीशितुर्देवज्येष्ठस्यकृष्णस्ययदग्रजत्वंश्रेष्ठत्वंबभारतस्याग्रजत्वधारणरूपस्याघस्यापराधस्यप्रशमेच्छयेवापराधपरिहारचिकीर्षुरिवपथिमार्गेव्रजंतंकृष्णमातपत्रायिताभिःफणाभिर्वृष्टिंनिवारयन्सिषेवे । त्वच्छत्रधारिसदृशस्यममकुतोग्रजत्वमितिदर्शयन्निवभेजेइत्यर्थः ॥ ६१ ॥ विरिंचेति । तदापथिगमनकालेविरिंचवैरिंचमुखामरालिःचतुर्मुखपंचमुखामरपङ्क्तिः पुराणपुंसोनादिपुरुषस्यपुरुषोत्तमस्यक्षराक्षरपुरुषेभ्यः रमाब्रह्मादिदेवेभ्यइत्यर्थः उत्तमः पंचमीतियोगविभागात्स

मासः साधुः। पुरुषेषूत्तमःपुरुषोत्तमइतिवानिर्धारणेसप्तमीसमासः। ननिर्धारणइतिनिषेधःषष्ठीसमासएव। तस्यलोकविडंबनस्यलोकानुसारेणवसुदेवादिषुनम स्कारंकरिष्यमाणस्यकृष्णस्यनमस्कृतिंनमस्कारंप्रबोधयंतीवानेनप्रकारेणनमस्कारःकर्तव्यइतिप्रदर्शयंतीव नान्यस्यवयसागुणैश्चोत्तमस्याभावात्। कदाप्यने नकृष्णेनपूर्वंनमस्कारोनकृतइतिभावः॥ ६२॥ पुरेति। अर्ककन्यायमुना कालिंदीसूर्यतनयायमुनाचयमस्वसेत्यमरः। पुरापूर्वंरामावतारेप्रतिबंधकर्तुर्लंकांप्रति जिगमिषोर्मार्गमदातुःसमुद्रस्यसरित्पतित्वात्स्वस्यपत्युः समुद्रस्यविशोषणं। बाणगतवह्निनाशुष्कीकरणंपर्वतादिनाबंधनंचविचिंत्यालोच्य। अनेनप्रभवःस्वभृ त्यानामपराधिनांवित्तापहरणंबंधनंचकुर्वंतीतिध्वन्यते। मार्गादानेममापीत्थंभविष्यतीतिभीतेवभययुक्तेवप्रवाहमाराद्दूरात्परिहृत्य। आराद्दूरसमीपयोरित्यमरः।

पुरा स्वभर्तुः प्रतिबंधकर्तुर्विशोषणं बंधनमर्ककन्या॥ विचिंत्य भीतेव ददौ मुरारेः प्रवाहमारात्परिहृत्य मार्गम्॥ ६३॥ भवप्रवाहोपि तवैवमेवेत्युदीरयंतीव यमस्वसा सा॥ करस्थकृष्णाय दिदेश दूरे प्रवाहमा धाय पदार्हपद्याम्॥ ६४॥ विभूषणेषु प्रतिबिंबिताहिः प्रहृष्टपाणिद्वयरोमपत्रः स कृष्णवाहो विनतांग जातः पिता गरुत्मानिव वेगतोगात्॥ ६५॥

मुरारेःकृष्णस्यमार्गंददौ। उपमामूलकोत्प्रेक्षालंकारः॥ ६३॥ भवप्रवाहइति। सायमस्वसायमुनावसुदेवंप्रतितवभवप्रवाहःसंसारप्रवाहोपिएवमेवअहमिव सुलंघ्यइतिउदीरयंतीप्रवाहंदूरेआधाय करेतिष्ठतीतिकरस्थःकृष्णोयस्यतस्मैवसुदेवायपदार्हपद्यांमार्गं सरणिःपद्धतिःपद्येत्यमरः। दिदेशददौ। अनेनपरमात्मा नंकरतलामलकीकुर्वतःसंसारवारिधितरणंअतिसुलभमितिध्वन्यते॥ ६४॥ विभूषणेष्विति। विभूषणेषुप्रतिबिंबितोऽहिःसर्पोयस्यसतथोक्तः अनंतोवामकटकं यज्ञसूत्रंतुवासुकिः। तक्षकःकटिसूत्रंतुहारःकर्कोटकस्तथा। अन्यैराभरणैर्दिव्यैर्भूषितंसर्पभूषणमितिगरुडस्तुतेर्गरुडस्यापिसर्पभूषणत्वादितिभावः कृष्णसंबं धात्प्रहृष्टमुद्भूतंपाणिद्वयंहस्तद्वयंतत्रयानिहर्षोद्गतानिरोमाणितान्येवपत्रेपक्षौयस्यसतथोक्तः गरुत्पक्षच्छदाःपत्रंपतत्रंचतनूरुहमित्यमरः। विनतांगजातःविनतअ

वनतंअंगजातंअवयवसमूहोयस्यप्रश्रयादवनतांगसमूहः अन्यत्रविनतायाअंगजातस्तनुजः पितावसुदेवः वेगतः शीघ्रंगरुत्मानिवगरुडइवअगात् । उपमारूपकश्लिष्टानांसंकरः ॥ ६५ ॥ कृष्णस्यनिशिचोरवद्गमनमसहमानोनृपेंद्रयात्रावद्वर्णयति । गर्जदिति । गर्जंतोध्वनंतोवार्वहाः जलधराएवदुंदुभयोभेर्योयस्यसतथोक्तः । परिपठंतः स्तुवंतोगंधर्वाएवबंदिनस्तुतिपाठकास्तेषांध्वनिर्यस्यसतथोक्तः । ध्वजचिह्निते ध्वजलेखयालांछितेअतएवसत्पुष्पकंविमानं कैलासस्थानमलकापूर्विमानंतुपुष्पकमित्यमरः तस्यश्रीः कांतिः तांमुष्णातीतितस्मिन् हस्ताब्जेकरकमले । निवसन् । स्वः स्वर्गात् । मुक्तानिदैवैरितिशेषः । अमलानिम्लानत्वादिदोषरहितानिमाल्यानिपुष्पदामानि माल्यंपुष्पंपुष्पदाम्नीतिभास्करः । तान्येवचामरगणः उपरिपततांमाल्यानांशेषफणाव्यवधानेनोभयतः पातुकत्वादितिभावः छत्रा

गर्जद्वार्वहदुंदुभिः परिपठद्गंधर्वबंदिध्वनिर्हस्ताब्जेध्वजचिह्निते स निवसन्सत्पुष्पकश्रीमुषि ॥ स्वर्मुक्तामलमाल्यचामरगणच्छत्रायिताहीश्वरः शक्राद्यैः परिवारितः पथि ययौ राजाधिराजप्रभः ॥ ६६ ॥ रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रनिमलश्लाघ्यार्थसंदायिनि ॥ संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातः सुरमंडलीषु महितः सर्गोयमाद्यो मुदम् ॥ ६७ ॥

इति श्रीमद्वादिराजतीर्थपूज्यचरणविरचिते रुक्मिणीशविजये प्रथमः सर्गः समाप्तः ॥ श्रीकृष्णोविजयते ॥

यिताहीश्वरः छत्रवदाचरितश्छत्रायितः सचासावहीश्वरः शेषोयस्यशेषाख्यच्छत्रवानित्यर्थः । शक्राद्यैरिंद्रादिदेवैः परिवारभूतैः परिवारितः परिवृतः सकृष्णः अतएवराजाधिराजप्रभः मूर्धाभिषिक्तोराजश्रेष्ठः राजराजोधनाधिपइत्यभिधानात्कुबेरोवा तस्यप्रभेवशोभेवशोभायस्यसतथोक्तः सन्पथिमार्गेययौ । उपमागर्भितंरूपकमलंकारः शार्दूलविक्रीडितंवृत्तं लक्षणंतूक्तमेव ॥ ६६ ॥ रोम्णामिति । रोम्णांहर्षणंकरोतीतिहर्षणकारीतस्मिन्रोमांचजनके रोमांचोरोमहर्षणमित्यमरः । श्रवणतः श्रुतितः पापानांदुरितानामोघः समूहस्तंविध्वंसतीतिपापौघविध्वंसीतस्मिन् । प्रेम्णाभक्त्या । चिंतयतांस्मरतां । विचित्राआश्चर्यभूताविमलानिर्मलाश्ला

घ्यास्तुत्याअर्थाधर्मादिचतुर्विधपुरुषार्थास्तान्सम्यक्ददातीतिविचित्रविमलश्लाघ्यार्थसंदायीतस्मिन् । संतोवादिराजावादिश्रेष्ठाःशुकादयस्तैरुदितेअभिवर्णिते रुक्मिणीशविजये रुक्मिणीशस्यकृष्णस्यविजयेपराक्रमे । भुविभूमौ । संजातेसतिउज्जृंभितेसति । सुरमंडलीषुदेवश्रेणीषु । महितोमहान् मुदांसंतोषाणां अयमाद्यःप्राथमिकः सर्गःसृष्टिः । सर्गःस्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिष्वित्यमरः । संजातःअभवत् । कृष्णपराक्रमेभुविउज्जृंभितेसति तदारभ्यदेवानांसंतोषोजातइत्यर्थः । काव्यपक्षेशब्दार्थचमत्कारदर्शनेनरोम्णांहर्षणकारिणिप्रेम्णाआदरेण । चिंतयतांचिंतनिकांकुर्वतां । विचित्रःअनेकप्रकारःविमलःजुगुप्साश्लीलतादिदोषरहितःश्लाघ्योवर्णनीयोयोर्थःअभिधेयस्तंसंदायिनितत्प्रकाशकइत्यर्थः । सन्कामादिदोषशून्यःसत्पुरुषइतियावत् विष्णुभक्तत्वादुत्तमइतिवा सचासौवादिराजःवादिराजाख्योयतिस्तेनउदितेकृते रुक्मिणीशविजयाख्येकाव्ये अधिकरणे । अयमाद्यःप्रथमः सुरमंडलीषु महितःसत्कृतः मुदां संतोषाणां सर्गःसृष्टिरूपःसर्गःपरिच्छेदः सर्गशब्दस्यावृत्त्यायोजना । संजातःअभवत् प्रथमःसर्गोजातइत्यर्थः ॥ ६७ ॥ इतिश्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थपूज्यचरणविरचितस्यरुक्मिणीशविजयटीकायांलक्ष्मीपतिभट्टोपाध्यायसूनुनानारायणभट्टेनकृतायांगुरुभावप्रकाशिकायांप्रथमःसर्गः ॥ १ ॥ ॥ ७ ॥



॥ श्रीरुक्मिणीशविजये द्वितीयसर्गप्रारंभः ॥

विचित्रैर्नानावर्णैर्ध्वजैःकेतनैः स्फुरत्तोरणसंचयैश्चविभूषिताबभूव ॥१८॥ लसदिति। तेगोपाः सकृष्णः इमानिगृहाणि बाललीलयाबालक्रीडया प्रवेक्ष्यतीति व्रजमंदिराणिगोकुलेविद्यमानगृहाणि लसंत्यश्चताः पताकाश्चध्वजाश्चकुंभाश्चपूर्णकलशाश्चतोरणानिचलसत्पताकध्वजकुंभतोरणानितैरंजसासम्यक्विभासितानिप्रकाशितानि विभूषितानीवअलंकृतानीववितेनुः ॥ १९ ॥ सइति। तेगोपाः सकृष्णःसदयावलोकैःकृपायुक्तनिरीक्षणैरिमान्वत्सादीन्पालयिष्यन्सन् कृतार्थान्कृतकृत्यान् रचयिष्यतीतिहृदेवाभिप्रायेणेव। वत्सव्रजगोवृषादीनूवत्ससमूहधेनुवृषभादीनादिशब्देनपश्वन्तरंगृह्यते। हरिद्रासहितानिसहरिद्राणितैलानितैरलंचक्रुः। कृष्णदयावलोकेनपात्राणामिवविभूषितत्वमनुचितमितिभावः ॥२०॥ इत्थमिति। हेईशस्वामिन्कृष्ण त्वमत्रव्रजे शिशुभावंशिशुस्वरूपं उपेत्या

लसत्पताकध्वजकुंभतोरणैर्विभासितानि व्रजमंदिराणि ते॥ प्रवेक्ष्यतीमानि स बाललीलया विभूषिता
नीव वितेनुरंजसा ॥ १९ ॥ स पालयिष्यन्सदयावलोकैरिमान्कृतार्थान् रचयिष्यतीति ॥ हृदेव वत्सव्र
जगोवृषादीनलंप्रचक्रुः सहरिद्रतैलैः ॥ २० ॥ इत्थं त्वमत्र शिशुभावमुपेत्य साकमस्माभिरीश विहरेति वद
न्निवास्मै ॥ दध्ना घृतेन पयसा नवनीतजातैः स्निग्धस्तदैत्य विजहार कुमारवर्गः ॥ २१ ॥ विधौ प्रशांतेभ्युदि
ते जनोयमभुंक्त भोगान्पुनरुष्णभानौ॥ करोति धर्मांश्चकितस्तथा तद्विभेति सर्वः परुषान्न शांतात् ॥ २२ ॥

स्माभिःसाकमित्थमनेनप्रकारेणविहरक्रीडयेत्यस्मैकृष्णायवदन्निव । स्निग्धःस्नेहयुक्तःकुमारवर्गः एत्यागत्य दध्नाघृतेनपयसाक्षीरेणनवनीतजातैः तदातस्मिन्कालेविजहारक्रीडांचकार ॥ २१ ॥ विधाविति। अयंजनः प्रशांतेशांतियुक्ते विधौचंद्रे अभ्युदितेसति भोगान्स्रक्चंदनवनितादीन्अभुंक्तअसेवत। चंद्रोदयस्योद्दीपनविभवादितिभावः। उष्णाभानवःकरायस्यसः भानुःसूर्यमयूखयोरितिरत्नमाला । तस्मिन्नुदितेसति चकितःसन्रूत्यादिभोगान्विहाय भीतःसन् धर्मान्स्नानसंध्याजपहोमादींश्चकरोतीति यदुदयकालस्यधर्मानुष्ठानकालत्वादितिभावः। तत्तथायुक्तंतदित्यर्थः। सर्वोपिजनः परुषात्क्रूराद्बिभेति

शांतान्नबिभेति । नहि तरक्षोरिवहरिणशावाद्बिभेति ॥ २२ ॥ नभइति । असौभास्वान्रविः उन्मुखदीप्तिवृंदैः उद्गच्छद्द्युतिसमूहैः नभः गगनंस्पृशन्क्रमेणप रिचरन्ऊर्ध्वमियाय उपर्यगच्छत् । तत्तथाहि विष्णुपदानुषक्तकरः विष्णुचरणासक्तहस्तः हरिपूजकइत्यर्थः । अन्यत्रविष्णुपदेआकाशे वियद्विष्णुपदंवातुपुं स्याकाशविहायसीइत्यमरः । कथमूर्ध्वगतिंनोपयाति । हरिचरणाराधकस्योर्ध्वगतिरेवनाधोगतिरित्यर्थः । श्लिष्टगर्भितार्थांतरन्यासः ॥ २३ ॥ सोमान्वयइ ति । इनः सूर्यः । इनोभूपेरवौपुंसिइतिरत्नमाला । रामस्यबलरामस्यानुजंकृष्णं सोमान्वयेचंद्रकुले जातंनिरीक्ष्यमन्युंक्रोधं मन्युःक्रोधेक्रतौदैन्यइतिरत्नमा ला । आदधानइव रामावतारोमत्कुलेजातः इदानींचंद्रकुलेजातइतिकोपयुक्तइवेत्यर्थः । रागंरक्तिमानंशांतिंचअन्यवत्प्रीतिंपरित्यज्य तीक्ष्णः क्रूरोबभूव । उ

नभस्पृशन्नुन्मुखदीप्तिवृंदैरसौ क्रमेणोर्ध्वमियाय भास्वान् ॥ तथा हि तद्विष्णुपदानुषक्तकरः कथं नोर्ध्व मुपैति लोकः ॥ २३ ॥ सोमान्वये जातमिनो निरीक्ष्य रामानुजं मन्युमिवादधानः ॥ रागं परित्यज्य ब भूव तीक्ष्णः श्रेयोनुजस्यापि न वै सहंते ॥ २४ ॥ ग्लानं विधत्ते न सुखं जनानां छायाश्रितानामपि ति ग्मशोचिः ॥ क्रूरोपि मर्त्यः स्वकलत्रसांद्रसंबंधभाजां नहि तापदायी ॥ २५ ॥

दयेरक्तःशांतःसूर्यःप्रहरादिकालेरक्तिमानंशांतिंपरित्यज्य तेजोभिःतीक्ष्णोबभूवेत्यर्थः । नन्वनुजस्यश्रेयोविषयेकथंक्रोधइत्यतआह । श्रेयइति । लोकाः अनुजस्यापिभ्रातुरपिश्रेयःनैवसहंतेनक्षमंते । दिवासूर्योदयेजातेरात्रौसोमःसूर्यानुजइतिकवीनांहृदयम् । श्लिष्टगर्भितार्थांतरन्यासः एतस्योत्प्रेक्षासापेक्षितत्वा त्तयांगांगीभावेनसंकरः ॥ २४ ॥ ग्लानमिति । सूर्यस्तिग्मंतीक्ष्णंशोचिःरोचिर्यस्यसोपिउष्णकरोपीत्यर्थः । छायांअनातपं छायाकांतिःसूर्यजायाप्रतिबिं बमनातपइति । तांआश्रिताःछायाश्रिताःतेषांजनानांसुखंसुखानिजात्येकवचनं । ग्लानमातपेनखिन्नंनविधत्ते ।तथाहि मर्त्यःमनुष्यःक्रूरोपिनिष्ठुरोपिस्वकलत्र स्यस्वभार्यायाः सांद्रोनिरंतरः घनंनिरंतरंसांद्रमित्यमरः । संबंधस्तंभजंतीनितेषांस्वकलत्रसांद्रसंबंधभाजां स्वस्त्रीनिबिडसंबंधभाजामित्यर्थः । तापदायीनभवति ।

निष्ठुरोक्त्यादिनातापकरोनभवतिहि। छायाश्रितानामित्यनेनच्छायानाम्नींस्वभार्यामाश्रितानांइतिद्योतनात्श्लिष्टमुक्तार्थांतरन्यासः ॥२५॥ हरेर्गोपालेष्ववतारेप्रयोजनमुत्प्रेक्षयति । यतइति । सहरिःकृष्णःयतःयस्मात्कारणात् गोरूपधरांधरित्रींभूमिंपालयिष्यन्आविरासीत् । हिततःकारणात् सकृष्णोनुकूलैरेककार्यैःस्वकीयैरमरैःसहगोपालकवंशजोभूत् गोरक्षणेगोपालकेनभवितव्यमितिभावेनेतिभावः ॥ २६ ॥ अजन्मनइति । विधिंजातकर्मादिककर्मानुष्ठानंजानंतीतिविधिज्ञाः विप्राःब्राह्मणाः अजन्मनोजन्मरहितस्यतस्यकृष्णस्य जातकर्म जननानंतरंशिशोरायुर्वर्चोयशोबलसिद्ध्यर्थंक्रियमाणंकर्म । विधाय। मधोर्मधुनामकस्ययादवस्य कुलेवंशे अजातमप्यनुत्पन्नमपिअतएवअजन्मनइत्युक्तम् ।आदिदेवंदेवानामादिभूतंकृष्णं। स्वमंत्रमधुश्रियास्वीयमंत्राणांजातक

यतो हि गोरूपधरां धरित्रीं स पालयिष्यन् हरिराविरासीत् ॥ सहानुकूलैरमरैः स्वकीयैस्ततः स गोपालकवंशजोभूत् ॥ २६ ॥ अजन्मनस्तस्य हि जातकर्म विधाय विप्रा विदधुर्विधिज्ञाः ॥ मधोः कुलेऽजातमपि स्वमंत्रमधुश्रिया माधवमादिदेवम् ॥ २७ ॥ ततः स कृष्णः कृतजातकर्मा प्रचक्रमेंबास्तनपानकर्म ॥ स्ववीक्षणेनैव मुहुः स्रुतं तत्पयो मुधा स्यादिति चिंतयैव ॥ २८ ॥

र्मोपयुक्तवेदानांमधुनःतंनामोपयुक्तमाक्षिकस्यचश्रियाकांत्या माधवंमाधवनामकं विदधुश्चक्रुः। मंत्रश्रियेत्यनेनमायाधवोमाधवइतिव्युत्पत्तिसंभवात् मधुश्रियेत्यनेनमधुनःसंबंधीमाधवइतिव्युत्पत्तिसंभवादितिभावः ॥ २७ ॥ ततइति। ततोजातकर्मानंतरं अनेनस्तनप्राशनतःपूर्वंजातकर्मणःकर्तव्यतामभिप्रैति। प्राङ्नाभिच्छेदनात्पुंसोजानकर्मविधीयते। स्तनप्राशनतःपूर्वंछिन्नेनालेतुसूतकमितिवसिष्ठवचनात्। कृतंजातकर्मयस्यसतथोक्तः सकृष्णः अंबायामातुःस्तनपानकर्मस्तन्यपानव्यापारं स्ववीक्षणेनैवमुहुःपौनःपुन्येन स्रुतंतत्स्तनजंपयःदुग्धं पयःपानीयदुग्धयोरितिभास्करः। मुधास्यात्भूतलपातादिनावृथास्यादितिचिंतयैव

प्रचक्रमे । स्वदर्शनेनस्तंस्तनपयःकृष्णार्पितंकुर्वन्निवेतिस्तन्यपानंचकरोतीतिभावः ॥ २८ ॥ पुरेति । नविद्यतेजनिर्यस्यसोजनिः अतएवपुरापूर्वं जनन्यामातुः स्तनपानेनजातस्यसुखस्यअनभिज्ञएषकृष्णः अतृप्तकल्पःअतृप्तसदृशःसन् स्तन्यंस्वेनपूर्वंकदाप्यनास्वादितत्वादितिभावः । स्तनक्षीरंस्तन्यंपपौपानंकृतवान् । तथाहि नूत्नेषुनवीनेषु प्रियेषु कस्यतृप्तिरलंबुद्धिर्भवेत् । नकस्यापीत्यर्थः । अजन्मनःस्तनपानमत्यपूर्वमितिभावः ॥ २९ ॥ बहूनीति । सशौरिःकृष्णः नंदपत्न्यायशोदायाः हृदिहृदये पुण्यानिबहूनिश्रेयांसि स्थिरीकर्तुंसंनिधातुं प्रदेशमवकाशंअर्थयतइतिप्रदेशार्थीतस्यभावःप्रदेशार्थितातयैव हृदयेक्षीररूपवस्तुनिस्थितेतत्रैवपुण्यप्रक्षेपस्यावकाशाभावात्क्षीरंबहिःकृत्वापुण्यंप्रक्षेप्तुमिवेतिभावः । उरोजौस्तनौतयोर्दुग्धंक्षीरं पपौ । कृष्णः

पुरा जनन्याः स्तनपानजातसुखानभिज्ञोजनिरेष कृष्णः ॥ पपौ स्तनक्षीरमतृप्तकल्पः प्रियेषु नूत्नेषु हि कस्य तृप्तिः ॥ २९ ॥ बहूनि पुण्यानि स नंदपत्न्याः हृदि स्थिरीकर्तुमुरोजदुग्धम् ॥ पपौ प्रदेशार्थितयैव शौरिर्न चेत्सुतृप्तस्य कुतस्तदिच्छा ॥ ३० ॥ विभुर्यशोदांकगतोपिवत्स स्तनं प्रगृह्यान्यमुरोजदुग्धम् ॥ दृशामृतं दानफलं तदैव दिशन्निवांबाननमीक्षमाणः ॥ ३१ ॥

यावद्यावत्तत्रस्तन्यंपिबतितावत्तावत्पुण्यस्योपचयोजायतइतिभावः । नचेद्यशोदायाःस्तनपानंनचेत्सुतृप्तस्यनित्यतृप्तस्यकृष्णस्यतदिच्छास्तन्येच्छा कुतःकस्मात्कारणात्भवेत् । तृप्त्यर्थंखलुस्तन्यपानंतृप्तेःपूर्वमेवउक्तत्वात्किमर्थंस्तनपानंकुर्यादित्यर्थः ॥ ३० ॥ विभुरिति । विभुःकृष्णः यशोदायाअंकमुत्संगंगतःसन् उत्संगचिह्नयोरंकइत्यमरः । अन्यंपीयमानव्यतिरिक्तंस्तनं शिशुजात्यनुसारेणप्रगृह्यहस्तेनगृहीत्वादृशादृष्ट्या दानफलंतस्यैस्तनक्षीरदानफलं अमृतं तदैव । अत्युत्कटैःपुण्यपापैरिहैवफलमश्नुतइतिवचनात् । तदानीमेवदिशन्निवप्रतिपादयन्निवअंबाननंमातृमुखंईक्षमाणः । इयम

विशिशूनांजातिः । उरोजदुग्धमपिबत् ॥ ३१ ॥ पूर्णस्येति । गोभिर्धेनुभिःपीनंपूर्णंमंदिरंगृहंयस्याःसा गोपी पूर्णस्यावाप्तसकलकामस्यापूर्णतामनवाप्तकामंमत्वा कृष्णः क्षीरंपातुमिच्छतीति सुपआत्मनःक्यजितिक्यचिकृते अश्वक्षीरवृषलवणानामात्मप्रीतौक्यचीतिसुगागमः । मत्वाक्षणशःप्रतिक्षणंप्रभुंसर्वेश्वरंकृष्णं क्षीरंपाययति । गोपीनमंदिरेत्यनेनवित्तबाहुल्यादेवेदं नतुतस्यापूर्तेरितिध्वन्यते ॥ ३२ ॥ ततइति । ततोजातकर्मानंतरं कदाचित्कस्मिंश्चिद्दिवसे पूतनाख्यापूतनानाम्नीराक्षसी पथिमार्गे स्वमाययास्वशक्त्या रम्यंरमणीयंरूपमवाप्य तंकृष्णमंकमारोप्य विषानुषक्तकुचंगरदिग्धस्तनं मुदाहर्षेणांबुजाक्षं अपाययत्पाययामास ॥ ३३ ॥ परिस्फुरदिति । परिस्फुरंतिपरितःप्रकाशवंतिनूपुराणिकंकणानितैरुज्ज्वलादीप्यमाना लसतिनितंबेकटेःपश्चाद्भा

पूर्णस्यापूर्णतां मत्वा गोपी गोपीनमंदिरा ॥ क्षीरस्यतीति क्षणशः क्षीरं पाययति प्रभुम् ॥ ३२ ॥ ततः कदाचित्पथि पूतनाख्या स्वमायया रूपमवाप्य रम्यम् ॥ तमंकमारोप्य विषानुषक्तकुचं मुदा पाययदंबुजाक्षम् ॥ ३३ ॥ परिस्फुरन्नूपुरकंकणोज्ज्वला लसन्नितंबार्पितरत्नमेखला ॥ दृगंतसंस्तंभितमानिमंडला तदोर्वशीवास्ति विलोलकुंडला ॥ ३४ ॥ स पूतनोच्चस्तनकुंभचुंबिमुखारविंदो हरिराबभासे ॥ विषं बहिष्ठं प्रमदांतरंगे सुपूरयंस्तन्मुखवर्त्मनेव ॥ ३५ ॥

गेऽर्पितानिहितारत्नमेखलारत्नखचिताकांचीः स्त्रीकट्यांमेखलाकांचीइत्यमरः । ययासा दृगंतेनलोचनांतेनकटाक्षेणेत्यर्थः । संस्तंभितानांनिर्व्यापारीकृतानांमानिनामहंकारिणांपुरुषाणांमंडलंचक्रंययासा । विलोलेचंचले लोलश्चंचलतृष्णयोरितिविश्वः । कुंडलेयस्याःसा पूतना तदाआगमनकाले उर्वशीवास्ति । उर्वशीनामाप्सरःस्त्रीषुकाचिदुत्तमास्त्री । अनेनपूतनायाःउर्वश्यावेशोगम्यते । वंशस्थवृत्तम् जतौतुवंशस्थमुदीरितंजराविव्युक्तत्वात् ॥ ३४ ॥ सइतिपूतनायाउच्चउन्नतःस्तनःकुंभइवस्तनकुंभः तंचुंबतीतिस्तनकुंभचुंबिमुखारविंदंमुखकमलंयस्यसतथोक्तः । सहरिः बहिष्ठंबहिर्लिप्तंविषं प्रमदायाःपूतनायाः

अंतरंगेऽभ्यंतरे । तन्मुखंतस्यस्तनस्यमुखंचूचुकंतदेववर्त्मस्तनस्रवणद्वारंतेन सुसम्यक्पूरयन्निव आबभासेचकासे ॥ ३५ ॥ रमेति । पूतनायाःउरोजसंगीस्तनसंबंधी असौगरःगरलं बलानुजस्यबालस्यकृष्णस्य । रमायाःमंगलदेवतायाःअधरोष्ठेयदमृतंतस्यपानेनजातोमहानुभावःसामर्थ्यंतेनरमाधरामृतपानजन्यसामर्थ्येन आर्तिंकरोदुःखकरोनबभूव । अमृतपूर्णवदनस्यविषमकिंचित्करमितिभावः । काव्यलिंगमलंकारः ॥ ३६ ॥ मरिष्यतइति । तमसिपुनरावृत्तिरहितेनरकेयःश्रमोदुःखंतदर्हस्यदुरितस्यअंधतमसिपतिष्यतइत्यर्थः । मरिष्यतोमरणंप्राप्स्यतोभोजपतेःकंसस्य इहभूमौ नित्यनरकपाताज्जन्मपुनरुत्पत्तिर्नभविष्यतीतीव व्रतींद्रवृंदैःपरमहंससमूहैःआदृतंअर्चितंपादपीठंपादुकायस्यसतथोक्तः । अनेनस्त्रीहत्याजन्यदोषदूरत्वंध्वन्यते । सकृष्णः त

**रमाधरोष्ठामृतपानजातमहानुभावेन न पूतनायाः ॥ उरोजसंग्यार्तिकरो गरोसौ बभूव बालस्य बलानुजस्य ॥ ३६ ॥ मरिष्यतो भोजपतेर्न जन्म तमःश्रमार्हस्य भविष्यतीह ॥ इतीव धात्रीमवधीत्स तस्य व्रतींद्रवृंदार्चितपादपीठः ॥ ३७ ॥ व्रजस्थबालग्रहपीडिता सा विषप्रदानस्य फलं प्रपेदे ॥ तथा हि कृत्या महति प्रयुक्ता स्वकीयमृत्युत्वमुपैति पृथ्व्याम् ॥ ३८ ॥**

स्यकंसस्य धात्रीमुपमातरं धात्रीजनन्यामलकीवसुमत्युपमातृष्वितिभास्करः । पूतनामवधीज्जघान । अनुत्पत्स्यतस्तस्यधात्र्याकिंप्रयोजनमितिभावेनेतिभावः ॥ ३७ ॥ व्रजस्थेति । साबालग्रहरूपापूतना व्रजस्थबालःकृष्णः सएव गृह्णातीतिग्रहस्तेनपीडिताबाधितासती विषप्रदानस्यकृष्णायविषप्रदानस्यफलंमरणलक्षणंप्रपेदे । ननुकृष्णायविषदानेकृष्णस्यमरणंभवेत् पूतनायाःकथंमरणमित्यतआह । तथाहीति । तथाहि । पूतनायामरणमुचितंहिपृथ्व्याम् । महतिमहापुरुषेप्रयुक्ताकृत्याअभिचारक्रिया स्वकीयमृत्युत्वं कृत्याप्रयोक्तुरेवकाशीस्थसुदक्षिणप्रयुक्तकृत्यावत्मारकत्वमुपैति । परमात्मनिकृ

षणेकुकर्मप्रयोक्त्र्याःपूतनायाःमरणमुचितमितिभावः ॥ ३८ ॥ अपीति । गरलेविषेप्रदत्तेपिअभीतंमरणभयरहितंशिशुंकृष्णं आलोक्य । भुजंगसंधान्विषधराणांसमूहान्विभीषयंतीअतिक्रूरंविषंविषवद्भिर्नदत्तमित्यधोभुवनस्थितान्सर्पांस्तर्जयंतीसापूतना अधःअधोलोकं समगात् पूतना ( मृत्वादिकं ) भुजगभीषणार्थंस्वयमेवाधोलोकंजगामेत्यर्थः । नचेदेवंनचेद्विपर्यस्तमृतिःएकस्यविषदानेऽन्यस्यमरणंकथंस्यात् ॥ ३९ ॥ उत्तुंगेति । उत्तुंगौउन्नतौहस्तौबाहूचरणौचतुंगहस्तचरणाएवआयतानिदीर्घाणिशैलशृंगाणिपर्वतसानूनियस्यास्तां । शृंगप्राधान्यसान्वोश्चेत्यमरः । विस्तारितात्व्यावृत्तादाननान्मुखाद्विनिर्गतेदीर्घदंष्ट्रे यस्यास्तां । शुष्यत्तटाकसदृशोदरघोररूपांशुष्यत्शुष्कीभवन्निर्जलमित्यर्थः तटाकंसरस्तत्सदृशंउदरंघोरंभयानकंरूपंयस्याःतांपूतनां । अतिकर्कशेनातिक्रूरेणरवेणउज्ज्वलांज्वलंतींताटकां । तर्क्ये । अनेनपूतनायाःताटकात्वंध्वन्यते

अपि प्रदत्ते गरले शिशुं तमभीतमुद्वीक्ष्य भुजंगसंघान् ॥ विभीषयंती समगादधः सा न चेद्विपर्यस्तमृतिः कथं स्यात् ॥ ३९ ॥ उत्तुंगहस्तचरणायतशैलशृंगां विस्तारिताननविनिर्गतदीर्घदंष्ट्राम् ॥ शुष्यत्तटाकसदृशोदरघोररूपां तर्क्येऽतिकर्कशरवोज्ज्वलताटकां ताम् ॥ ४० ॥ मुकुंदविद्वेषविषानुषंगाद्वियोजितांगी किल पूतनैका ॥ पपात धन्या ललनाग्रगण्या जगाम चान्यामरलोकलोकम् ॥ ४१ ॥

॥ ४० ॥ जीवास्तुद्विविधाः संतोसंतश्च तत्रसतामेवमोक्षोनत्वसतामितिस्थितेपुराणेषुपूतनादीनांमोक्षोक्तिंघटयन्नत्रजीवद्वयसमावेशंउपपादयति । मुकुंदेत्यादिना । मुकुंदेति । मुकुंदस्यमोक्षप्रदस्यकृष्णस्यद्वेषएवविषंतस्यानुषंगःसंबंधःतस्मात् वियोजितांगी वियोगंप्रापितशरीरा कृष्णविद्वेषाख्यविषपानेनमृतेत्यर्थः । पूतनाशरीरेउभेतिष्ठतः तत्रैकाताटकातमसिपपात । अन्या ललनाग्रगण्या अग्रेगणयितुंयोग्याअग्रगण्या ललनासुनारीषुअग्रगण्याउर्वशी अमराणांलोकः समूहः तस्यलोकंभुवनं जगाम । अतएवधन्या । पूतनायामोक्षत्वोक्तिस्तद्गतोर्वशीमादायेतिभावः । कंसपूतनिकापापाबांधवादियुतायतः । जीवद्वयसमायो

गाढ़तिद्वयजिगीषवः । इतिस्मृतेरुक्तएवार्थः॥ ४१ ॥ सर्वथाभक्तितोमुक्तिर्द्वेषात्तमउदीरितम् । नियमस्त्वनयोर्नित्यंमोहायान्यद्वचोभवेदितिस्मृतेः । द्वेषान्नमो क्षइत्येतदुपपादयन्नाह । यदीति । प्रभुर्मोक्षदानसमर्थः शौरिःकृष्णः विद्विषतोपिद्वेषंकुर्वतोपि यदि प्रसादकृदनुग्रहकृत्स्यात् तर्हि इहभूमौ स्वैरंस्वेच्छया अवतीर्यावतारंकृत्वा सुरारीन्देवशत्रून्रावणादीन्विजित्य भक्तायजात्यैकवचनंभक्तेभ्यः तदीयभाग्यं तेषामसुराणांसंबंध्यैश्वर्यंकुतः कस्मात्प्रयच्छति । असुरान्निगृह्यतेषांधनादानेष्वनिष्टद्वेषप्रतीतितोन्यस्यकारणस्याभावादितिभावः ॥ ४२ ॥ द्विषामिति । किंचहरिःकृष्णः यर्हियदिद्विषांद्वेषिणांमोक्षंयच्छति तर्हिअरिष्टः वातासुरस्तृणावर्तः वत्सोवत्सासुरः केशीकेशाख्योदैत्यः तेषांविनाशकालेमरणकथनसमयेऽपवर्गमार्गः केश्यादीनांमोक्षगमनं शुकेनपूतनायामोक्षं वदता शुकाचार्येण कस्मान्नविवृतः नोक्तः । केश्यादीनांमोक्षमनुक्त्वा पूतनायामोक्षत्वोक्तेर्ज्ञायतेत्रकश्चिद्विशेषोस्तीति सचविशेषःपूतनायांशुभजीवसमा

यदि प्रभुर्विद्विषतोपि शौरिः प्रसादकृत्तर्हि कुतः सुरारीन् ॥ विजित्य भक्ताय तदीयभाग्यं प्रयच्छति स्वै रमिहावतीर्य ॥ ४२ ॥ द्विषां हरिर्यच्छति यर्हि मोक्षं न तर्हि कस्मादपवर्गमार्गः॥ अरिष्टवातासुरवत्सके शिविनाशकाले विवृतः शुकेन ॥ ४३ ॥ पतंत्यधोनादृतकृष्णपादा न चेद्यमस्यालयमेष्यसि त्वम् ॥ स नै र्ऋतं धाम जगाम दैत्य इतीरिता दुर्गतिरेव तेषाम् ॥ ४४ ॥

वेशः केश्यादिषुनेति ॥ ४३ ॥ नकेवलंविद्वेषिणोमोक्षानुक्तिः प्रत्युतनरकगतिरेवोक्तेतितेषांनरकगतिवचनान्यर्थतः पठति । पतंतीति । अनादृतौतिरस्कृतौकृष्ण स्यपादौयैस्तेअनादृतकृष्णपादाः अधस्तमसि पतंति । अनेन येन्येऽरविंदाक्षविमुक्तमानिनस्त्वय्यस्तभावाद्विशुद्धबुद्धयः । आरुह्यकृच्छ्रेणपरंपदंततः पतं त्यधोनादृतयुष्मदंघ्रयइति । नचेन्मार्गेनददासिचेद्यमस्यालयंयमालयंयमलोकंत्वंएष्यसि । अनेन अंबष्ठांबष्ठमार्गंनोदेह्यपक्रममाचिरम् । नचेत्सकुंजरंत्वाद्य न यामियमसादनमितिवचनमुदाहृतम् । यदिकृष्णहतानांद्वेषिणांमोक्षंस्यात्तर्हिअस्मिन्वचनेयमसादनमित्यनुक्त्वाकृष्णोममसादनमितिब्रूयादितिभावः । सकृष्णेन हतः दैत्यः नैर्ऋतंधामकदापिसुखरहितंरक्षसःसदनंजगाम । अनेन जगामकृच्छ्रान्निर्ऋतेरथक्षयंपुष्पैःकिरंतोहरिमीडिरेसुराः इतिवचनमुदाहृतम् । इतिइत्थंएपु

वचनेषुतेषांद्वेषिणांदुर्गतिरेवईरिताउक्ता । अतोनद्वेषान्मोक्षइतिभावः ॥ ४४ ॥ विद्वेषमूलेति । नत्रूमोवयंद्वेषेणहरितुष्टिरिति किंतुद्वेषमूलस्मरणेन । द्वेषोनामभगवतिदोषप्रतिसंधानं । तत्तुतत्स्मरणंविनानभवति । द्वेषस्यस्मरणमूलत्वात्तस्यमूलभूतस्मरणेनहरितुष्टिरितिवदामः । इत्यपिपक्षः अवद्यंदोषं नजहातिनत्यजति । अयमपिपक्षोदुष्टइत्यर्थः । तथाहि कामधेनुंहिंसार्थंहंतुंआलिंगयतः आश्लिष्यतः तरक्षोव्याघ्रस्यचेष्टयांऽगस्पर्शादिव्यापारेण तुष्यतिकिं संतोषंगमिष्यतिकिं नगमिष्यतीत्यर्थः ॥ ४५ ॥ नचेदिति । अपिचहेमूढाः द्वेषमूलस्मरणेनापिपुण्यमितिवदंतोमूर्खानचेत् द्वेषमूलस्मरणेनहरितुष्टिरितिपक्षोदुष्टोनभवेच्चेत् तर्हिगवांधेनूनां विप्रशिखामणीनांब्राह्मणोत्तमानां हतिर्हत्या तेषांगवादिनांअंगानिशरीराणितेषांसस्पर्शनदर्शनाद्यैस्तदीयानांगवादिसंबंधिनां नामग्रहणादिभिः उच्चारणादिभिर्वापुण्यायधर्मायभवेत्हि । दर्शनस्पर्शनादिकंविनातेषांहननायोगाद्धि । तन्मूलदर्शनस्पर्शनादिनापुण्यंस्यादितिभावः ॥ ४६ ॥

विद्वेषमूलस्मरणेन तुष्टिरित्यप्यवद्यं न जहाति पक्षः ॥ हिंसार्थमालिंगयतस्तरक्षोः किं चेष्टया तुष्यति कामधेनुः ॥ ४५ ॥ न चेद्गवां विप्रशिखामणीनां हतिश्च पुण्याय भवेद्धि मूढाः ॥ तदंगसंस्पर्शनदर्शनाद्यैस्तदीयनामग्रहणादिभिर्वा ॥ ४६ ॥ दोषं दुरंतं क्व च वर्णयद्भिर्द्वेषं हरेः क्वापि तमोनिदानम् ॥ ईशाप्तिविघ्नं क्व च निर्णयद्भिरेतन्मतं विप्रतिषिद्धमार्यैः ॥ ४७ ॥

दोषमिति । हरेः कृष्णस्य द्वेषंदुरंतंदुस्तरं दोषंक्वचकुत्रचित् । यदानिंदद्भितामत्वंवद्भक्तेमयिचाघवान् । तस्मात्पितामेपूयेतदुरंतात् दुस्तरादघात् इत्यत्रवर्णयद्भिः वदद्भिः क्वापिकुत्रचित् भगवन्निंदयावेनोद्विजैस्तमसिपातितः । हिरण्यकशिपुश्चापिभगवन्निंदयातमः । विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः । इत्यादौ हरेर्द्वेषंतमोनिदानंतमःप्राप्तिकारणं निदानंत्वादिकारणमित्यमरः । वदद्भिः क्वचकुत्रचित् । तानहंद्विषतःक्रूरान्संसारेषुनराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु । आसुरींयोनिमापन्नामूढाजन्मनिजन्मनि । मामप्राप्यैवकौंतेयततोयांत्यधमांगतिम् । इत्यादौईशस्यहरेराप्तिस्तस्याविघ्नंहरिद्वेषमीशावाप्तिलक्षणमोक्षप्रतिबंधमितिनिर्णयद्भिः निश्चयंकुर्वद्भिः आर्यैः नःपूर्वाचार्यैः शुकादिभिरेतन्मतंद्वेषान्मोक्षइतिमतंविप्रतिषिद्धंनिराकृतं । अतोविद्वेषात्नमोक्षइतिभावः ॥ ४७ ॥

अद्वैतिनइति । यद्यस्मात्कारणात्अद्वैतिनः ऐक्यवादिनः तार्किकइतिमानिनोवातार्किकस्येत्यर्थः । अपरेषामन्येषांवादिनांवाराद्धांतः सिद्धांतस्तन्म ध्येकस्यापिवादिनः सिद्धांतइत्यर्थः । ज्ञानंविनाबंधमोक्षःनहिनसिद्धांतितोहि । तैर्ब्रह्मज्ञानपदार्थादिज्ञानेनैवमोक्षइत्युक्त्वादितिभावः । तेनकारणेनइदंज्ञा नंविनाद्वेषान्मोक्षकथनंआत्मीयवचोविरुद्धं । एवंवदतः स्ववचनविरोधःस्यादितिभावः ॥ ४८ ॥ ज्ञानेति । ज्ञानादन्यस्यमार्गस्यमोक्षसाधनस्यप्रतिषेधकर्त्र्या नान्यःपंथाअयनायविद्यतइतिश्रुत्या निर्णायकब्रह्मसूत्रकर्त्राच अथातोब्रह्मजिज्ञासा यतोज्ञानंविनानमोक्षः अतोब्रह्मजिज्ञासाकर्तव्येतिब्रह्मसूत्रकर्त्राविदव्यासे नच एषः सुलभः देहायासाजनकोमार्गः नदृष्टः किं । तपस्यातपोमौनव्रतैः कृच्छ्रसांतपनादिव्रतैः कर्शितान्यंगानियैस्तैर्योगिभिर्वाकिंनदृष्टः । उपायस्योपायां

अद्वैतिनस्तार्किकमानिनो वा राद्धांतमध्येपरवादिनां वा ॥ ज्ञानं विना यन्नहि बंधमोक्षस्तेनेदमात्मीय
वचोविरुद्धम् ॥ ४८ ॥ ज्ञानान्यमार्गप्रतिषेधकर्त्र्या श्रुत्या च निर्णायकसूत्रकर्त्रा ॥ किमेष मार्गः सुल
भो न दृष्टः किंवा तपस्या व्रतकर्शितांगैः ॥ ४९ ॥ अवैष्णवानां यतनैर्न मोक्षः पतंत्यधस्तामसवृत्तय
स्ते ॥ एतत्समानार्थकभारतोक्तिव्रातामतं तं न मतं शुकस्य ॥ ५० ॥ निंदां मुकुंदस्य सकृन्निशम्य मंदः
पतेत्किं पुनरच्युतं तम् ॥ निंदन्निति त्व्यालपतः शुकस्य किं द्वेषतो मुक्तिरिति स्म हृद्यम् ॥ ५१ ॥

तराविरोधित्वादुपायमध्येएकस्योपायस्यकथनेकोदोषइत्यतउक्तं सुलभइति । द्वेषस्यापिमोक्षोपायत्वेसुलभत्वाद्वेषमार्गएवश्रुत्यासूत्रकर्त्राचकथनीयःस्याद्दृषि भिरपिसएवानुष्ठेयःस्यान्नचैवमतोनद्वेषान्मोक्षइतिभावः ॥ ४९ ॥ अवैष्णवइति । अवैष्णवानांविष्णुभक्तिरहितानां यतनैरपियत्नैरपि मोक्षोनभवति । ये तामसवृत्त यःतामसव्यापाराअसुरास्ते अधःपतंति । एतत्समानार्थकाभारतोक्तयः । वैकुंठंनामतल्लोकंदिव्यंनित्यंसनातनम् । अवैष्णवानामप्राप्यंमहायत्नवतामपि । ऊर्ध्वं गच्छंतिसत्वस्थामध्येतिष्ठंतिराजसाः । जघन्यगुणवृत्तिस्थाअधोगच्छंतितामसाइत्याद्याभारतोक्तयः तासांव्रातंवृंदंतस्यामतंअनभिप्रेतं तत्हरिद्वेषिणांमोक्षकथ नमतंअभिमतंसिद्धांतोनभवति । नहिभारतविरुद्धंशुकोवदतीतिभावः ॥ ५० ॥ निंदामिति । मुकुंदस्यमोक्षदातुः परमात्मनोनिंदांदोषोक्तिं सकृदेकवारंनिश

स्यश्रुत्वामंदोमूढः पतेदधोगच्छेत् पुनस्तमच्युतंज्ञानादिगुणेभ्यश्च्युतिरहितंकृष्णंनिंदन्पुरुषः पतेदितिकिंवक्तव्यं । निंदांभगवतःशृण्वन्तत्परस्यजनस्यवा । त
तोनापैतियःसोपियात्यधःसुकृताच्च्युतः इतीत्थमालपतोवदतःशुकस्यशुकाचार्यस्यद्वेषतोमुक्तिरितिकथनंहृद्यंस्माकंकिंआकूतंकिं । तथासतीस्ववचनव्याहतिः
स्यात् नहिस्वव्याहतंशुकोवदतीतिभावः ॥ ५१ ॥ ननु यातुधान्यपिसात्स्वर्गंअवापजननीगतिमितिस्वर्गगत्युक्तेः कागतिरित्यतआह । आपोब्रुवन्तिति । सना
तनंअपौरुषेयंयद्वेदवाक्यंतस्मात्‌जडजलस्य जडेत्यवक्तृत्वद्योतनार्थं । वक्तृताकिंवक्तृत्वमुपपद्यतेकिं । नन्वपांजडत्वात्तद्वक्तृत्वस्यप्रमाणविरुद्धत्वेनआपोब्रुव
न्तितिअभिमानिदेवतापरत्वं । यदितर्हितथाशुकोक्ताववपिशुकाचार्यवाक्येपिकंसादिमोक्षवचनानि कंसपूतनादिमोक्षवचांसि युक्तयोवक्ष्यमाणास्ताभियुक्ता मा
नांतरोदिताः प्रमाणांतरोक्तामनोमधुरामनोज्ञायेर्थाः कंसादिशरीरस्थशुभजीवपरत्वरूपास्तान्भजंतीतियुक्तियुक्तमानांतरोदितमनोमधुरार्थभांजि यथाआपोब्रु

आपो ब्रुवन्तिति सनातनवेदवाक्यात् किं वक्तृता जडजलस्य तथा शुकोक्तौ ॥ कंसादिमोक्षवचनान्यपि युक्तियुक्तमानांतरोदितमनोमधुरार्थभांजि ॥ ५२॥ यथा ग्रहाविष्टकलेवरे द्वौ कृताभिमानाविह चेतनौ स्तः ॥ तथैव कंसादिशरीरसंस्थौ शुभाशुभौ द्वौ सुखदुःखभाजौ ॥ ५३ ॥

वन्तितिवाक्यस्यप्रत्यक्षादिप्रमाणविरोधेनप्रतीतार्थंपरित्यज्यतद्विरोधायतदभिमानिदेवतापरत्वमुच्यते । तथाकंसादीनांद्वेषिणांमोक्षवचनस्योक्तप्रमाणविरोधेन
प्रतीतार्थंपरित्यज्यपूतनाकंसनरकशिशुपालादिषुद्विधा जीवाःसंतस्त्वसंतश्च । तत्रबंध्वादिरूपिणः विष्णोःसंतइतिज्ञेयाः । असंतःशत्रुरूपिणः । शुभजीवप्रका
शेनकदाचिच्छुभबुद्धयः । विपर्ययेन्यथाचस्युःशुभास्तत्रहरिंययुः । अशुभास्तुतमोघोरंयदितत्रैवमध्यमाः । मध्यमांगतिमेवापुरेकदेहगताअपीतिगरुडपुराणोक्त
वचनानुसारेणकंसादिशरीरस्यशुभजीवपरत्वमंगीकृत्यसंतोष्टव्यमित्यर्थः ॥ ५२ ॥ कंसादीनामेकैकस्मिन्शरीरेउक्तप्रमाणसिद्धजीवाभिमानेऽसंभावनांशं
कांनिवारयन्नाह । यथेति । यथाग्रहाविष्टकलेवरेग्रहग्रस्तशरीरेकृताभिमानौद्वौजीवौतिष्ठतः । तथैवकंसादिशरीरसंस्थौशुभाशुभौसदसंतौसुखदुःखभाजौसु
खदुःखभोक्तारौ । तत्रशुभजीवःसुखभोक्ताऽशुभजीवोदुःखभोक्तेतिविवेकः । द्वौतिष्ठतःअतएकस्मिन्शरीरेजीवद्वयाभिमानोनासंभावितइतिभावः ॥ ५३ ॥

शिशुपालादिष्वसुरशब्दप्रयोगबलादपिजीवद्वयमंगीकर्तव्यमित्याह । द्विषंतमिति । शिशुपालेद्विषंतंद्वेषंकुर्वंतंएकंदितिजमसुरंविहायहरिप्रियस्यहरिभक्तस्य असुरताऽसुरशब्दवाच्यत्वंकथंस्यात् । शिशुपालेऽयमसुरइत्यसुरशब्दःप्रयुज्यते सकिंनिबंधनइतिविचारणीयं किंस्वभावतोऽसुरत्वाद्वाऽसुरयोनावुत्पन्नत्वा द्वाऽसुरवद्विद्वेषकारणाद्वाकदाचित्तत्कारणाद्वा । नाद्यःअस्यजयरूपस्यशिशुपालस्यहरिप्रियत्वात् । नद्वितीयःशिशुपालस्यक्षत्रिययोनावुत्पन्नत्वात् । तृतीये पिनिरंतरद्वेषकरणाद्वाकदाचित्कारणाद्वा नाद्यः । शिशुपालेक्वचिद्धरिभक्तिश्रवणात् । नद्वितीयइत्याह । क्वचिदिति । क्वचित्कदाचित्द्विषंतोपिअर्जुनेंद्रपुरोग माःपार्थपुरुहूतप्रमुखाःदैत्यतयाअसुरत्वेननिरुक्ताःकिं । नहिकदाचितद्वेषंकुर्वत्सुपार्थादिषुदैत्यशब्दःप्रयुज्यतइत्यर्थः । तथाचासुरशब्दप्रयोगात्तन्निष्ठजय स्यहरिप्रियत्वेनासुरत्वायोगात् । तच्छब्दवाच्यःकश्चनासुरःशिशुपालेस्वीकर्तव्यइति ॥ ५४ ॥ शिशुपालादीनामसुरत्वेसनकादिशापएवनिमित्तमस्तिइत्याशं

**द्विषंतमेकं दितिजं विहाय हरिप्रियस्यासुरता कथं स्यात् ॥ क्वचित् द्विषंतोपि किमर्जुनेंद्रपुरोगमा दैत्यतया निरुक्ताः ॥ ५४ ॥ न चोग्रशापादसुरत्वमेषां विहाय दुष्टं कमपि स्वनिष्ठम् ॥ यतोभिशप्तेपि नृपे तदेतदभूत्पुरा किंकरदैत्ययोगात् ॥ ५५ ॥ तवैव चैद्ये जयनामकः सन् तथान्यस्मिन्विजयाभिधानः ॥ निरंतरद्वेषफलस्य मूलं बलेन रक्षोपि च तर्हि सिध्येत् ॥ ५६ ॥**

कायामाह । नचेति । एषांशिशुपालादीनामसुरत्वंस्वनिष्ठंशिशुपालादिष्वाविष्टंकमपिदुष्टमसुरंविहायोग्रशापाच्चसनकाद्युग्रशापादपिनभवतियतःकारणात्पुरा पूर्वं अभिशप्तेपिशक्त्याख्यर्षिणारक्षोभवेतिशप्तेपिनृपेकल्मषपादाख्येराज्ञितदेतदसुरत्वंकिंकरदैत्ययोगात्किंकराख्यराक्षसप्रवेशादभूत् । सशापात्तस्यविप्र र्षेर्विश्वामित्रस्यचाज्ञया । विवेशकिंकरोनामराक्षसोनृपतिंतदेति । भारतवचनादयमर्थःसिद्धः । अतःसनकादिशापोपिशिशुपालादीनामसुरावेशेनिमित्तं नतुजी वस्यासुरत्वापादकइतिभावः ॥ ५५ ॥ इतोपि । जीवद्वयमंगीकर्तव्यमित्याह । तवैवेति । तवैवतवापिमते चैद्येशिशुपाले सन्सज्जनःजयनामकस्तथाऽन्य स्मिन्दंतवक्रेविजयाभिधानः विजयइत्यभिधानंयस्यसतिष्ठति । शिशुपालदंतवक्रयोःशरीरेजयविजयौतिष्ठतइतितवाभिमतइत्यर्थः । तर्हिनिरंतरद्वेषफल

स्यसंततद्वेषलक्षणकार्यस्यमूलकारणंरक्षःराक्षसोपिच बलेन कार्यान्यथानुपपत्यानहिकारणंविनाकार्यमुत्पद्यतइतिभावः। त्वदीयांगीकारबलेनचसिध्येत् तद्व चनानुसारेणशुभःकार्यान्यथानुपपत्याशुभश्चेतिजीवद्वयंसिध्यतीतिभावः ॥ ५६ ॥ युक्त्यंतरमप्याह। यदीति। इहचैद्येयदिदितिजोनास्तिचेत्तर्हिवैराद्वेषा न्नमोक्षः। किंतुपरिचर्ययैवसेवयैव। स्वल्पकालीनवैरमनादृत्यत्वद्वारिस्थितायबहुजन्मकृतशुश्रूषयाप्रसन्नःपरमात्मामोक्षंदिशतीतिवक्तुमुचितत्वादितिभा वः। यदातुयदितुसेवाविधुरःसेवारहितः केवलवैरकृत् अपरःजयादन्यःजीवोस्तिचेत्तदाबलात्बलेनउक्तन्यायेनजीवयुग्मंसिध्यति ॥ ५७ ॥ ननुसज्जी वस्यैवचेत्मोक्षस्तर्हि यातुधान्यपिसात्स्वर्गमवापजननीगतिम्। कृष्णंमुक्तस्तनक्षीराःकिमुगावोनुमातरइत्युक्तकैमुत्यंकथंघटतइत्याह। विद्वेषीति। करुणांबु

यदीह चैद्ये दितिजो न वैरान्न तर्हि मोक्षः परिचर्ययैव ॥ यदा तु सेवाविधुरोपरोऽस्ति तदा बलात्सि ध्यति जीवयुग्मम् ॥ ५७ ॥ विद्वेषिजीवकृतसंगमपि स्वभक्तं कृष्णो व्यमोचयदहो करुणांबुराशिः ॥ किं नाम तद्रहितभक्तजनानिति स्म कैमुत्यमूहयत सत्यवतीसुतोक्त्या ॥ ५८ ॥

राशिःकृपासमुद्रःकृष्णः विद्वेषिजीवेनकृतःसंगःसंबंधःयेनतं विद्वेषिजीवकृतसंगमपिस्वभक्तंव्यमोचयत्। संसारबंधादितिशेषः। दुःसंगसंसर्गजन्यपापंप रिहृत्यभक्तंमोचयतिकिल। तद्रहिताद्दुःसंसर्गरहितायेभक्तजनाःतान्मोचयतीतिकिंनामकिमुवक्तव्यं। अहोभक्तजनेषुकृष्णस्यकरुणाआश्चर्यं। इत्यनेनप्रकारे णउक्तकैमुत्यमूहयततर्कयत। कैमुत्यएवमर्थःस्वीक्रियतामित्यर्थः। इत्थंकैमुत्यार्थकल्पनंनस्वकपोलकल्पितं। किंतुस्पष्टंवेदव्यासवचनं अस्तीत्याह। सत्य वतीसुतोक्त्येति। द्वेषिजीवयुतंचापिकृष्णश्चैद्यंव्यमोचयत्। अहोतिकरुणाविष्णोःशिशुपालविमोक्षणादितिसत्यवतीसुतोक्त्यावेदव्यासवचनानुसारेणउक्त कैमुत्यवचनस्योक्तएवार्थः। तस्माज्जीवद्वयांगीकारेणकैमुत्याविरोधइतिभावः ॥ ५८ ॥

नन्वयमर्थो व्यासेनस्पष्टं किमितिनोक्तइत्यतआह । द्वेषाभिवृद्धिमिति । द्विषतांद्वेषंकुर्वतांसंमुग्धाकारेणद्वेषिणोमोक्षकथनेऽस्माभिर्द्वेषेक्रियमाणेमोक्षोभविष्य तीतिबुद्ध्यापुनःपुनर्द्वेषकरणेनद्वेषाभिवृद्धिं विधातुंकर्तुंव्यासोवेदव्यासः इदमुक्तंप्रमेयंस्पष्टंयथातथानोचेनजगाद । नचेद्वेषाभिवृद्ध्यर्थंस्पष्टकथनंकृतंचेत्द्वे षेणतमःस्नेहेनमुक्तिरितिस्पष्टमुक्तंचेद्वेषंकोपिनकुर्यात् तथाचभक्तजनैरगम्यमप्राप्यंपापैर्द्वेषातिरिक्तदुष्कृतैरसाध्यंतमःकःप्राप्नुयात्नकोपीत्यर्थः । अतः द्वे षिणांतमःप्राप्त्यर्थंव्यासःस्पष्टंनजागादेतिभावः ॥ ५९ ॥ पूतनादिषुजीवद्वयसमावेशापादनसामर्थ्यंश्रीमदाचार्यमतप्रवेशेनजातमित्युद्रिक्तभक्तिस्तन्मतंस्तौति । आनंदेति । स्वानंददायिस्वरूपानंदप्रदंमोक्षप्रदमित्यर्थः । शिथिलीकृतानिर्दलीकृतामत्ताउन्मत्ताःपूर्वोत्तरानभिज्ञामायिनोमायावादिनोयेनतत्तथोक्तं मा

**द्वेषाभिवृद्धिं द्विषतां विधातुं व्यासश्च न स्पष्टमिदं प्रमेयम् ॥ ऊचे न चेद्भक्तजनैरगम्यं पापैरसाध्यं तम आप्नुयात्कः ॥ ५९ ॥ आनंदतीर्थमतमुज्झितदोषजातं स्वानंददायि शिथिलीकृतमत्तमायि॥ मानौघ शोभि मम [illegible]नपुंजतोभीर्येनेदृशी मतिरभूत्कवितोल्लसद्धः ॥ ६० ॥ ततः शुभौत्थानिककर्म कर्तु मियेष नंदः पुरुषोत्तमस्य ॥ गृहाद्बहिर्दैत्यचमूं जिघांसुरमंस्त तत्स्वाचरणानुरूपम् ॥ ६१ ॥**

नौघशोभिप्रमाणजालशालि आनंदतीर्थमतं उज्झितंदोषाणांवृंदंयेनतदुज्झितदोषजातं । येनमतेनममदुर्जनपुंजतःदुष्टजनसमूहादभीर्भयरहिताकवितायाः कवित्वस्योल्लसंतीभूःस्थानंयस्यांईदृशीएतादृशीमतिर्बुद्धिरभूत ॥ ६० ॥ ततइति । ततःपूतनाहननानंतरंनंदःपुरुषोत्तमस्यसर्वोत्तमस्यकृष्णस्य शुभौत्थानि कंशोभनौत्थानिकंकर्म । औत्थानिकंनाम द्वादशेहनिवासार्धमासेवातृतीयेवाशिशोरादित्यदर्शनार्थंगृहाद्बहिर्निष्क्रमणंगृहात्तृतीयार्धमासेवादित्यदर्शनमितिऔ त्थानिकंकर्मकर्तुमियेषऐच्छत् । गृहाद्बहिर्दैत्यचमूंराक्षससेनांजिघांसुर्हंतुमिच्छुःकृष्णस्तंनिष्क्रमणंकर्मस्वाचरणरूपंस्वव्यापारानुकूलं अमंस्तअबुध्यत । ए कापूतनागृहाभ्यंतरेवध्या अन्येबहिर्वध्यास्तेषांवधस्तुबहिःकर्तव्यस्तदर्थंबहिर्जिगमिषोःस्वस्यानुकूलंमतमित्यर्थः ॥ ६१ ॥

निजमिति। पितानंदः। निजंस्वकीयं बंधुवर्गंबांधवान् समाहूय श्रीपतिंलक्ष्मीपतिं सुतंकृष्णं अभ्यषिंचत्स्नापयामास। कथमिव ततःप्रभृतितदारभ्य उद्धतानां दैत्यानांवर्गस्यसमूहस्यविघातेहननरूपेकर्मणि दीक्षांतस्यकृष्णस्यबध्नन्निव ॥ ६२ ॥ यदेति। यशोदानंदपत्नी यदायस्मिन्काले सुहृत्संचयंनिष्क्रमणोत्सवे समागतंबंधुवर्गंअंचयंतीगंधमाल्यादिनापूजयंतीसुतंकृष्णं मुदासंतोषोद्रेकेण नसस्मारनस्मृतवती। तदातस्मिन्कालेमायीकपटी तंकृष्णं निहंतुकामःअतएव शूरः पराक्रमीशकटासुरःशकटाकारोदैत्योऽभिससारआजगाम ॥ ६३ ॥ मरिष्यमाणइति। उत्तरत्रमरिष्यमाणःसकंसः सकलंसमस्तं स्वभाग्यंस्वकीयंधनादिसंपदं अनेनशकटेन तस्यशकटाकारत्वादितिभावः। साधनेनसहस्वेनसहनेष्यति। अन्यत्रगंतारोलोकाःस्वकीयंवस्तुजातंशकटेनिक्षिप्यनयंतीतिभावः।

निजं समाहूय स बंधुवर्गं पिता सुतं श्रीपतिमभ्यषिंचत्॥ ततः प्रभृत्युद्धतदैत्यवर्गविघातदीक्षामिव तस्य बध्नन् ॥ ६२ ॥ यदा सुहृत्संचयमंचयंती सुतं न सस्मार मुदा यशोदा ॥ तदैव मायी शकटासुरस्तं निहंतुकामोभिससार शूरः॥ ६३ ॥ मरिष्यमाणः सकलं स्वभाग्यमनेन कंसः सह नेष्यतीति ॥ भियेव पूर्वं शकटं मुरारिर्बभंज पादेन सुकोमलेन ॥ ६४ ॥ ततः स मायामपहाय दैत्यः स्वरूपधारी पुनराविरासीत् ॥ तथा हि विष्णोः पदयोगकाले कथं तु सा जीवितुमुत्सहेत ॥ ६५ ॥ स कृष्णपादाभिहताखिलांगो बभूव दैत्यः किल निर्गतासुः॥ अहं तु मन्ये स्वकजात्ययोग्यरथांगधारी स ममार धीरः॥ ६६ ॥

इतिभियेव मुरारिर्मुरमथनःकृष्णः पूर्वंप्रथमं सुकोमलेनअतिमृदुलेनपादेन शकटस्थासुरंबभंजन्यहनत् ॥ ६४ ॥ ततइति। कृष्णपादघातानंतरंसदैत्यः शकटासुरः मायांकपटमपहायत्यक्त्वा। पुनःस्वरूपधारीसन्नाविरासीदाविर्बभूव। तथाहि। कृष्णपादघातानंतरंमायामपहायस्वस्वरूपधारित्वंतस्योचितं हि। विष्णोःसकलमायानिवर्तकस्यकृष्णस्यपदयोगकालेपादसंबंधसमये सामाया जीवितुंकथमुत्सहेतउत्साहंकुर्यात् ॥ ६५ ॥ सइति। कृष्णपादेन अभिघातानिचूर्णीकृतानिअखिलानिसमस्तानिअंगानिअवयवाःयस्यसदैत्यः। निर्गताअसवःप्राणायस्यसबभूवमृतइत्यर्थः। अत्रअहंतुइत्थंमन्ये। धी

र:शकटासुर:कृष्णपदाभिघातेननममार किंतुस्वकजात्ययोग्यरथांगधारीसन्असुरजात्ययोग्यचक्रायुधधारीसन्ममार । अयोग्यकर्मकरणान्मृतइतिमन्य इतिसंबंधः । रथांगपदस्याश्लिष्टत्वात्तन्मूलकोत्प्रेक्षालंकारः ॥ ६६ ॥ ध्रुवमिति । सकृदेकवारंविष्णुपादेनआहतःअभिहतोसौदैत्यःऊर्ध्वगमनेपुनर्विष्णुपदस्यआकाशस्यसंगभयात्विष्णुपदशब्दसाम्यात्तत्संगभीत्याअधःपपात । ध्रुवंनिश्चयः । ननु नाममात्रसाम्यात्कथंभयमित्यतआह । तथाहि इयम सुरमंडलीअसुरवर्गःविनाशकालेविरुद्धाविपरीताबुद्धिर्ज्ञानंयस्याःसा । असुराणांमिथ्याज्ञानत्वादितिभावः ॥ ६७ ॥ रोम्णामिति । व्याख्यात ॆ त्पद्यं । पूर्वं

ध्रुवं पुनर्विष्णुपदस्य संगभयात्सकृद्विष्णुपदाहतोसौ ॥ अधः पपातासुरमंडलीयं विनाशकाले हि विरुद्धबु द्धिः ॥ ६७ ॥ रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्र विमल श्लाघ्यार्थसंदायिनि ॥ संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातः सुरमंडलीषु महितः सर्गो द्वितीयो मुदाम् ॥ ६८ ॥ इति श्रीवादिराजतीर्थविरचितरुक्मिणीशविजये महाकाव्ये द्वितीयः सर्गः ॥ २ ॥

देवानांकृष्णावतारेसति एकवारंसंतोषोजातः । इदानीमसुरद्वयहत्यया पुनरपिसंतोषोजातइत्यर्थः । काव्यपक्षेद्वितीयःसर्गोजातइतिबोध्यम् ॥ ६८ ॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थपूज्यचरणविरचितस्यरुक्मिणीशविजयटीकायांलक्ष्मीपतिभट्टोपाध्यायसूनुनानारायणभट्टेनकृतायांगुरुभावप्रकाशिकायांद्वितीयःसर्गः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीद्वैदव्यासायनमः ॐ वंदेव्रजवधूवेश्मनवनीतहरंहरिम् । कुंदद्विजोल्लसन्मंजुमंदहासमुखांबुजम् ॥ १ ॥ अथेति । अथशकटवधानंतरं अपरः शकटादन्यः उद्धतः दैत्यकदंबस्यासुरिवप्राणइवतृणावर्तःकृष्णंपरिगृह्य स्वनाशस्यस्वपतनस्य योग्यस्थलकांक्षयेवोचितदेशकांक्षयेव गगनमाकाशं । स्वस्यवायुरूपत्वा द्वायोराकाशेलयस्यश्रुतौकथितत्वादितिभावः । जगाम ॥ १ ॥ दुस्तर्कायितेति । सदैत्यः वातासुरः दुस्तर्कवदाचरंतीतिदुस्तर्कायिताः उपमानादाचारइतिक्य च् तदंतात्कर्तरिक्तः । शर्कराःसूक्ष्मरेणवः ताभिः गवामावासेगोष्ठे वसतांसज्जनानां अमलंनिर्मलं चक्षुर्लोचनं जात्येकवचनं । मुष्णन्नाच्छादयन् अन्यत्रगवांश ब्दानां आवासेसच्छास्त्रे वसतांसच्छास्त्रवर्तिनामित्यर्थः । सतांवैष्णवानां अमलंचक्षुर्निर्दिष्टंज्ञानं दुस्तर्कायितशर्कराभिः । भेदः भिन्नोवाऽभिन्नोवाभिन्नाभिन्नो

ॐ अथापरो दैत्यकदंबकासुरिवोद्धतो वातशरीरधारी ॥ प्रगृह्य कृष्णं गगनं जगाम स्वनाशयोग्यस्थलकांक्षयेव ॥१॥ दुस्तर्कायितशर्कराभिरमलं चक्षुः स मुष्णन्गवामावासे वसतां सतामुरुतमो विस्तारयन्वारयन् ॥ तद्वाक्यश्रवणं कठोरकुटिलध्वानैर्यशोदासुतं दैत्योगूहयदागमांतललनागर्भं कुवादीव तम् ॥ २ ॥ तदा खलस्योत्पतनं स शौरिर्हृदानुमेने पतितस्य दूरात् ॥ गिरींद्रकल्पोत्पतितात्ममूर्त्या शरीरमाचूर्णयितुं धियेव ॥ ३ ॥

वायदिप्रपंचःसत्यःस्यात्तर्हिदृग्दृश्ययोःसंबंधानुपत्तिरित्यादिशुष्कतर्करूपधूलिप्रक्षेपैर्मुष्णन्नुरुतमः धूल्याप्रकाशतिरोधानेननिबिडांधकारं । अन्यत्र स्वकीयाज्ञानंविस्तारयन्कठोरकुटिलध्वानैर्निष्ठुरासत्स्वरवैः तद्वाक्यश्रवणंतेषांव्रजस्थानांपरस्परवाक्यश्रवणं । अन्यत्र कठोरकुटिलध्वानैः निष्ठुरउक्तिरवैः गडबडाध्यायैरित्यर्थः । तद्वाक्यश्रवणंवादिवाक्यश्रवणंवारयन्निवारयन् । कुवादीवमायावादीव आगमांताः वेदांताउपनिषदएवललनास्तासांगर्भंहृदयस्थितं प्रतिपाद्यमित्यर्थः । परमात्मानंकृष्णमिव यशोदासुतमगूहयत्आच्छादयत् ॥ २ ॥ तदेति । शौरिः कृष्णः खलस्यदुष्टस्य उत्पतनमुद्गमनं । दूरात्पतितस्यशरीरंगिरींद्रकल्पापर्वतश्रेष्ठसदृशाखलोपरिउत्पतितात्मनोमूर्तिस्तनुस्तयागिरींद्रकल्पोत्पतितात्ममूर्त्या चूर्णयितुंचूर्णीकर्तुं धियेवबुद्ध्येव हृदामनसा अनुमेनेऽगीचकार ॥ ३ ॥

हरिमिति । हरिंकृष्णं स्वकीयेहृदिसंस्थाप्यनिधाय व्योम्निगगने परिभ्रमन्वात्यारूपधारित्वेनपरितश्चक्राकारेणभ्रमणंकुर्वन्मुहुः कृष्णभारोद्वहनजन्यश्रमेणपुनःपुनःश्वसन्चश्वासंकुर्वन्सदैत्यः गरंविषंनिपीयपीत्वास्वहृदिस्थकृष्णस्यवर्णत्वात्स्वमृतिहेतुत्वादितिभावः । भ्रमितांतरात्माभ्रांतचित्तःसन्सरोधियासरोवरबुद्ध्याऽभ्रमाकाशं प्रविशन्निवास्ते ॥ ४ ॥ मुरद्विषमिति । असौअमरवैरीदेवशत्रुः ऊर्ध्वंगंतुंत्वरयागतोपि अधस्तादधःपपात । ननुशिरसाधृतहरेःकथमधःपातइत्याशंकामर्थांतरन्यासेनपरिहरति । अयोग्येति । अयोग्यकामस्यअयोग्यमिच्छतःपुरुषस्यकथंपातोनभवेत् । असुरस्यविष्णुपदप्राप्तेरयोगात् । अयोग्यमिच्छन्पुरुषःपतत्येवनसंशयइतिस्मृतेरधःपातोयुक्तएवेतिभावः ॥ ५ ॥ सइति । वात्यारूपोदैत्यः दितिजः मुकुंदस्यकृष्णस्यभारासहि

हरिं स संस्थाप्य हृदि स्वकीये परिभ्रमन्व्योम्नि मुहुः श्वसंश्च ॥ गरं निपीय भ्रमितांतरात्मा सरोधियाऽभ्रं प्रविशन्निवास्ते ॥ ४ ॥ मुरद्विषं मूर्ध्नि निधाय विष्णोः पदं प्रवेष्टुं त्वरया गतोपि ॥ असौ पपातामरवैर्यधस्तादयोग्यकामस्य कथं न पातः ॥ ५ ॥ स वातरूपो दितिजो मुकुंदभरासहिष्णुर्निपपात भूमौ ॥ तथा हि वातस्य जवोधिकोपि कथं नु विश्वंभरमुद्बिभर्ति ॥ ६ ॥ चक्षुश्चौर्यफलं जगाम परिवृत्ताक्षः प्रभोरोजसा विष्वक्संभ्रमणेन दत्ततमसो विभ्रांतमूर्धा फलम् ॥ साधूनां हृदयार्तिदानफलितं क्लेशं प्रपन्नः क्षितौ मातुः पातकरः परस्य स खलः पाषाणपृष्ठेऽपतत् ॥ ७ ॥

ष्णुर्भारमसहमानःसन्भूमौनिपपात । तथाहि वातासुरस्यपतनंयुक्तंहि । वातस्यवायोर्जवोऽधिकोपि अस्यापिदैत्यस्यवातरूपत्वादितिभावः । विश्वंभरंकुक्षिस्थाखिललोकं । अतिगुरुत्वप्रदर्शनायेदं । कथंनुउद्बिभर्तिनकथंचिदित्यर्थः ॥ ६ ॥ चक्षुरिति । सखलः असुरः प्रभोःकृष्णस्य ओजसाबलेन परिवृत्तेसम्यग्गलग्रहणादुद्भ्रांतेअक्षिणीयस्यसतथोक्तःसंश्चक्षुश्चौर्यफलंव्रजस्थानांचक्षुषांचौर्यफलंशर्कराप्रक्षेपणापहारपरिपाकंजगाम । परचक्षुरपहारेणस्वस्यापिचक्षुरपहारोजातइत्यर्थः । विभ्रांतमूर्धापरिभ्रमच्छिराःसन् विष्वक्सर्वतःसंभ्रमणेनपरिभ्रमणेनदत्तस्यतमसः मूर्छालक्षणांधकारस्यफलंजगाम । परेषांत

मोदानेनस्वस्याप्यज्ञानंजातमित्यर्थः । शिरोभ्रमणेकिमपिनप्रकाशतइतिभावः । साधूनांसज्जनानां हृदयस्यार्तिंदानफलितंदुःखप्रदानेननिष्पन्नंक्लेशंदुःखंप्रप न्नःप्राप्तः परस्यकृष्णस्य मातुर्यशोदायाः क्षितौभूमौ स्वजवेनपातकरः पातयिता स्वयंपाषाणपृष्ठेशिलातलेऽपततूपपात । लोकेमहत्सुयादृशमघमा चरितंतादृशमेवफलंभुंजतइतिभावः ॥ ७॥ आलोलेति । यशोदाआलोलानिचंचलानि लोलंचंचलतृष्णयोरितिरत्नमाला । हेम्नोविकाराणिहैमानिवरदामा निअस्यांसंतीतितांआलोलहैमवरदामवतीं वितानानामुल्लोचानांजालात्समूहादवलंबिन्योऽवस्रंसिन्यःशुभ्रमौक्तिकरम्यमालानिर्मलमुक्तानिर्मितमनोज्ञमाला यस्यास्तांदोलांशिशोःशयनीययंत्रविशेषं विधायकृत्वातदुपरिदोलोपरिबालंकृष्णमधिरोप्यसालोक्यसौख्यंसालोक्यमोक्षसदृशंसुखंहृदाहृदयेनालभिष्ट

आलोलहैमवरदामवतीं वितानजालावलंबिशुभ्रमौक्तिकरम्यमालाम् ॥ दोलां विधाय तदुपर्यधिरोप्य बालं सालोक्यसौख्यमलभिष्ट हृदा यशोदा ॥ ८ ॥ दोलाविलासचलितालकशोभिफालं बालं शुभास्मितसुधारसशोभितास्यम् ॥ श्यामं समीक्ष्य समयं किल शंमयं सा तेने क्वणत्कनकनूपुरशोभिपादम् ॥ ९ ॥ गंडं वरांगुलिदलैर्लघु लालयंती मंदस्मिताननमथो परिभावयंती ॥ सांद्रस्तनस्रुतपयः किल पाययंती नंदस्य राज्ञ्यभवदित्थमहर्नयंती ॥ १० ॥

लभत ॥ ८ ॥ दोलेति । सायशोदादोलायाविलासेनआंदोलनेनचलितैरलकैःशोभतइतिचलितालकशोभिफालंललाटंयस्यसतथोक्तः । ललाटंनिटिलं फालमितिधनंजयः । तंशुभंशुभ्रंस्मितमीषद्धसितमेवसुधारसोऽमृतरसस्तेनशोभितंआस्यंवक्त्रंयस्य । वक्त्रास्येवदनंतुंडमित्यमरः । तंक्वणद्ध्वनिंकुर्वन्कनकनूपुरं पादांगदंतेनशोभिनौपादौयस्यतं श्याममिंद्रनीलप्रख्यंबालंकृष्णंसमीक्ष्य समयंकालं शंमयंसुखमयं । शमव्ययंचसौख्यार्थेइतिरत्नमाला । तेनेचक्रे । कृष्णदर्शनेनयशोदायाःसकलोपिसमयःसुखकरोजातइतिभावः ॥ ९ ॥ गंडमिति । गंडंकपोलं । गंडोव्रणेकपोलेचेतिरत्नमाला । वरांगुलिदलैरुत्तमांगुल्यग्रै र्लघुयथाभवतितथास्मितोत्पादनार्थं लालयंतीचालयंती । अथोअनंतरं । अथोअथेत्युभौप्रश्नविकल्पारंभमंगले । आनंतर्येचकार्त्स्न्येचेतिभास्करः ।

कपोलस्पर्शनादनंतरं मंदस्मितेनयुक्तमाननंयस्यतंकृष्णं परिरंभयंतीसंश्लेषयंती स्नेहवशात्सांद्रस्तनस्रुतंपयःक्षीरंपाययंती नंदस्यराज्ञीमहिषीयशोदा इत्थमुक्तप्रकारेण अहर्दिवसं नयंतीअभवत् । कृष्णतुष्टिव्यापारवतांसकलमप्यायुष्यंसार्थकमितिभावः । जातिरलंकारः ॥ १० ॥ यामर्त्येति । याअंगुष्ठांगुलिः अमर्त्यादेवामर्त्यामनुष्यादितिजाराक्षसाःतेषामालिभिः अप्यभेद्यंअविदार्यं ब्रह्मांडभांडंब्रह्मांडखर्परं नखकोटिमात्रादभिनद्व्यदारयत् । तांस्वांगुष्ठरूपांपुष्टासुभगामनोहराअंगुलिःस्वांगुष्ठपुष्टसुभगांगुलिःतां शिशोःप्रकृतिवत्प्रकृतिःस्वभावइवस्वभावोयस्यसतथोक्तः शयानोच्युतःकृष्णः संगृह्यप्रगृह्य देवासुरैरसाध्यकार्यकरणान्मानयन्निवचुंबति ॥ ११ ॥ निद्रेति । हेतातनिद्रांस्वापमाश्रयभजस्वइतिशिशुस्वभावानुसारेणस्वव्यापारेषुप्रतिबंधंकुर्वंतंकृष्णंप्रतियशोदावचनं । हेअंबमातःतदाश्रयफलंनिद्राश्रयेणप्रयोजनंकिमितिमातरंप्रतिकृष्णवचनं । हेकृष्णनिद्राश्रयणेनभुक्तमन्नंजीर्णतांव्रजे

यामर्त्यमर्त्यदितिजालिभिरप्यभेद्यं ब्रह्मांडभांडमभिनन्नखकोटिमात्रात् ॥ स्वांगुष्ठपुष्टसुभगांगुलिम च्युतस्तां संगृह्य चुंबति शिशुप्रकृतिः शयानः ॥ ११ ॥ निद्रामाश्रय किं तदाश्रयफलं भुक्तं व्रजेज्जीर्णतां निद्रा कांब निमीलिताक्षयुगलः प्राज्ञं यदालिंगति ॥ अस्त्वेवं त्विति मुद्रितात्मनयनः स्वांगं समालिंग्य तत् सर्वं जीर्णमथो दिशेति जननीं शंसन्निजं सोऽवतात् ॥ १२ ॥

तइतिपुनर्यशोदावचनं । हेअंबनिद्रानामकाकीदृशीतिपुनर्मातरंप्रतिशिशुवेषानुसारेणनिद्रापदार्थमजानतःकृष्णस्यवचनं । अनेनपरमात्मनःकृष्णस्यनिद्रादिदोषराहित्यंध्वन्यते । निमीलितमक्षियुगलंलोचनयुग्मंयेनसतथोक्तःसन्प्राज्ञंहृदिसंस्थितंप्राज्ञनामकंपरमात्मानंआलिंगतीतियत्सानिद्रा प्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यंकिंचनवेदेतिश्रुतेः इतिपुनर्मातृवचनं । एवमस्त्वित्युक्तोक्तनिद्राश्रयणंमयाक्रियतइत्युक्त्वामुद्रितेनिमीलितेआत्मनोनयनेयेनसतथोक्तःसन् स्वांगंसमालिंग्यस्वस्यैवप्राज्ञत्वादितिभावः । नेहनानास्तिकिंचनइतिश्रुतेः । तद्भुक्तंसर्वंजीर्णमभवत् । अथोऽनंतरंक्षीरादिकंदिशेतिजननींमातरंशंसन्वदन्सकृष्णःनिजंस्वभक्तजनं अवताद्रक्षतात् । आशिषिलोट् । वाकोवाक्यालंकारः । उक्तिप्रत्युक्तिचातुर्यंवाकोवाक्यमित्युक्तत्वात् ॥ १२ ॥

मातरिति। हेमातः। जलनिधौ शेषांगशायिनमेनंकिंकिमर्थंगायसिगानंकरोषिइति दोलांदोलनहाससमयेनियमेनकिंकिमर्थंगायसिगानंकरोषिइतिदोलांदोलनहाससमयेगायंतींमातरंप्रतिकृष्णवचनं। हेतातवत्स तातोनुकंप्येपितरीतिभास्करः। निद्रयापरिवृतःआवृतः असौशेषशायी तवापितुभ्यमपितांनिद्रांदद्यात्ननुदद्यादेव। नन्वनुज्ञेतिहापृच्छानुनयेष्ववधारणे आमंत्रणेचेतिरत्नमाला। स्वविषयकगानंश्रुत्वासंतुष्टस्तवापित्वसंस्थितांनिद्रांदद्वात्वितितंगायामीत्यर्थः इतियशोदावचनं। निद्रातीतस्यपरमात्मनोनिद्रावृतत्वमसहमानोमातरंप्रत्याह। एवंचेत् असौनिद्रावृतश्चेत्त्वदीयंत्वत्संबंधिअखिलंसमस्तगदितंभाषितंतत्कर्णदेशं तस्यशेषशायिनःकर्णदेशंश्रोत्रप्रदेशंकथंयाति। त्वद्गानंनिद्रावृतःकथंश्रोष्यतीत्यर्थः। निद्रांदापयितुंतद्विषयकगानंकुर्वंत्यात्वयैवतस्यनिद्राभावोऽवश्यमंगीकर्तव्यइत्य

मातर्गायसि किं सदा जलनिधौ शेषांगसंशायिनं तातासौ ननु निद्रया परिवृतो दद्यात्तवापीति ताम्॥
एवं चेद्गदितं त्वदीयमखिलं तत्कर्णदेशं कथं यातीति प्रतिपादयन् निजमतं पायाद्यशोदासुतः॥ १३॥
लोलत्कंकणपाणिपद्मधृतया नीलोल्लसत्कुंतला बालाः स्रस्तदुकूलहारवलया मौलिस्रवन्मल्लिकाः॥
लोलांग्यः क्वणदंघ्रिभूषणगणा ईषच्चलत्कुंडला व्यालोलं सह दोलया मृगदृशः कृत्वोपनिन्युः प्रियम्॥ १४॥

नेनप्रकारेणनिजमतंस्वस्यपरमात्मनोविनिद्रत्वमतंप्रतिपादयन्यशोदासुतःपायाद्व्यात् ॥ १३ ॥ लोलदिति । लोलांग्यः दोलांदोलनकर्मणाचंचलगात्र्यः असितानीलाःकुंतलाःकेशायासांताः दुकूलानिश्वेतपट्टवस्त्राणिहाराश्चवलयानिचकटकानिचस्रस्तानिदोलायाइतस्ततःप्रापणेनचलितानिदुकूलहारवलयानियासांताः मौलेःमस्तकात्स्रवत्योमल्लिकाःमल्लिकाकुसुमानियासांताः क्वणंतिध्वनंतिअंघ्रिभूषणानितेषांगणोयासांताः ईषत्चलत्कुंडलानियासांताः मृगस्यकृष्णसारस्यदृशाविवदृशौयासांतागोप्योलोलत्करभूषणंयस्यपाणिपद्मस्यतेनधृतयागृहीतयादोलयासहव्यालोलंचंचलंकृत्वा प्रियंकृष्णं उपसमीपं नीतवत्यः स्त्रीणांविभूषणविलासाएवपुरुषस्यवशीकरणायालमितिभावः ॥ १४ ॥

येवाइति।शुभानन्यविषयत्वेनशोभनाधीर्येषांतेशुभधियोयेनराः विदा संविदा ठानूशून्यान् ठंक्कीबेचंद्रमंडले।स्तंभनेसाहसेचाथत्रिषुशून्येशठेदृढइतिरत्नमाला। लातिस्वीकरोतिअनुगृह्णातीत्यर्थः । लाआदानइतिधातोः विठ्ठलः। अनेनानुग्राहकःकृष्णस्तस्यसेवकाःपूजकास्तेषां कृत्यानांकर्तरिचेतिकर्तरिषष्ठी। सकृष्णोलभ्योहि। वैशब्दःप्रसिद्धौ। वैसंबुद्धावनुनयेवाक्यारंभप्रसिद्ध्योरितिरत्नमाला। येवाइतिवाक्यारंभेवावैशब्दः। इतिप्रायःप्रायशःलोकेज्ञापयितुं मुरद्विषं मुरवैरिणंकृष्णमेकदारज्ज्वापकर्षणकालेइतःआंदोलनलक्षणसेवाकर्त्र्याःसमीपंसंप्रापयंती। अन्येषामसेवकानांकृष्णोदूरगस्तुदूरस्थएवहि।भेदावधारणेतुस्यादितिरत्नमाला।हिशब्देनाभक्तजनविदूरत्वंप्रसिद्धमित्याह।इतिज्ञापयितुंततःप्राप्तंरज्ज्वाकर्षणलक्षणसेवात्यागसमयेदूरदेशगतंचकुर्वती।अत्रडोलायास्ततोदूरदेश

ये वै विठ्ठलसेवकाः शुभधियस्तेषां स लभ्यस्त्विति प्रायो ज्ञापयितुं मुरद्विषमितः संप्रापयंत्येकदा ॥ अन्येषां स हि दूरगस्त्विति ततः प्राप्तं च तं कुर्वती दोला सा मणिमंडिता विजयते स्वानंदमूर्तेः शिशोः ॥ १५ ॥ स्तनोत्थदुग्धेन सुतृप्तमेनं निरूपयंत्याः स हरिर्जगंति ॥ प्रदर्शयामास न तृप्तिरस्माद्दुदारदेहस्य ममेति शिक्षन् ॥ १६ ॥ मुखे स लोकानवलोकयित्वा तदंतरेवां सगृहां सनाथाम् ॥ अखंडयत्पुत्रमतिं जनन्यामयोजयद्विश्वपितृत्वबुद्धिम् ॥ १७ ॥

प्राप्त्याकृष्णस्यात्मरतत्वेनान्यनिरपेक्षत्वंपुनरागमनेनस्वसेवाफलदानायभक्तजनमुख्यसेवात्यागलक्षणापराधसहिष्णुताचद्योत्यते। मणिभिःमंडितालंकृतास्वानंदमूर्तेर्निर्दुष्टानंदस्यशिशोःकृष्णस्यसंबंधिनीदोलाविजयतेउत्कृष्टावर्तते ॥ १५ ॥ स्तनोत्थेति । सहरिःकृष्णः एनंस्वस्तनोत्थदुग्धेनस्तन्येनसुतृप्तंनिरूपयंत्याजनन्याःमातुरुदारदेहस्यव्याप्तशरीरस्यममास्मात् तृप्तिर्नेतिशिक्षयन्निवस्वोदरेजगंतिप्रदर्शयामास ॥ १६ ॥ मुखइति । सकृष्णः मुखेस्ववदने लोकान्भुवनानि लोकस्तुभुवनेजनइत्यमरः। तदंतस्तस्य स्यांतरभ्यंतरेसनाथांसपरिवृढां नाथःपरिवृढःप्रभुरित्यमरः। सगृहामेवांजननींचावलोकयित्वादर्शयित्वा जनन्यांमातरिस्थितांपुत्रमतिंकृष्णोममपुत्रइतिबुद्धिंअखंडयदच्छिनत् । विश्वपितृत्वबुद्धिंअयोजयत्खलु उदपादयत् । मातुःस्वोदरेनंदादिस

कलप्रपंचदर्शनेन नायंममपुत्रःअयमेवजगज्जनकइतिबुद्ध्यातांयोजयामास ॥ १७ ॥ ननामेति । पित्रादयोममनामधेयंनामकरणमित्यर्थः । नकुर्वंतीतिकोपेनेवसबालःकृष्णःपूतनादीन्विनिहत्यजठरेकुक्षौस्वशक्त्यास्वसामर्थ्येनविश्वंप्रपंचंमातुर्यशोदायाःप्रदर्श्य बहूनिनामानिपूतनाहननात्पूतनाघतकःशकटवधात्शकटासुरभंजनः तृणावर्तहत्यायातृणावर्तनिषूदनः जठरेविश्वप्रदर्शनात्विश्वंभरइत्याद्यनेकानिनामानिबभारदधौ ॥ १८ ॥ अथेति । अथानंतरं गर्गःगर्गोनामयादवानांपुरोधाएत्यस्वावासस्थानात्व्रजमागत्यविनतौविनीतौसुतौनाम्नारामकृष्णौचकारकिल किलेत्यस्वारस्ये तदीयगुरुत्वबुद्ध्याकृष्णसंबंधिगुरुत्वप्रसिद्ध्याजाताद्दुरिताच्चकितःसन्पापपरिहारायतदाख्यांतस्यकृष्णस्याख्यांनाम । आख्याह्वेअभिधानंचनामधेयंचनामचेत्यमरः । आजगृहेआददे । रामकृष्णेतिहरिनामोच्चारणंकृतवानित्यहंमन्ये । उत्प्रेक्षालंकारः ॥ १९ ॥ अनंतेति । अनंतानिनामानियस्यसोपिकृष्णःगर्गदत्तांगर्गाचार्योक्तांकृष्णइतिसंज्ञां अवाप्यप्राप्यसंतुष्टःकिल । तथाहितद्युक्तंहि बहुभिरुदितेषुमध्येप्रियेरितःसुहृदुक्तःशब्दःप्रीतिकरोहिहर्षकरोहि इतरवचनेभ्यःसुहृदुक्तस्ववचनमेवसुखकरमितिभावः ॥ २० ॥ सपत्नेति।हियस्मात्कारणात् सपत्नानांशत्रूणांपत्न्योभार्याःतासांवदनमेवउडुराजंचंद्रं क्रमेणप्रतिपदादिक्रमेण सितात्शुक्लात्इतरोन्यःपक्षःकृष्णपक्षः ऋक्षनाथंनक्षत्रेशमिवक्षीणकलंवैधव्यापादनेननष्टकलंकरोति । अतःकृष्णस्यकृष्णइतिसंज्ञाआख्यागुणोचिताचंद्रकलाक्षयहेतुत्वलक्षणगुणोचिता तामिस्रपक्षकलिनीलगुणेषुकृष्णइत्यभिधानात्कृष्णपक्षस्यापिकृष्णशब्दवाच्यत्वादितिभावः ॥ २१ ॥

न नाम कुर्वंति ममेति नूनं स पूतनादीन्विनिहत्य मातुः ॥ प्रदर्श्य विश्वं जठरे स्वशक्त्या बहूनि नामानि बभार बालः ॥ १८ ॥ अथैत्य गर्गः किल रामकृष्णौ चकार नाम्ना विनतौ सुतौ तौ ॥ अहं तु मन्ये चकितस्तदीयगुरुत्वकीर्त्याजगृहे तदाख्याम् ॥ १९ ॥ अनंतनामापि स कृष्णसंज्ञामवाप्य तुष्टः किल गर्गदत्ताम् ॥ तथा हि शब्देषु बहूदितेषु प्रियेरितः प्रीतिकरो हि लोके ॥ २० ॥ सपत्नपत्नीवदनोडुराजं क्रमेण यः क्षीणकलं करोति ॥ सितेतरः पक्ष इवर्क्षनाथं गुणोचिता तस्य हि कृष्णसंज्ञा ॥ २१ ॥

यतइति। ईशःसमर्थः सकृष्णः संदर्शनतःस्वसंदर्शनात्नराणांवरांगनानांउत्तमस्त्रीणांसुराश्चचारणादेवयोनिभेदाःतेषांसर्वाणिमनोबुद्धिरहंकारइत्यादिबहुविधा
निमनांसियतःकारणात्कर्षतिततोप्यस्मादपि । अपिशब्दःपूर्वोक्तहेतुसमुच्चये। संतःसज्जनाःतंकृष्णंप्रवदंति । कृषआकर्षणइतिधातोःओणादिकेनक्प्रत्यये।
रषांभ्यांनोणःसमानपदेइतिणत्वेचकृष्णशब्दस्यनिष्पन्नत्वादितिभावः ॥२२॥यतःसइति।सकृष्णःयतःकारणात्पृथ्वीतलसंस्थितोपिसुखीधरायाःसुखदायकश्च
ततोपितस्माच्चसमुल्लसद्दीप्यमानंकेशवस्यविष्णोःकेशरूपंकृष्णकेशात्मकं।अनेनकृष्णशब्दवाच्यत्वेकृष्णकेशात्मकत्वंहेतुरित्युक्तंभवति।कृष्णमितिप्रवदंति कृ
ष्यतइतिकृषिर्भूमिःतस्याअपिणःसुखरूपःकृषेर्भूमेःणःसुखंयस्मादितिवाकृष्णइतिव्युत्पत्तेः कृषिर्भूवाचकःशब्दोणश्चनिर्वृतिवाचकः ॥ तयोरैक्यंपरंब्रह्मेतिस्मृ

यतः स संदर्शनतो नराणां वरांगनानां सुरचारणानाम् ॥ मनांसि सर्वाण्यपकर्षतीशस्ततोपि कृष्णं प्रवदं
ति संतः ॥ २२ ॥ यतः स पृथ्वीतलसंश्रितोपि सुखी धरण्याः सुखदायकश्च ॥ ततोपि कृष्णं प्रवदंति कृ
ष्णसमुल्लसत्केशवकेशरूपम् ॥ २३ ॥ यतः स दैतेयकदंबकक्षचयस्य विध्वंसविधौ मुरारिः ॥ वनाग्निमन्वे
ति लयाग्निकल्पं ततोपि गायंति हि कृष्णमेनम् ॥ २४ ॥ व्रजांगनानां स्मरतां मुनीनामभेद्यहृद्यप्रणयाख्य
दाम्ना ॥ निबद्धमृद्वंघ्रिसरोजयुग्मश्चचार दोर्भ्यां शुभजानुयुग्भ्याम् ॥ २५ ॥

तिसिद्धत्वादितिभावः ॥ २३ ॥ यतश्चेति। मुरारिःकृष्णःयतोदैतेयानांअसुराणांकदंबाएवकक्षाःकुंजास्तेषांचयःसमूहःतस्यविध्वंसविधौभस्मीकरणानुष्ठानेवना
ग्निंदावाग्निमन्वेतिअनुकरोति ततोपिलयाग्निकल्पंप्रलयकालाग्निसदृशंतेजोराशिमित्यर्थः। एनंकृष्णमितिगायंति दैत्यकक्षदहनेऽग्निरूपत्वात् । सार्जुनानग्निहरि
कोकिलकाकशूद्रतामिस्रपक्षकलिनीलगुणेषुकृष्णइतिभास्करोक्तेःअग्नेरपिकृष्णशब्दत्वादितिभावः ॥२४॥ इदानींशिशुजात्यनुसारेणकृष्णस्यजानुगमनंवर्ण
यति । व्रजांगनानामिति । व्रजस्त्रीणांस्मरतांमुनीनामभेद्यमच्छेद्यं हृद्यंमनोहरं प्रणयाख्यंप्रेमाभिधंदामतेननिबद्धौमृदूअंघ्रीएवसरोजयुग्मंयस्यसतथोक्तः
कृष्णःशुभेजानुनीताभ्यांयुंजातइतिशुभजानुयुजौताभ्यांदोर्भ्यांहस्ताभ्यांचचार। बद्धचरणोहिजानुभ्यांगच्छतीतिभावः ॥ २५ ॥

अनेकेति । यःअनेकलोकानुदरेविधायलयांबुमध्येप्रलयजलमध्ये शेतेस्म । लट्स्मइतिस्मयोगेलिङर्थेपिलट् । सएषशिशुःकृष्णःकृशोदरंसूक्ष्मकुक्षिंसंदर्शयितुं सलज्जइवलज्जयासहितइवजानुचरोबभूव । जानुभ्यांसंचरणेउदरस्याधोमुखत्वेनान्यैरदर्शनादितिभावः॥२६॥कर्षन्निति । अंघ्रियुगंचरणयुग्मंमुनींद्रमनसास्वचरणस्मरणकुर्वतांयोगींद्राणांचित्तेनसाकंसार्धंकर्षन्नाकर्षन्व्रजस्त्रीदृशाव्रजांगनानामपांगेन स्त्रीणामपांगस्यासितत्वादितिभावः । जंबालेनगृहांगणगतेनपंकेन । निषद्वरस्तुजंबालःपंकोस्त्रीशादकर्दमौइत्यमरः । स्त्रीकटाक्षसंबंधेनपंकसंबंधेनचनीलनीलाऽतिकृष्णासुमनोहरातनुःशरीरंयस्यसतथोक्तः । लोलालकाश्चंचलकेशास्तैर्युक्तंश्रीमुखंयस्यसतथोक्तःकृष्णः यांयशोदां अंबांबेतिमातर्मातरित्युदीर्यअंकाधिरूढःसन्यस्याःस्तनंपिबतिसाऽस्यकृष्णस्यजननीमाता

अनेकलोकानुदरे विधाय य एष शेते स्म लयांबुमध्ये ॥ शिशुः स संदर्शयितुं सलज्जः कृशोदरं जानुचरो बभूव ॥ २६ ॥ कर्षन्नंघ्रियुगं मुनींद्रमनसा साकं व्रजस्त्रीदृशा जंबालेन च नीलनीलसुतनुर्लोलालकश्रीमुखः ॥ अंबांबेति हि यामुदीर्य पिबति स्मांकाधिरूढस्तनं किं वातप्यत सा तपोस्य जननी यस्येदमीदृक् फलम् ॥ २७ ॥ वैगुण्यं विविधोदयैर्विमृशतां वित्तैर्जगद्बाध्यतां वैरूप्यं निजतेजसा निरुपमैरंगैर्निराकारताम् ॥ नीचैस्त्वं च निरस्य निर्मलधियां नित्यार्चया विठ्ठलो दिग्भिन्नांबरधिक्क्रियार्थमभवद्दिग्वस्त्रतां दीपयन् ॥ २८ ॥

किंवातपस्तपस्यामतप्यतअतप्सततपःकर्मकस्यैवेतितपेःकर्तुरनिर्देशेनकर्मत्वेनसार्वधातुकेयगितियक्प्रत्ययः तस्यतपसःइदंईदृक्फलंब्रह्माद्यगम्यरूपःपरमात्माबाललीलांप्रदर्श्ययस्यास्तनंपिबतितस्यास्तपःफलंकिंवर्णनीयमितिभावः ॥ २७ ॥ वैगुण्यमिति । विठ्ठलःज्ञान्यनुग्राहकःविमृशतांविशोधंकुर्वतांविविधानांसौभाग्यादीनांगुणानांउदयैःस्वसन्निधानजन्यैर्व्रजस्थानामभ्युदयैःस्वस्यवैगुण्यंन्यूनतांमायिभिःकथ्यमाननिर्गुणत्वंनिरस्यनिराकृत्यकृष्णसन्निधानेननिष्पन्नैर्द्रव्यैर्जगतांव्रजस्थलोकानांबाध्यतांदारिद्र्यपीड्यतांमायावाद्युक्तविश्वमिथ्यात्वंचनिरस्यसंपदादिनादारिद्र्येणनबाध्यंतइतिभावः । निजतेजसास्वकीयकांत्या

वैरूप्यंविरूपतांलावण्यत्वादित्यर्थः मायावाद्युक्तनिरूपत्वंच निरस्य निर्गताउपमासादृश्यंयेभ्यस्तैरंगैःकरचरणाद्यवयवैर्निराकारतांचित्तनयनरंजनसंस्थानविशेषराहित्यंमायावाद्युक्तनिरवयवत्वंनिरस्य निर्मला भ्रांत्यादिदोषरहिताधीर्येषांतेकृष्णपूजार्थंतत्रागतानांनारदादीनांनित्यार्चयानित्यपूजयानीचैक्यंलौकिकेष्वधमेकइतिनीचजनैक्यंचमायावाद्युक्तजीवैक्यंच निरस्य निराकृत्यदिग्भ्यो भिन्नमंबरंगगनमस्तीतियन्मतंतार्किकमतंतस्यधिक्कियार्थंनिराकरणार्थंदिग्वस्त्रतांदिगंबरत्वंदीपयन्प्रकाशयन्नूनंभोवत्सस्यदिगंबरतयादिगेवांबरमस्येतिसमानाधिकरणसमासेनअंबरशब्दस्यवस्त्राकाशोभयवाचकत्वेनदिग्व्यतिरिक्तांबरस्यनिराकरणंकुर्वन्नितिभावः ॥ २८ ॥ गोपीति । रणन्क्वणन्अंघ्रिवेषःपादभूषणंयस्यसतथोक्तः । रजसाधूल्याअनुषक्तोदिग्धः गोपीगृहांगणतले गोवत्सकैःसहचरन्दे

गोपीगृहांगणतले रणदंघ्रिवेषो गोवत्सकैः सहचरन्रजसानुषक्तः ॥ देहाभिमानरहितैर्दिवि संस्तुवद्भिर्देवैश्च दृश्यविभवो दयितासमेतैः ॥ २९ ॥ शार्दूलरम्यनखरं जितकंठदेशः सासूयदानवनिकायवने हुताशः ॥ हारस्फुरत्कटककंकणनूपुरश्रीर्हासप्रकाशितदिशापटलः स बालः ॥ ३० ॥ नव्यस्खलद्वचननंदितसर्वलोकः सुव्यक्तकुंतलततिः सुभगाग्रगण्यः ॥ दिग्वस्त्रदर्शितकटिर्दिननाथदीप्तिः हृद्यः सदास्तु स शिशुर्हृदयंगमो मे ॥ ३१ ॥

हाभिमानरहितैःकृष्णसौंदर्यदर्शनेनविस्मृतदेहैर्दिविआकाशेसंस्तुवद्भिःदयिताभिःकांताभिःसमेतैर्देवैश्चदृश्यविभवःसशिशुःमेहृद्गोहृद्गोचरःध्यानविषयइत्यर्थः अस्तुस्यादित्युत्तरेणसंबंधः ॥ २९ ॥ शार्दूलेति । शिशोरक्षार्थंभूषणीकृतशार्दूलस्यनखेनरंजितःकंठदेशोयस्यसतथोक्तः असूययाईश्वरगुणेषुदोषबुद्ध्यासहिताःसासूयाः अक्षांतिरीर्ष्यासूयातुदोषारोपोगुणेष्वपिइत्यमरः।तेचतेदानवाःसासूयदानवास्तेषांनिकायःपुंजःसएववनंतत्रहुताशोग्निः हाराणांस्फुरत्कटकानांबाहुवलयानांकंकणानांहस्तभूषणानांनूपुराणामंघ्रिभूषणानांश्रीःकांतिर्यस्यसतथोक्तः हासेनस्मितेनप्रकाशितंदिशानामाशानां आपंचैवहलंतानामितिवचनात् । पटलंमंडलं एडलंपटलंचक्रंचक्रवालंतुमंडलमितिहलः। यस्यसतथोक्तःसबालःकृष्णःसदाहृद्योस्तु ॥ ३० ॥ नव्येति । नव्यंनवीनंस्खलदव्यक्तंवचनंतेननंदितः

सर्वलोकोयेनसतथोक्तः सुव्यक्तकुंतलानांततिर्यस्यसतथोक्तः सुभगेषुमनोहरेषुअग्रगण्यःश्रेष्ठःदिग्वस्त्रेणदिगंबरेणदर्शितकटिःप्रकाशितकटिप्रदेशःदिननाथस्य सूर्यस्यदीप्तिरिवदीप्तिर्यस्यसतथोक्तः हृदयंगमोहृद्यःशिशुःसदामेहृद्गोस्तु ॥ ३१ ॥ नारीणामिति । अथोअनंतरंहेकृष्ण नारीणामपिकामिनीनामपि मोक्षदस्त्वं विशुद्धात्मनांशुद्धांतःकरणानांअस्माकंतुकिमितिनोदद्याइतियोगिपूगमनसांतपस्विगणमनसांकोपंबाल्येमयापहृतक्षीरऋणपरिहारायैवदत्तइतिक्रोधंविधुन्व न्निवपरिहरन्निवगोपस्त्रीनिकरस्यस्वंस्वकीयंदुग्धजलधिंक्षीरसमुद्रंदातुकामः । लुंपेदवश्यमःकृत्येतुंकाममनसोरपीत्यादिवचनात्तुमुनोमकारस्यलोपः । हरिः कृष्णःतद्गृहेषुगोपस्त्रीगृहेषुस्थितंदुग्धमंडलंक्षीरसमूहंमुष्णन्क्षीरमपहरन्व्रजेचचार ॥ ३२ ॥ हराविति । हरौकृष्णे पयःक्षीरं मुष्णतिअपहरतिसतिकापि

नारीणामपि मोक्षदः किमिति नो दद्या विशुद्धात्मनामस्माकं त्विति योगिपूगमनसां कोपं विधुन्वन्निव॥
गोपस्त्रीनिकरस्य दुग्धजलधिं स्वं दातुकामो हरिस्तद्गेहस्थितदुग्धमंडलमथो मुष्णंश्चचार व्रजे ॥ ३२ ॥
हरौ पयो मुष्णाति कापि तुष्टा दधार मर्काय ददत्यमर्षम् ॥ तथा हि तच्छेषमनन्ययोग्यं हरंतमुद्वीक्ष्य क
थं न मन्युः ॥ ३३ ॥ प्रगृह्य घंटामपरेण पात्रं करेण चान्येन पयः पिबंतम् ॥ निशाम्य मित्राणि च त
र्पयंतं सुविस्मिता कापि बभूव तूष्णीम् ॥ ३४ ॥

स्त्रीतुष्टासंतुष्टाबभूव । तत्पयोमर्कायमार्जारायददतिसति अमर्षंकोपंदधार । तथाहितद्युक्तंहि । अन्ययोग्यंनभवतीतिअनन्ययोग्यंतच्छेषंकृष्णमुष्ट शेषंहरंतंमार्जारमुद्वीक्ष्यकथंमन्युर्नभवेत् । ब्रह्मादिदेवतायोग्यहरिप्रसादमपहरंतंमार्जारंप्रतिअमर्षंदधार नतुपयःपिबंतंकृष्णंप्रतीत्येतत्प्रेक्षयातस्यास्तत्रवेत्त्रीत्वं ध्वन्यते ॥ ३३ ॥ प्रगृह्येति । कापिकचित्व्रजांगनाएनंकरेणध्वनिनिरोधायघंटांप्रगृह्यअपरेणकरेणपात्रंपयोभाजनंप्रगृह्यअन्येनकरेणचपयःपिबंतंअपरेणकरेण मित्राणिसखीन् अथमित्रंसखासुहृदित्यमरः । तर्पयंतंपयःपाययंतंकृष्णंनिशाम्यदृष्ट्वासुविस्मिताकरचतुष्टयेनव्यापारचतुष्टयंकुर्वंतंबालंदृष्ट्वाआश्चर्ययुक्तास तीतूष्णींबभूव । कृष्णभीषणार्थमागताद्भुतदर्शनेनमूकीभावमवलंब्यस्थितेत्यर्थः ॥ ३४ ॥

करस्थेति । करस्थभास्वन्नवनीतंजातंहस्तस्थहय्यंगवीनंकृष्णंविभीषयंतीअन्यागोपी स्वमौलिमालाभ्यःस्वधंमिल्लस्थपुष्पदामभ्यः च्युतानांगमनभारेणपतितानांपुष्पाणांपुंजैरीशितुःपरमेश्वरस्यतस्यकृष्णस्यपदानिपदचिह्नानिअर्चयंतीवमुकुंदंकृष्णमन्वगात्अन्वगच्छत् ॥ ३५ ॥ अधिक्षिपंत्यामिति । सधीरश्चोरःकृष्णःस्वेनदधिचौर्येक्रियमाणेकस्यांचित्स्त्रियामधिक्षिपंत्यांसत्यांसुकृतेनतस्याःपुण्येनसाकंदधीनिचुचोर तास्कर्यंकृतवान् । नकेवलंतस्यादधिहानिःकृष्णनिराकरणेनसुकृतहानिरपिजातेत्यर्थः विष्णुद्रोहिणामैहिकपारत्रिकमुभयमपिनश्यतीतिभावः । दानीदानशूरःसकृष्णः आनतायांस्वस्मिन्दधिपिबतिसतिकृष्णार्पितमस्त्वितिनम्रीभूतायांअगण्यगुण्याख्यधनानिअपरिमितश्रेयोरूपद्रव्याणिप्रदायअचूचुरत् चोरितवान् । कृष्णस्यदधिपानंभक्तिपूर्वकमंगी

करस्थभास्वन्नवनीतमन्या विभीषयंत्यन्वगमन्मुकुंदम् ॥ स्वमौलिमालाच्युतपुष्पपुंजैः पदानि तस्येशितुरर्चयंती ॥ ३५ ॥ अधिक्षिपंत्यां सुकृतेन साकं दधीनि धीरः स चुचोर चोरः ॥ अगण्यपुण्याख्यधनानि दानी प्रदाय सोचूचुरदानतायाम् ॥ ३६ ॥ अभूद्यशोदातनयस्य पृथ्व्यां विनिंदिता तस्करताऽपि भूत्यै ॥ तथा हि लक्ष्मीनयनांतभाजामसत्यदोषोपि भवेद्गुणाय ॥ ३७ ॥ स्वकीयचौर्यं नितरां गृणज्ञो ददौ विमुक्तिं किल गोपबालः ॥ अहं स्वमर्मालपतां स चक्रे फलेन वाग्बंधमिति प्रतर्के ॥ ३८ ॥

कृतायांपुण्याभिवृद्धिर्जातेतिभावः ॥ ३६ ॥ अभूदिति । पृथ्व्यांभूमौविनिंदितापिजुगुप्सितापियशोदातनयस्यकृष्णस्यतस्करताभूत्यैऐश्वर्यायअभूत् । कृष्णचौर्यस्मरणेनान्येषांचौर्यनिमित्तकपापनिवृत्तेरितिभावः । नन्वेतत्कथमित्यतआह । तथाहीति । तथाहितद्युक्तंहि । लक्ष्मीनयनांतभाजांश्रीकटाक्षभजांभाग्याधिकानामसत्यदोषोपिगुणायभवेत् कृष्णस्यापिलक्ष्मीपतित्वादितिभावः ॥ ३७ ॥ स्वकीयेति । गोपस्यनंदगोपस्य बालःकृष्णः स्वकीयचौर्यंकृष्णोनवनीतचोरइतिस्वचोरत्वंनितरामत्यर्थंगृणज्ञोविमुक्तिंमोक्षंददौकिल । अत्राहं सःस्वमर्मस्वचौर्यलक्षणंछिद्रमालपतांफलेनफलदानेनवाग्बंधंकृष्णोनवनीतचोरइतिवचनप्रतिषेधंचक्रेऽकरोत् इतिप्रतर्केतर्कंकरोमि । यथालोकेकश्चित्स्वमर्मवचनवक्तारंवित्तादिदानेनतद्वचनंप्रतिबध्नातितद्वदितिभावः ॥ ३८ ॥

स्वभक्तेति । यःकृष्णःदिवानिशमहोरात्रंस्वभक्तपुंजार्जितंस्वभृत्यगोपार्जितंपापवृंदंदुरितसमूहंहरतिस्माहरत्किल । असौबालःकृष्णःगृहेगृहेप्रतिगृहंदुग्धंक्षीरं अमुष्णात्अचूचुरत् । तथाहिसिद्धविद्यांअभ्यस्तविद्यांकस्त्यजति । प्रतिक्षणंस्वभक्तपापानिमुषित्वाअभ्यस्तचौर्यःकृष्णस्तत्संस्कारवशादिवदुग्धमचूचुरदित्यर्थः ॥ ३९ ॥ हस्तइति । श्रीपतेलक्ष्मीपतेकृष्णत्वयानवनीतस्यभाजनंपात्रं पात्रामत्रेचभाजनइत्यमरः । तस्यमुखेहस्तःकरःकिंकिमर्थंन्यस्तःनिहितइतिकयाचिदुक्तेतांप्रति हेतन्विकृशांगिमृगाक्षिहरिणनयनेदृषत्प्रस्तरसंमितापाषाणसदृशी । पाषाणःप्रस्तरोग्रावोपलाश्मानःशिलादृषत्इत्यमरः । अतएवातिकठिनावस्थायस्यतदंतरंहृदयंयस्याःसादृषत्प्रस्तरसंमितातिकठिनावस्थांतरातस्यास्तवगृहेकोमलहृदःमृदुलांतरस्यास्यनवनीतस्यस्थितिर्नयुक्तानानुचितातत्तस्मात्मृदु

स्वभक्तपुंजार्जितपापवृंदं दिवानिशं यो हरति स्म बालः ॥ गृहेगृहे दुग्धमसावमुष्णात्तथा हि कस्त्यक्ष्यति सिद्धविद्याम् ॥ ३९ ॥ हस्तः किं नवनीतभाजनमुखे न्यस्तस्त्वया श्रीपते दृषत्प्रस्तरसंमितातिकठिनावस्थांतराया गृहे॥ युक्ता न स्थितिरस्य कोमलहृदस्तन्वीह चित्ते मम प्रीत्या स्थापयितुं मृगाक्षि मृदुनीत्युक्त्वा हसन्पात्वसौ॥४०॥ यस्य श्रीचरणांबुजेन शकटः संचूर्णितांगोऽभवत्तस्यांगे मृदुता न युक्तिसहितेत्युक्तं मुदा योऽवदत् ॥ बाल्ये मामधिरोप्य वक्षसि शिशुं संनर्तयंत्यास्तव स्थूलोरोजसमागमेन तदिति प्रौढिं स दद्यान्मम ॥ ४१ ॥

निकोमलेममचित्तेनवनीतंप्रतिस्थापयितुंनवनीतभाजनमुखेहस्तोन्यस्तइत्युक्त्वाहसन्नसौकृष्णःपातुरक्षतु । अत्रहस्तःकिमित्यादिनाश्रीपतइत्यनेनगोप्यागोपनटनं दृषत्प्रस्तरेत्यादिनानिस्पृहस्यत्वदनुग्रहार्थमागतस्यममनिराकरणमनुचितं तन्विमृगाक्षिइत्यनेनतस्यावशीकरणायअनुनयः मृदुनिचित्तइत्यनेनज्ञानशून्यस्यस्त्रीजनस्याप्यनुग्रहंकुर्वतोदेवस्यानुकंपातिशयः स्वचौर्यगूहनचातुर्यंचद्योत्यते ॥ ४० ॥ यस्येति । यस्यश्रीचरणांबुजेनशकटःशकटासुरः संचूर्णितानिअंगानियस्यसःअभवत् तस्यतादृशस्यतवांगेअवयवेमृदुताकोमलता युक्तिसहितायुक्तियुक्तान । तवांतरमतिकठिनंममहृदयमतिकोमलमितियदुक्तंतदेतादृशस्ययुक्तिविरुद्धमित्यर्थः । इतितयोक्तेयःकृष्णःबाल्येशिशुंमांवक्षस्यधिरोप्यसंनर्तयंत्यास्तवस्थूलौउरोजौस्तनौतयोःसमागमेनसंसर्गेणतत्काठिन्यमभवत् । संसर्ग

जादोषगुणाभवंतीतिन्यायात् । पादमात्रेतुकाठिन्यं नान्यत्र अयमपितवैवदोषोनममेतिभावः । इतीत्थंमुदाप्रीत्याअवदत् सकृष्णःमह्यंप्रौढिंदद्यात् ॥ ४१ ॥ बध्नामीनि । हेअंगहेप्रियकृष्णकितवंधूर्तं उन्मत्तःकितवोधूर्तइत्यमरः । भवंतंबध्नामिसंयतंकरोमि अंगेतिसंबोधनात्बंधनंप्रेमदाम्नेतिध्वन्यते । हेप्रियेततो मद्बंधनात्तवसाध्यंकिंइतिकृष्णवचनं हेकृष्णकपटसंनद्धेछद्मसंनाहवतित्वयिनिबद्धेसतिदुग्धानांक्षीराणांपरिरक्षणंभवेत् । दुग्धरक्षणंसाध्यमित्यर्थः । हेमुग्धे मनोहरेपद्माक्षिविरसास्नेहरहितात्वंमांसमुज्झसिपरंतुस्निग्धस्नेहयुक्तंततदुग्धंमांनत्यजेत् । रूपांतरेणमयादुग्धंपीतंचेत्कथंदुग्धरक्षणंभवेत् तस्मान्ममबंधनंव्य र्थमितिभावः । इत्युदीर्यउक्त्वाअबलांकामिनींवशयन्सकृष्णःममबुद्धिंप्रदद्यात् । अत्रविरसात्वंसमुज्झसिइत्यनेनातिमनोहरेमयिअनुरागाभावःकामिन्यास्तव

बध्नाम्यद्य भवंतमंग कितवं साध्यं ततः किं प्रिये दुग्धानां परिरक्षणं कपटसंनद्धे निबद्धे त्वयि॥ मुग्धे त्वं विरसा समुज्झसि परं स्निग्धं न तन्मां त्यजेत्पद्माक्षीत्यबलामुदीर्य वशयन् बुद्धिं स दद्यान्मम॥ ४२॥ ततः क्वणन्नूपुरशोभिपादाः स्त्रियो विदग्धैरनुमेयमध्याः॥ शुचिस्मिताः कुंडलशोभिगंडा न्यवेदयंस्तच्चरितानि मातुः ॥ ४३ ॥ यदात्मजस्ते पिबति स्म दुग्धं विभिद्य पात्राणि तदा ममासीत्॥ न मन्युरुत्सर्पितदीयदंतदृगंतकांतिं हृदि तर्कयंत्याः ॥ ४४॥

नोचितः स्निग्धंनतन्मांत्यजेदित्यनेनअनुरागेणाहंवश्यः मुग्धेपद्माक्षिइत्यनेनतस्यावशीकरणायानुनयश्चद्योत्यते ॥ ४२ ॥ ततइति । क्वणद्भिर्नूपुरैःशोभिनौपादौ यासांता विदग्धैःप्रौढैरनुमेयःप्रतर्क्योमध्योयासांताःसूक्ष्ममध्याइत्यर्थः । शुचिमनोहरंस्मितंयासांताः कुंडलाभ्यांताटंकाभ्यांशोभिनौगंडौयासांताःस्त्रियोव्रजां गनास्तच्चरितानिकृष्णचरितानिचौर्यव्यापारान्मातुर्यशोदायान्यवेदयन्विज्ञापयामासुः ॥ ४३ ॥ यदेति । यदातेतव आत्मजस्तनयःकृष्णःपात्राणिदु ग्धभाजनानिविभिद्यदंडेनच्छिद्राणिकृत्वापयःपिबति तदाउत्सर्पिणींदुग्धभाजनपर्यंतांऊर्ध्वंगच्छंतींतदीयानांकृष्णसंबंधिनांदंतानांदृगंतस्यलोचनांतस्यचकां तिंहृदिमनसितर्कयंत्याममन्युःक्रोधोना ीत् । कृष्णस्यापराधाभावंमत्वाकोपोनासीदित्यर्थः । भ्रांतिरलंकारः भ्रांतिर्विपर्ययज्ञानमित्युक्तत्वात् ॥ ४४ ॥

पयइति। हेसखियशोदेतवसुतःकृष्णःपयःप्रमुष्णन्अपहरन्भर्त्सनार्थंभीषयितुंसमागतानांनःअस्माकंचेतःजात्यैकवचनं चेतांसिस्वलावण्यातिशयेनापहृत्यस्व स्यकृत्यसाध्यानिदुग्धानिकंठंस्तंभीभूतानामस्माकंकंठमवलंब्यआरुह्यस्वैरं स्वेच्छयाभर्त्सकाभावादित्यर्थः जिघृक्षतिग्रहीतुमिच्छति । स्त्रीणांमनोहरःकृष्ण इतिभावः ॥ ४५ ॥ यदीति। हेकृष्णयदीदृशंदध्यपहारादिरूपंकर्मकरोषि तर्हित्वंनंदस्ययोग्यःसुतोनभवसिकिंत्वन्यएव। पितुरयशस्करःसुतःसुतोनभवतीति भावः। हेयशोदेऽस्माभिरितीरितेसतिसकृष्णःहसन्नूनंदस्यसुतस्त्वंनभवसीतिभवतीभिरुच्यतेचेन्नभवामीतिहसन्नोस्माकंबहून्यनिष्टानितनोति । बहून्यनिष्टानि कृतानिचेदेतास्त्वंनंदस्यसुतोनभवसीतिसुतरांवक्ष्यंतितन्ममेष्टमितिभावः ॥ ४६ ॥ इदंहीति। हेकृष्णइदंदुग्धादिदेवस्यविष्णोःसमर्पणार्हंसमर्पणयोग्यंत्वया

पयः प्रमुष्णन् सखि भर्त्सनार्थं समागतानामपहृत्य चेतः ॥ स्वकृत्यसाध्यान्यवलंब्य कंठं जिघृक्षति स्वै रमयं सुतस्ते ॥ ४५ ॥ यदीदृशं कर्म करोषि कृष्ण न तर्हि नंदस्य सुतस्त्वमन्यः ॥ इतीरिते हंत हसन्यशोदे बहून्यनिष्टानि स नस्तनोति ॥ ४६ ॥ इदं हि देवस्य समर्पणार्हं इतीरिते तर्ह्यहमेव देवः ॥ स इत्थमाभाष्य तदेव भुंक्ते न देवि पुत्रस्तव देवभक्तः ॥ ४७ ॥ गृहे गृहे यन्नवनीतदुग्धदधीनि सर्वाण्यपहृत्य भुंक्ते तथापि तृप्तिं न सुतस्तवैति किमस्य भूतानि वसंति कुक्षौ ॥ ४८ ॥ न मुंच वत्सांस्त्वमिहैत्य बद्धानि तीरिते पुण्यपदे यशोदे ॥ स्मितोल्लसद्वक्रमदात्सुतस्ते स्वभाव इत्युत्तरमुत्तरज्ञः ॥ ४९ ॥

नग्राह्यमितिवाक्यशेषः । इतीरितेसतियदिदेवस्यसमर्पणार्हंतर्हिअहमेवदेवःमदर्पणंकर्तव्यमितिसकृष्णइत्थमाभाष्यतदेवदेवाय नियुक्तमेवभुंक्ते । हेदेवि। यशोदेतवपुत्रःदेवभक्तोनभवतिवैष्णवपुत्रोप्ययंमायावादिवदहंब्रह्मास्मीतिवदतिइतिनिंदा। स्वस्यैवदेवत्वादितितत्त्वम् ॥४७॥ ४८ ॥ नमुंचेति। हेकृष्ण त्वमेत्य इहगृहेबद्धान्वत्सान्नमुंचइतीरितेसतिपुण्यस्यपदंस्थानंयस्याःसातत्संबुद्धिःहेपुण्यपदेहेयशोदेउत्तरंप्रतिवाक्यंजानातीत्युत्तरज्ञः तेसुतःकृष्णःस्मितेनउल्लसत्प्रका शमानंमुखंवक्रंयथाभवतितथास्वभावइत्युत्तरमदात् । ज्ञातापराधस्योत्तरापरिस्फूर्त्यामममायंस्वभावइत्येवोत्तरमितिभावः। भवपाशाच्चमोचकः । अज्ञानां

ज्ञानदोविष्णुर्ज्ञानिनांमोक्षदश्चसः । देवस्यैषस्वभावोयमितिवचनाद्बद्धमोचकत्वंममस्वभावइतिहृदयम् ॥ ४९ ॥ कस्मादिति । अंगप्रियस्निग्धंउलूखलंव्रीह्या
द्यवहननयोग्यदारुमयभाजनविशेषं इतोदेशात्कस्मान्नयसिइतिकस्याश्चिद्वचनं । दुग्धस्यक्षीरस्यपात्रादधःस्थापयितुंनयामीतिकृष्णवचनं । ततश्चदुग्ध
पात्राधःस्थापनेनकिंप्रयोजनमितिमयोक्तेप्रभुर्यःकृष्णः हेमुग्धेमनोहरेअग्रेऊर्ध्वभागेसुष्ठुजातंसुस्मितमेवपयःतस्यपात्रमाधारीभूतमाननंयस्यतत्सुजातसु
स्मितपयःपात्राननंतस्यतवमध्यस्यउपमांसादृश्यंवीक्षयितुंदर्शयितुमित्यवदत्सकृष्णः दुष्कर्मणांगूहनेगोपनेपटुःसमर्थःउपर्यधोविस्तृतस्यमध्येकृशस्योपरिह
रिद्रादिरंजितपयःपात्रेनिहितेएतादृशस्यतवमध्यस्यउपमाभविष्यतीत्युक्त्वामांवशीकृत्यस्वचौर्यंचातुर्येणगूहीतवानित्यभिप्रायः । दुष्कर्मणांगूहनेपटुरि

कस्मादंग नयस्युलूखलमितो दुग्धस्य पात्रादधः स्निग्धं स्थापयितुं ततश्च किमिति प्रोक्ते प्रभुर्योऽवदत् ॥ मध्यस्यात्र
सुजातसुस्मितपयःपात्राननस्योपमां मुग्धे वीक्षयितुं तवेति स पटुर्दुष्कर्मणां गूहने ॥ ५० ॥ क्वचित्करेणैव स दुग्ध
भाजनं क्वचिच्च पादेन समीक्षते सखि ॥ समागताः पश्यति पृष्ठतस्तदा स विश्वतश्चक्षुरिवास्ति बालकः ॥५१॥ उलूखले
तं यदि बंधयामो नयेत्तदोलूखलमेव बालः ॥ ध्रुवं गृहस्तंभवरे निबद्धो गृहाण्यसौ पातयितुं समर्थः ॥ ५२ ॥ विश्वंभ
रस्यास्य हि बंधनाय दामानि संपादयितुं क ईशः ॥ बद्धः कथंचिद्यदि तर्हि बद्धा मध्ये निलीना वयमेव नूनम् ॥ ५३ ॥

त्यनेनपापपरिहारसामर्थ्यंध्वन्यते ॥ ५० ॥ क्वचिदिति । हेसखियशोदे सकृष्णः क्वचित्स्थलेदुग्धभाजनंकरेणैवसमीक्षते करप्रसारणंकृत्वाजानाति ।
क्वचित्पादेनसमीक्षते । तदाचौर्यकरणसमयेपश्चाद्भागेआगतानःपश्यति । एतादृशःसतवबालकःविश्वतःसर्वावयवेषुचक्षुर्यस्यसइवास्ति सर्वत्रजागरूकत्वंप्रौ
ढचोरलक्षणमितिभावः । विश्वतश्चक्षुरुतविश्वतोमुखइतिश्रुतेः । विश्वतश्चक्षुशब्दवाच्यत्वंसहजमितिहृदयम् ॥ ५१ ॥ उलूखलइति । तंकृष्णं यदिउलूख
लेबंधयामः तदातवबालकउलूखलमेवनयेत् । ध्रुवंनिश्चयेन गृहस्तंभवरेनिबद्धोऽसौगृहाणिपातयितुंसमर्थः । उलूखलनयनयमलार्जुनभंगंध्वनयंतीनांगोपी
नामनागतज्ञानंगम्यते ॥५२॥ विश्वंभरस्येति । विश्वंभरस्यजगद्भर्तुः अस्यकृष्णस्यबंधनायदामानिसंपादयितुंकईशः कोपिसमर्थोनभवतीत्यर्थः । यदिकथंचि

तूरुच्छ्रादस्माभिर्बद्धस्तर्हिमध्येकृष्णस्यमध्येनिलीनाःविश्वंभरत्वादितिभावः । वयमेवनूनं कृष्णस्यनित्यमुक्तत्वेनबंधायोगात्तद्बंधेनस्वपरिश्रिताकाशबंधनवतूतन्मध्यस्थितावयमेवबद्धाभवेमेत्यर्थः । अनेनापियशोदयाकरिष्यमाणकृतबंधनज्ञानंसूच्यते ॥ ५३ ॥ अहोइति । हेयशोदेअयंतवबालकः इहगृहेगृहेअरयुष्णमप्यत्यंतंतममपिदुग्धंपिबन्नूकदापितापंनलभते । अहोआश्चर्यं । अस्यवक्त्रेजलराशिर्जलसमूहःसमुद्रोवाआस्तेकिं । अनेनकृष्णस्यजिह्वायांवरुणोस्तीतितत्त्वंध्वन्यते ॥ ५४ ॥ विलोक्येति । तवशिशुःकृष्णोदूरस्थितदुग्धभांडंविलोक्यउलूखलाद्यैःसाधनैर्ग्रहीतुंयततेप्रयत्नंकरोति । क्वचिज्जनसंचाररहितप्रदेशेतावद्दूरस्थितदुग्धभांडपर्यंतंएधतेवर्धते अहोआश्चर्यं । एषकृष्णोगूढाष्टमहाविभूतिरणिमाद्यष्टैश्वर्ययस्यसकिं । अणिमाद्यष्टैश्वर्यमस्मिन्निगू

अहो यशोदे तव बालकोयं गृहेगृहेत्युष्णमपीह दुग्धम् ॥ पिबन्न तापं लभते कदाचित् किमस्य वक्त्रे जलराशिरास्ते ॥ ५४ ॥ विलोक्य दूरस्थितदुग्धभांडमुलूखलाद्यैर्यतते ग्रहीतुम् ॥ शिशुः स तावत् क्वचिदेधते हो किमेष गूढाष्टमहाविभूतिः ॥ ५५ ॥ न निष्ठुरा वाक्समुदेति वक्त्रात्करश्च नस्ताडयितुं यशोदे ॥ विलोलनेत्रं तव पुत्ररत्नं ध्रुवं सुतस्ते जगतां नियंता ॥ ५६ ॥ बतांधकारार्पितदध्यमत्रमपि स्वभास्वन्नयनांतलक्ष्म्या ॥ निरीक्षते लोचनयोः किमेष बिभर्ति बालस्तव पुष्पवंतौ ॥ ५७ ॥

ढंतिष्ठतिकिमित्यर्थः ॥ ५५ ॥ नेति । हेयशोदे विलोलेआरोपितभयेनचंचलेनेत्रेयस्यतंतवपुत्ररत्नंपुत्रश्रेष्ठंकृष्णंविलोक्यवक्त्रादस्मन्मुखान्निष्ठुरापरुषावाक्वाणीनसमुदेतिनोद्गच्छति करश्चताडयितुंनोदेति। तेसुतःकृष्णोध्रुवंनिश्चयेनजगतांनियंतानियामकः अन्यथाइदंकथंस्यादितिभावः ॥ ५६ ॥ बतेति। कृष्णःअंधकारार्पितदध्यमत्रंअंधकारेनिहितदधिपात्रं स्वस्यभास्वन्नयनांतलक्ष्म्याप्रकाशमानकटाक्षकांत्यासमीक्षतेपश्यति । हेयशोदेतवएषबालोलोचनयोःपुष्पवंतौदिवाकरनिशाकरौबिभर्तिकिं । एकयोक्त्यापुष्पवंतौदिवाकरनिशाकरावित्यमरः । अन्यथांधकारस्थितदर्शनंकथंस्यादितिभावः । सूर्याचंद्रमसावस्यचक्षुषीइतिश्रुतेः । कृष्णलोचनयोःसूर्यचंद्रमसौतिष्ठतइतिहृदयम् ॥ ५७ ॥

गोप्यः स्वानामतीतानागतज्ञानं सूचयंत्यआहुः । मंत्रात्मेति । मंत्रात्मा मंत्रदेवता स कृष्णः कवाटेन पिहितं चेत्तत्कवाटमाशु शीघ्रेण विवृतं कर्तुं समर्थः । मंत्रसिद्धो हि कवाटार्गलादिकं छिनत्तीति भावः । अनेन वसुदेवकारागृहद्वारकवाटविवरणविषयकं ज्ञानं सूच्यते । नित्यविमुक्तिदः साक्षात्संसारमोक्षदः कृष्णो बंधमस्मत्कृतबंधनं वृथाव्यर्थं रचयितुं समर्थः अन्येषां बंधध्वंसदः कृष्णः स्वबंधध्वंसं कथं न कुर्यादिति भावः । अनेन वसुदेवस्य कंसकृतशृंखलाबंधविनाशः सूच्यते । विश्वंभरो यं कठोरवचसां निष्ठुरवचनानामस्माकं विस्मापयतीति विस्मापनं जगद्वक्त्रे दर्शयितुं समर्थः अतएव विश्वंभर इत्युक्तम् । अनेनोत्तरत्र स्वमात्रे दर्शयिष्यमाणब्रह्मांडविषयकानागतज्ञानं सूच्यते । कर्हिंचित् कथंचित् बद्धश्चेत्तद्विटपिनो बंधनरज्ज्वाधारभूतपादपान् विटपी पादपस्तरुरित्यमरः । पाटयितुमुन्मूलयितुं समर्थः । अने

मंत्रात्मा स कवाटमाशु विवृतं कर्तुं समर्थो वृथा बंधं नित्यविमुक्तिदो रचयितुं विश्वंभरोऽयं जगत् ॥
वक्त्रे दर्शयितुं कठोरवचसां विस्मापनं कर्हिचिद्बद्धः पाटयितुं च तद्विटपिनः किं देवि कुर्मो वयम् ॥ ५८ ॥
इति स्म संकीर्त्य सुराधिराजं व्रजस्त्रियो भाविविमुक्तिबीजम् ॥ विलोलनेत्रं तमवेक्ष्य वाचः शनैरलं
चक्रुरनेकभावाः ॥ ५९ ॥ सदा सदानंदसुतप्रवृत्तैर्भवद्गृहस्थैर्नवनीतमुख्यैः ॥ समा ममैषा मृदितीव
शंसन्मृदं जघास स्ववशोऽखिलेशः ॥ ६० ॥

न यशोदाकर्तृकबंधनयमलार्जुनभंगविषयकज्ञानं सूच्यते । हे देवि हे यशोदे एतादृशे तव सुते वयं किं कुर्मः कं वा प्रतिकारं करवामः ॥ ५८ ॥ इतीति । अनेकभावाः नानाभिप्राया व्रजस्त्रियः भाविविमुक्तिबीजं भविष्यन्मोक्षहेतुं हेतुर्ना कारणं बीजमित्यमरः । सुराधिराजममरचक्रवर्तिनं कृष्णमितीत्थंप्रकारेण संकीर्त्य अनेन गोपीभिरादरेण संकीर्तनं कृतं न तु कोपेन निंदा कृतेति ध्वन्यते । विलोलनेत्रं भवनटनेन कातरनेत्रं कृष्णमवेक्ष्य वाचः कृष्णचौर्यप्रकटव्याजेन तन्माहात्म्यवर्णनपराः वाणीः शनैः शनकैः अलं चक्रुः कृष्णमाहात्म्यं संकीर्त्य भूषयांचक्रुः समाप्तिं च निन्युः कृष्णदर्शनेन विमुक्तिं गता इव तूष्णीं बभूवुरित्यर्थः ॥ ५९ ॥ सदेति । स्ववशः स्वतंत्रः अखिलेशः सर्वेश्वरः कृष्णः सदा सर्वदा सं श्वासा वा नंदश्च सदानंदस्तेन सुतृप्राद्वत्त्विर्वर्तनं यस्य तस्य मम एषा मृत् मृत्तिका । मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिके

त्यमरः । भवद्धस्तैःनवनीतमुख्यैःसमासदशेतिशंसन्निवमृदंजघासमृत्तिकांभक्षितवान् । सदानंदतृप्तस्यममनवनीतादिकमप्यप्रयोजकं इतिभावेनैवेतिभावः ॥ ६० ॥ गोपीति । मातुर्यशोदायाःसमक्षंगोपीभिर्व्रजांगनाभिरापादितंप्रकटीकृतंचौर्यकर्मस्तेयव्यापारोयस्यसतथोक्तः त्रयाणांलोकानांसमाहारःत्रिलोकीत




स्यांमहितःपूज्योवसुदेवसूनुःकृष्णोत्रमृद्भक्षणेममचोरत्वंनकथयंतिकिलेत्याक्रोशेनैवमृदमभक्षयदित्यर्थः ॥६१॥ मृदमिति।असौकृष्णःमृदंसमास्वाद्यभुक्त्वाआ

गोपीभिरापादितचौर्यकर्मा मातुः समक्षं महितस्त्रिलोक्याम् ॥ मृत्स्नां किलाददसुदेवसूनुर्नाम्नास्ति चोरत्व मितीव हिन्वन् ॥ ६१ ॥ मृदं समास्वाद्य जगंति मातुः प्रदर्शयामास किलास्यदेशे ॥ अहं सुपात्रे रसया प्रदत्ता सहस्रधासौ फलितेति मन्ये ॥ ६२ ॥ रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायिनि ॥ संजाते भुवि रुक्मिणीशविजये स्वद्वादिराजोदिते संजातः सुरमंडलीषु महितः सर्गस्तृतीयो मुदाम् ॥ ६३ ॥ ॥ इति श्रीमद्वादिराजतीर्थपूज्यचरणविरचिते महाकाव्ये रुक्मिणीशविजये तृतीयः सर्गः॥ ३॥

स्यदेशेजगंतिभुवनानिमातुर्यशोदायाःप्रदर्शयामास । अहंरसयाभूम्यासुपात्रेदानयोग्येकृष्णेपात्रंतु तीरद्वयांतरेयोग्येद्रविणेराजमंत्रिणीतिभास्करः । प्रदत्तार्पिताश्राणिता । अतःमृत् सहस्रधासहस्रप्रकारेणफलितेतिमन्ये । सुपात्रेकृष्णार्पितबुद्ध्यादत्तमल्पमपिबहुभवतीतिभावः ॥ ६२॥ रोम्णामिति । सुरमंडलीषुतृतीयः सर्गःसृष्टिरभवत् । काव्यपक्षेसुरमंडलीषुमहितःमहनीयःसर्गोजातइत्यर्थः ॥६३॥ इतिश्रीरुक्मिणीशविजयटीकायांगुरुभावप्रकाशिकायांतृतीयःसर्गः ॥ ३ ॥

श्रीवेदव्यासायनमः ॐ करुणावरुणावासंतरुणार्कसमद्युतिम् । करुणाकर्षणोत्साहंतरुंनारायणंनुमः ॥ १ ॥ आद्यादिसर्गकाव्याख्यसोपानैर्गुरुदर्शितम् । चतुर्थ सर्गहेमाद्रिमारोढुमहमुद्यतः ॥ २ ॥ उद्गच्छदिति । उद्गच्छंतिदधिमथनसमयेसव्यदक्षिणोभयांगचलनेनकेशबंधश्लथनात्उद्गच्छंतिकबर्याप्रसूनानिधम्मिल्लेया नितेषांनिकरोयस्यास्तां अनेनतृतीयाध्यायप्रथमपादोक्तस्वर्गादिविषयत्यागलक्षणवैराग्यसंपत्तिःसूचिता अतएववैराग्यमेवभाग्यमैश्वर्यंयेषांतेवैराग्यभाग्या विरक्ताइत्यर्थः । तेषांप्रियःप्रेयान्सकृष्णउपाजगामसमीपमगमत् । विरक्तानुग्राहकःपरमात्मेतिभावः । उपाजगामेत्यस्यप्रत्येकंसंबंधः । सद्भिर्गीतंआत्मनःपरमात्मनःस्वस्ययशस्तस्यानुवर्तनेपरांआसक्तांस्वयशोगायंतीमित्यर्थः अनेनमहिमानुवर्णनस्यज्ञानपूर्वकत्वात्तृतीयाध्यायेतृतीयपादोक्तज्ञानसंपत्तिःसूचिता । अतएवज्ञानमनुमोदतइतिज्ञानानुमोदीज्ञानप्रियोहरिरित्यर्थः । निजप्रेमेत्येतदुभयत्रसंबध्यते । निजेस्वस्मिन्प्रेम्णास्नेहेन । प्रेमानाप्रियताहार्दंप्रेमस्नेहोथदोहदमित्यम

उद्गच्छत्कबरीप्रसूननिकरां वैराग्यभाग्यप्रियः सद्गीतात्मयशोनुवर्णनपरां ज्ञानानुमोदी हरिः॥ दध्नो निर्मथनोद्यतां समुदितप्रेमाश्रुधारां निजप्रेम्णा मंदमुपाजगाम जननीं भक्तैकवश्यः प्रभुः॥ १ ॥ अंकोज्झितेंदुप्रतिमाननं तमंकं समारोप्य मुहुर्मृजंती ॥ पंकं मनोज्ञांगगतं क्षुधार्तशंका स्तनक्षीरमपाययत्सा ॥ २ ॥

रः । दधिनिर्मथनउद्धृतंनवनीतंकृष्णायार्पयामीतिकृष्णस्नेहेनदध्नोःनिर्मथनोद्यतांनिजप्रेम्णाकृष्णानुरागवशात्समुदितप्रेमाश्रुधारांसमुद्भूतानंदबाष्पप्रवाहां अनेनपरमात्मनःकृष्णस्यप्राप्तौद्वितीयपादोक्तभक्तिलक्षणसाधनसंपत्तिःसूचिता । जननींयशोदांभक्तैकवश्यः भक्तजनाधीनःप्रभुःकृष्णः मंदंशनैरुपाजगामविरक्त्यादिसाधनप्रयत्नवतापरमात्मालभ्यएवेतिभावः । निद्रोत्थितःकृष्णः दधिमथनकालेयशोदासमीपमाजगामेतिपौराणिकीकथा ॥ १ ॥ ॥ १ ॥ अंकोज्झितेति । अंकोज्झितःकलंकरहितइंदुश्चंद्रएवप्रतिमायस्यतदंकोज्झितेंदुप्रतिमंआननंयस्यसतथोक्तः तंस्वसमीपमागतंकृष्णंअंकंउत्संगं । उत्संगचिह्नयोरंकइत्युभयत्राप्यमरः । आरोप्याधिरोप्यमनोज्ञांगगतंमनोहरगात्रस्थंपंकंकर्दममुहुः पुनःपुनः मृजंतीशोधयंतीसा क्षुधार्तइतिशंकासतीस्तनक्षीरंस्तन्यमपाययत्पाययामास ॥ २ ॥

तदिति । तदनुस्तन्यदानानंतरंदहनस्यवह्नेर्वेगात्ज्वालातैक्ष्ण्यात्उत्स्रवदुत्सर्पियत्क्षीरंतस्यलोभात्मधुजितंमधुनामकदैत्यजेतारंकृष्णमपहायत्यक्त्वाऽजानती कृष्णंपरमात्मानमजानतीसायशोदाजगाम कृष्णमपहायचूल्यामधिश्रितपयःसंरक्षणार्थंययौ । हरिरपिकृष्णोपिसमयार्हांस्वसेवांपरित्यज्यविषयानुधावन कालोचितांहानिमनिष्टमस्यैयशोदायैप्रदातुं क्षिप्तः भांडोपरिविसृष्टःपाषाणखंडोयेनसतथोक्तःसन्दधिभांडंदध्यमत्रंव्यभजत पाषाणखंडंप्रक्षिप्यदधिभांडम भिनदित्यर्थः । परमात्माहिअज्ञानवशात्स्वसेवांपरित्यज्यविषयसेविनांस्वभक्तानामपिऐहिकंपारत्रिकंचनाशयतीतिभावः । मालिनीवृत्तम् । ननमयययुतेयं मालिनीभोगलोकैरित्युक्तत्वात् ॥ ३ ॥ ददाविति । सकृष्णः रहोगत्वाजनन्यामात्राऽदृष्टःसन् । अनेनस्वसेवाविधुराणामदृश्यःपरमात्मेतिध्वन्यते । नीतंस्वनीतं

तदनु दहनवेगादुत्स्रवत्क्षीरलोभान्मधुजितमपहायाजानती सा जगाम ॥ हरिरपि समयार्हां हानिमस्यै प्रदातुं व्यभजत दधिभांडं क्षिप्तपाषाणखंडः ॥ ३ ॥ ददौ बिडालाय जनन्यदृष्टस्तदा स नीतं नवनीतजातम् ॥ क्षिणोति नूनं धनलोभभाजां धनान्यनर्हेत्स्वतिदिश्य देवः ॥ ४ ॥ विचारभारार्पितमानसाथो विमर्शलभ्यं तमवेक्ष्य माता ॥ अनुव्रजंत्यस्पृशदत्यगम्यं परानुयात्रार्जितपुण्यपात्री ॥ ५ ॥ यदीयनाम स्मरतां जनानां बिभेत्यसह्योपि हि दंडपाणिः ॥ अभीषयद्विश्वसृजां प्रभुं तं गृहीतदंडा किल नंदराज्ञी ॥ ६ ॥

नवनीतजातंबिडालायमार्जाराय ओतुर्बिडालोमार्जारइत्यमरः । ददौदत्तवान् । अत्रअर्थांतरंन्यस्यति । देवःसर्वसाक्षीविष्णुर्धनलोभभाजांलोभिनांधनानिअनर्हेत्सुअयोग्येषुअतिदिश्यदत्त्वानूनंनिश्चयेनक्षिणोतिनाशयति ॥ ४ ॥ विचारभारेति । अथोअनंतरंविचारभारे कृष्णःक्वगतइत्यन्वेषणभारेअर्पितंदत्तंमानसंययासामातायशोदाविमर्शलभ्यंअन्वेषणरूपविचारलभ्यम् चोराहिअन्वेषणायांलभ्यंतइतिभावः । अनेनहरेर्वेदांतविचारलभ्यत्वंध्वन्यते । तंकृष्णमवेक्ष्यदृष्ट्वाऽनुव्रजंतीभयाद्धावंतंकृष्णंग्रहीतुंपृष्ठतोगच्छंतीअतएवपरस्यपरमात्मनःकृष्णस्यानुयात्रातयानुव्रजनेनार्जितस्यजातस्यपुण्यस्यपात्रीयोग्यासतीअगम्यमप्राप्यमपिकृष्णमस्पृशदग्रहीत् । पुण्यवतांपरमात्मप्राप्तिर्भवतीतिभावः ॥ ५ ॥ यदीयेति । असह्यःपापजनैःसोढुमशक्योदंडःपाणौयस्यसदंडपाणिर्य

मोपियदीयस्यसंबंधीनिनामानिस्मरतांजनानांसकाशाद्बिभेति। कमलनयनवासुदेवविष्णोधरणिधराच्युतशंखचक्रपाणे । भवशरणमितीरयंतियेवैत्यजभटदूरतरेहितानपापान्। तांनोपसीदतहरेर्गदयाभिगुप्तान्नैषांभयंनचवयंप्रभवामदंडेइतिवचनात्। नंदराज्ञीनंदगोपस्यमहिषीगृहीतदंडासतिविश्वसृजांब्रह्मादीनांवरिष्ठंश्रेष्ठतमंकृष्णमभीषयत्किल। दंडपाणिरपियस्माद्बिभेतितंकृष्णंयशोदास्वयमभीषयत्किलेत्यनेनकृष्णभीषणोद्योगोयशोदायामौर्ख्यविजृंभितइतिध्वन्यते॥६॥ अजांडेति। आत्तःस्वीकृतःकोपोयया नंदंगोपायतीति शुश्रूषादिनारक्षतीतिनंदगोपी कर्मण्यणित्यणिकृतेटिड्ढाणञित्यादिनाङीप्। यशोदा अजांडानांकोटिस्तस्याआश्रयआधारः रोमकूपः रोम्णांनिम्नभागोयस्यसतथोक्तः अनेककोटिब्रह्मांडाश्रयइत्यर्थः। तंकृष्णंबद्धुमियेषकिल असाध्यकार्यकरणोद्योगेयशोदायामौर्ख्यातिशयःकिंवर्णनीयइतिभावः । तथाहिरोषेणक्रोधेनरुद्धंमनः अमराणामनुभावमपिसामर्थ्यमपि। अमराणांदेवानामनुभावःसामर्थ्यंयस्मात्त

अजांडकोट्याश्रयरोमकूपं तमात्तकोपा किलनंदगोपी॥ इयेष बद्धुं किल रोषरुद्धं मनो न मीनात्यमरानुभावम्॥ ७॥ कृतागसं तं किल नैव माता शशाक बद्धुं मम तु प्रतर्कः॥ तदीयरम्योदरमध्यसंस्थविमुक्तशक्त्यैव न बंध आसीत्॥ ८॥ साशां मुहुः स्वप्रसुवं विधातुमीशत्वमप्यात्मगतं मुकुंदः॥ बंधं रुणद्धि स्म तदात्तदाम संदर्शयन्स्वात्मनि किंचिदूनम्॥ ९॥

मपीतिवा नमीनातिनजानाति। नगणयतीत्यर्थः। कोपःस्वपरसामर्थ्यविवेकंनाशयतीतिभावः॥ ७॥ कृतागसमिति। मातायशोदाकृतागसंकृतापराधंकृष्णंबद्धुंनैवशशाकशक्तानैवासीत्। तदीयस्यकृष्णसंबंधिनः रम्यस्यरमणीयस्यउदरस्यमध्येसंस्थितायेमुक्तास्तेषांशक्त्यैवसामर्थ्येनैवबंधोनासीदिति। ममतुप्रतर्कः। कृष्णसामर्थ्येनबंधोनासीदितिन किंतुकृष्णस्यमुक्ताश्रयत्वेनतदुदरस्थितविमुक्तवर्गशक्त्याबंधोनासीदितिममबुद्धिरित्यर्थः। अन्यथाकृष्णबंधनेनकृष्णस्यासंगत्वेनतदाश्रितमुक्तानामेवबंधनप्राप्त्यैतेषांविमुक्तत्वहानेरितिभावः॥८॥ साशामिति। मुकुंदःकृष्णःप्रसुवंस्वमातरं जनयित्रीप्रसूर्माताजननीत्यमरः। यशोदांमुहुःसाशांआशयाअभिलाषेणसहितां। आशादिगभिलाषयोरितिविश्वः । बंधस्यांकिंचिन्न्यूनतायांइतःपरमन्येनदाम्नाबंधोभविष्यतीतिदामांतरप्रवृत्तौ

साभिलाषांविधातुंईशत्वमपिकर्तुमकर्त्तुमन्यथाकर्तुंसमर्थइतितद्रूपमैश्वर्यमप्यात्मगतंस्वगतंविधातुंसामर्थ्याभावेतदात्तसकलदामांतरप्रवृत्तौकिंचिन्न्यूनकरणा
योगादितिभावः। तयायशोदयाआत्तंउपात्तंदामस्वात्मनिस्वस्मिन्किंचिदूनंद्व्यंगुलोनंसंदर्शयन्बंधंयशोदयाक्रियमाणंबंधंरुणद्धिस्मअरुणत् ॥ ९ ॥ सुतइति।
नंदस्यपुरंध्रीपुरंपोष्यवर्गंधत्तेइतिपुरंध्रीकुटुंबिनीअयंशिशुरपिविस्मापनशक्तियुक्तःकृष्णोमेसुतोनभवतिकिंतुसाक्षाद्धरिरेवेतिप्रबोधेसम्यक्ज्ञानेंऽकुरितेजातेस
तिबुधैर्ज्ञानिभिःप्रणयाख्यरज्ज्वाप्रेमदाम्नानिबद्धंसंगतंबलानुजंबलभद्रानुजंकृष्णंबबंध कृष्णःस्वसामर्थ्यदर्शनेनस्वस्मिन्परब्रह्मत्वबुद्धिंकुर्वत्यायशोदायाबुद्धि
व्यामोहनायतयाबध्यतेत्यर्थः। ज्ञानिलभ्यः परमात्मेतिध्वनितोर्थः॥१०॥असाध्येति। मातायशोदाऽसाध्यभागेऽलभ्यप्रदेशेस्थितस्यदुग्धस्यचौर्येविशारदंप्रौढं

सुतो न मेऽयं हरिरेव साक्षादिति प्रबोधेंकुरिते पुरंध्री ॥ बबंध नंदस्य बलानुजं तं बुधैर्निबद्धं प्रणया
ख्यरज्ज्वा ॥ १० ॥ असाध्यभागस्थितदुग्धचौर्ये विशारदं तं विनिबध्य माता ॥ उलूखलस्यापि बबंध
मध्यं सहायभूतस्य तदीयकार्ये ॥ ११ ॥ अनाहि यः कार्यवशाज्जनन्या शनैरसौ साकमुलूखलेन ॥ वि
धाय घृष्टं स्वकयोरनिष्टमभीप्सितं दातुमिव प्रतस्थे ॥ १२ ॥ असज्जनेष्वाचरितोग्रशिक्षां स्वभक्तपुंजेषु
कृतां च रक्षाम् ॥ नभस्युभौ गातुमथो चिकीर्षन्विपाटयामास स पादपौ द्वौ ॥ १३ ॥

तंकृष्णंनिबद्ध्यतदीयकार्येकृष्णसंबंधिकार्येसहायभूतस्य उलूखलमारुह्योपरिस्थितदुग्धचोरत्वादितिभावः।उलूखलस्यापिमध्यंबबंध कृष्णंनिबध्यदामोलूख
लमध्येअनुसंधितवतीत्यर्थः। चौर्यकृत्सहायिनोऽप्यंखलाबंधस्यलोकेदर्शनादितिभावः॥ ११ ॥ अनाहीति। योजनन्यामात्राकार्यवशाद्भाविकार्यापेक्षयाअना
हिअबध्यत। णह्बंधनइतिधातुः। असौकृष्णःस्वकयोर्भक्तयोर्नलकूबरमणिग्रीवयोरनिष्टंदुरितंउलूखलेवहननंकृत्वाघृष्टंसम्यक्चूर्णंविधायाभीप्सितमिष्टंदातु
मिवोलूखलेनसाकंशनैःप्रतस्थेप्रतस्थिवान्॥१२॥असज्जनेष्विति। अथोअनंतरंसकृष्णः असज्जनेषुदुर्जनेषुआचरितांकृतामुग्रशिक्षांतीक्ष्णंदंडंस्वभक्तपुंजेषुकृ
तांरक्षांचनभसिगगनेगातुंगानंकर्तुंउभौशिक्षागानेएकंरक्षागानेएकं अपरमितिउभौगायकौचिकीर्षन्निव अनेनानयोर्वृक्षयोःस्वभक्तव्यतिरिक्तौशिक्षायोग्यौद्वाव

सुरौतिष्ठतइतिसूच्यते। द्वौपादपौविपाटयामास बभंज ॥१३॥ स्वभृत्येति। कंजवज्जलजवन्मंजुनीमनोहरेनेत्रेयस्यसतथोक्तःसदेवःक्रीडादिगुणविशिष्टःकृष्णः स्वभृत्यभीमस्यभीमसेनस्यानुजंस्वभृत्यश्चासौभीमानुजश्चेतिउभयत्रापिस्वभृत्यपदस्यसंबंधः। तमर्जुनंदययाकृपयाऽद्वितीयंनविद्यतेद्वितीयोर्जुनोयस्येत्यद्विती यस्तंअर्जुनांतररहितमित्यर्थः विधित्सुरिवविधातुमिच्छुरिवार्जुनाभिधौतौवृक्षौ। पार्थेर्जुनःकेकिनिकार्यविचार्येनेत्रामयेप्येकसुतेचमातलौ। वर्णेद्रुमेचाथेतिभा स्करः। बभंजविपाटयामास ॥ १४ ॥ तदंगेकृष्णांगेयोबंधः मात्राकृतस्तस्यप्रतिबंधेनतत्सहबद्धोलूखलप्रतिरोधजन्यप्रतिबंधेन अनेनकृष्णस्यप्रतिबंधाभावप्र तिपादनंद्योत्यते। जातंयत्पुण्यंतस्यबलेनकृष्णस्यनित्यमुक्तत्वेनप्रकृतिबंधराहित्यंवदतोमहत्पुण्यंजायतइतिभावः । सामर्थ्येनततः विपाटिततरुसकाशादुत्थि

**स्वभृत्यभीमानुजमद्वितीयं प्रियं विधित्सुर्दययेव देवः ॥ स भूरुहावर्जुनसंज्ञिनौ तौ बभंज कंजायतमं जुनेत्रः ॥ १४ ॥ तदंगबंधप्रतिबंधपुण्यबलेन सिद्धौ तत उत्थितौ द्वौ ॥ प्रशस्य वृंदावनवल्लभं तं तदेयतु स्तन्मनसौ स्वलोकम् ॥ १५ ॥ बृहद्वने स्वस्य हि संनिधानान्महापुरीसाम्यमुपेयुषीत्थम् ॥ वनप्रियोऽसौ चकमे रमेशो मनोज्ञवृंदावन एव वासम् ॥ १६ ॥ विरोधिदैतेयपराभवेन स्थिरेह नोत्थास्यति बंधुते तः ॥ इति प्रभुः स्वप्रियसाध्वसायवृकाननेकान्स ससर्ज रोम्णः ॥ १७ ॥**

तौद्वौवृंदावनवल्लभंवृंदावनपतिं अनेनभविष्यद्वृंदावनगमनंसूच्यते। कृष्णंप्रशस्यस्तुत्वातस्मिन्कृष्णेमनोययोस्तौतन्मनसौतत्स्मरणयुक्तावित्यर्थः तादृशौसंतौस्व लोकमीयतुर्ययतुः ॥ १५ ॥ बृहद्वनइति। बृहद्वनमितिनंदव्रजनामतस्मिन् इत्थमुक्तप्रकारेणअनंतसंपत्तिभिः पूर्यतइतिपुरीमहतीचसापुरीचेतिमहापुरीपट्टनंत स्याःसाम्यंसादृश्यंउपेयुषिगच्छतिसतिवनंप्रियंयस्यासौवनप्रियोरमेशःकृष्णः मनोज्ञवृंदावनएववासंनिवासंचकमे ऐच्छत्। वनप्रियस्यवनएवाभिरुचिर्युक्तेति भावः ॥ १६ ॥ विरोधीति। विरोधिनोदैतेयादैत्यास्तेषांपराभवेनपराजयेनइहबृहद्वनेस्थिरासुस्थिराबंधुताबंधुवर्गः ग्रामजनबंधुसहायेभ्यस्तलितितल्प्रत्ययः। इतोन्यत्रगंतुंनोत्थास्यतिउपप्लवाभावादितिभावः । इतिप्रभुःसमर्थःकृष्णःस्वप्रियसाध्वसायस्वबंधुभयाय भीतिर्भीःसाध्वसंभयमित्यमरः। स्वबंधूनांभयोत्पा

दनार्थंरोम्णःरोमभ्योजात्येकवचनं। अनेकान्दकानूईहामृगान् कोकईहामृगोवृकइत्यमरः। ससर्जस्रष्टवान्॥ १७॥ इहेति। दैत्याः इहव्रजेस्वकीयान्निहता न्निशम्यश्रुत्वाव्रजस्थंमांप्रतिनायांतिस्वेषांपराजयहेतुस्थानत्वादितिभावः।सविभुःकृष्णइत्थमालोच्यविचार्यस्वकीयान्नंदादीन्वृंदावनंगंतुमेवन्ययुंक्तन्ययोज यत्॥ १८॥ भारानिति। गोधनंगोरूपधनंवृद्धावयोवृद्धाःमुग्धललनामनोहराअबलाः बालाबालकाएतएवादौयेषांतेगोधनवृद्धमुग्धललनाबालादयस्तैःसंयु ताः रामोबलभद्रः श्रीरमणःश्रीकृष्णः तावाश्रयौयेषांतेतथोक्ताअरण्यालयावनौकसःगोपाःस्वान्भारान्संभारान्चारुशकटश्रेण्यांमनोहरशकटसमूहेऽधिरोप्य निक्षिप्यवीणास्तंतुवाद्यविशेषाःवल्लक्यादयोवेणवोवंशाःसुषिरवाद्यविशेषामृदंगामुरजाआनद्धवाद्यविशेषाः। ततंवीणादिकंवाद्यमानद्धंमुरजादिकम्। वंशादिकं

इह स्वकीयान्निहतान्निशम्य न मां व्रजस्थं प्रतियांति दैत्याः॥ स इत्थमालोच्य विभुः स्वकीयान् न्ययुङ्क्त वृंदावनमेव गंतुम्॥ १८॥ भारान्स्वानधिरोप्य चारुशकटश्रेण्यामरण्यालया गोपा गोधन वृद्धमुग्धललनाबालादिभिः संयुताः॥ वीणावेणुमृदंगशृंगनिनदैः संपूरिताशाः शनैः रामश्रीरमणाश्र याःप्रतिययुर्वृंदावनं पावनम्॥ १९॥ जृंभच्चंपकगुंफितोच्चकबरीभाराश्चलत्कंचुकाः सिंजन्मंजुलभूरिभू षणधरा गोप्यः समाप्य क्रियाः॥ कृष्णस्याद्भुतकर्म रामचरितैः साकं जगुः कृत्स्नशः स्वाभीष्टाप्त्युचित स्थलीगतिमिव प्रेक्ष्य प्रहृष्टाः पथि॥ २०॥

तुसुषिरमित्यमरः। शृंगाणिशृंगनिर्मितानिवाद्या नितेषांनिनदैःस्वनैःपूरिताआशादिशोयैस्तेतथोक्ताःसंतःपावनंवृंदावनंशनैःकृष्णरामाश्रयत्वेनभयाभावान्मंदंमंदंययुः॥ १९॥ जृंभदिति। जृंभच्चंपकैर्विकसच्चं पककुसुमैर्गुंफितायाउच्चकबर्याउन्नतधम्मिल्लस्यभारोयासांताः चलत्कंचुकाश्चलत्कूर्पासकाःसिंजंतिक्वणंतिमंजुलानिमनोहराणिभूरिभूषणानिसुवर्णाभरणा निबहुभूषणानीतिवा भूरिस्वर्णेबहौत्रिष्विितिभास्करः। धरंतीतिधराःसिंजन्मंजुलभूरिभूषणधरागोप्योव्रजांगनाःक्रियागृहकार्याणिसमाप्यस्वाभीष्टस्य वृंदावनेकरिष्यमाणरासक्रीडा[illegible]क्षणस्याप्तिःप्राप्तिः तस्याउचितायोग्यास्थलीतस्यांगतिर्गमनंप्रेक्ष्येवप्रहृष्टाःसत्यःपथिमार्गेकृत्स्नशःसाकल्येनकृष्णस्याद्भुत

कर्मआश्चर्यव्यापारंरामचरितैर्बलचरित्रैःसाकंजगुः ॥ २० ॥ गवामिति । धेनूनांखुरैःगोपानांपदैश्चरणैरनोभिःशकटैःसमुत्थधूलिरुद्गच्छद्रेणुःसवितुःसूर्यस्य करौघंकिरणसमूहंदूरेरुरोधकिल सएवसूर्यएवस्वमूर्ध्निस्वशिरसितांधूलिंवोढुंध्रुवंस्वकरंउन्निनाय विष्णुवैष्णवगोपादरजसःपरमपावनत्वात्शिरसाधर्तुंस्वकरंस्व यमेवोन्निनायेव गोपानांऋषिदेवप्रवरत्वेनदेवमान्यत्वंध्वन्यते ॥ २१ ॥ पुष्पैरिति । वृक्षगणाःपुष्पैःप्रसूनैः कीराःशुकाः मनोज्ञवचनैः कुकवकआदानइति धातोः । सुस्वरेणचित्तंकोकंतेगृह्णंतीतिकोकिलाःसुस्वरैः केकिवरामयूरश्रेष्ठाःनृत्तैः गजाश्वगतिभिर्गमनैः शैलाश्चपर्वताश्चस्रवन्निर्झरैःनिष्पतन्निर्झरोदकैः मृगा हरिणावीक्षणैःस्वालोकनैः साभूर्वृंदावनभूमिःसुनिबिडाछायायेषांतैर्मणिकुट्टिमस्थलचयैरत्नबद्धभूप्रदेशसमूहैस्तदाकृष्णागमनकाले तद्वृंदावनमच्युतार्हंभव

गवां खुरैर्गोपपदैरनोभिः समुत्थधूलीः सवितुः करौघम् ॥ रुरोध दूरे किल तां स्वमूर्ध्नि स एव वोढुं ध्रुव मुन्निनाय ॥ २१ ॥ पुष्पैर्वृक्षगणा मनोज्ञवचनैः कीराः स्वरैः कोकिला नृत्तैः केकिवरा गजाः स्वगति भिः शैलाः स्रवन्निर्झरैः ॥ सुच्छायैर्मणिकुट्टिमस्थलचयैः सा भूर्मृगा वीक्षणैस्तद्वृंदावनमच्युतार्हभवनं नूनं तदा तेनिरे ॥ २२ ॥ स लब्धजन्मा मधुराख्यपुर्यां व्रजेभिवृद्धः कतिचिद्दिनानि ॥ उपेत्य वृंदावन मेष कृष्णस्त्रिधामतां दर्शयतीव देवः ॥ २३ ॥ फलैः प्रसूनैः पयसा तृणेन विधाय गोगोपनिकायरक्षा म् ॥ वनं स्वनामानुगुणं बभाज हरौ प्रसन्ने किमिहास्त्यसाध्यम् ॥ २४ ॥

नंकृष्णयोग्यमंदिरंनूनंतेनिरेचक्रिरे । पुष्पोपहारमधुरवचनगीतनृत्तगतिविलासोदकसुच्छायाद्युपचारात्खलुराजभवनंतत्सर्वंवृंदावनेप्यभवदित्यर्थः ॥ २२ ॥ सइति । सकृष्णःमधुराख्यपुर्यांमधुरापट्टनेलब्धजन्माप्राप्तप्रादुर्भावः अनंतरंव्रजेगोष्ठेकतिचिद्दिनानि । कालाध्वनोरत्यंतसंयोगइतिद्वितीया । अभिवृद्धःसन्निदा नींवृंदावनमुपेत्य त्रिधामतांत्रीणिधामानिस्थानानियस्यसत्रिधामातस्यभावस्त्रिधामतातांदर्शयतीव त्रिधामाकरुणाकरइतिस्मृतेः ॥ २३ ॥ फलैरिति । वनंवृंदावनं फलैःप्रसूनैःकुसुमैःपयसाजलेनतृणेनयवसेन गावोगोपास्तेषांनिकायस्यरक्षांविधायस्वनामस्वस्यवृंदावनमितिनामधेयमनुगुणंवृंदसमूहमवतीत्युनुरूपंबभाज ।

तथाहि हरौकृष्णेप्रसन्नेसतिइहलोकेअसाध्यमलभ्यंकिमस्तिसर्वंसुलभमित्यर्थः ॥ २४ ॥ ततइति । ततोवृंदावनप्रवेशानंतरंसकृष्णःप्राक्पूर्वंवत्सदैत्यरणंभविष्य द्वत्सासुरयुद्धंअभ्यसन्निवशिक्षन्निवगोरूपधरैर्वत्सरूपधरैर्गोपालपुत्रैःसहनियुध्यंस्तस्यवत्सासुरस्यतन्वाःशरीरस्योत्क्षेपणंतरुशिरसिप्रक्षेपणंअभ्यसन्निवशिक्ष न्निवउपलंपाषाणंचारुसम्यगुत्क्षिपंश्चवनेवृंदावनेचचार ॥ २५ ॥ प्लवंगेति । प्लवंगवेषैःकपिवेषैः कपिप्लवंगप्लवगशाखामृगवलीमुखाइत्यमरः । अनुगैःभृत्यैःगो पैःसमेतःसेतुबंधआलवालबंधआदिर्यस्यससेतुबंधादिः विहारएवशीलंस्वभावोयस्यसतथोक्तः अरण्येवनेचरन्सदेवःकृष्णोरघुरामरूपंरघुकुलोत्पन्नत्वाद्रघुश्चा सौरामश्चेतिरघुरामस्तस्यरूपंस्वकीयमाज्ञापयतिस्म । कपिवेषधारिगोपैरनुगतत्वादरण्येसंचरणादहमेवरघुरामइतिप्रकटयामासेत्यर्थः । कृष्णेनोक्तक्रीडाकृतेति

ततः स गोरूपधरैर्नियुध्यंश्चचार चारूपलमुत्क्षिपंश्च ॥ समभ्यसन्प्रागिव वत्सदैत्यरणं तथोत्क्षेपणमस्य तन्वाः ॥ २५ ॥ प्लवङ्गवेषैरनुगैः समेतः स सेतुबंधादिविहारशीलः ॥ चरन्नरण्ये रघुरामरूपं स्वकीयमाज्ञापयति स्म देवः ॥ २६ ॥ सहानुगैर्गाः किल चारयन्तं खलोभ्यगात्तं पशुवेषधारी ॥ अहं महांतं प्रतियास्यतोस्य पशुत्वमाजानजमेव मन्ये ॥ २७ ॥ तद्वृंदावनभूगणं पदरुचा प्रागंकयन्सोऽसकृत्पश्चात्तद्रुमरुद्गणं च वरयन्कुर्वन्निवांतर्वनम् ॥ सद्धास्वद्गणशोभि लेखसवयोहृद्योगणौ चाश्रयन् लक्ष्मीशोऽनुकरोति तत्र विचरन् शार्दूलविक्रीडितम् ॥ २८ ॥

पौराणिकीकथा ॥ २६ ॥ सहानुगैरिति । अनुगैर्भृत्यैर्गोपालैःसहगाःधेनूश्चारयंतंतृणजलोपेतप्रदेशेषुसंचारयंतंतंकृष्णंपशुवेषधारीवत्सवेषधारीखलः क्रूरोभ्यगात्किल पशुवेषंधृत्वायुद्धायकृष्णमाजगामकिलेत्यर्थः । किलेत्यैतिह्ये । अहमिदानींनपशुवेषधारीकिंतुमहांतमतिसमर्थंकृष्णंप्रतियास्यतोयुद्धार्थ मागच्छतोस्यपशुत्वंस्वशरसामर्थ्यविवेकशून्यत्वलक्षणपशुत्वमाजानजंजननमारभ्यजातंमन्ये ॥ २७ ॥ तदिति । तत्रवृंदावनेविचरन्सलक्ष्मीशःकृष्णःशार्दूलवि क्रीडितंवत्सासुरवधेव्याघ्रव्यापारमनुकरोतिशार्दूलवदाचरति । वत्सवधेशार्दूलानुकरणस्योचितत्वादितिभावः । शार्दूलविक्रीडिताख्यवृत्तंचव्यज्यते । किंकुर्वन् ।

तस्यवृंदावनस्यभूगणंस्थलसमूहंप्राक्प्रथमंपदरुचापादकांत्याअंकयन् अंकोनाटकविच्छेदेसंख्यायांयुधिभूषणइतिरत्नमाला ।शार्दूलविक्रीडितवृत्तस्यसुमिङं तरूपपदेनप्रथमंभूमिदेवताकमगणांकितत्वादुपमा । पुनः किंकुर्वन् पश्चादनंतरंतद्वंमरुद्गणंवृंदावनगतमंदमारुतसमूहंपदरुचाऽसकृत्मुहुर्वरयन्अंगीकुर्वन् । वृत्तम पिवायुदेवताकसगणद्वयमंगीकरोति । पुनः किंकुर्वन् पदरुचाअंतर्वनंसद्भास्वद्गणशोभिसत्सूर्यसमूहशोभाशालिकुर्वन्निवकृष्णपादस्यकोटिसूर्यसदृशकांतियु क्तत्वादितिभावः । वृत्तमपिद्वयोःसगणयोर्मध्येसूर्यदेवताकजगणशालि । पुनः किंकुर्वन्पदरुचा चित्रेलिख्यंतइतिलेखादेवाः लेखाअदितिनंदनाइत्यमरः । सव यसःस्निग्धाः स्निग्धोवयस्यःसवयाइत्यमरः । तेषांहृद्योगणौहृदयाकाशसमूहौ द्योदिवौद्वेस्त्रियामभ्रमित्यमरः । देवानांहृदयाकाशगणःसवयसांहृदयाकाशग श्चेतिद्वौलेखसवयोहृद्योगणौआश्रयंस्तद्ध्यानविषयीभवन्नित्यर्थः । वृत्तमप्याकाशदेवताकतगणद्वयशोभीतिभावः । गणलक्षणंतूक्तंवृत्तरत्नाकरे । सर्वे

उदक्षिपत्तं हरिरात्मदोर्भ्यामधः पपाताशु स वत्सदैत्यः ॥ व्रजाधिनाथस्य स एष धर्मो गृहीतमायस्य च तस्य पातः ॥ २९ ॥ स पातयामास पतन्कपित्थफलानि लोलद्रुमसंचयेभ्यः ॥ तथा हि कृष्णप्रतिपक्षिपक्षः कथं न पातैकफलस्तदैव ॥ ३० ॥

गुर्मोमुखांतलौयरावंतगलौसतौ । मध्यादिगौजभौप्रोक्तौत्रिलोनोष्टौगणाःस्मृताः । गणदेवतास्तुअमृतानंदीयेकथिताः शुभदोमोभूमिमयः सोवायव्योजयप्र दः । जःसूर्योरोगदःप्रोक्त अनैश्वर्योनभस्तुतइति । सूर्याश्वैर्यदिमःसजौ सततगाःशार्दूलविक्रीडितमिति ॥ २८ ॥ उदक्षिपदिति । हरिर्दैत्यंआत्मदोर्भ्यांस्वहस्ताभ्यां गृहीत्वाउदक्षिपदुपरिचिक्षेप । सवत्सदैत्यःआशुअधःपपात । कृष्णस्योत्क्षेपणकर्मदैत्यस्याधःपातइत्युभयंयुक्तमित्याह । व्रजाधिनाथस्यकृष्णस्यवत्सासुरस्यो परिक्षेपणरूपोव्यापारःसएषधर्मः स्वरक्ष्यवत्सवेषधारिणऊर्ध्वगतिः गृहीतमायस्यगृहीतामायाजनमोहकरीयेनसतस्य तस्यवत्सस्य पातःअधःपातश्चधर्मएव मायिजनस्यसाधनेविद्यमानेपिदैत्यानामधःपातएवेतिभावः ॥ २९ ॥ सइति । सवत्सदैत्यःपतन्नधःपतन्लोलद्रुमसंचयेभ्यःस्वपार्श्वाभिघातेनचलद्रुमसमूहेभ्यः कपिनोमध्नंतीतिकपित्थास्तेषांफलानिपातयामास । तथाहितद्युक्तंहि कृष्णप्रतिपक्षिणोदैत्यास्तेषांपक्षःसहायोयस्यसतथोक्तः पक्षःपार्श्वगरुत्साध्यसहायबल

भित्तिष्विति केशवः । सत्रिलोक्यां पातएव एकं मुख्यं फलं यस्य स पातैकफलः कथं न भवेत् । द्वेषिद्वेषिपक्षपातिनोरपि पातएवेति भावः ॥ ३० ॥ अन्योन्येति । यः कृष्णः प्रतिकल्पं अन्योन्यं भर्तू रागो भार्यायां भार्यारागो भर्तरीति परस्पराश्रितो रागएव रज्जुर्जालं जालस्याप्यन्योन्यनिबद्धरज्जुनिर्मितत्वादिति भावः । तयावितत आस्तृतेइह संसृतिः संसारएवाभेद्यद्रुमः विष्णुप्रसादव्यतिरेकेण केनाप्यविनाश्यवृक्षस्तस्मिन्नब्जजो ब्रह्मा मुखं येषां तेतान्सुपर्णान्पक्षिणः ब्रह्मादिपिपीलिकांतजीवाख्यपक्षिणः संगृह्य भुङ्क्ते संहरतीत्यर्थः । रागएव संसारकारणमित्यर्थः । यथा लुब्धको जालं वृक्षे विस्तार्य तत्रत्यान्पक्षिणः संगृह्य भक्षयति तद्वदित्यर्थः तं विश्वाद्भुत लुब्धकं जगदाश्चर्यं धीवरं कृष्णं बको बकस्याकारो दितिसुतो दैत्यो मीनतनुं मत्स्याकृतिं श्रुत्वा बकस्य मीनाशित्वादिति भावः । व्यत्यस्तबुद्धिर्विपरीतबुद्धिर्बको बकपक्षीति तिमिं महामीनं गिलतीति तिमिंगिलस्तमिवाभ्याययौ यथा मीनाशया तिमिंगिलसमीपमागतस्य बकपक्षिणस्ततएव नाशस्तथा कृष्णं हंतुमागतस्य ब

अन्योन्याश्रितरागरज्जुवितते संसृत्यभेद्यद्रुमे संगृह्य प्रतिकल्पमब्जमुखान्भुङ्क्ते सुपर्णानिह ॥ तं विश्वाद्भुतलुब्धकं दितिसुतः श्रुत्वा बकोऽभ्याययौ नूनं मीनतनुं तिमिंगिलमिव व्यत्यस्तबुद्धिर्बकः ॥ ३१ ॥ कृष्ण त्वन्नाम जिह्वा न कथयति ममेत्यास्यमुदर्शयन्स्वौ पक्षौ नो कृष्णपक्षास्त्विति विशदयितुं प्रोत्क्षिपन्नंघ्रियुग्मम् ॥ पश्चाद्भागे विधुन्वन्हरिनिलयमहीसंगभीत्येशकेशं मत्वा व्योमाध्वनासौ यदुकुलतिलकं सत्वरोऽभ्याजगाम ॥ ३२ ॥

कासुरस्य कृष्णादेव नाशो भविष्यतीति भावः ॥ ३१ ॥ कृष्णेति । असौ बकाकारोसुरो हे कृष्ण मम जिह्वा त्वन्नाम न कथयतीतीवास्यं वदनमुद्दर्शयन्सरोवराभ्याशे आहारापेक्षया मुखव्याकृत्य गमनं बकपक्षिणो जातिः । अहं कृष्णपक्षः कृष्णस्य मित्रं नो भवामि । पक्षः सहायगरुदंतिकसाध्यभित्तिमित्रे पुचुल्लिविवरे नृपकुंजरे चेति रत्नमाला । इति विशदयितुं स्पष्टीकर्तुं इव स्वौ स्वकीयौ पक्षौ गरुतौ प्रोत्क्षिपन् वितत्य चालयन् पश्चाद्भागे पृष्ठभागे चरणद्वयं ईषत्कंपयन् इयमपि पक्षिणो जातिः । नन्वेतादृशस्य विष्णुद्वेषिणो विष्णुपदे संचरणं कथमित्याशंक्याह । ईशकेशेति । व्योम गगनं व्योमकेशो भवो भीम इत्यभिधानात् शिवकेशं शिवस्थानं मत्वा व्योमाध्वनेत्यत्र योगविभागः कर्तव्यः । सत्वरः त्वरया सहितः सन् हरेः कृष्णनिलयभूताया पृथ्व्याः संगभीत्या व्योमाध्वना गगनमार्गेण यदुकुलतिलकं कृष्णमभ्याजगाम । स्रग्धरावृत्तं म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥ ३२ ॥

फलपुष्पादिसंपदोभिवृद्धिर्जायतइतिभावः। द्रुतविलंबितवृत्तं द्रुतविलंबितमाहनभौभरौइत्युक्तत्वात् ॥ ३८॥ परिलसदिति । पिकगणःपरभृत्समूहःपरिलसतःप्रकाशमानस्यसहकारस्यातिसौरभयुक्तचूतस्य आम्रश्चूतोरसालोसौसहकारोतिसौरभइत्यमरः । नवांकुरेनूतनकिसलयांकुरेशनकैर्मंदंध्वननूअखिलान्कामिनोदर्पयतीत्यखिलदर्पकःसचासौदर्पकःकंदर्पः कंदर्पोदर्पकोनंगइत्यमरः। तस्यसायकेबाणे चूतस्यकामबाणत्वादितिभावः। स्मरस्यरहस्यमनून्मन्मथस्यगोप्यमंत्रानूसंजपन्निवमंत्रानूस्त्रीवशीकरणायजपंकुर्वन्निवशुशुभेबभौ ॥ ३९॥ कुसुमेति । कुसुमानांचुंबनंकरोतीतिकुसुमचुंबनकृत् अनेनवक्ष्यमाणसदृशकांतामुखचुंबनशिक्षादर्शिता। मधुरोमनोहरोध्वनिर्यस्यसतथोक्तः । अनेननायिकोपशांत्यैसांत्ववचनंवक्तव्यमितिशिक्षितं । षट्पदोभ्रमरः मृदुगिरामधुरवचनेनाब्जमुख्याः

परिलसत्सहकारनवांकुरे पिकगणः शुशुभे शनकैर्ध्वनन् ॥ स्मररहस्यमनूनिव संजपन्नखिलदर्पकदर्पकसायके ॥ ३९ ॥ कुसुमचुंबनकृन्मधुरध्वनिः प्रियजनानितिति शिक्षति षट्पदः ॥ मृदुगिराब्जमुखीसरसाधरं पिबत मा बत मान इहोचितः ॥ ४० ॥ मरुति वाति शुचा पथिकांगना नयनवारि युयोज पथि स्पृशन् ॥ अमुमवैतु पतिर्मम वेदनामलिकुलालिकुलाभ्युदितामिति ॥ ४१ ॥

कमलवदनायाःसरसःस्वादुयुक्तःअधरःअधरोष्ठस्तं हेकामिजनाबतसंतोषेण बतानुकंपासंतोषेखेदामंत्रणविस्मयेइतिरत्नमाला। पिबतपानंकुरुत। इहोपभोगोचितेक्षतौमानोगर्वःकोपोवामोचितःयुक्तोमाउद्रिक्तोभवतीतिनभवति। अमानोनाःप्रतिषेधेइतिवचनात्अत्रमाशब्दःप्रतिषेधार्थः। इतिप्रियजनान्शिक्षति। चूतांकुरास्वादुमधुरकंठपिकस्वरश्रवणसुरतांकाउपदिशति। षट्पदइत्यनेनएतादृशप्रार्थनानंगीकारेनायकस्यान्यत्रगमनशिक्षाचस्वस्यापराधित्वंचद्योत्यते ॥४०॥ मरुतीति । पंथानंगच्छतीतिपथिकस्तस्यांगनामरुतिवायौवातिसतिशुचाप्रियस्मरणजन्यशोकेनअमुंवायुंपथिमार्गेसंस्पृशन्अस्यैववायोस्तत्राविगमनसंभवादितिभावः।ममपतिःप्रियःअलिकुलान्येवअलिकुलानिसखिनिवहास्तैरभ्युदितामुक्तांभ्रमराणांवायुमनुसृत्यगमनादितिभावः।ममवेदनांदुःखंअवैतुजानीयात्इतीव

नयनवारिनेत्रजलंवायौयुयोजअंगुल्यग्रेणोदक्षिपदित्यर्थः। अनेनपथिकांगनायामोहावस्थादर्शिता ॥ ४१ ॥ मधुनियुक्तेति। मधुनावसंतेन। चैत्रवसंतमधुद्रुमदैत्यविशेषेषुपुंसिमधुशब्दइतिरत्नमाला। नियुक्तःअस्मत्सुहृन्मदनविनाशकस्यशिवस्यप्रतिशिवंकर्तुंप्रेरितःभुजंगचयःविटसमूहःजारसमूहः भुजंगौविटपन्नगावितिरत्नमाला। योषितांस्त्रीणांअतनुतेजसिअनल्पकांतौ स्तनेकुचे नूत्नशिवंनवीनशंकरं नवीनंनूतनंनूत्नंइत्यमरः। रहसिएकांतेरचयन्निवकुर्वन्निवबलवद्विरोधस्यप्रकटतयाकर्तुमशक्यत्वादितिभावः नखपदेंदुकलांनखक्षताख्यचंद्रकलां वसनस्यस्तनस्थितवस्त्रस्यच्युतिमाकर्षणंवितनुतेकरोति शिवस्यचंद्रमौलित्वाद्दिगंबरत्वादितिभावः। शिवमिवनिर्माणेतदाभरणत्वेनतत्परिचितभुजंगानांसामर्थ्यमस्तीतिद्योतनायभुजंगचयइत्युक्तम्। अनेनसुरतारंभःसूच्यते ॥ ४२ ॥ मृगमदेनेति। मृगमदेनकस्तूर्या। मृगनाभिर्मृगमदःकस्तूरीचाथकोलकमित्यमरः। सितेतरकंठतांनीलकंठतांकरयुगमेवांबुजंतेनवेष्टितःविहितःमूर्धामस्तकोयस्यसतथोक्त

मधुनियुक्तभुजंगचयः स्तने रहसि नूत्नशिवं रचयन्निव ॥ नखपदेंदुकलां वसनच्युतिं वितनुतेऽतनुतेजसि योषिताम् ॥ ४२ ॥ मृगमदेन सितेतरकंठतां करयुगांबुजवेष्टितमूर्धताम् ॥ हृदयमंदिरतां समदृश्यतां रुचिरतां चिरतांतमुखैः स्वकैः ॥ ४३ ॥ मदनवह्निसखः प्रियशीतलः कुसुमगंधवहः किल सेव्यते ॥ मरुदुपारत मन्मथसंगरैः स परितः परितप्तमुखैर्नरैः ॥ ४४ ॥

स्तस्यभावस्तत्ता अनेनकस्तूर्यादिपरिमलद्रव्येणालंकारकुचग्रहणलक्षणाप्रथमारतिःसूच्यते। शिवस्यापिनीलकंठत्वात्अर्चकार्पितांबुजमस्तकादिर्निभावः। हृदयमंदिरतांस्ववक्षोनिलयतांसमदृश्यतांसम्यगदृश्यताम्। अनेनगाढालिंगनलक्षणामध्यमारतिःसूच्यते। स्वकैःस्वकीयैश्चिरतांतमुखैःसुरतश्रांतमुखैःरुचिरतांमनोहरतां। अनेनसुरतांतःसूच्यते। वितनुतइतिपूर्वेणसंबंधः। शिवस्यापिस्मरजनहृन्निलयत्वादयोग्यजनादृश्यत्वात्भुजंगमुखैःभूषितत्वाच्चेतिभावः ॥ ४३ ॥ मदनेति। मदनवह्निसखःमन्मथाग्निसुहृत्मन्मथोद्दीपनकारीत्यर्थः। प्रियश्चासौशीतलश्चेतिप्रियशीतलःकुसुमानांगंधमामोदंवहतिप्रापयतीतिकुसुमगंधवहःसशैत्यसौरभ्यमांद्यलक्षणगुणत्रययुक्तःमरुत्वायुरुपारतः उपारतोनिवृत्तइत्यर्थः। मन्मथसंगरःकामयुद्धंयेषांतेनिवृत्तसुरताइत्यर्थः। तैःपरितप्तमुखैः

सुरतश्रमेणम्लानमुखैर्नरैःपुरुषैःपरितःसमंतात्सेव्यते । मदनवह्निसखइत्यनेनकुसुमितवनवर्तिवायुगुणातिशयेनसमापितरतीनामपिरिरंसाजायतइतिद्योत्यते ॥ ४४ ॥ दाक्षिण्यमिति । मधुर्वसंतःस्वाधीशंस्वामिनंकामिनंजनयिष्यंतःप्रद्युम्नरूपेणप्रसविष्यतोस्यकृष्णस्यहृदयंमनःव्यग्रंत्वरायुक्तंविधास्यन्निवमरुतामलयमारुतेनदाक्षिण्यंदक्षिणादिग्भवत्वं । अनेनअनुसरणपक्षेसरलत्वंव्यज्यते । दक्षिणःसरलेयाम्यदिक्स्थेछंदानुवर्तिनीतिरत्नमाला । प्रकटीकरोतिप्रकाशयति प्रवालैःकिसलयैरागमनुरागंपिकैर्माधुर्यंशुकचयैःप्रियभाषणंप्रियोक्तिंभृंगैर्भ्रमरैर्गीतानिमधुनासत्पुष्परसेन मधुमद्येपुष्परसइत्यमरः । स्नानंकुसुमैरर्चनंपूजांतरूणांछाययाछत्रमातपत्रंप्रकटीकरोतीतिसर्वत्रान्वयः । कार्यार्थिनोहिकिंकिंनकुर्वंतिअतःछत्रपादुकादिधारणमपिकुर्वंतीतिभावः । अनेनचित्तव्यग्रीकरणा

दाक्षिण्यं प्रकटीकरोति मरुता रागं प्रवालैः पिकैर्माधुर्यं प्रियभाषणं शुकचयैर्गीतानि भृंगैर्मधुः ॥ स्ना
नं सन्मधुनांचनं च कुसुमैश्छत्रं तरुच्छायया स्वाधीशं जनयिष्यतोस्य हृदयं व्यग्रं विधास्यन्निव
॥ ४५ ॥ वसंतकाले वनितासहायं लषंति मर्त्या इति किं विचित्रम् ॥ यतः सरागास्तरवोपि तन्वीर्लता
न वाताच्चलितास्त्यजंति ॥ ४६ ॥ अधरपाणिपदूर्जितपल्लवो मधुरवेणुरवः कलभाषणः ॥ वदनगंधव
हश्वसनोजयत्सकुसुमः कुसुमाकरमच्युतः ॥ ४७ ॥

द्दीपनविभावश्चदर्शितः ॥ ४५ ॥ वसंतकालइति । वसंतकालेमर्त्यामनुजाःवनितासहायंकांतासहायंलषंति । अभिलषंतीतिकिंविचित्रंकिमाश्चर्यं । यतः कारणात्तरवोपिवृक्षाअपिसरागारागसहिताःसंतोनुरागसहिताइतिध्वनिः वातेनवायुनाआचलिताःसमंतात्कंपिताः अनेनांगीकारवैमुख्यंध्वन्यते । तन्वीःकृशालतावल्लीर्नत्यजंति । वसंतकालेकिसलयरागयुक्तास्तरवोलतामाश्लिष्यशोभंतइतिभावः ॥ ४६ ॥ अधरेति । अधरःअधरोष्ठःपाणीहस्तौपादौचअधरपाणिपत्तद्वदूर्जितःसनद्धःपल्लवोयस्यसतथोक्तःमधुरोमनोहरोवेणुरवोयस्यसतथोक्तः । अनेनपिकप्रतिनिधिःसूच्यते । कलमव्यक्तमधुरं । ध्वनौतुमधुरास्फुटे । कलोमंद्रस्तुगंभीरइत्यमरः । भाषणंवचोयस्यसतथोक्तः अनेनशुकप्रतिनिधिःसूच्यते । वदनगंधवहःमुखमारुतएवश्वसनोमंदमारुतोयस्यसतथोक्तः । सकुसुमःकुसुमैः

सहितःअच्युतःकृष्णःकुसुमाकरंवसंतंअजयत्।अच्युतइत्यनेनकृतोमासिद्वयपर्यंतंएतादृशत्वात्कृष्णस्यच्युतिरहितत्वेनसर्वदैतादृशत्वात्तज्जयोयुक्तइतिद्योत्यते ॥ ४७ ॥ वितंतेति । वरानुगमंडलीश्रेष्ठभृत्यवर्गः क्वचित्कदाचिद्विततोविस्तृतःपल्लवोयस्यतद्विततपल्लवंचततत्फुल्लंविकसितंचतद्वनंचतस्मिन्नधिकरणेतरुतटे वृक्षप्रांतेवसतोनिवासतोस्यकृष्णस्यपदांबुजंपादारविंदंभुजगतःकालियसर्पात् जगतोविश्वस्याभयसिद्धयेविषभयपरिहारसिद्धयेउपचचारपादेनकालियंनि यम्यविषभयंपरिहरिष्यतिअतःपादोपचारएवयुक्तइतिभावः ॥ ४८ ॥ फणिफणेति । धृतःशिखंडोबर्हंयेनसचासौशिखंडःकाकपक्षस्तेनसुमंडितोलंकृतः । काकपक्षःशिखंडकः शिखाचूडाशिखंडश्चपिच्छबर्हेनपुंसकेइतिचोभयत्राप्यमरः । सर्वविदांसर्वज्ञानांब्रह्मादीनांवरःश्रेष्ठःसकृष्णःफणिनःकालियस्यफ

विततपल्लवफुल्लवने क्वचित्तरुतटे वसतोस्य पदांबुजम् ॥ उपचचार वरानुगमंडली भुजगतो जगतोऽभ यसिद्धये ॥ ४८ ॥ फणिफणांगणनर्तनकौशलाभ्यसनधीरिवसर्वविदांवरः ॥ स शिखितांडवमन्वकरो त्क्वचिद्धृतशिखंडशिखंडसुमंडितः ॥ ४९ ॥ मुनिमनःसरसीरुहहंसराट् तदुचितस्वरशिक्षणधीरिव ॥ अ नुननाद स हंसकदंबकश्रुतिमनोतिमनोरमकूजितम् ॥ ५० ॥ मधुवशीकृतचित्तइवोष्णभा वरुणपा लितदिङ्मृगलोचनाम् ॥ समधिगम्य दिवः समपीपतद्दुरितवारितवाजिमना इव ॥ ५१ ॥

णांगणेयन्नर्तनंतत्रकौशलंचातुर्यंतस्याभ्यसनेऽभ्यासेधीर्बुद्धिर्यस्यसइवक्वचित्प्रदेशेशिखितांडवंमयूरनृत्यमन्वकरोत्अनुचकार । फणिफणांगणनर्तनाभ्य सनंफणिविरोधिनोमयूरादेवकर्तव्यमितिभावः । अतएवधृतशिखंडेत्युक्तं । कृष्णोगोपैःसहक्वचिन्मयूरवन्ननर्ततिपौराणिकीकथा ॥ ४९ ॥ मुनिमनइति । मुनीनामृषीणांमनांस्येवसरसीरुहाणिकमलानितत्रहंसराट्हंसश्रेष्ठःमुनिहृदयकमलवासीत्यर्थः । सकृष्णस्तेषांहंसानामुचितःयोग्यःस्वःरःहंसजातीयस्वरइ त्यर्थः। तस्यशिक्षणेअभ्यसनेधीर्बुद्धिर्यस्यसइवहंसकदंबकस्यहंससमूहस्यश्रुतिमनोतिमनोरमंश्रोत्रमनसोरतिमधुरंचतत्कूजितंचश्रुतिमनोतिमनोरमकूजितंअ नुननादहंसपक्षिवच्चुकूजेत्यर्थः । हंसजात्यनुसारिस्वराभावेत्वस्यहंसत्वायोगादितिभावः ॥ ५० ॥ मध्विति । उष्णभाः उष्णदीधितिःसूर्यःमधुनावसंतेनवशी

कृतंचित्तंयस्यसतथोक्तइव। अनेनमद्यपानपारवश्यत्वंव्यज्यते। वरुणेनप्रचेतसापालितादिक्प्रतीचीदिगेवमृगलोचनांमृगाक्षींसमधीगम्यअनेनपरस्त्रीगमनंध्व न्यते। दुरितेनपरस्त्रीगमनपापेनवारितानिवाजिनांमनांसियस्यसतथोक्तः इतिदिवः सकाशात्आत्मानमपीपतत्पातयामास। तदासूर्योस्तंगतइत्यर्थः॥ ५१॥मुदिते ति। मुदिताःप्रमुदितागावस्तासांनिकरैःपरिवारितःपरिवृतःसखिजनैःसुहृज्जनैःसहवेणुंवंशवाद्यंउदीरयन्निशामुखेप्रदोषे प्रदोषोरजनीमुखमित्यमरः। निजगृहंस्व गृहंप्रविशन्नरमणिःपुरुषरत्नंरमणीःसुंदरीःगोपीःसमहर्षयत् ॥ ५२ ॥ प्रतिगृहमिति । सकुतुकाभिःसकुतूहलाभिःप्रमदाभिःस्त्रीभिःप्रतिगृहमितस्ततःसमंता त्परिसेवितःस्मितकटाक्षयोर्मनोरमोविभ्रमोविलासोयस्यसतथोक्तःस्मरस्यकामस्यजनिरुत्पत्तिर्यस्मात्स्मरजनिरसौकृष्णःरजनीशइवाबभौ । आह्लादका

मुदितगोनिकरैः परिवारितः सखिजनैः सह वेणुमुदीरयन् ॥ निजगृहं प्रविशन्स निशामुखे नरमणी रम णीः समहर्षयत् ॥ ५२ ॥ प्रतिगृहं प्रमदाभिरितस्ततः सकुतुकाभिरसौ परिसेवितः ॥ स्मितकटाक्षमनोर मविभ्रमः स्मरजनी रजनीश इवाबभौ ॥ ५३ ॥ यदुपतिः स निजैः सह निर्मलं स्वगृहमेत्य शनैरलसां निशाम् ॥ तनुरुचा बहुदूरपलायितां महितया हितया व्यतनोत्सताम् ॥ ५४ ॥ स्वतनयां सरितं विषव र्जितां करुणया हरिरद्य करिष्यति ॥ इति मुदेव गिरिं रविरीक्षितुं परवशो खशोभितमारुहत् ॥ ५५॥

रित्वाद्रात्रावपिप्रकाशमानत्वादितिभावः ॥ ५३ ॥ यदुपतिरिति । सयदुपतिःकृष्णःनिजैःस्वानुचरैःसहस्वगृहंशनैरेत्यअलसांजडांनिशांरात्रिंमहितया व्यातयासतांस्मरतांसज्जनानांहितयासुखदयातनुरुचातनुकांत्याबहुदूरपलायितांबहुदूरद्रुतांप्रातरंधकारस्यमेरुपृष्ठगमनादितिभावः । व्यतनोदकरोत् प्रातःका लोजातइत्यर्थः ॥ ५४ ॥ स्वतनयामिति। परवशःपरमात्माधीनः भीषोदेतिसूर्यइतिश्रुतेः । परवशइत्यनेनहर्षप्राकट्यंद्योत्यते । अद्यहरिःकृष्णःकरुण ॥ ९ ॥
याकृपयास्वतनयांसरितंयमुनांविषवर्जितांकालियनिष्कासनेनविषरहितांकरिष्यतीतिमुदास्वपुत्र्याविषपरिहरणनिरामयीकरणजन्यसंतोषेणतमीक्षितुंइवद्रष्टु मिवरवैःपक्षिनिनदैःशोभितंगिरिंउदयाद्रिमारुहत्आरुरोह। यथालोकानियुद्धादिकौतुकंद्रष्टुंउच्चसौधादिकमारुहंतितद्वदितिभावः ॥ ५५ ॥

नदिति । तदनुतदनंतरंभुजगांतकवाहन.नागांतकवाहनःसविष्णुःकृष्णोभोगिकुलाग्रगंसर्पकुलाग्रेसरंअग्रजंश्रेष्ठबलरामंबलरामस्यशेषावतारत्वादितिभावः । विसृज्यविहायतदन्वयसंभवस्यशेषस्यान्वयसंभवंकालियनागंनमयितुंनम्रीकर्तुंशिक्षितुमित्यर्थः । सभुजगांससर्पांयमुनामगमत् ॥ ५६ ॥ यदीति । यदिकालियोरसातलमेतितदाहंतंकालियंदमयितुंशिक्षितुमेमिगच्छामिइतीवसवयसांवयस्यानांविस्मयकारकःआश्चर्यकरःकृष्णःपादपात्कदंबवृक्षादंबुनियमुनाजलेवयसांपक्षिणांवल्लभोगरुडइवापतत् । जलेबहुदूरंभिमंक्षुरुन्नतशैलवृक्षादिकमारुह्यनिपततीतिभावः ॥ ५७ ॥ कृष्णपतनेनयमुनाभिवृद्धौहेतुमुत्प्रेक्षयति कृष्णेति । स्निग्धास्नेहयुक्तासाऽर्कजायमुनाकृष्णस्यालिंगनेनकातरैःपुरतोगमनेकृष्णालिंगनाभावोभवेदितिकातरैर्निवृत्तैःकरसमैःकराकारैर्दीर्घैरित्यर्थः । ओघैःप्रवाहै

तदनु भोगिकुलाग्रगमग्रजं स हि विसृज्य तदन्वयसंभवम् ॥ नमयितुं यमुनामगमद्विभुः सभुजगां भुजगांतकवाहनः ॥ ५६ ॥ यदि रसातलमेति तदैम्यहं दमयितुं तमितीव स पादपात् ॥ अपतदंबुनि विस्मयकारकः सवयसां वयसामिव वल्लभः ॥ ५७ ॥ कृष्णालिंगनकातरैः करसमैरोघैर्निवृत्तैरिव स्वप्रांतस्थिततत्पदांकमुरसा धर्तुं धियेवार्कजा ॥ सुप्रेमांबुधिमिश्रणादिव जगद्वंद्यस्य पातादिव स्निग्धा तं मदनाकृतिं स्वहृदयेनाश्लिष्य सावर्द्धत ॥ ५८ ॥ कलिलयंतमपःपुरुषोत्तमं फणिपतिः किल दंशितुमग्रहीत् न हि स वेत्ति बलं श्रवणोज्झितः परमया रमया श्रुतिभिस्तुतम् ॥ ५९ ॥

रिवप्रवाहस्यनिवृत्तौजलाभिवृद्धिर्भवतीतिभावः स्वप्रांतेस्वतटेस्थितंतत्पदांकंचिह्नंउरसावक्षसाधर्तुंधियेवबुद्ध्येवतावत्पर्यंतमभिवृद्धत्वादितिभावः । सुप्रेमांबुधिःसुस्नेहसमुद्रस्तस्यमिश्रणात्संयोगादिवसमुद्रसंगमेनद्यांजलाभिवृद्धेर्जायमानत्वादितिभावः । जगद्वंद्यस्यविश्वपूज्यस्यकृष्णस्यपातादिवउत्तमनायकस्यस्वचरणादौनिपतनेकांतायाहर्षोद्रेकेणसंदेहोच्छूनतायाजायमानत्वादितिभावः ॥ मदनस्याकृतिरिवाकृतिर्यस्य मदनस्याकृतिर्यस्मादितिवातंअतिसुंदरमित्यर्थः । तंकृष्णंस्वहृदयेनआश्लिष्यालिंग्यावर्द्धतववृधे । प्राणकांतालिंगनस्याप्यभिवृद्धिहेतुत्वादितिभावः । अनेनकालिंद्यांकालिंदीनाम्नीकृष्णपत्नीतिष्ठतीतिगम्यते । मालोत्प्रेक्षेयम् ॥ ५८ ॥ कलिलयंतमिति । फणिपतिःकालियोअपोवारीणिकलिलयंतंविलोडयंतंपुरुषोत्तमंकृष्णंदंशितुंदंतैर्हंतुमिवअग्रहीत् । ननुपरमपुरुषंक

थमग्रहीदित्यतआह । नहीति । श्रवणोज्झितःकर्णरहितःसकालियःपरमयाउत्तमयादुर्गारूपयालक्ष्म्याश्रुतिभिर्वेदैःस्तुतमभिवर्णितं कर्तृकरणयोस्तृतीयेति तृतीया । बलंसामर्थ्यंनवेत्तिहि । औपनिषदःपुरुषइतिश्रुत्तेःऔपनिषदस्यकृष्णस्यश्रौतसामर्थ्यंशब्दग्राहकश्रवणाभावान्नजानातीत्यर्थः ॥ ५९ ॥ उत्पातेति । उत्पातेनभूकंपाद्युत्पातेनचकितास्त्रस्तागोपाःकृष्णस्यसंदर्शनमर्थयंतइतिकृष्णसंदर्शनार्थिनःसंतःरामंबलभद्रंपुरोधायअग्रेकृत्वाशेषमार्गगताइवययुः । मोक्षगामिनांमार्गद्वयंगरुडमार्गःशेषमार्गइति तत्रशेषमार्गगामिनःशेषंपुरोधायगच्छंतीतिप्रमेयस्यश्रुतिसिद्धत्वाद्बलभद्रस्यापिशेषत्वादितिभावः ॥ ६० ॥ व्रजाम इति । हेव्रजगोपालाःअमुनाअध्वनामार्गेणयमुनानदींव्रजामोगच्छामःयतःपथिमार्गेकृष्णस्यपदानिचिह्नानिलक्षणैर्ध्वजवज्रादिभिःसहलक्ष्यंते ॥ ६१ ॥

उत्पातचकिता गोपाः कृष्णसंदर्शनार्थिनः॥पुरोधाय ययू रामं शेषमार्गगता इव ॥ ६० ॥ व्रजामो व्रजगोपाला यमुनाममुनाध्वना ॥ पदानि पथि कृष्णस्य लक्ष्यंते लक्षणैः सह ॥ ६१ ॥ इत्थं विमर्शतः प्राप्तान्दृष्ट्वा स्वान्सर्पमूर्ध्नि सः ॥ ननर्त किल नर्नर्ति सुहृदागमने न कः ॥ ६२॥ सरत्नकृष्णाहिफणांगणेषु ननर्त कृष्णः किल लोकवंद्यः ॥ पदं गरुत्मत्करमुख्यदैवमिवौषधं तद्दमने विधित्सन् ॥ ६३ ॥

इत्थमिति । इत्थमुक्तप्रकारेणविमर्शतःप्राप्तान्विचारेणागतान्स्वानात्मीयान्दृष्ट्वाकृष्णःसर्पमूर्ध्निननर्तकिल । तथाहिसुहृदागमनेसतिकःपुमान्ननर्नर्तिअतिशयेननननृत्यति विमर्शतःश्रवणादिविचारेणागताच्छेषमार्गेणवैकुंठंप्रतिसमागतान्स्वान्स्वभृत्यान्दृष्ट्वापरमात्मासर्पमूर्धनितदीयमृत्युलक्षणकालोरगशिरसिनृत्यतीतिध्वनितोर्थः ॥ ६२ ॥ सरत्नेति । लोकवंद्यःभुवनस्तुत्यःकृष्णःसरत्नारत्नसहिताःकृष्णाहिफणाःकृष्णसर्पभोगास्तेषामंगणेषुप्रदेशेषुगरुत्मत्करमुख्यदैवपदंपादस्कंधाधिरूढस्यकृष्णस्यपदयोर्गरुडकरगतत्वादितिभावः । तद्दमनेतस्यकालियस्यदमनेविषनिःसरणरूपशिक्षणेऔषधंनिर्विषंविधित्सन्निवकुर्वन्निवननर्त । गरुं

डस्मरणमात्रेणविषपरिहारोजायतेकिल किंपुनर्गरुडकरस्पर्शयुक्तकृष्णपादसंबंधेनेतिभावः ॥ ६३ ॥ उन्नीयेति। असौकृष्णःकालियफणींद्रस्यविराजितंपुच्छं विशोभिवालंउन्नीयउन्नमय्यविषदूषितंस्विन्नंश्रमेणोत्पन्नस्वेदंअस्यकालियस्यवक्त्रं तस्यवक्त्रस्यांतराश्रितमंतर्गतंअसह्यंसोढुमशक्यंअशेषंसमस्तंविषंविनताननेनअधःकृतमुखेननिष्कासयन्निवबहिःकुर्वन्निवममर्दपादकुट्टनैःमर्दयामास ॥ ६४ ॥ सइति । सकृष्णः दशतीतिदंदशूकःपन्नगः दंदशूकोबिलेशयः । उरगः पन्नगोभोगीत्यमरः। तस्यमुखंविभिंदन्पादघातेनविदारयन्करेणहस्तेनतदीयपुच्छंकालियसंबंधिपुच्छंजगृहे । पदायावद्यावत्कुट्टनंकरोतितावत्तावत्पुच्छंसम्यग्गृहीतवानित्यर्थः। अत्रार्थांतरंन्यस्यति । शौरिःकृष्णःयथापराधमनतिक्रम्यापराधानुसारेणेत्यर्थः। दंडदातानतु शिक्षाप्रदोहिनिरागसमपराधरहितंकंनरंनवर

**उन्नीय कालियफणींद्रविराजिपुच्छं स्विन्नं ममर्द विषदूषितमस्य वक्त्रम् ॥ तस्यांतराश्रितमशेषमसह्यं निष्कासयन्निव विषं विनताननेन॥ ६४ ॥ स दंदशूकस्य मुखं विभिंदंस्तदीयपुच्छं जगृहे करेण॥ यथापराधं ननु दंडदाता निरागसं कं वरयेन्न शौरिः ॥ ६५ ॥ विदारयन्नप्यहिराजमौलिं करेण पस्पर्श तमार्तबंधुः ॥ निजेषु शिक्षापिहितस्य विष्णोः परंपरानुग्रहहेतुरेव ॥ ६६ ॥ नृत्यंतमेनं परितो भ्रमेत्य भक्त्या भवाब्जासनमुख्यदेवाः ॥ विष्वग्गृणंतः किल तस्थुरार्तसर्पाश्रिताज्ञानमिवापहर्तुम् ॥ ६७ ॥**

येत् नपरिगृह्णीयात् मुखेनदशतीत्यपराधिनोमुखस्यमर्दनंनिरपराधिनःपुच्छस्यपरिग्रहणंचोचितमितिभावः ॥ ६५ ॥ विदारयन्निति । आर्तबंधुःकृष्णःअहिराजमौलिंसर्पराजशिरःविभिंदन्नपितंकालियंकरेणपस्पर्श अग्रहीत्। अत्रार्थांतरंन्यस्यति। तथाहितस्यविष्णोर्निजेषुस्वभक्तेषुशिक्षापिपरमतिशयेनपरानुग्रहहेतुरेवउत्तमानुग्रहकारणमेवअनुग्रहार्थंविष्णुर्भक्तान्शिक्षयतिनत्वसुखवत्तमःप्रापयितुमितिभावः ॥ ६६ ॥ नृत्यंतमिति। नृत्यंतमेनंकृष्णंभवाब्जासनमुख्यदेवाः ब्रह्मेशाद्यादेवाःअभ्रंआकाशमेत्यपरितःसमंताद्गृणंतःसंस्तुवंतःसंतःआर्तदुःखितंसर्पमाश्रितंयदज्ञानंकृष्णविषयकाज्ञानंअपहर्तुमिवविष्वक्परितस्तस्थुःकिल ।

देवैरस्माभिः कृष्णपरिचर्यायांकृतायांअयंकृष्णःपरमात्मेतिजानीयादितीवोत्तस्थुरित्यर्थः ॥ ६७ ॥ अनीनददिति । पद्मभवोब्रह्मामृदंगंमर्दलमनीनदत्नादयामास । हनूमान्जगौगानंचकार । कपर्दीशिवस्तालस्यकांस्यवाद्यस्यगतीः द्रुतविलंबितादिलयभेदानदर्शयत् । गोपालकबालमौलिःकृष्णोननर्तनृत्यंचकार । अनेनैतादृशकृष्णस्यगोपालकत्वंलोकविडंबनार्थमितिध्वन्यते ॥ ६८ ॥ ततइति । ततःकृष्णोऽहेःसर्पस्यकालियस्यपत्न्यस्तासांप्रियमंजुवाक्यंप्रियमधुरोक्तिंनिशम्यश्रुत्वातंकालियंनिर्भयंभयरहितंचक्रे । तथाहितद्युक्तं नारीमृदुभाषणेनकामिनीकोमलवचनेनकस्यप्राणिनश्चित्तंमृदुतांमार्दवंनोपैति । अतिपरुषोपिपुरुषःकामिनीवचनेनमृदुर्भवतीतिभावः ॥ ६९ ॥ विषाश्रयत्वेनेति । सकृष्णोःद्वयोःकालियकालिंद्योर्विषाश्रयत्वेनविषधारणत्वेन विषंतुगरलेजले

अनीनदत्पद्मभवो मृदंगं जगौ हनूमाञ्जगतामधीशम् ॥ अदर्शयत्तालगतीः कपर्दी ननर्त गोपालकबालमौलिः ॥ ६८ ॥ ततो हि पत्नीप्रियमंजुवाक्यं निशम्य तं निर्भयमाशु चक्रे ॥ तथा हि नारीमृदुभाषणेन न कस्य चित्तं मृदुतामुपैति ॥ ६९ ॥ विषाश्रयत्वेन गुणेन नाम्ना द्वयोः स साम्येपि भुजंगमं तम् ॥ निपीड्य भास्वत्तनयां जुगोप न कस्य योषित्सु हि पक्षपातः ॥ ७० ॥ आगस्कृतं नागपतिं स कृष्णः पदेन शिक्षन्नपि तत्कृतांकैः ॥ तार्क्ष्यात् भयं तस्य जहार भक्ते क्रोधोपि देवस्य वरेण तुल्यः ॥ ७१ ॥

इत्यभिधानादेकस्यगरलाश्रयत्वेनान्यस्याजलाश्रयत्वेनेत्युभयोर्विषाश्रयत्वादितिभावः । गुणेनोभयोरपिनीलगुणविशिष्टत्वेननाम्नाकृष्णःकृष्णेत्यभिधयासाम्येपिस्वनामधारकत्वसाम्येपीत्यर्थः । तंभुजंगमंनिपीड्यभास्वत्तनयांयमुनांजुगोप विषमपसार्यलोकसेव्यतांकृत्वाररक्ष । ननुद्वयोःसाम्येएकस्यशिक्षणमपरस्यारक्षणंकथंघटतइत्यतआह । नकस्येति । योषित्सुस्त्रीषुकस्यपुरुषस्यपक्षपातोनभवेत् । सर्वेषांस्त्रीषुपक्षपातोभवत्येवेत्यर्थः ॥ ७० ॥ आगस्कृतमिति । सकृष्णआगस्कृतमपराधकृतंनागपतिंकालियंपादेनशिक्षन्नपितत्कृतांकैःपादकृतचिह्नैस्तस्यगरुडभीत्यायमुनांप्रविष्टस्यकालियस्यतार्क्ष्याद्गरुडाद्भयंजहारपरिहृतवान् । देवस्यविष्णोर्भक्तेक्रोधोपिवरेणअनुग्रहेणतुल्यःसदृशः क्रोधोपिदेवस्यवरेणतुल्यइत्येतद्वचनंभक्तजनविषयमितिभावः ॥ ७१ ॥

स्वस्यपक्षपातीस्व
स्वपक्षपातीति ॥ असौकृष्णःअक्षिणीएवकर्णौयस्यकालियस्यसर्पस्यविमर्दनात्स्वपक्षपातिप्रियंपक्षाभ्यांपातोस्यास्तीतिपक्षपातीगरुडः स्वस्यपक्षपातीस्व पक्षपाती । अनेनगरुडस्यकृष्णपक्षपातित्वंव्यज्यते । अस्यप्रियमिष्टंप्रसाध्यसपत्नविमर्दनादितिभावः अस्यकालियस्यांजसासम्यगभयंगरुडभयाभावंवि

स्वपक्षपातिप्रियमक्षिकर्णविमर्दनान्नूनमसौ प्रसाध्य॥ विधाय चास्याभयमंजसांते मुदं स्वतल्पाय द दावनल्पाम् ॥ ७२ ॥ रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविम लश्लाघ्यार्थसंदायिनि॥ संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातःसुरमंडलीषु महितः सर्गश्चतुर्थो मुदाम् ॥ ७३ ॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थपूज्यचरणविरचिते रुक्मिणी शविजये महाकाव्ये चतुर्थः सर्गः ॥ ४॥ ॥छ॥ ॥छ॥ ॥छ॥

धायस्वतल्पायस्वशयनीयायशेषायस्वजातीयकालियस्याभयदानादनल्पांबह्वींमुदंसंतोषंददौ शेषगरुडयोःसमानत्वादुभयप्रीतिकारणस्यावश्यकत्वादितिभा वः ॥ ७२ ॥ रोम्णामिति । उक्तोर्थः ॥ ७३ ॥ इतिश्रीमद्वादिराजपूज्यचरणविरचितरुक्मिणीशविजयस्यटीकायांगुरुभावप्रकाशिकायांचतुर्थःसर्गः ॥ ४ ॥

॥ इति श्रीरुक्मिणीशविजये चतुर्थसर्गः समाप्तः ॥

वंदेंदिरासदावासमहंकृष्णसरोरुहम् । यल्लीलामकरंदेनसंतुष्टाःसज्जनालयः ॥ १ ॥ सइति । सईशःसमर्थःदयालुःकृष्णोयामुनंयमुनासंबंधिअंभःजलंतास्मि न्नवगाहनेननिमज्जनेनोत्थमुत्पन्नंशरीरशैत्यंशमयन्निवपरिहरन्निव अग्निर्हिमस्यभेषजमितिश्रुतेरितिभावः । निशिरात्रौप्रवृद्धंनवकाननाग्निंनूतनदवाग्निंस्वजनस्यबंधुजनस्यगुप्त्यैरक्षायैपपौपीतवान् ॥ १ ॥ स्तुवंत्विति । सर्वेजनामुरारेःकृष्णस्यवनवह्निकृतानुभावंदावाग्निपानकृतसामर्थ्यंस्तुवंतुवर्णयंतु । वयंनस्तवामः । कुतः शिखिनिवह्नौ । शिखीकेतुग्रहेवह्नौमयूरेकुटजद्रुमइतिरत्नमाला । स्वजन्मभूमिंस्वोत्पत्तिस्थानंमुखं । मुखादिंद्रश्चाग्निश्चेतिश्रुतेः । प्रविष्टेसतितेनईशितुःसमर्थस्यकोनुभावःकःप्रभावःकृतःसंपादितः । वह्नौस्वजन्मभूमिंप्रविष्टेकृष्णस्तुतिकरणंव्यधिकरणमितिभावः । व्याजस्तुतिरलंकारः ॥ २ ॥ स्वजनैरिति ।

ॐ स यामुनांभस्यवगाहनोत्थशरीरशैत्यं शमयन्निवेशः ॥ निशि प्रवृद्धं नवकाननाग्निं पपौ कृपालुः स्वजनस्य गुप्त्यै ॥ १ ॥ स्तुवन्तु सर्वे वनवह्निपानकृतानुभावं न वयं मुरारेः ॥ स्वजन्मभूमिं शिखिनि प्रविष्टे क ईशितुस्तेन कृतोनुभावः ॥ २ ॥ स्वजनैर्निजपादाब्जभजनैः सहितस्ततः ॥ व्रजमार्जितसर्वार्थव्रजं निविविशेऽच्युतः ॥ ३ ॥ निजबलकरमग्निं कृष्णपीतं निशम्य ज्वलित इव ससूर्यः प्रादुरासीन्निदाघः ॥ स्वकृतिमथ सनाम्ना निर्निनीषुर्विचिंत्य द्रुतमृतुपतिनेव प्राप गोपो वनान्तम् ॥ ४ ॥

निजपादाब्जयोर्भजनंयेषांतेस्वजनास्तैःसहितोच्युतस्ततःकालियह्रदात्सर्वार्थःसमस्तपुरुषार्थस्तस्यव्रजोयस्यसतथोक्तस्तंव्रजंगोष्ठं । व्रजगोष्ठाध्वसंचयाइतिरत्नमाला । निविविशेप्रविष्टवान् । नेर्विशइत्यात्मनेपदम् ॥ ३ ॥ ग्रीष्मर्तुंवर्णयति निजेति । निदाघोग्रीष्मः । सुरभिर्ग्रीष्मऊष्मकः । निदाघउष्णोपगमइत्यमरः निजेस्वेस्वस्मिन्बलंपरमसंतापकरलक्षणंसामर्थ्यंकरोतीतिनिजबलकरं ग्रीष्मोदावाग्निनालोकान्संतापयतीतिभावः । अग्निंदावाग्निंकृष्णपीतंनिशम्यश्रुत्वाज्वलितइवस्वसहायनाशजन्यकोपात्प्रज्वलितइवससूर्यएकस्मिन्सहायेगतेसहायांतरेणकार्यंसाधयामीतिभावेनसूर्येणसहितःसन्ग्रीष्मःसूर्यस्यातितैक्ष्ण्यादितिभावः । प्रादुरासीत्प्रादुर्बभूव । अथग्रीष्मप्रादुर्भावानंतरंगोपःकृष्णःस्वकृतिंस्वकार्यंस्वनाम्नामाधवइतिसमानंनामयस्यसतेनऋतुपतिनाऋतुश्रेष्ठेनवसंतेनसहविचिं

त्यनिर्निनीषुरिवनिर्णीतुमिच्छुरिवद्रुतंशीघ्रंवनांतंवनमध्यंप्राप प्रतिरोधिन्यागतेतत्प्रतिक्रियायाःसुहृदासहविचार्यकर्तव्यत्वादेकनाम्नोःसदाप्रीतिरितिवसंतस्यस मानमनामत्वेनकृष्णस्यसुहृत्त्वमितिभावः ॥ ४ ॥ तापइति । भास्वतःसूर्यस्यप्रभासंभवेदीप्त्युत्पन्नेतापेसंतापेतद्वनस्यवृंदावनस्यसंबंधिनामाधवेनवसंतेनविजितेतरु च्छायादिनानिर्जितेसति । अनेनग्रीष्मसहायस्यसूर्यस्यकृष्णसहायेनवसंतेनपराभवोजातइतिद्रष्टव्यम् । दावेचवनाग्नौच । वनवन्यानलौदावइतिरत्नमाला । व्र जमाधवेनकृष्णेनदमितेशिक्षितेसति ग्रीष्मःकोपेनैवस्वसहायभूतयोर्वह्निसूर्ययोःपराभवजन्यामर्षेणैववसंतपुष्पनिचयंवसंततर्तुसंबंधिकुसुमसमूहंशुष्कंम्लानंवि धायअनिलंमंदवायुंसंतप्तंविधायमधुपान्भ्रमरान्चंपककुसुमैःकंपितान्चकितान्भीतान्भृंगाणांचंपकगंधस्यानिष्टत्वादितिभावः । पिकादीन्खगान्पक्षिणःमूकां श्चविधायउष्णकालेपक्षिणोवृक्षकोटरेषुमूकीभूयतिष्ठंतीतिभावः । क्षणात्तत्क्षणात्जजृंभेदिदीपे ॥ ५ ॥ पाथइति । सग्रीष्मः यतोवाइमानिभूतानिजायंतइति

तापे तद्वनमाधवेन विजिते भास्वत्प्रभासंभवे दावे च व्रजमाधवेन दमिते ग्रीष्मो जजृंभे क्षणात् ॥ कोपेनैव वसं तपुष्पनिचयं शुष्कं विधायानिलं तप्तं चंपककंपितांश्च मधुपान्मूकान्पिकादीन् खगान् ॥ ५ ॥ पाथः शीतमशी तलोष्णधरणीं भास्वद्बलेनोष्णयन्नूर्ध्वं गंधवहं नयन् त्रिवृतमप्यम्मात्रपाकं वपुः ॥ कुर्वन्कृष्णकृतेर्विरोधमिव तद्वासं च वाः शोषयन् विश्वं तस्य वशं दवेन च दहन्वैरीव सोऽदृश्यत ॥ ६ ॥

श्रुतेर्विश्वस्यकृष्णस्रष्टत्वंनिशम्यकृष्णकृतेःकृष्णकर्मणोविरोधंकुर्वन्निवकृष्णेनयद्वस्तुयादृशंकृतंतद्वस्तुवैपरीत्यंकुर्वन्निवशीतंशीतस्पर्शयुक्तंपाथउदकं कबंधमु दकंपाथइत्यमरः । शीतलाचसाउष्णाचशीतलोष्णानभवतीत्यशीतलोष्णासाचासौधरणीचतांअनुष्णशीतस्पर्शवतींभूमिमित्यर्थः । भास्वद्बलेनसूर्यसामर्थ्येनउ ष्णयन्नौष्ण्यंप्रापयन्नुभयमप्युष्णस्पर्शवत्कुर्वन्नित्यर्थः । गंधवहंवायुंतिर्यग्गमनस्वभावंवाऊर्ध्वमुपरिनयन्प्रापयन्ग्रीष्मेचक्रवातोत्पत्त्याऊर्ध्वगमनदर्शनादिति भावः । त्रिभिस्तेजोबन्नैर्वृतमावृतंवपुःशरीरमम्मात्रपात्रंजलमात्रयोग्यंग्रीष्मेबहुलजलपानकरणादितिभावः । कुर्वन्तद्वासंतस्यकृष्णस्यवासंनिवासस्थानंवाः वारिचशोषयन् । उदकशोषणेतदाश्रयत्वनिमित्तकनारायणनामैवनाशितंभवेदितिभावेनेतिभावः । किंचतस्यकृष्णस्यवशमधीनंविश्वंजगत्दवेनदावाग्नि

नावनस्थप्राणिनाशनेक्रियमाणेमयासंहारःक्रियतइतिभावेनभस्मीकुर्वन्वैरीवशत्रुरिवादृश्यत । अनेनार्कस्यतैक्ष्ण्यंभूजलादीनामौष्ण्यंचक्रवातोत्पत्तिः पिपासाजलशोषणंदवाग्निनावनस्थप्राणिनाशश्चेतिग्रीष्मधर्मावर्णिताः ॥ ६ ॥ सुच्छायैरिति । सुनिबिडाछायायेषांतैःशुकैःकीरैःमंडिताअलंकृतास्तैःशुभानि फलानियेषांतैः उद्यत्प्रसूनानांप्रकाशमानकुसुमानांउद्गमोयेषांतेमाधवपक्षगैर्वसंतपक्षपातिवृक्षैःनिदाघोद्भवेखेदेश्रमेप्रशमितेसतिकोपिकश्चनदैत्यःवरतोब्रह्मदत्ता तुवनेवृंदावनेतरुत्वंविषवृक्षत्वमेत्यतत्पक्षपातीवग्रीष्मपक्षपातीववनेतच्छायावाससुखात्तेषांवृक्षाणांछायानिवाससुखात्सहस्रगुणितंसहस्रपरिमितंततोप्यधिक मित्यर्थः शोकंदुःखंवितेनेचक्रे ॥ ७ ॥ तरुत्वमिति । दैत्यस्तरुत्वमपिदर्शनाभिवंदनादिरहितयोनिमपिआप्यप्राप्यमुरारेःकृष्णस्यवनंवृंदावनंसमंतात्परितःविषै

सुच्छायैः शुकमंडितैः शुभफलैरुद्यत्प्रसूनोद्गमैः वृक्षैर्माधवपक्षगैः प्रशमिते खेदे निदाघोद्भवे ॥ दैत्यः को पि तरुत्वमेत्य वरतस्तत्पक्षपातीव तच्छायावाससुखात्सहस्रगुणितं शोकं वितेने वने ॥ ७ ॥ तरुत्वमाप्या पि वनं मुरारेरदूषयद्धंत विषैः समंतात् ॥ स्वनासिकाछेदमपीह सोढ्वा खलोवरुंधे खलु सत्प्रयाणम् ॥ ८ ॥ विनाश्य वृंदावनवासिपक्षिमृगादिनानाविधजीववर्गम् ॥ वरप्रदातुस्तरसा विधातुरसौ विशंको विदधे प्रतीपम् ॥ ९ ॥ तदीयगंधेन फलेन पुष्पकुलेन मूलाश्रयणेन लोकः ॥ तदैव नाशं किल याति कृष्ण ाविपक्षमैत्री किमुसौख्यदात्री ॥ १० ॥

रदूषयत् दुष्टमकरोत्हंतहा । हंतहर्षेविषादेचवाक्यारंभानुकंपयोरितिरत्नमाला । तथाहि इहलोकेखलोदुर्जनःस्वनासिकाछेदमपिसोढ्वामर्षित्वास्वनासिकां छित्त्वापीत्यर्थः सतांप्रयाणंगमनमवरुंधेखलु अपशकुनंकृत्वागमनप्रतिबंधंकरोतिहीत्यर्थः ॥ ८ ॥ विनाश्येति । असौविषवृक्षरूपीदैत्योविशंकोनिःशंकःसन्वृंदा वनवासिनांपक्षिमृगादिनानाविधजीवानांवर्गंसमूहंतरसाजवेनविनाश्यवरप्रदातुःस्वस्यवरदातुः विधत्तेसृष्टिंकरोतीतिविधातातस्यब्रह्मणःप्रतीपंविरोधंविदधे तत्सृ ष्टजीववर्गस्यविनाशकरणादितिभावः । कृतघ्नाःखलुदुर्जनाःस्वोपकारिण्यपकारंकुर्वंतीतिभावः ॥ ९ ॥ तदीयेति । लोकोजनस्तदीयेनविषवृक्षसंबंधिनागं

धेनपरिमलेनपुष्पकुलेनमूलाश्रयणेनतदैवतत्क्षणादेवनाशंयातिकिल । तथाहि कृष्णविपक्षमैत्रीकृष्णद्वेषिसख्यंसौख्यदात्रीसुखमेवसौख्यंतस्यदात्रीकिमु । दुर्जनमैत्र्याःदुःखकारणत्वादितिभावः ॥ १० ॥ किंवाच्यमिति । अस्यविषवृक्षस्यातिविषोल्बणत्वंअत्यंतविषोत्कटत्वंकिंवाच्यंकिंवक्तव्यं यस्मात्कारणाद्दर्वीकराणांसर्पाणां दर्वीकरोदीर्घपृष्ठोदंदशूकोबिलेशयइत्यमरः । वर्गस्यसमूहस्यमौलिरपिप्रधानोपिसतांसज्जनानांग्लानिहरोपिश्रमहरोपिसरामःशेषात्माबलभद्रोपितत्संगतवायुनैवतद्वृक्षसंबंधिवायुमात्रेणग्लानिमवाप शेषात्मकबलभद्रस्यापिग्लानिकरत्वादस्यविषोत्कटत्वंकिंवर्णनीयमित्यर्थः ॥ ११ ॥ फलैरिति । फलैः प्रसूनैःकुसुमैर्विलसत्प्रवालैर्विलोलैश्चंचलैःपर्णैः दलंपर्णंछदःपुमानित्यमरः । शुभायितोपिशुभवदाचरितोपिसज्जनवत्प्रतीयमानोपीत्यर्थः । सविषवृक्षः मध्येहा

किं वाच्यमस्यातिविषोल्बणत्वं यस्मात्स दर्वीकरवर्गमौलिः ॥ रामोपि तत्संगतवायुनैव ग्लानिं सतां ग्लानिहरोप्यवाप ॥ ११ ॥ फलैः प्रसूनैर्विलसत्प्रवालैर्विलोलपर्णैः सशुभायितोपि ॥ बिभर्ति हालाहलमेव मध्ये खलः प्रकृत्या खलु गूढवृत्तिः ॥ १२ ॥ पतत्रिणां पत्रफलाशनानां वनेतिरम्ये वसतां सतां च ॥ निरागसां द्रोहमहो व्यधाद्यस्तमुग्रनामार्हचरित्रमूहे ॥ १३ ॥ नगं समुत्पाट्य समं समाधिकृच्छ्रमाख्यवृक्षेण सगोस्वरूपिणः ॥ खलांश्च तेनैव जघान लीलया प्रभोः क्रियैकाप्युरुकार्यसाधिका ॥ १४ ॥

लाहलमेवकालकूटमेवबिभर्ति । तथाहि खलोदुर्जनःप्रकृत्यास्वभावेनगूढवृत्तिः निगूढचेष्टःखलु ॥ १२ ॥ पतत्रिणामिति । रम्येमनोहरेवनेवृंदावनेवसतांनिजसतांपत्रफलान्येवअशनंयेषांतेतेषांअतएवनिरागसांनिरपराधिनांपतत्रिणांपक्षिणांसतांचयोवृक्षरूपीदैत्योद्रोहमपकारंव्यधाद्यतनोत् । अहोनिरपराधिष्वपकारकरणमाश्चर्यं । अतएवतंदैत्यंउग्रनामार्हचरित्रंउग्राभिधानयोग्यव्यापारंऊहेतर्कयामि । अनेनास्यदैत्यस्योग्रनामवत्त्वंध्वन्यते ॥ १३ ॥ नगंसमिति । सकृष्णः नगंविषवृक्षंसमाधिकृतांएकाग्रचित्तानामृषीणांश्रमाख्यवृक्षेणसमंसाकमुत्पाट्यगोस्वरूपिणोगोरूपधारिणःखलानसुरांश्चतेनैवविपाटितवृक्षेणैवलीलयाविलासेननतुप्रयासेनजघान प्रभोःसमर्थस्यकृष्णस्यैकापिक्रियाउरुकार्यसाधिकाविषवृक्षोत्पाटनंसतांश्रमनिर्हरणंगोरूपासुरवधश्चेतिबहुकार्यसाधिका ॥ १४ ॥

प्रासंगिकंसमाप्यपुनर्निदाघंवर्णयति । अहोइति । ईशःशिवोनिदाघोत्थभयादिवगंगांसुरनिम्नगांबिभर्ति । सःरमापतिर्लक्ष्मीपतिःसमुद्रेशेते । चतुर्मुखःपंकजविष्टरोबभूव । निदाघमन्यःशिवादिव्यतिरिक्तःकःपुमान्सहेतसोढुंशक्नुयात् ॥ १५ ॥ तदेति । तदापिघर्मकालेपिसिद्धास्तपस्विनःप्रहृष्टरोमावलयोहरिस्मरणजन्यहर्षोद्गतरोमांचाःसंतोनिमीलिताक्षामुकुलीकृतलोचनाःसंतश्चतुर्दिक्षुस्थितानांचतुर्णामग्नीनांमध्येस्थित्वापरमंपुमांसंपुरुषोत्तमंस्मरंति । तथाहि फलार्थिनांफलाकांक्षिणांविषह्यंसोढव्यंकिंनास्ति । फलार्थिनोहिसर्वंकष्टंसहंतइत्यर्थः सिद्धास्तुमोक्षरूपफलार्थिनइतिभावः ॥ १६ ॥ सुशीतलइति । वायुरितःवृंदावनेसुशीतलःसन्कृष्णपदाब्जयुग्मंस्पृशतिस्म ततोवृंदावनाद्बहिःउज्ज्वलकाननाग्निंसमुत्थापयतिस्म वायुवशाद्वृक्षसंघर्षणेनदावाग्न्युत्पत्तेरितिभावः । तथाहि चंच

अहो निदाघोत्थभयादिवेशो बिभर्ति गंगां जलधौ स शेते ॥ रमापतिः पंकजविष्टरश्च चतुर्मुखस्तं विषहेत कोन्यः ॥ १५ ॥ तदापि सिद्धाश्चतुरग्निमध्ये प्रहृष्टरोमावलयः स्मरंति ॥ निमीलिताक्षाः परमं पुमांसं फलार्थिनां किं न विषह्यमस्ति ॥ १६ ॥ सुशीतलः कृष्णपदाब्जयुग्ममितः स्पृशत्युज्ज्वलकाननाग्निम् ॥ ततः समुत्थापयति स्म वायुरयं स्वभावः खलु चंचलानाम् ॥ १७ ॥ प्रियास्तनाख्यान्परिरभ्य कुंभान्सुधां तदीयाधरजां पिबंतः ॥ विंदंत्यहो नागरिका न तापं न वा पिपासां गिरिकुंजवासाः ॥ १८ ॥ जहार कृष्णस्तपनोत्थतापं मुखेंदुना दृष्टिपथंगतेन ॥ सुधार्द्रवीक्षामयदृष्टिभिश्च व्रजौकसां काननवासिनां च ॥ १९ ॥

लानामस्थिराणामयंसज्जनसमीपेसौजन्यंदुर्जनसमीपेदौर्जन्यमित्यनेकप्रकारःस्वभावःखलु ॥ १७ ॥ प्रियेति । गिरौपर्वतेयेकुंजालतादिपिहिताअनातपप्रदेशास्तेषुतापपरिहारायवसंतीतिगिरिकुंजवासानागरिकानगरभवाविलासिनःप्रियास्तनाख्यान्कांताकुचाख्यान्कुंभान्पयःपूर्णकलशान्परिरभ्यालिंग्यतदीयाधरजांप्रियाधरजन्यांसुधांपिबंतःसंतस्तापंपिपासांवानविंदंति । गिरिकुंजवासेनस्तनपरिरंभणेनचतापंनविंदंति । कूपोदकंवटच्छायातांबूलंतरुणीस्तनावितिवचनादितिभावः । अधरपानेनपिपासांचनविंदंतीत्यर्थः ॥ १८ ॥ जहारेति । कृष्णःव्रजौकसांगोष्ठालयानांकाननवासिनांवृंदावनवासिनांतपनोत्थतापंसूर्यज

न्यसंतापंदृष्टिपथंगतेनलोचनविषयेणमुखेंदुनामुखचंद्रेणसुधयाऽमृतेनार्द्राक्लिन्नावीक्षातन्मयवृष्टिभिर्जहारपरिहृतवान् । चंद्रोदयेवृष्टौचतपनतापनिवृत्तेरिति भावः ॥ १९॥ नीलामिति । सशौरिःकृष्णःसप्तवृषानुक्ष्णः । वृषोधर्मोक्षपुण्येष्वितिरत्नमाला । जित्वाकुंभकसंभवांकुंभकोनामकश्चनगोपालस्तत्संभवांतत्पुत्रीं नीलांनीलानाम्नींस्त्रियमलभत । सोपिनीलापिताकुंभकोपिसप्तधातूंस्त्वक्कर्ममांसरुधिरमेदोमज्जास्थ्याख्यान्सप्तधातून्कुंभकबलात्कुंभकाख्यप्राणायामबलात् प्राणायामेनसप्तधात्वात्मकशरीरेऽनास्थांसंपाद्येत्यर्थः नीलमणिभीरत्नैःनीलांस्त्रीयांतस्यकृष्णस्यपुरींवैकुंठनगरींकरेहस्तेऽलभत । कन्यादानजन्यपुण्येनकुंभ कस्यमोक्षःकरस्थोजातइत्यर्थः । अपरेबहवोनीलाशयागताराजानश्चशृंगप्रहारैर्वृषाणांशृंगाभिघातैर्द्रवत्कुंभानांस्रवद्घटानामाभेवाभायेषांतैरंगैर्गात्रैर्युजोयुक्ताः

नीलां कुंभकसंभवामलभत स्वीयां स जित्वा वृषान् शौरिः सप्त स चापि नीलमणिभिर्नीलां करे तत्पुरीम् ॥ धातून्सप्त निगृह्य कुंभकबलाच्छृंगप्रहारैर्द्रवत्कुंभाभांगयुजोपरे च बहवो नीलां मुखस्य प्रभाम् ॥ २० ॥

अथापरो रासभवेषधारी वनं समाक्रम्य मुकुंदयोग्यम् ॥ जघान जंतून् बत तादृशोऽसौ खलःप्रकृत्येति मम प्रतर्कः ॥ २१ ॥ क्षुधातिलोलाः किल गोपबालाः सहाच्युतेनाभिययुर्वनं तत् ॥ तथा हि दुष्टस्य वि नाशतोन्यत्सतां मनस्तुष्टिकरं किमस्ति ॥ २२ ॥

संतःशृंगाभिघातेनस्रवद्रक्तयुक्तांगाइत्यर्थः । नीलांमेचकांमुखस्यप्रभांकांतिमलभंत । कृष्णोनीलांस्त्रियंकुंभकोनीलांपुरींअन्येनीलांमुखकांतिं इति त्रयाणा मपिनीलाप्राप्तिरभूदितिभावः । नीलायाःकुंभकगोपजन्यत्वात्तद्वैकुंठप्राप्तेरंतःकरणशुद्धिद्वाराकुंभकप्राणायामजन्यत्वान्मुखनैल्यस्यकुंभसदृशशरीरक्षतज न्यत्वात्तत्प्राप्तनीलायाअपिकुंभसंभवत्वादित्यपिद्रष्टव्यम् ॥ २० ॥ अथेति । अथानंतरंगोपवेषधारिभ्योन्योऽसुरःरासभवेषधारीगर्दभवेषधारीसन्मुकुंदयोग्यवनं वृंदावनंसमाक्रम्यजंतून्प्राणिनोजघानबत । बतेतिखेदे । तादृशस्तथाविधोमुकुंदयोग्यवनदूषकइत्यर्थः । असौदैत्यःप्रकृत्यास्वरूपेणखलोमूर्खइतिममतर्कः ऊहः क्षेत्रदूषकस्यखरत्वमाजानजमितिभावः ॥ २१ ॥ क्षुधेति । क्षुधयाबुभुक्षयाअतिलोलाअधिकतृष्णाः लोलश्चंचलतृष्णयोरितिभास्करः । गोपबा

लाअच्युतेनकृष्णेनसहतत्वराक्रांतवनंययुः । क्षुत्परीतानांवनगमनंकुत्रोपयुज्यतइत्यतआह । तथाहीति । तथाहितद्युक्तं दुष्टस्यदुर्जनस्यविनाशतोऽन्यद्यतिरि
क्तंसतांसज्जनानांमनस्तृप्तिकरंचित्ताह्लादकरंकिमस्तिनकिमपीत्यर्थः ॥ २२ ॥ अथेति । कृष्णगमनानंतरंअसुरवर्गवर्यौसुरवर्गश्रेष्ठोधेनुकआससाद युद्धार्थंकृ
ष्णमगमत् । बलाढ्योबलसंपन्नोबलश्चबलभद्रश्चनिजध्वजाःस्वकीयध्वजजातीयाःक्ष्माजास्तालवृक्षाः बलस्यतालध्वजत्वादितिभावः । तेषांसमाजेनसमूहे
नराजच्छोभमानंवनंतालवनंतदाक्रांतंधेनुकाक्रांतंईर्ष्यमाणइवअसहमानइववनंधेनुकंप्रत्यगमत्प्रतिययौ । स्वध्वजच्छत्रादीनांसपत्नाक्रमणोपेक्षाशूराणामयश
स्करीतिभावेनेवबलरामःस्वयंयुद्धायागमदित्युत्प्रेक्षा ॥ २३ ॥ सइति । असह्यसत्वःअन्यैर्दुःसहसामर्थ्यः अस्तमायोनिरस्तमायःखलोदुष्टःसधेनुकोनिजपा

अथाससादासुरवर्गवर्यो बलश्च तं प्रत्यगमद्बलाढ्यः ॥ निजध्वजक्ष्माजसमाजराजद्वनं तदाक्रांतमिवेर्ष्यमाणः
॥ २३ ॥ स धेनुकस्तं निजपार्ष्णिपद्भ्यां प्रताडयन् गाढमसह्यसत्वः ॥ प्रगृह्य तावुत्क्षिपतो बलस्य खलः सहायो
भवदस्तमायः ॥२४॥ उत्क्षिप्य तं तालमहीरुहाग्रे संप्रेषयामास सतां विपक्षम् ॥ विष्वक्फलालंबिनि पादपा
ग्रे धृत्वोपलं बालइवात्तलीलः ॥ २५ ॥ व्यसुरथ विपतन्स स्वांघ्रिपानेव कांश्चिद्गुरुतमतनुरुच्चैः पातयामास दै
त्यः ॥ हरिपदविमुखानां पोषणस्योचितं ते फलमलभिषतालं तैः सहेत्यस्मदूहः ॥ २६ ॥

र्ष्णिपद्भ्यांस्वपृष्ठभागस्थपद्भ्यांतंबलभद्रंप्रताडयंस्तौपादौप्रगृह्यगाढंदृढमुत्क्षिपतोबलस्यसहायोनुकूलोभवत् । आभिमुख्येनागमनेपार्ष्णिपादग्रहणायोगादिति
भावः ॥ २४ ॥ उत्क्षिप्येति । सबलभद्रःसतांसज्जनानांविपक्षंशत्रुंतंधेनुकमुत्क्षिप्योन्नमय्यतालमहीरुहाग्रेतालवृक्षोपरिविष्वक्सर्वतःफलैरालंबिनिअवस्रंसि
निपादपाग्रेउपलंपाषाणंधृत्वाआत्तलीलोबालइवप्रेषयामासप्रेषितवान् ॥ २५ ॥ व्यसुरिति । अथानंतरंगुरुतमतनुरतिस्थूलशरीरोव्यसुर्विगतप्राणोदैत्योधेनु
कोविपतन्सन्कांश्चित्कतिचित्स्वांघ्रिपान्स्वीयवृक्षानेवालंउच्चैःपातयामास । तेवृक्षाहरिपदविमुखानांविष्णुद्वेषिणांपोषणस्यफलपुष्पादिनाकृतभरणस्योचि
तंअर्हंफलं तैर्विष्णुपदविमुखैःसहअलभिषतालभंतेत्यस्मदूहोऽस्मत्प्रतर्कः । हरिविमुखपोषकाणांतैःसहपातोयुक्तएवेतिभावः ॥ २६ ॥

मुनिकृतेति । सुरैर्नतः प्रणतः कृष्णो मुनिनागर्गेणकृतंयदग्रजनामबलइतिनामधेयंगुणोचितमन्वर्थंविरचयन्निवसानुगधेनुकंभृत्यसहितधेनुकासुरंरणतोषितना किनारणेनतोषितानाकिनोदेवायेनतेनहलधरेणरामेणहतंसमकारयत् । बलकार्यदर्शनेबलभद्रइतिनाम्नोवैयर्थ्यंस्यादितिभावः ॥ २७ ॥ ग्रीष्मेति । ग्री ष्मेग्रीष्मर्तौभास्वतिसूर्येचअपराधकृतिसतिहलीबलरामःकुद्धःसँल्लीलायाश्छलतोव्याजेनप्रलंबंप्रलंबनामकंअसुरंजघान मुरजित्कृष्णोमयस्यमयनामकस्य त्वष्टुरात्मजंव्योमंव्योमनामकंअसुरंलीलायाश्छलतोजघान । नन्वन्यस्यापराधेपरस्यशिक्षाकथंयुज्यतेइत्यतआह युक्तमिति । तद्युक्तंहि दमोपिस्वशिशुदौ र्जन्येनकुद्धोपिजनयितापितामनःप्रियानिष्टान्स्वान्स्वकीयाञ्छिशून्संतर्जयन्भीषयन्हस्तलगुडैःकरस्थदंडैस्तत्प्रांतस्थशिलादितेषांशिशूनांसमीपस्थशिलास्तं

मुनिकृताग्रजनामगुणोचितं विरचयन्निव सानुगधेनुकम् ॥ हलधरेण हतं समकारयत्सुरनतो रणतोषितनाकिना ॥ २७ ॥ ग्रीष्मे भास्वति चापराधकृति संक्रुद्धः प्रलंबं हली लीलायाश्छलतो जघान मुरजिद्व्योमं मयस्यात्मजम् ॥ युक्तं तद्धि मनःप्रियान् जनयिता संतर्जयन्स्वान् शिशून् तत्प्रांतस्थशिलादिहस्तलगुडैर्दमोपि यत्ताडयेत् ॥ २८ ॥ पराभवं वीक्ष्य ततो निदाघः ससर्ज दावानलमुज्ज्वलंतम् ॥ हरिः पपौ तं च जगन्निवासो विनाशशून्यस्य हि किं न कार्यम् ॥ २९ ॥ मेघाः सवर्णस्य हरेः सहायं प्रायो विधातुं परितः समेत्य ॥ भास्वंतमंगैः पयसा निदाघमाच्छाद्य विश्वं पुपुषुस्तदीयम् ॥ ३० ॥

भादिवस्तुताडयेत् । यथालोकेपितास्वसुतांस्तत्समीपस्थस्तंभभित्त्यादिकंप्रताड्यभीषयतितद्वदितिभावः । अनेनग्रीष्मसूर्ययोःस्वकीयत्वंध्वन्यते ॥ २८ ॥ पराभवमिति । ततोनंतरंनिदाघःकृष्णात्पराभवंवीक्ष्योज्ज्वलंतंदावानलं ससर्जस्रष्टवान् । जगतांनिवासोहरिःकृष्णस्तंचदावाग्निंचपपौपीतवान् । चशब्देनपूर्वकृतदावाग्निपानंसमुच्चिनोति । तथाहि विनाशशून्यस्यमृतिरहितस्यकृष्णस्याकिंनकार्यं मरणभयाभावादितिभावः ॥ २९ ॥ वर्षर्तुंवर्णयति । मेघाइति । मेघाःसवर्णस्यश्यामत्वेनसमानवर्णस्यहरेःकृष्णस्यसहायंप्रायोविधातुमिवइवेत्युत्प्रेक्षा । परितःसमंतात्समेत्यांगैःशरीरैर्भास्वंतंसूर्यमाच्छाद्यपयसाजलेननिदाघंचर्नमाच्छाद्यपरिहृत्यतदीयंकृष्णसंबंधिविश्वंपुपुषुःपोषितवंत ॥ ३० ॥

आश्रित्येति । विष्णुपदमाकाशमाश्रित्यार्थिषु जलार्थिष्वंबु जलंयच्छतःप्रयच्छतोमेघस्यजलनायकोपिसमुद्रोपि अपिपदेनजलंनीरंजडेतिश्चित्यभिधानान्मूर्खोपीत्यर्थोव्यज्यते । सारथिःसहायोभूत्समुद्राज्जलस्वीकारादितिभावः । अर्थांतरंन्यस्यतिनित्यमिति । नित्यंसदामुकुंदचरणेश्रीकृष्णपादेअर्पितवैभवमैश्वर्यंयेनतस्यकृष्णार्पणीकृतसमस्तभाग्यस्येत्यर्थः । मर्त्योपकारनिरतस्यपुरुषस्यकःसहायोन यःकोपिसहायोभवतीत्यर्थः । मेघस्यापिविष्णुपदार्पितविभवत्वात्जीवनदानेनमनुष्योपकारित्वादितिभावः ॥३१॥ लोकस्येति । लोकस्यजनस्य लोकस्तुभुवनेजनइत्यमरः । शोकहरवारिश्रमहरजलमभिवर्षतोमेघस्यामतोपिशत्रुरपिवातोवायुर्झंझानिलेनमेघानामपसारणादितिभावः योगकृदाकाशेमेघांतरेणसंगतिकृदभूत् वातस्यमेघमेलनकारित्वादितिभावः । अर्थांतरमाह । काममत्यर्थंइ

आश्रित्य विष्णुपदमर्थिषु यच्छतोंबुमेघस्य सारथिरभूज्जलनायकोपि ॥ नित्यं मुकुंदचरणार्पितवैभवस्य मर्त्योपकारनिरतस्य न कः सहायः ॥३१॥ लोकस्य शोकहरवार्यभिवर्षतोलं मेघस्य योगकृदभूदमतोपि वातः ॥ कामं परोपकृतिलग्नमनोरथानां क्षेमंकरत्वमुपयांति हि शत्रवोपि ॥ ३२ ॥ उद्यद्विद्युति वक्रशक्रधनुषि व्योमाग्रसीमाश्रये वर्षत्यूर्जितगर्जितेति चकिता मर्त्याः पयोधारिणि ॥ नेत्रांतभ्रुकुटीबलं कृशलसन्मध्योर्ध्वभागोदितं नारीपीनपयोधरं भयहरं भेजुः क्वणद्भूषणम् ॥ ३३ ॥

परोपकृतिषुपरोपकारेषुलग्नमनोरथानांप्राणिनांशत्रवोपिक्षेमंकरत्वंउपयांतिहि ॥३२॥ उद्यदिति । उद्यंतीप्रकाशमानाविद्युत्सौदामिनीयस्य तडित्सौदामिनीविद्युदित्यमरः । तस्मिन्वक्रंकुटिलंशक्रधनुरिंद्रायुधंयस्यतस्मिन् । धनुषश्चेतिप्राप्तस्यानङोवासंज्ञायामितिवैकल्पिकत्वात् । व्योमाग्रसीमैवाकाशाग्रभागएवाश्रयोयस्यतस्मिन् ऊर्जितंउच्चंगर्जितंयस्यतस्मिन्पयोधारिणिमेघेवर्षतिसतिमर्त्यावियोगिमनुष्याश्चकितानेत्रांतभ्रुकुट्योःकटाक्षभ्रूभंगयोर्बलंयस्यसतथोक्तस्तं स्तनपरिरंभणस्यकटाक्षविक्षेपादिनापुरुषवशीकरणानंतरभावित्वादितिभावः । अनेनतडिदिंद्रचापयोःप्रतिकृतिरुक्ता । कृशलसन्मध्यस्यतनुमनोहरोदरस्यऊर्ध्वभागेउदितंजातं अनेनव्योमाग्रसीमाश्रयइत्यस्यप्रतिकृतिरुक्ता । क्वणंतिभूषणानियस्यसतथोक्तः अनेनगर्जितस्यप्रतिकृतिरुक्ता । भयहरंकामभयहरंनारीपीनपयोधरंकांतापीनकुचंभेजुराश्रितवंतः राजभ

यस्यतत्सदृशराजांतराश्रयणेनपरिहारवत्पयोधरजन्यभयस्यतत्सदृशपयोधरांतरमाश्रित्यपरिहर्तव्यत्वादितिभावः । विद्युदादीनांबिंबप्रतिबिंबभावगतत्वेनदृष्टांता
लंकारः ॥३३॥ कादंबिन्याइति । पयोधौसमुद्रेकादंबिन्यै कादंबिनीमेघमालेत्यमरः । पयोबिंदुमात्रंजललवमात्रंवितरतिददतिसतिसकलसरितांसमस्तनदीनां
स्वात्मनश्चस्वस्यापिवृद्धिरभिवृद्धिरासीत् । वर्षाकालेसकलनदीनांसमुद्रस्यापिजलाभिवृद्धेर्जायमानत्वादितिभावः । इतियत्तद्युक्तं नित्यंसर्वदाविष्णोःपदंहरि
चरणमधिगतायहरिभक्तायेत्यर्थः । अत्युदारायया‌वदर्जितंतावद्व्ययंकुर्वतेऽब्बिंदूनांनामपिदानात्स्ववर्गेस्वजनसमूहेशतगुणाशतगुणितावृद्धिरभिवृद्धिर्भवतिअद्धा
निश्चयः । मंदाक्रांतावृत्तं । मंदाक्रांताजलधिषडगैर्म्भौनतौताद्गुरूचेत् ॥३४॥ मेघागमइति । मेघागमःअसह्यमपिसोढुमशक्यमपिग्रीष्मस्यसकलंसत्वंसामर्थ्यंप्र

कादंबिन्यै वितरति पयो बिंदुमात्रं पयोधावासीद्वृद्धिः सकलसरितां स्वात्मनश्चेति युक्तम् ॥ नित्यं विष्णोः
पदमधिगतायात्युदाराय दानादब्बिंदूनामपि शतगुणा वृद्धिरद्धा स्ववर्गे ॥ ३४ ॥ मेघागमोसह्य
मपि प्रजह्ने ग्रीष्मस्य सत्वं सकलं तथा तत् ॥ सर्वंसहाजीवनहर्तुरस्य दुर्वारतेजोपि किमेति वृद्धिम् ॥
॥ ३५॥ साधूनां वरमानसाकृतिसरः संशोधयत्तन्मुखप्रख्यं पद्मचयं प्रहर्षयदलं पंकं च संखंडयत् ॥ हृ
द्योमेव घनापिधानरहितं कुर्वन्नभः संहरत्तामिस्रं हरिवीर्यकीर्तिसदृशौ सूर्योडुपौ स्पष्टयत् ॥ ३६ ॥

जह्नेअपहृतवान् । तत्ग्रीष्मसामर्थ्यापहरणंतथातद्युक्तमित्यर्थः सर्वंसहायाभूमेर्जीवनमुदकंहरतिसर्वंसहाजीवनहर्ता । अनेनसहनशीलायानार्याःप्राणापहरणदौ
र्जन्यंव्यज्यते । अस्यग्रीष्मस्यदुर्वारतेजोपिदुर्निवार्यसामर्थ्यमपिवृद्धिमपिवृद्धिमेतिकिंनप्राप्नोतीत्यर्थः ॥३५॥ शरत्कालंवर्णयति । साधूनामिति । उज्जृंभितम
द्भुतंशरत्साम्राज्यंशरत्कालैश्वर्यंसच्छास्त्रमेवश्रीमध्वशास्त्रमेवप्रतिकृतिरुपमानंयस्यतत्तथोक्तमलक्ष्यतसच्छास्त्रवदलक्ष्यतेत्यर्थः । किंकुर्वत्साधूनांवरमानसाख्या
आकृतिर्यस्यतत्तथोक्तं सरःसरोवरंसंशोधयन्निर्मलीकुर्वत् । शरदोजलनैर्मल्यहेतुत्वादितिभावः । शास्त्रमपिसतामंतःकरणशुद्धिकृत् । पुनःकिंकुर्वत् तन्मुखप्र
ख्यंतन्मुखानांसाधुवदनानांप्रख्येवप्रख्याअभिख्यायस्यसतथोक्तं । सुषुमापरमाभिख्याशोभाकांतिर्द्युतिच्छविरित्यमरः । साधुमुखसदृशमित्यर्थः ।तंपद्मचयंक

मलसमूहंप्रहर्षयत्मेघाद्यन्तेरभावादर्ककिरणसंपर्केणोद्बोधयत् । शास्त्रंचसन्मुखविकासकृत् पुनःकिंकुर्वत् पंकंचकर्दमंचअलमत्यर्थंसंखंडयत्संशोषयत् । शास्त्रंचश्रवणमात्रेणपापपरिहारकृत् । पंकःकर्दमपापयोरित्यभिधानात् । पुनःकिंकुर्वत् । हृद्योमेवसाधूनामित्येतदत्रापिसंबध्यतेसाधूनांहृदयाकाशमिवनभोगगनंघनापिधानरहितंमेघावरणरहितंकुर्वत् शास्त्रमपिसतांहृदयाकाशगतप्रकृतिबंधलक्षणनिबिडावरणनिरासकृत् । पुनःकिंकुर्वत् तामिस्रंवर्षातमःसंहरत् शास्त्रमप्यज्ञानध्वंसकृत् । पुनःकिंकुर्वत् हरिवीर्यकीर्तिसदृशौसूर्योडुपौसूर्यचंद्रमसौस्पष्टयत् शरच्चंद्रार्कयोःप्रकाशवैशेष्यादितिभावः । शास्त्रमपिविष्णुमहिमप्रकाशनकृत् ॥ ३६ ॥ पुनःकिंकुर्वत् अधःकृतजलंअल्पीकृतोदकंसत्संसाराख्यमभेद्यबंधनमिवभिक्षूणांसंन्यासिनांवणिजांविशांचप्रावृट्कृतंवर्षाकृतंबंधनं वर्षाकाले संन्यासिनांसंचरणस्यनिषिद्धत्वात्विशांबलीवर्दादीनांमार्गस्यकर्दमदिग्धत्वेनसंचारानर्हत्वाच्चेतिभावः । विच्छेदयत् । शास्त्रमप्यधःकृतजलंअधरीकृतजडंमूर्खं

संसाराख्यमभेद्यबंधनमिव प्रावृट्कृतं बंधनं भिक्षूणां वणिजामधःकृतजलं विच्छेदयन्मोदयत् ॥ मोक्षानंदमहाप्रवाहतुलनैर्गोक्षीरपानैर्जनान्सच्छास्त्रप्रतिकृत्यलक्ष्यतशरत्साम्राज्यमुज्जृंभितम् ॥ ३७ ॥ पद्मासेव्यगुणौघविस्तृतिकरः स्पष्टीभवच्छारदानंदः कंपितभोगिराजशिरसा मान्यागमः संततम् ॥ सन्मार्गाश्रितपंकशोषणकरः सत्पांथघर्मापहो नित्यं विष्णुपदाश्रयः परिलसत्पुण्यांबुपूतोऽसकृत् ॥ ३८ ॥ संसारबंधध्वंसकृत् । पुनःकिंकुर्वत् । मोक्षानंदमहाप्रवाहतुलनैर्मुक्तिसुखप्रवाहसदृशैर्गोक्षीरपानैर्जनान्मोदयत्हर्षयत् । शरत्पित्तोपशमनायगोक्षीरपानस्यवैद्यशास्त्रेविहितत्वादितिभावः । इतिश्लोकद्वयस्यैकएवान्वयः । अंतःकरणशुद्धिर्मुखविकासःपापपरिहारःप्राकृतावरणनिवृत्तिरज्ञानध्वंसोऽपरोक्षज्ञानंसंसारनिवृत्तिःस्वरूपानंदाविर्भावश्चेतिशास्त्राद्भवतीतिभावः । प्रतिवस्तूपमालंकारः ॥ ३७ ॥पद्मेति ॥ अत्रापिपूर्ववच्छ्लोकद्वयस्याप्येकएवान्वयः । पद्मानांकमलानांआसेव्याआदरणीयायेगुणाःपरिमलास्तेषामोघस्यसमूहस्यविस्तृतिंकरोतीतिपद्मासेव्यगुणौघविस्तृतिकरः । अन्यत्रपद्मयालक्ष्म्याआसेव्याःसम्यक्सेव्यायेगुणाःसार्वज्ञ्यादयस्तेषामोघस्यसमूहस्यविस्तृतिंकरोतीतितथा । श्रीमदाचार्यैरेषसर्वज्ञएषसर्वेश्वरएषसर्वांतर्याम्येषयोनिःसर्वस्येत्यादिश्रुतिभिःआनंदमयोऽभ्यासादंतस्तद्धर्मोपदेशादित्यादिसूत्रैःमय्यनंतगुणेनंतइत्यादिस्मृतिभि

विष्णोर्गुणानांप्रतिपादितत्वादितिभावः । शरदिविद्यमानःशारदःसचासावानंदश्चेतिशारदानंदःस्पष्टीभवत्शारदानंदोयस्मात् । अन्यत्रशारदायावाग्देव्याआनंदः शारदानंदःस्पष्टीभवच्छारदानंदोयस्मात् शास्त्रेविचित्रशब्दप्रयोगेणवाग्देव्याःसंतोषजननादितिभावः।कंपितेनधूनेनभोगःस्त्रीसंभोगसुखमेषांतेषांराज्ञांशिरसामा न्यःआगमःआगमनंयस्यसःस्त्रीभोगासक्ताराजानःवायुमपेक्षंतइतिभावः । अन्यत्रकंपितभोगिराजशिरसासंतोषेणांदोलितशेषमूर्ध्ना । भोगःसुखेस्त्र्यादिभृतावहे श्चफणकाययोरित्यमरः । मान्यआदरणीयआगमःशास्त्रंयस्यसतथोक्तःसन्मार्गाश्रितस्यसंचरणार्हतमार्गस्थितस्यपंकस्यशोषणकरः । अन्यत्रसतांमार्गःशास्त्र मार्गस्तदाश्रितंतद्विषयंपंकमज्ञानंतस्यशोषणकरः। सत्पांथाःपथिकास्तेषांघर्मापहःस्वेदापहः अन्यत्रसत्पांथामोक्षमार्गरतास्तेषांघर्मापहस्तापापहः । नित्यंविष्णु पदाश्रयआकाशाश्रयः अन्यत्रहरिचरणासक्तः । असकृद्बहुशःपुण्यांबुभिःपूतः । अन्यत्रभागीरथ्यादितीर्थतोयैःशुद्धः ॥ ३८॥ रामायोगिजनस्यकांतावियोगि

रामायोगिजनस्य भीमचरितः सद्वंशजातं मुहुः प्रेमालंबनशब्दहृद्यवदनं कुर्वन् स्वकीयागमैः ॥ सुक्षेमं सुमनश्च यस्य विदधत्सुव्यासमूर्तिः क्षितौ सच्छास्त्रे सुखतीर्थवन्मरुदभून्मूर्धाभिषिक्तस्तदा ॥ ३९ ॥ वियुक्तनारीमुखपद्म पुंजैः सहांबुजातं शिथिलं वितन्वन् ॥ प्रबोधकल्पं रविमल्पकांतिं विधाय हेमंत उपाजगाम ॥ ४० ॥

लोकस्यभीमचरितोभयंकरसंचारः अन्यत्ररामेरघुपतौअयोगिजनोभक्तियोगरहितोजनस्तस्यभीमचरितोभयजनकचरित्रःसहस्रचतुष्टयगरिष्ठकदलीफलभ क्षणेनबहुक्षीरपानादिनाभीमसेनचरितइतिवा । अनेनश्रीमदाचार्यस्यभीमात्मकत्वंद्योत्यते । स्वकीयागमैःस्वगमनैःसद्वंशजातंसमीचीनंवेणुसमूहंमुहुःपुनःपु नःप्रेमालंबनशब्देनस्नेहास्पदध्वनिनाहृद्यवदनंमनोहररंध्रंकुर्वन् । अन्यत्रस्वकीयागमैःस्वशास्त्रैःसद्वंशजातंसत्कुलप्रसूतंप्रेमालंबनशब्दहृद्यवदनंआदराश्रयीभू तशब्दैःहृद्यमुखंकुर्वन्सुमनसश्चयस्यपुष्पसमूहस्यसुक्षेमंसम्यक्कुशलंविदधत् । अन्यत्रसुमनसांदेवानांचयस्यसंघस्यसुक्षेमंविदधत् क्षितौभूमौसुव्यासमूर्तिःस म्यग्विततमूर्तिः इदमुभयत्रापिसमानम् । मरुद्वायुस्तदाशरत्कालेसच्छास्त्रेसमीचीनब्रह्ममीमांसाशास्त्रेसुखतीर्थवत्मूर्धाभिषिक्तःपट्टाभिषिक्तोभूत् । विशेष्यस्य श्लिष्टत्वात्तुल्ययोगित्वमलंकारः ॥ ३९ ॥ हेमंततुंवर्णयति । वियुक्तेति । अंबुजातंकमलंवियुक्तनारीमुखपद्मपुंजैर्विरहिणिवदनांबुजसमूहैःसहशिथिल

प्रबोधकल्पंज्ञानसदृशंरविंसूर्यमल्पकांतिंतनुप्रकाशंविधाय हिमकालेनीहारावृतत्वेनसूर्यस्याल्पप्रकाश
क्षीणंवितन्वन् हिमस्यपद्मशैथिल्यकारित्वादितिभावः । हिमार्दितांगइति । उष्णरश्मिरपिसूर्यःसकृदेकवारंहिमार्दितांगइतिशीतेनव्यथितांगःसन्स्व
त्वादितिभावः । हेमंतः हेमंतर्तुरुपाजगामप्राप्तवान् ॥ ४० ॥ हिमार्दितांगइति । उष्णरश्मिरपिसूर्यःसकृदेकवारंहिमार्दितांगइतिशीतेनव्यथितांगःसन्स्व
करैःस्वकिरणैर्वह्निंदधानोऽजस्रंनित्यंजलधिंसमुद्रंविशतिस्मप्रविशतिस्म । सोयंसूर्यःस्वकिरणान्वह्नौनिधायअस्तंयातीत्यागमप्रसिद्धिः । ततःकारणात्तां
हिमानींहिमसंहतिंअबलाबलरहितानार्यःकथंसहंते हिममसहमानामानिन्यःप्रार्थनांविनास्वरमणानंगीकुर्वंतीतिभावः ॥ ४१ ॥ पतिमिति । कृष्णंयशोदात
नयंपतिंभर्तारमाप्तुकामाःप्राप्तस्पृहावत्योगोपकन्याःपतिंभर्तारंवशीकर्तुमयंकालोहि हिमकालेपुरुषाःप्रयत्नंविनास्वयमेवस्त्र्यधीनाभवंति। कांताकुचालिंगनेन
हिमनिवृत्तेरितिभावः । इतीवइतिबुद्ध्येवधन्याःसत्योदुर्गापूजासाधनसंपत्तिमत्यःसत्यस्तस्यकृष्णस्यअसमधामासदृशंतेजोवितर्क्यमत्वा अनेनकृष्णोलौकिक

हिमार्दितांगः सकृदुष्णरश्मिरपि स्ववह्निं स्वकरैर्दधानः ॥ विशत्यजस्रं जलधिं ततस्तां कथं हिमानीम
बलाः सहन्ते ॥ ४१ ॥ पतिं वशीकर्तुमयं हि काल इतीव कृष्णं पतिमाप्तुकामाः॥ व्रतं वितेनुः किल गो
पकन्याः वितर्क्य तस्यासमधाम धन्याः॥ ४२ ॥ पुमांसमभ्यर्चयितुं सलज्जाः समांतरंगा वरवर्णिनी
श्च ॥ सहोदरीं श्रीरमणस्य दुर्गामपूजयंस्तां कृतविश्वसर्गाम् ॥ ४३ ॥

वल्लभ्योनभवति किंतुप्रयत्नलभ्यइतिसूच्यते । अतएवव्रतंदुर्गापूजानियमंवितेनुश्चक्रुः ॥ ४२ ॥ इंद्रादिपुरुषानुवंश्यादिस्त्रियश्चविहायदुर्गाव्रतचरणेनिमित्त
मुत्प्रेक्षयन्नाह । पुमांसमिति । तागोपकन्याःपुमांसंकृष्णोस्माकंपतिर्भूयादितिप्रार्थनयाअभ्यर्चयितुंसमांतरंगाःसमांतःकरणाःसमानकामाइत्यर्थः । वरव
र्णिनीरंगनाश्चकृष्णसौंदर्यदर्शनेनसर्वासामपिस्पृहोत्पत्तेरितिभावः । अभ्यर्चयितुंसलज्जाह्रीयुक्ताःसत्यः। ननुदुर्गायाअपिविष्णुपत्नीत्वात्कथंसपत्नीप्रार्थनाघ
टतइत्यतआह । सहोदरीमिति । श्रीरमणस्यकृष्णस्यसहोदरींस्वसारंकृतोविश्वसर्गोययातांदुर्गामपूजयन् दुर्गायाविष्णुपत्नीत्वेपिकृष्णावतारेतत्सहजातत्वात्प्रा
र्थनायुक्तेतिभावः । कृतविश्वसर्गामित्यनेनदुर्गायामातृत्वान्मातरिस्वाभिलषितकथनंनलज्जाकरमितिद्योत्यते । उत्प्रेक्षालंकारः ॥ ४३ ॥

कृष्णमिति । गोपकुमारिकाःकृष्णंपतिंकामयंत्यःसत्यःव्रतेनस्नानार्चननियमेनलक्ष्मींप्रसन्नांप्रसादयुक्तांविदधुःचक्रुः किलसंभावना । अपरथालक्ष्मीप्रसादाभावे प्रभुःसकृष्णः। स्वप्रेयस्याःस्वप्रियायालक्ष्म्याःस्वप्राणकांतायावैरिवधूःसपत्नीर्गोपकन्यास्तुष्टाःस्वसंभोगादिनासंतुष्टाःकथंविदध्यात् प्रेमास्पदीभूतज्येष्ठपत्न्युनुमतिंविनापत्न्यंतरपरिग्रहस्याशक्यत्वादितिभावः॥४४॥ नेमुरिति । गोपकन्याःप्रणयापराधशमनेकर्तव्येकृष्णोस्माकंनम्रःप्रणतोस्त्वितितांदुर्गांनेमुःप्रणताः। कृष्णःस्वकबरीमस्मद्धंमिल्लैस्तैःकुसुमैरलमत्यर्थंसंदधातुसंयोजयतुइतिप्रेम्णाभक्त्यापुष्पमवेदयन्अर्पितवत्यः। कृष्णःअस्माभिःसहमज्जनंमंगलस्नानंआरचय्यकृत्वातामस्मत्कबरींतद्धूमेनधूपधूमेनसंशोषयत्वितिधूपमवेदयन् । कृष्णोस्मानालिंग्यस्वतिलकेनस्वगंधेनास्माकंतिलकंविशेषकंगंधमनुलेपंतनुतात्कुर्यादितितिल

कृष्णं पतिं ताः किल कामयंत्यो लक्ष्मीं प्रसन्नां विदधुर्व्रतेन ॥ स्वप्रेयसीवैरिवधूः कथं तास्तुष्टाः प्रभुः
सोपरथा विदध्यात् ॥ ४४ ॥ नेमुस्तां प्रणयापराधशमने नम्रोस्तु कृष्णास्त्विति प्रेम्णा पुष्पमवेदयन्स्वक
बरीं तैः संदधात्वित्यलम् ॥ धूपं मज्जनमारचय्य सह तद्धूमेन संशोषयत्वालिंग्यातनुतादितीव तिलकं
गंधं च तस्यै ददुः ॥ ४५ ॥ तांबूलं च मुकुंदचर्वितलसत्तांबूलसिद्ध्यै पयस्तद्बिंबोष्ठसुधात्यये मृदुतनौ
भूषावलिं संदधुः ॥ रत्यंते समलंकरोतु गलिताकल्पौघमस्मत्तनुष्वित्यादीप्सितलब्धयेति कुशलास्ता
मंचयांचक्रिरे ॥ ४६ ॥

कंगंधंचतस्यैदुर्गायैददुः। सेवानुसारिफलस्यभवितव्यत्वादितिभावः॥ ४५ ॥ तांबूलमिति । अतिकुशलाअतिप्रौढागोपकन्यामुकुंदचर्वितलसत्तांबूलसिद्ध्यैकृष्णभक्षितमनोहरतांबूलप्राप्तयेकृष्णोच्छिष्टतांबूलप्राप्त्यर्थमित्यर्थः। तांबूलंचददुः। तद्बिंबोष्ठसुधाप्तयेकृष्णाधररसप्राप्त्यैपयःक्षीरंददुः सकृष्णोरत्यंतेसुरतांतेगलिताकल्पैर्विभ्रष्टाभरणैरस्मत्तनूर्गात्राणिसमलंकरोतुसम्यगलंकुरुतात् । गलिताकल्पौघमस्मत्तनुष्वितिपाठेगलिताकल्पौघंप्रभ्रष्टाभरणसमूहमस्मत्तनुषुनिधायसमलंकरोतुव्रजकुमार्यंवयवानांभूषणभूषितत्वादितिभावः। मृदुतनौदुर्गायाःशरीरेभूषावलींभूषणश्रेणींसंदधुःसंयोजयामासुः । इत्यादीप्सितसिद्ध्येतांदुर्गांमंचयांचक्रिरेपूजयामासुः ॥४६॥

ततइति । ततोदुर्गापूजानंतरंसपत्न्यर्चनतत्पराणांसपत्न्यालक्ष्म्याअर्चनेपूजनेतत्पराणामासक्तानांव्रजबालिकानांविरुद्धंव्रतंदुर्गापूजानियमंपतिकामनयास पत्नीप्रार्थनायाविरुद्धत्वादितिभावः । भग्नमाधातुमिवकर्तुमिवधीरःमनीषीसकृष्णोंबुविहारकालेजलक्रीडासमयेंऽबराणिवस्त्राणिजहारअपहृतवान् ॥ ४७ ॥ देहीति । हेईशस्वामिन्कृष्णास्मदीयमस्मत्संबंधिअंबरंवस्त्रं अंबरंव्योम्निवाससीत्यमरः । देहिदिशेतिगोपीनांवचनं । हेअबलाःअंबरंदत्तमितिगूढाभिसंधेःकृष्णस्यच्छलोत्तरं । कृष्णस्यसर्वस्रष्टृत्वाद्गोपीनांमध्यस्यापितत्स्रष्टत्वात्तद्दत्तत्वमुचितं । हेईशत्वयादत्तमंबरंक्कुत्रवर्ततेइत्यभिसंधिमजानतीनांगोपीनांप्रत्युक्तिः । हेअबलामयादत्तमंबरंवोयुष्माकंमध्ये जात्येकवचनंमध्येषुप्रतिभातिइतिगूढाभिसंधेःकृष्णस्यपुनर्वचनम् । स्त्रीणांमध्यस्यातिसौक्ष्म्यादप्र

ततः सपत्न्यर्चनतत्पराणां व्रतं विरुद्धं व्रजबालिकानाम् ॥ स भग्नमाधातुमिवांबराणि जहार धीरोंबुविहारकाले ॥ ४७ ॥ देहीशांबरमस्मदीयमबला दत्तं क्क तद्वर्तते मध्ये वः प्रतिभाति तर्हि न कथं संदृश्यतेस्मद्दृशा ॥ मुग्धास्तार्किकमौलियुक्त्यकलितं तन्नैव वः शक्यते द्रष्टुं चंचललोचनैरिति वदन् कृष्णः स पुष्णातु माम् ॥ ४८ ॥ ततः क्रमेणांकुरितांगजाता निरीक्ष्य ताश्चंचललोचनांताः ॥ स्वसंगयोग्या इव तर्कयन्स ददौ मुदा तद्वसनानि मानी ॥ ४९ ॥

काशमानत्वेनांबरत्वव्यपदेशः । अनेनगोपीषुकृष्णेनतनुमध्याइतिस्वानुरागनिवेदनरूपास्तुतिःकृतेतिव्यज्यते । यद्यंबरमस्माकंमध्येतिष्ठतितर्ह्यस्मद्दृशास्मदृष्ट्याकथंनसंदृश्यतइतिपुनर्गोपीवचनं । कृष्णःस्वाभिप्रायमुद्घाटयति मुग्धाइति । हेमुग्धास्तार्किकमौलीनांतार्किकश्रेष्ठानांगौतमादीनांयुक्तिभिरनुमानैरकलितमज्ञाततदंबरंव्योमवोयुष्माकंचंचललोचनैश्चपलनयनैः । अनेनव्योम्नःसुतरांलोचनागोचरत्वंसूच्यते । द्रष्टुंनैवशक्यतेअनुमानागोचरस्यातींद्रियस्यसाक्षिसिद्धगगनस्यचक्षुषाद्रष्टुमशक्यत्वादितिभावः इतिवदन्कृष्णोमांपुष्णातुपोषयतु ॥ ४८ ॥ ततइति । ततोवस्त्रयाचनानंतरंसमानीअभिमानीकृष्णः चंचललोचनांतालोलकटाक्षांतागोपकुमारीःक्रमेणपरिपाट्या अंकुरितांगजाताःसंजाताभिलाषाः अनेनासांकामजननीत्वंद्योत्यते । निरीक्ष्यदृष्ट्वास्वसंग

योग्याःस्वपरिग्रहार्हाः कामममातुःकृष्णपत्नीत्वादितिभावः । तर्कयन्निवजानन्निवमुदासंतोषेणतद्वसनानितासांवस्त्राणिददौदत्तवान् ॥ ४९ ॥ ततइति । ततो नंतरंकदाचनकदाचिद्वनेवृंदावनेसंचरणात्पर्यटनादतिश्रांताअत्यंतखिन्नागोपाअन्नार्थिनोन्नकांक्षिणःसंतोद्विजैर्विप्रैः दंतविप्रांडजाद्विजाइत्यमरः । पूर्णांजुष्टांय ज्ञसभांयज्ञवाटिकांययुः ॥ ५० ॥ क्षुत्पीडितेति । सापरमानुगमंडलीकृष्णभृत्यवर्गःक्षुत्पीडितापिक्षुधार्दितापिकृष्णायभोज्यंदेयमितिविप्रचयंब्राह्मणसमूहं ययाचेयाचितवती । तच्चस्वस्याःक्षुद्बाधनेकृष्णायान्नाभ्यर्थनंयुक्तंहि निरागाःस्वोदरभरणेअनास्थावंतः । मुररिपोरनुगामुरारिभृत्याःकदाचिदपिस्वकृतेस्वार्थं यत्नंनप्रकुर्युः । हरिभक्ताहिनस्वोदरभरणेयत्नंकुर्वंतिकिंतुविष्णुपूजार्थमेवयतंतइतिभावः ॥५१॥ स्वीयैरिति । तैर्गोपैरभ्यर्थितास्तेविप्राःस्वीयक्रियाभंगभयेनस्वी

ततो वने संचरणादतिश्रांताः कदाचन ॥ अन्नार्थिनो ययुर्गोपाः पूर्णां यज्ञसभां द्विजैः ॥ ५० ॥ क्षुत्पी
डितापि परमानुगमंडली सा कृष्णाय भोज्यमिति विप्रचयं ययाचे ॥ युक्तं हि तन्मुररिपोरनुगा विरागा
यत्नं कदाचिदपि न स्वकृते प्रकुर्युः ॥५१॥ स्वीयक्रियाभंगभयेन विप्राः श्रेयस्कृते ते न ददुः किलान्नम् ॥
भृत्यैः सहाश्नाति मखेस्मदीये इत्थं विदित्वेति मम प्रतर्कः ॥ ५२ ॥ विप्रांगनाः स्वप्रभवे प्रहृष्टाः प्रत्य
र्प्य सर्पिर्दधिपायसादि ॥ मुक्तिं करस्थां किल ता वितेनुः पुंस्त्वेन किं पूरुषमौलिभाजाम् ॥ ५३ ॥

यकर्मवैगुण्यभियाश्रेयस्कृतेमोक्षप्रदात्रेकृष्णायान्नंनददुःकिल किलेत्यस्वारस्ये । कृष्णोस्मदीयेअस्मत्संबंधिनिमखेयज्ञे यज्ञःसवोध्वरोयागःसप्ततंतुर्मखःक्रतुरि त्यमरः । भृत्यैर्ब्रह्मादिभिःसहअश्नातिभुनक्तिइत्यर्थंकृष्णायान्नार्थिनोगोपबालकाःकिमपिनजानंतीतिविदित्वेवान्नंनददुरितिममप्रतर्कः । कर्मवैगुण्यभियानददुरि तिन । किंतुमखेभृत्यैःसहअश्नातिनस्वश्नंतंक्षुत्पीडाभवतीतिभावेनान्नंनददुरित्यर्थः । स्वपत्नीभिरन्नदानानंतरंपश्चात्तापस्यज्ञातत्वाद्ब्राह्मणानांशुभजीवित्वमेवमु त्प्रेक्षितुःकवेर्हृदयम् ॥ ५२ ॥ विप्रांगनाइति । विप्रांगनाब्राह्मणपत्न्यःप्रहृष्टाःकृष्णायान्नंदेयमितिवाक्यंश्रुत्वासंतुष्टाःसत्यःस्वप्रभवेस्वनाथायकृष्णाय नाथःप रिवृढःप्रभुरितिधनंजयः । सर्पिर्दधिपायसादिघृतदधिपरमान्नंभक्ष्यादिसमर्प्यमुक्तिंमोक्षंकरस्थांहस्तगतांवितेनुःकृतवत्यःकिल । ननुस्त्रीणांकथंमोक्षइत्यतआह ।

पुंस्त्वेनेति । पूरुषमौलिभाजांपुरुषोत्तमभजकानांपुंस्त्वेनपुरुषत्वेनकिंप्रयोजनं । मुक्तौपुंस्त्वंनप्रयोजकंहरिभक्तिरेवप्रयोजिकेत्यर्थः ॥ ५३ ॥ सइति । विभुःसमर्थोतएवगतभीर्निर्गतेंद्रभयोगिरींद्रेपर्वतश्रेष्ठेवपुर्यस्यसतथोक्तः अप्रतीतोदृश्यःसकृष्णोविप्रपत्न्यर्पितंयद्भक्तमन्नंतस्यभुक्त्याभोजनेनसमासक्तमनाःसं सक्तमनाइवप्राकृतान्नभोजनस्यकदाप्यकृतत्वेनापूर्वरसविशेषेसंलग्नचित्तइवेत्यर्थः । स्वकीयैर्गोपैरर्पितमैंद्रंइंद्रायदीयमानंभोज्यमभुंक्त । इंद्रयागंत्याजयित्वा तदर्थंकल्पितंबलिंस्वयंजग्राहेत्यर्थः ॥ ५४ ॥ प्रदक्षिणीकृत्येति । शतंमन्यवःक्रतवोयस्यसशतमन्युरिंद्रस्तस्यमन्युंकोपंविवर्द्धयतीतिशतमन्युमन्युविवर्द्धनः मन्युःक्रोधेक्रतौदैन्येइतिरत्नमाला । असौकृष्णोगिरिंगोवर्द्धनपर्वतंप्रदक्षिणीकृत्यपर्वतरूपधारीसन्स्ववर्गैरालीयैर्मुदासंतोषेणार्पितंबलिंपूजोपहारमुररीचका

स विप्रपत्न्यर्पितभक्तभुक्त्या विभुः समासक्तमना इवैंद्रम् ॥ अभुङ्क्त भोज्यं गतभीर्गिरींद्रवपुः स्वकीयार्पितमप्रतीतः ॥ ५४ ॥ प्रदक्षिणीकृत्य गिरिं स्ववर्गैर्मुदार्पितं पर्वतवेषधारी ॥ बलिं च कृष्णः शतमन्युमन्युविवर्द्धनोसावुररीचकार ॥ ५५ ॥ सहस्रनेत्रोपि स कृष्णसत्वमनागविज्ञाय दिदेश मेघान् ॥ प्रवर्षणार्थं निगमैकवेद्ये किमक्षिबाहुल्यमुपैति कृत्यम् ॥ ५६ ॥ शतक्रतौ वर्षति वासुदेवो गिरिं समुद्धृत्य बुभूव तूष्णीम् ॥ जिहीर्षुभिः स्वासमशत्रुशौर्यं तदाद्यवैर्युद्धरणं हि कार्यम् ॥ ५७ ॥

र अंगीकृतवान् । उपेंद्ररूपेणास्मत्पक्षपातीकृष्णः । बलिःपूजोपहारेचकरेदैत्यांतरेपिचेत्यभिधानात् । इदानीमस्मद्विरोधिबल्याख्यदैत्यंपर्वतंचांगीकरोतीतिशतमन्योःकोपाभिवृद्धिजननायतावंगीचकारेतिध्वनितोर्थः ॥ ५५ ॥ सहस्रनेत्रइति । सक्रुद्धइंद्रःसहस्रंनेत्राणियस्यसतथाविदर्शनेबहुसाधनवानपीत्यर्थः । कृष्णस्यसत्वंसामर्थ्यमनाकूस्वल्पमविज्ञायदृष्ट्वाप्रवर्षणार्थंप्रकृष्टवृष्ट्यर्थंमेघान्दिदेश आज्ञापयामास । तथाहिनिगमैकवेद्येवेदैकवेद्येकृष्णेऽक्षिबाहुल्यंनेत्रबहुत्वंकृत्यंप्रयोजनंउपैतिकिं नोपैतीत्यर्थः नेंद्रियाणिनानुमानंवेदाह्येवैनंवेदयंतीतिश्रुतेर्लोचनाविषयेवस्तुनिलोचनबाहुल्यमप्रयोजकमितिभावः ॥ ५६ ॥ शतक्रताविति । वासुदेवःकृष्णःशतक्रतौइंद्रेवर्षतिसतिगिरिंगोवर्द्धनंसमुद्धृत्यतूष्णींबभूव । एतद्युक्तमित्याह । जिहीर्षुभिरिति । स्वासमशत्रुशौर्यंस्वासदृशवैरि

सामर्थ्यंजिहीर्षुभिरपहर्तुमिच्छुभिःपुरुषैस्तदायवैर्युद्धरणंतस्यशत्रोरायःप्राथमिकोयोवैरीतस्योद्धरणंधनादिदानेनोत्थापनंकार्यंहिकर्तव्यंहि । नह्यल्पशत्रुर्महाशूरेणयातव्यइतिकृष्णस्येंद्रशत्रुंपर्वतमुद्धृत्यतूष्णींभावोयुक्तएवेत्यर्थः ॥ ५७ ॥ मयीति । सकृष्णईश्वरेसमर्थेमयिभूभृतिभूधरेजागरूकेसतिजागर्तिसतिबुद्धिशून्योविवेकरहितोगोवर्द्धनपर्वतःस्वयंचभूभृत्किल किलेत्यस्वारस्ये। यदित्वमपिभूभृत्स्यास्तर्हित्वदुन्मूलनेभूमेःपातःस्यादित्यमर्षादिवकोपादिवभूधरेंद्रंपर्वतश्रेष्ठं

मयीश्वरे भूभृति जागरूके स्वयं च भूभृत्किल बुद्धिशून्यः ॥ स इत्यमर्षादिव भूधरेंद्रं करेण भूमेरुद्वीभिदत्तम् ॥ ५८ ॥ रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायिनि ॥ संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातः सुरमंडलीषु महितः सर्गो मुदां पंचमः ॥ ५९ ॥ इति श्रीरुक्मिणीशविजये महाकाव्ये पंचमः सर्गः ॥ ५ ॥

गोवर्द्धनंकरेणहस्तेनभूमेःसकाशादुद्वीभिदत्भेदयामास ॥ ५८ ॥ रोम्णामिति । व्याख्यातमेतत् ॥ ५९ ॥ इतिश्रीवादिराजपूज्यचरणविरचितरुक्मिणीशविजयटीकायांगुरुभावप्रकाशिकायांपंचमःसर्गः ॥ ५ ॥ ॥ ॐ ॥ ॥ ॥ ॐ ॥ ॥ ॐ ॥ ॥ ॐ ॥

## ॥ अथ श्रीरुक्मिणीशविजये षष्ठसर्गप्रारंभः ॥

श्रीगुरुराजायनमः ॐ खर्वीकृतसुपर्वेशगर्वसर्वस्वपावकः । उर्वीतापहरःकृष्णवार्वाहःस्यान्मुदेमम ॥ १ ॥ महेंद्रेति । मनुजागोपाः महेंद्रेणदेवेंद्रेण विज्ञप्तानांप्रे रितानांघनानांमेघानामालिभिःसमूहैर्मुक्तपयसोमुक्तजलस्यप्रवाहेणावृतआच्छन्नोभिन्नभागउन्मीलितप्रदेशोयस्यतं मुकुंदेनहस्तेउद्धृतमुन्मूल्यधृतमपितम द्रिराजंगोवर्धनमनुद्धृतमनुन्मूलितं व्यजानन्विदुः । वृष्टिबाहुल्यादविच्छिन्नपयःप्रवाहैःखंडद्वयांतरस्याच्छादितत्वादितिभावः । भ्रांतिरलंकारः भ्रांति र्विपर्ययज्ञानमित्युक्तत्वात् ॥ १ ॥ वर्षास्विति । महीध्रःपर्वतस्तदावर्षाकाले वर्षासुवर्षाकालेषु स्त्रियांप्रावृट्स्त्रियांभूम्निवर्षाअथेत्यमरः । वर्षसहतांवृष्टिसह तां । वृष्टिर्वर्षमित्यमरः अधिगम्यप्राप्य वार्षुजलेषु । वार्वारिसलिलंकमलंजलमित्यमरः । तपस्ततं कृतपदस्यकृतस्थानस्यअन्यजन्मनिजन्मांतरेशर्मसु खंसिसाधयिषोःसाधयितुमिच्छोर्हृन्मध्यलब्धपरमस्यहृदयमध्यगतपरमपुरुषस्यपरमात्मध्यानयुक्तस्येत्यर्थः । एतादृशस्यकस्यचिदृषेरुपमायाःसादृश्य

महेंद्रविज्ञप्तघनालिमुक्तपयःप्रवाहावृत्तभिन्नभागम् ॥ मुकुंदहस्तोद्धृतमद्रिराजमनुद्धृतं तं मनुजा व्यजानन् ॥ १ ॥
वर्षासु वर्षसहतामधिगम्य वार्षु तप्तं तपः कृतपदस्य पदं प्रपेदे ॥ शर्मान्यजन्मनि सिसाधयिषोर्महीध्रो हृन्मध्य
लब्धपरमस्य तदोपमायाः ॥ २ ॥ अंतःकृपाविपुलधारविलोचनश्रीकांताख्यमेघविभ्रवेक्षणलोलनेत्रैः ॥ संतोष
हेतुषु गुहासु गतैः स सत्वैः क्रांतो बहिश्च घनदर्शिभिरद्रिरासीत् ॥ ३ ॥ सुवर्णशृंगैः कलशोपमानैर्मृगादिभिः
कृत्रिमसंमितैश्च ॥ गुहोल्लसद्वारगणैः समंताद्वतो बहिर्गोपुरतीव विष्णोः ॥ ४ ॥

॥ १ ॥ स्यपदंस्थानंप्रपेदे । जलमध्यस्थितत्वादंतर्गतकृष्णत्वाच्चेतिभावः । उपमालंकारः ॥ २ ॥ अंतरिति । सोद्रिर्गोवर्धनपर्वतः कृपाविपुलधारेलोचनेयस्यश्री कांताख्यमेघस्यकृष्णाख्यमेघस्यविभ्रवेक्षणैःसंपद्दर्शनैर्लोलानिसतृष्णानिनेत्राणियेषांतैःसत्वैर्गोगोपादिप्राणिभिरंतःक्रांतआक्रांतोबहिश्चघनदर्शिभिर्मेघदर्शि भिःसंतोषहेतुषुवृष्टिभयाभावात्सुखकारणीभूतासुगुहासुगतैःस्थितैःसत्वैर्मृगादिभिःक्रांतआसीत् । पर्वतांतर्बहिःस्थितानामुभयेषांधाराधारेक्षणंतुल्यमासीदि तिभावः ॥ ३ ॥ सुवर्णशृंगैरिति । कलशाएवउपमानंयेषांतानितैः सुवर्णशृंगैर्हेमशिखरैः कूटोस्त्रीशिखरंशृंगमित्यमरः । कृत्रिमसंमितैःकृत्रिमसारंगनिभैःशी

तभयान्निश्चलांगत्वेनकृत्रिमपुत्तिकासदृशैर्मृगादिभिःसमंताच्चतुर्दिक्षु बहिर्गुहोल्लसद्द्वारगणैर्गुहाख्यशोभमानद्वारसमूहैश्च वृतोयुक्तोगिरिःपर्वतः विष्णोःस्वां तस्थितस्यकृष्णस्य गोपुरतीव । उपमानादाचारेइतिगोपुरशब्दात्क्विप् सनाद्यंताधातवइतिधातुसंज्ञायांतिबादयः । प्रासादयतीव । प्रासादविशेषवद्भातीत्यर्थः । गोपुरस्यापिसुवर्णकलशोपेतत्वात्चित्रलिखितमृगादित्वाच्चतुर्दिक्षुद्वारसमेतत्वाच्चेतिभावः ॥ ४ ॥ बभाविति । समुत्तुंगनगंअत्युच्छ्रितपर्वतं दधानः सकृष्णोभाविभविष्यन्मल्लेंद्रस्यमल्लश्रेष्ठस्यचाणूरस्यजयस्तस्योपयोगिउपयुक्तंतदीयविद्यायामल्लेंद्रसंबंधिविद्यायाःपुंवतत्कर्मधारयेत्यादिनापुंवद्भावः । अभ्यसनंअभ्यासं विधातुंमल्लविद्याभ्यासंकर्तुं अभ्रलग्नंगगनचुंबि शिलोच्चयंशिलासमूहं बिभ्रदिवबभौ । मल्लाहिस्वविद्याभ्याससमयेशिलाभारंहस्तेनोद्धृत्य इतस्ततश्चालयंतीतिभावः ॥ ५ ॥ कृष्णइति । कृष्णेनधृतः सुराणांदेवानांविस्मयमाश्चर्यंकरोतीतितथोक्तः विस्तृतस्यपुष्करस्योदकस्यमध्यंगतः कबंधमु

**बभौ समुत्तुंगनगं दधानः स भाविमल्लेंद्रजयोपयोगि ॥ तदीयविद्याभ्यसनं विधातुं शिलोच्चयं बिभ्रदिवाभ्रलग्नम् ॥५॥ कृष्णधृतः सुरविस्मयकारी विस्तृतपुष्करमध्यगतार्द्रः ॥ सिंधुकबंधसमुद्धृतभास्वन्मंदरकांतिमचूचुरदद्रिः ॥ ६ ॥ अनुचक्रेंभसां चक्रे लसता तेन भूभृता ॥ तितीर्षोर्व्रजवर्गस्य शमितोपप्लवप्लवः ॥ ७ ॥ खगान्स्वपृष्ठेर्द्रुमकोटरेषु मृगान्जुगोप स्वगुहागृहेषु ॥ मुनीन्घनात्युच्छ्रितमेखलासु विपत्सु कः स्वीयमुपेक्षतेऽस्मः ॥ ८ ॥**

दकंपाथःपुष्करंसर्वतोमुखमित्यमरः । अतएवार्द्रःक्लिन्नः । अद्रिःसिंधोःसमुद्रस्यकबंधादुदकात्समुद्धृतस्यभास्वन्मंदरस्यलसन्मंदरपर्वतस्यकांतिंशोभामचूचुरत् चोरितवान् । मंदरोपिकृष्णेनकूर्मरूपेणनारायणेनधृतः स्पष्टमन्यत् । पूर्णोपमा । दोधकवृत्तं । दोधकवृत्तमिदंभभभाद्गौ ॥ ६ ॥ अनुचक्रइति । अंभसांजलानां चक्रेसमूहे लसताप्रकाशमानेनभूभृतामहीध्रेणतितीर्षोस्तर्तुमिच्छोर्वृष्टिजन्यभयाब्धिमितिशेषः । व्रजवर्गस्यगोष्ठसमूहस्यशमितोनाशितउपप्लवोबाधायेनस तथोक्तःसप्लवउडुपं उडुपंतुप्लवःकोलःस्रोतोंबुसरणंस्वतइत्यमरः । कर्मणिलिट् । अनुचक्रेऽनुकृतः । उपमालंकारः ॥ ७ ॥ खगानिति । सभूधरः पृष्ठेखगान्पक्षिणः द्रुमकोटरेषुमृगान्कृष्णसारादीन्स्वगुहागृहेषुस्वगुहाख्यालयेषु मुनींस्तपस्तप्तुंसमागतानृषीन्घनात्युच्छ्रितमेखलासुमेघमंडलादत्युन्नताधित्यकासु

निधायदृष्टेःसकाशाज्जुगोपररक्ष । युक्तमेतदित्याह विपत्स्विति । विपत्सुस्वीयंस्वाश्रितंकोवाग्न्यआर्यउपेक्षतेस्वाश्रितपरिपालनमग्र्याणांसहजमित्यर्थः ॥८॥ प्रसूनेति । घनवर्षपातेननिबिडदृष्टिपातेननिपातितैःप्रसूनकोशैःकुसुमकुड्मलैः कोशोऽस्त्रीकुड्मले दिव्येशास्त्रार्थौघेगृहेतथेतियादवः । अंकितंभूषितंसर्वगात्रंसर्वावयवोयस्यसतथोक्तः अद्रिःपर्वतोमुकुंदस्यकृष्णस्यहस्तांबुजसंगेनकरकमलसंबंधेनजातंयत्सौख्यंसुखंतेन प्रहृष्टाउद्गतारोमालीरोमराजिर्यस्यसइवास्ते ॥९॥ सइति । सभूधरोगोवर्धनःसाशनिवर्षपातेनवज्रनिर्घोषसहितदृष्टिपातेनसमाहतोपिपीडितोपिअण्वपिकिंचिदपिनोचकंपेकंपंनप्राप । तथाहियुक्तं गोब्राह्मणरक्षकस्यकृष्णस्यदोर्दंडेनधृतस्यास्यपर्वतस्यकंपःक्व गोविप्रपूजकस्यहरिभक्तस्यकिमपिभयंनभवतीतिभावः ॥ १० ॥ पयःश्रितेति । पयःश्रितेनस्वप्र

प्रसूनकोशैर्घनवर्षपातनिपातितैरंकितसर्वगात्रः ॥ मुकुंदहस्तांबुजसंगसौख्यप्रहृष्टरोमालिरिवाद्रिरास्ते ॥ ९ ॥ स भूधरः साशनिवर्षपातसमाहतोप्यण्वपि नो चकंपे ॥ तथा हि गोब्राह्मणरक्षकस्य क्व कृष्णदोर्दंडधृतस्य कंपः ॥ १० ॥ पयःश्रितस्वप्रतिबिंबलोलं पतत्प्रसूनांचितशृंगजालम् ॥ स्वकुक्षिमध्यार्पितनंदबालं जनोद्भुतं संपुटमाशशंके ॥ ११ ॥ त्रिविष्टपाभ्रप्रतिवेषधारी स पर्वतः स्फाटिकतुंगशृंगे ॥ हरेर्निदेशादपराधिशक्रघनालयौ तौ ग्रसतीव लोकौ ॥ १२ ॥ ॥ ॥ ॥

तिबिंबेनलोलंमनोहरं संपुटत्वोपपादनायेदं । प्रतिफलनस्यवैपरीत्येनजायमानत्वात्प्रतिबिंबत्वंतस्यसंपुटपूर्वार्धता उपरिस्थितबिंबभूतस्यपर्वतस्योत्तरार्धतेति संपुटत्वमुपपद्यतइतिभावः । दृष्टिपातवशात्पतंतिप्रसूनानितैरंचितंपूजितंशृंगजालंशिखरसमूहोयस्यतं स्वकुक्षिमध्येऽर्पितोनंदबालःकृष्णोयेनतं जनोलोकोऽद्भुतमाश्चर्यंसंपुटंदेवस्थापनयोग्यकरंडकविशेषमाशशंकेअतर्कयत् ॥ ११ ॥ त्रिविष्टपेति । स्फाटिकतुंगशृंगेस्फटिकमयोच्चशिखरे त्रिविष्टपस्य स्वर्गस्याभ्रस्याकाशस्यप्रतिरूपंप्रतिबिंबंधरतीतित्रिविष्टपाभ्रप्रतिरूपधारी सपर्वतः हरेःकृष्णस्यनिदेशादनुशासनादपराधिनोःशक्रघनयोरिंद्रमेघयोरालया

वाश्रयौतौत्रिविष्टपाभाख्यौलोकौयसतीवकवलीकरोतीव ॥ १२ ॥ सइति । सश्रीपतिःकृष्णः पर्यटतांकुंजराणांपुंजस्यशोभाकांतिर्यस्यतं । अनेनवृष्ट्यु परमःसूच्यते । धरंपर्वतं यदोद्दधारहस्तेनोद्धृतवान्तदातस्मिन्कालेकवयः शिशोर्बालस्यकरे हस्तिसहस्रंगजसहस्रमस्तितिष्ठतीतिसमस्यांपरिपूरयंति । कवीनांशिशोःकरेहस्तिसहस्रमस्तीतिविषमसमस्यापूरणस्यावकाशोजातइत्यर्थः ॥ १३ ॥ सइति । सोद्रिराजःपर्वतश्रेष्ठोगोवर्धनोभासुरेमनोहरेश्रीशस्यकृष्ण स्यकपोलेगंडस्थलेलग्नःसंबद्धःसचासौनखोल्लसद्रत्नकरश्चतस्याग्रेसंतिष्ठतीतितथोक्तः। सन्नखाख्योल्लसद्रत्नकराग्रसंस्थइत्यर्थः । कूर्मस्थितस्यनागराजस्यशे षस्यफणस्थफणाश्रितायापृथ्वीतस्याःश्रियंबिभर्ति । पर्वताधस्ताद्धरणसमयेफणसदृशहस्तांगुलियुक्तबाहुमूलस्यकूर्मसदृशकपोलसंगतत्वात्बाहोःकूर्माश्रि

स पर्यटत्कुंजरपुंजशोभं धरं यदा श्रीपतिरुद्दधार॥ तदा समस्यां परिपूरयंति शिशोः करे हस्तिसहस्रमस्ति॥१३॥ स भासुरश्रीशकपोललग्ननखोल्लसद्रत्नकराग्रसंस्थः॥ बिभर्ति कूर्माश्रितनागराजफणस्थपृथ्वीश्रियमद्रिराजः ॥ १४ ॥ उद्गच्छदूष्मावलिधूमलिंगमद्रिं द्रवद्धातुरसार्द्रशृंगम्॥ विष्वक्कपतद्रत्नचयस्फुलिंगमग्न्यस्त्रमीशाचरितं प्रतर्के॥१५॥ अद्रिस्तं घनमिंद्रनीलधरणीकांत्या शिखंडश्रिया तस्याखंडलचापमंबुनिचयं मुक्ताफलानां रुचा ॥ सौवर्णस्थल शोभया च तडितं पंचास्यनादेन तन्नादं साधु जिगाय किन्न सुकरं नित्यं क्षमाधारिणः ॥ १६ ॥ ॥

तदोषोपमा ॥१४॥ उद्गच्छदिति । उद्गच्छदूष्मणआविर्भवद्बाष्पस्य ग्रीष्मोष्मबाष्पाऊष्माणइतिरत्नमाला । आवलिरेवराजिरेवधूमःसएवलिंगंचिह्नंयस्यतम ग्नेर्धूमध्वजत्वादितिभावः । द्रवद्धातूनांनिष्पंदद्गैरिकादीनांरसेन धातुःस्वर्णेकफादौचगैरिकाश्मविकारयोरितिसज्जनः । आर्द्राणिक्लिन्नानिशृंगाणिसानूनियस्य तं । शृंगंप्राधान्यसान्वोश्चेत्यमरः । विष्वक्समंतात्पततांरत्नानांचयःसमूहएवस्फुलिंगोग्निकणोयस्यतमद्रिंपर्वतमीशेनकृष्णेनाचरितंवृष्टिशांत्यैप्रयुक्तमग्न्यस्त्र मग्निदेवताकंबाणंप्रतर्के । उत्प्रेक्षालंकारः। बाष्पादीनांधूमादिरूपवर्णात्सजीवकेनरूपकेणसंकीर्त्यते । अनेनवृष्टिःसर्वथागतेतिध्वन्यते ॥ १५ ॥ अद्रिरिति । अद्रिःपर्वतः इंद्रनीलधरणीकांत्या तंघनं शिखंडश्रियापिच्छकांत्या तस्यमेघस्य आखंडलचापंइंद्रचापं मुक्ताफलानांरुचाहद्याक्षालितत्वादुद्गच्छन्मौक्ति

पंचास्यनादेनसिंहध्वनिना सिंहोमृगेंद्र.
ककांत्या अंबुनिचयंजलबिंदुसमूहं सौवर्णस्थलशोभयासुवर्णभूप्रदेशकांत्या अस्यमेघस्य तडितंसौदामिनीं
पंचास्यइत्यमरः। तन्नादंमेघस्यध्वनिंचसाधुजिगायअजयत् । वृष्टिःसर्वथागतेतिभावः । तद्युक्तमित्याह नित्यमनवरतं क्षमाधारिणोभूधरस्यतितिक्षावत
श्च। क्षमाक्षोण्यांतितिक्षायामितिभास्करः। किंनसुकरंक्षमयाकिंनसाध्यतइतिवचनात्सर्वंसुकरमित्यर्थः। इंद्रनीलधरणीकांत्येत्यादिनाउपमायाजिगायेति
क्रियापदस्यप्रत्येकंसंबंधात्तद्दीपकस्यक्षमाधारिणइतिक्लिष्टस्यकिंनसुकरमित्यर्थांतरन्यासस्यचगम्यमानत्वादेतेषांसंकरः ॥ १६ ॥ निर्गत्येति। हेगोपावार्मु
चांजलदानांयआटोपआडंबरोअद्याप्यधुनाप्यस्तिकिंबहिर्गत्वापश्यतेतिकृष्णेनोक्तःकोपिकश्चनगोपस्तद्विदित्वाबहिर्निर्गत्यतन्मेघवृत्तांतंज्ञात्वापुनरागत्यमा
धवंकृष्णंवक्तिवदति ॥ १७ ॥ धारेति। हेयदुपतेकृष्णपयोमुचांमेघानांधाराआसारोनैवनास्त्येव । अन्याधाराअस्तीत्याह । स्वानामस्मज्जातीनां स्वमज्ञाति

निर्गत्य पश्यताटोपः किमद्याप्यस्ति वार्मुचाम् ॥ इत्युक्तः कोपि गोपस्तद्विदित्वा वक्ति माधवम् ॥ १७॥
धारा नैव पयोमुचां यदुपते प्रेमाश्रुधारापरं स्वानां नापि च गर्जितं स्तुतिकृतां सिद्धेश्वराणां ध्वनिः ॥
विद्युन्नामरनर्तकी करचयालंकारकांतिः प्रभो नो वायुः सुरवृष्टपुष्पसहगानल्पालिपक्षैर्मरुत् ॥ १८ ॥

वृष्टिर्गतेतितदुद्वेजितानांस्वीयानामानंदोजातइतिभावः।
धनाख्यायामितिज्ञातिवाचिनःस्वशब्दस्यसर्वनामतानिषेधात्। प्रेमाश्रुधारास्नेहजानंदाश्रुधारास्ति
गर्जितंमेघनिर्घोषोनास्ति किंतुस्तुतिकृतांस्तोत्रंकुर्वतांसिद्धेश्वराणांदेवश्रेष्ठानांध्वनिरस्ति। पर्वतधारणाद्यद्भुतकर्मदृष्ट्वासिद्धेश्वरास्तुवंतीत्यर्थः। विद्युत्सौदामिनी
न किंत्वमरनर्तकीनांअप्सरसांकरचयेहस्तसमूहेयोलंकारोविभूषणंतस्यकांतिरस्ति। नृत्यसमयेइतस्ततोहस्तविक्षेपादलंकारकांतेर्विद्युद्वच्चलनादितिभावः। भव
न्महिमानंदृष्ट्वाप्सरसोनृत्यंतीत्यर्थः । वायुर्वातोपिनोनास्ति वनवातोगतोन्योवातोस्तीत्याह । सुरैर्वृष्टानांपुष्पाणांसहगानामनुचराणां व्यधिकरणेषष्ठी। अन
ल्पालीनांबहुभ्रमराणांपक्षैःपक्षपातैर्जातोमरुद्वायुरस्ति। देवैर्बहुतरपुष्पवृष्टिःकृतेत्यर्थः। मेघाटोपःसर्वोपिगतःस्वकीयानांदेवादीनांसंतोषोजातइतिइममर्थंगर्भीक
रेणवदतोगोपस्यप्रागल्भ्यातिशयःकथंकथनीयइतिभावः। विनिमयालंकारः। सदृशवस्तुनोस्तुल्यायव्ययत्वेविनिमयइत्युक्तेः ॥ १८ ॥

नीलमिति । हेयदुपतेनभोगगनंनीलंनैव । नष्टमेघत्वान्नभसिनीलिमानास्तिअन्यत्रास्तीत्याह । सुलज्जितस्यपराभवेनसम्यग्लज्जायुक्तस्यशच्याइंद्राण्याभर्तुरिंद्रस्यमुखेवक्त्रेनीलिमास्ति । शचीभर्तुरित्यनेनस्त्रीसमक्षजातःपराभवोतिलज्जाकरइतिध्वन्यते । किंचमेघाःक्वापिकुत्रापिनसंतिकिंतुदिविजानांदेवानांभ्राजद्विमानान्येवलसत्पुष्पकाण्येवांबुदामेघाःसंति । मेघानसंतिनभस्तुइंद्रजयादिमाहात्म्यंदृष्ट्वाकृष्णदर्शनायागतानांपुष्पकैःसंकुलंदृश्यतइत्यर्थः । अपिचदिशितामिस्रंमेघावरणजन्यंतमोनास्ति हिशब्दोवाक्यालंकारे । अथतमोन्यदस्तीत्याह । ईदृशमपिमहापर्वतोद्धरणेंद्रजयसिद्धस्तुत्यत्वगोकुलरक्षणाद्यमानुषगुणयुक्तमपित्वांमानुषंमनुष्यंमन्वतांजानतांमूर्खाणांचित्तेषुहृदयेषुतमोऽज्ञानमस्ति । अपिचनिजजनेस्वकीयवर्गेवेपथुःशीतजन्यकंपोनास्तिपरंतुभीतेंद्रगात्रे कृष्णः

नीलं नैव नभः सुलज्जितशचीभर्तुर्मुखे नीलिमा मेघाः क्वापि न संति संति दिविजभ्राजद्विमानांबुदाः ॥
तामिस्रं न हि दिश्यथेदृशमपि त्वां मानुषं मन्वतां चित्तेष्वस्ति न वेपथुर्निजजने भीतेंद्रगात्रे परम् ॥१९॥
ततः परीतः स्वैर्गोपैर्गोपीभिर्गोधनैरपि ॥ प्रतस्थे प्रयतं गोष्ठं स्तूयमानः सुरैर्नरैः ॥ २० ॥ नाथापराधकृ
दुपेत्य सुलज्जितोथो शक्रोच्युतं रहसि रम्यतमं त्रिलोक्याम् ॥ मूर्ध्ना प्रणम्य सदयं सुधयाभ्यषिंचद्गो
विंदनाम च पठन्स्वकृताघशांत्यै ॥२१॥

कोपंकरिष्यतीतिभययुक्तेंद्रशरीरेवेपथुरस्ति इंद्रश्चकितोजातइतिभावः ॥ १९ ॥ ततइति । ततोदृष्टिशांत्यनंतरंकृष्णःस्वैःस्वकीयैर्गोपैर्गोपीभिर्गोरूपधरैरपि अपिशब्दःसमुच्चये । परीतःसन्सुरैर्देवैरपिस्तूयमानःसन्प्रयतंकृष्णपदस्पर्शात्पवित्रंगोष्ठंप्रतस्थे ॥ २० ॥ नाथेति । अथोकृष्णगोकुलप्रवेशानंतरंनाथस्यस्वामिनःकृष्णस्यापराधंकरोतीतिसतथोक्तः अतएवसुलज्जितःशक्रस्त्रयाणांलोकानांसमाहारस्त्रिलोकीतितद्धितार्थेत्यादिनासमासः संख्यापूर्वोद्विगुरितिद्विगुसंज्ञा अकारांतोत्तरपदद्विगुस्त्रियांभाष्यतइतिस्त्रीत्वं द्विगोरितिङीप् तस्यां रम्यतममतिसुंदरंसदयंदयासहितमच्युतंकृष्णंरहस्येकांतेउपेत्यस्वकृताघशांत्यैस्वाचरितस्वामिद्रोहलक्षणपापपरिहारायमूर्ध्नाप्रणम्यगोविंदनामचपठन् इंद्रेणगोविंदनामनदत्तंकिंत्वच्युतानंतगोविंदेतिनामत्रयपाठस्यप्रायश्चित्तविधिषुविहितत्वात्पूर्वंविद्यमानस्यैवगोविंदनाम्नःपाठएवकृतइ

तिभावः । अनेनकृष्णस्येंद्रेणनामदत्तमितिपुराणवचनस्यतात्पर्यमुक्तंभवति । सुधयाऽमृतेनाभ्यषिंचदभिषेकंकृतवान् प्रणामाभिषेकनामोच्चारणादीनांमहापापपरिहारहेतुत्वंविष्णुद्रोहस्यमहापातकत्वंचद्योत्यते॥२१॥बद्धेति । सलिलेश्वरस्यवरुणस्यानुगोभृत्यःअकालेद्वादश्यतिलंघनभयात्स्नानकालव्यतिरिक्तकाले वारिमध्यप्रविष्टंस्नातुंजलमध्यप्रविष्टंनंदंगोपंबद्ध्वानिनायकिल वरुणालयमितिशेषः । किलेत्यनेनकथायाःपौराणिकीत्वमभिप्रैति । सवरुणःस्वनाथस्यस्वस्वामिनःकृष्णस्यपितरंश्रुत्वासमन्युःकोपसहितःसन्नंदगोपस्यकृष्णपितृत्वमसहमानःसन्भृत्यच्छलेनभृत्यव्याजेनस्वयमेवामुंनंदंबबंधेतिमेममतुप्रतर्कऊहः ॥ २२ ॥ कृष्णोपीति । दृढभक्तिंवरुणस्यनिश्चलभक्तिंपितृत्वप्रथनामप्यसहमानत्वादित्यर्थः । वीक्ष्यतुष्टःसंतुष्टइवकृत्यच्छलेननंदानयनरूपकार्यव्याजेननिजदर्शनंस्वद

बद्धा निनाय किल नंदमकालवारिमध्यप्रविष्टमनुगः सलिलेश्वरस्य ॥ भृत्यच्छलेन स समन्युरमुं बबंध श्रुत्वा स्वनाथपितरं त्विति मे प्रतर्कः ॥ २२ ॥ कृष्णोपि वीक्ष्य दृढभक्तिमिव प्रतुष्टः कृत्यच्छलेन निजदर्शनमेव दित्सन् ॥ गत्वांबुराशिनिलयं जनकेन साकमभ्यर्चितः स्वभवनं पुनराजगाम ॥ २३ ॥ तप्तं हेमकृशानुसंगिगगने वातायने भाजने माहेंद्र्याः शुभकुंडलं रचयितुं देवैरुपायाद्दिशः ॥ संगृह्यांबुनि संनिवेशितमिवोत्तुंगस्फुलिंगावृतं तेजोराशिरिनो जगाम जलधिं रागांकितः पश्चिमम् ॥ २४ ॥ ॥

र्शनंदित्सन्दातुमिच्छन्देवोंबुराशिनिलयंसमुद्रगृहंगत्वावरुणेनाभ्यर्चितःपूजितःसन्जनकेननंदेनसाकंसार्द्धंस्वभवनंस्वगृहंपुनराजगाम ॥ २३ ॥इदानींकतिपयपद्यैः सूर्यास्तमयंवर्णयति । तप्तमिति । वातायनेवायुमार्गेगगनाख्येभाजनेपात्रेआकाशमूषायामित्यर्थः । कृशानोरग्नेःसंगिसंयोगि अग्निःसूर्यंप्रविशतीतिस्मार्त्तप्रसिद्धेः । अतएवतप्तंअतएवोत्तुंगस्फुलिंगैरुद्यच्छदर्चिर्भिरावृतंयुक्तंमाहेंद्र्यामहेंद्रसंबंधिन्यादिशःप्राचीदिगंगनायाइत्यर्थः । शुभकुंडलंशोभनताटंकंरचयितुंकर्तुंप्रा 
तःकुंडलाकारेणप्राच्यामुदेष्यमाणत्वादितिभावः । माहेंद्र्याइत्यनेनेंद्रइवइंद्रपत्न्यपिदेवैर्मान्येतिध्वन्यते । देवैर्ज्योतिश्चक्रस्यचाल्यमानत्वादमरैरुपायात्संगृह्याग्नितप्तस्यसाक्षाद्धस्तेनस्प्रष्टुमशक्यत्वादितिभावः अंबुनिजलेसंनिवेशितंनिक्षिप्तंहेमवत्सुवर्णइवतेजोराजिस्फुलिंगावृतत्वोपपादनायेदम् । रागेणरक्तिम्नांकितस्तप्त

त्वोपपादनायेदं। इनःसूर्यःपश्चिमंजलधिंसमुद्रंजगामप्राप । यथाभरणकर्तारःकारवोधमन्यावातसंचारयोग्यमूषायांसुवर्णंनिधायअनलसंगेनतप्तंकृत्वाअयोमयहस्तेनोद्धृत्यजलेप्रक्षिपंतितद्वदितिभावः। सूर्यास्तमयोजातइत्यर्थः। उपमामूलकोत्प्रेक्षालंकारः॥२४॥ करैरिति। विवस्वान्सूर्यःकरैःकिरणैः बलिहस्तांशवःकराइत्यमरः। गिरीन्द्रान्पर्वतश्रेष्ठान्परितःसमंताद्दधानोपिसायमर्ककिरणानांपर्वताग्रेनिपातनादितिभावः। अब्धौसमुद्रेपतितःकिल किलेत्याश्चर्ये। अनेककरैर्गिरींद्रानवलंब्यस्थितस्यापिपातइत्यत्रसरितांनदीनांशरीराणिशरीरभूतानिजलानिविशोषयतीतिसरिच्छरीरविशोषकस्तंसूर्यंतत्पतिःसरित्पतिःसमुद्रःस्वयमेवाग्रसीत् इतीत्थंममभाति अहमित्थंतर्कयामीत्यर्थः। उत्प्रेक्षालंकारः। स्त्रीविषयेपौरैरपकृतागूढमन्यवःपुरुषाःस्वानुकूलकालेबहुसाधनवंतमपिस्वविरोधिनंपातयंतीत्यलंकारेणवस्तुध्वनिः॥२५॥ सूर्यस्यपातमसहमानआह। त्यक्त्वेति। चक्रैश्चक्रवाकैरब्जैःकमलैर्मानिताःसत्कृताःकराःकिरणायस्यसतथोक्तः अन्यत्रचक्राब्जाभ्यांमानितावलंकृतौ

करैर्गिरींद्रान्परितो दधानोऽप्यसौ विवस्वान्पतितः किलाब्धौ ॥ ममेत्थमाभाति सरिच्छरीरविशोषकं तत्पतिरग्रसीत्तम् ॥ २५ ॥ त्यक्त्वा क्रमेण सहजातमपि स्वरागं चक्राब्जमानितकरः प्रततोर्ध्वपादः ॥ आश्रित्य विष्णुपदमुग्रतपोतपद्यस्तस्यैव धाम स जगाम कुतोस्य पातः ॥ २६ ॥

बाहूयस्यसतथोक्तः लवणांबुजयोरब्जंक्लीबेशंखेतुपुंसिवेतिभास्करः। चक्राभिमानितकरइतिपाठेचक्रैश्चक्रवाकैरभिमानिताबहुमानिताःकराःकिरणायस्य। तपस्विपक्षेचक्रेणसुदर्शनेनाभिमानितःकरोयस्य । ऊर्ध्वंगताःपादाःप्रतताविततऊर्ध्वपादायस्यसतथोक्तः अस्तमयसमयेकिरणानामूर्ध्वगमनादितिभावः। अन्यत्र प्रततौऊर्ध्वपादौऊर्ध्वमुखीकृतौपादौचरणौयस्यसतथोक्तः। पादोबुध्नेतुरीयांशेशैलप्रत्यंतपर्वते। चरणेकिरणेचार्थेतिरत्नमाला। मूर्धानमधरीकृत्यतपस्विभिस्तपश्चरणादितिभावः। यःसूर्यःसहजातमपिउदयकालीनतयासहजमपिस्वरागंक्रमेणत्यक्त्वा उदयकालीनार्कगतरागस्यापहारादितिभावः। अन्यत्र। सहजातमपिस्वाभाविकमपिदुस्त्यजमपीत्यर्थः रागंविषयतृष्णांक्रमेणाभ्यासपरिपाट्यात्यक्त्वातपस्विनोवैराग्यजननस्यावश्यकत्वादितिभावः। विष्णुपदमाकाशमाश्रित्य। अन्यत्र विष्णोःपदंश्रीचरणंआश्रित्योद्दिश्यविष्णुपदप्राप्त्यर्थमित्यर्थः। उग्रतपस्तीव्रसंतापं तपसंतापइतिधातोः अतपदकरोत्। अन्यत्रोग्रतपस्ती

व्रतपस्यामतपदचरत् सूर्यस्तस्यैवधामयमुद्दिश्यतपश्चकारतस्यैवविष्णोर्धामगृहभूतंजलधिंजगाम। विष्णोःसमुद्रशायित्वादिति अस्यविष्णुसालोक्यंगतस्यपातःकुतः। अनेनमुक्तस्यकदापिसंसारेप्रवेशोनास्तीतिध्वन्यते॥२६॥ तममिति। भुवितपस्विनिवहंततानचकार पृथिव्याजीवनंजलंच जीवितमितिध्वनिः। स्वकरैर्जहारअपहृतवान्। अहोस्वहस्तेनस्त्रीहननकरणमाश्चर्यमित्यर्थः। तथा यथापृथ्वीजीवनंजहारतथेत्यर्थः। उडुनिकरस्यनक्षत्रसमूहस्यलक्ष्मींकांतिंसंपत्तिमितिध्वनिः। वृथाजहार। तादृशस्यास्यभानोःपातमपि अपिशब्देनपातस्यगर्हितत्वंव्यज्यते। युक्तिसहंगर्हितमपिपातंयुक्तियुक्तंवदामः पापिनःपातोयुक्तएवेतिभावः। तममित्यादिपदार्थैःपातस्योपपादनायपदार्थहेतुककाव्यलिंगमलंकारः॥२७॥ सइति। द्युमणिःसूर्यःपाणौवज्रंयस्यसवज्रपाणिः प्रहरणार्थेभ्यश्चपरेनिष्ठासप्तम्यौभवतइतिवक्तव्यमितिपाणिशब्दस्यपरनिपातः। इंद्रस्तस्यदिशिप्राच्यांलब्धजन्मालब्धोदयोगगनस्याकाशस्यमध्येप्रवृद्धंवृद्धंगात्रंवपुर्यस्यसतथो

तमं तपस्विनिवहं भुवि यस्ततान पृथ्व्याश्च जीवनमसौ स्वकरैर्जहार॥ लक्ष्मीं तथोडुनिकरस्य वृथैव भानोस्तस्यास्य पातमपि युक्तिसहं वदामः॥२७॥ स लब्धजन्मा दिशि वज्रपाणेः प्रवृद्धगात्रो गगनस्य मध्ये॥ अगाद्विनाशं द्युमणिः प्रतीच्यां विधेर्निदेशो महताप्यलंघ्यः॥२८॥ रागं पयोधरतटे हरिदंगनानां रागी समर्प्य सविता समगादगांतम्॥ कूजद्विहंगमरवैरिव ता रुदंत्यो भेजुस्तमस्ततिमिवांतरिवोरुमूर्छाम्॥२९॥ क्तःसन्प्रतीच्यांदिशिविनाशंअस्तमयमगात् अगमत्। तेजस्विनःसूर्यस्यैकत्रोत्पत्तिःपरत्राभिवृद्धिरन्यत्रमृतिःकथमित्याशंक्यशिरोलिखितंकेनाप्यलंघ्यमित्याह विधेर्निदेशमिति। विधेर्ब्रह्मणोनिदेशःकुत्रचिद्भवितव्यंकुत्रचित्स्थातव्यंकुत्रचिन्मर्तव्यमितिललाटलिखितलक्षणःमहतापितेजस्विनाप्यलंघ्यः॥२८॥ रागमिति। रागीरक्तवान् अनुरागवानितिध्वनिः। सवितासूर्योहरिदंगनानांपयोधरतटेमेघप्रांते स्तनतटइतिध्वन्यते। रागंरक्तिमानंसायंमेघेषुरक्ततादर्शनादनुरागंचेतिध्वनिः। समर्प्यअगस्यमेरुपर्वतस्यांतमगात्अगमत्। यथाविदेशगमनोद्युक्तःकामुकःस्वानुरागंस्वकांताकुचमंडलेसमर्प्यतद्देवध्यात्वागच्छतितद्वदितिभावः। कूजद्विहंगमरवैरिवतारुदंत्यइतिव्यवस्थिताहरिदंगनाउरुमूर्छांनितांतमंतस्समस्ततिंअंधकारसमूहंभेजुः सायंदिशस्तमोव्याप्ताबभूवुरित्यर्थः। विप्रलंभशृंगारः। अयुक्तयोस्तरुणयोर्योनुरागःपरस्परं। दर्शन

स्यनखादीनामनवाप्तौप्रकृष्यते । सविप्रलंभोविज्ञेयइत्युक्तेः । अयंतुरागपयोधरशब्दयोश्लिष्टत्वात्तदुपजीवितेनोत्प्रेक्षालंकारेणलसध्वनिः ॥ २९ ॥ अंभो
धीति । सोर्कःसूर्यःसमुद्रस्यहृदिअंतःकृतंपदंस्थानंयेनतत् साधुसम्यक् धवलीकृतःशुभ्रीकृतस्तस्यसमुद्रस्यजलौघोजलप्रवाहोयेनतत् प्रतिरूपंस्वप्रतिबिं
बंसंदृश्यदृष्ट्वाममबहिरेवस्थानेकिंनिबंधनमितिविचार्यशांतःपुरुषःसर्वहृदयंगमतांसर्वलोकप्रियतामुपैतिहि। प्रतिबिंबस्यकांतिमत्वेप्यौष्ण्याभावादितिभावः।
इतिनिश्चित्यांतेऽस्तमयसमयेकौर्यंत्यक्त्वाशमंशांतिंसमधिगम्याब्धिंविवेश ॥ ३० ॥ मित्रइति । अंबुजातनिकरस्यकमलसमूहस्यनितांतमित्रेऽत्यंतसुहृदि अथ
मित्रंसखासुहृदित्यमरः । मित्रेद्युमणौ द्युमणिस्तरणिर्मित्रइत्यमरः । अस्तमस्तमयंसमीयुषिगच्छतिसतिशुद्धजलगस्यस्वच्छोदकस्थस्य चशब्दोप्यर्थे । उद

अंभोधिहृत्कृतपदं प्रतिरूपमर्कः संदृश्य साधुधवलीकृततज्जलौघम् ॥ शांतो हि सर्वहृदयंगमतामुपैतीत्यंते श
मं समधिगम्य विवेश सोऽब्धिम् ॥३०॥ मित्रेंबुजातनिकरस्य नितांतमित्रे त्वस्तं समीयुषि मुखं मुकुलीबभूव ॥
पद्मस्य शुद्धजलगस्य च मुद्रयंति नष्टाः प्रियाः खलु समृद्धियुजोपि वक्त्रम् ॥ ३१ ॥ आकंठोदकवासि हृद्गमधु
रुज्झंकाररम्योंकृति भ्राजत्कंटककंटकद्युति मुहुर्मंत्रार्थसंचिंतया ॥ ईषत्कंपितमूर्धशोभि नलिनं हंसौघसंशि
क्षितंस्वांतस्थापितधातृ साधु तपतीवाकांक्ष्य मित्रोदयम् ॥ ३२ ॥

कस्थस्यापीत्यर्थः । पद्मस्यमुखंमुकुलीबभूव । सूर्यास्तमयेसतिकमलानांमुकुलीभावोजातइत्यर्थः । अत्रार्थांतरंन्यस्यति । नष्टाःप्रियाःसखायःसमृद्धियु
जोपिसंपन्नस्यापिस्वीयस्यवक्त्रंमुखंमुद्रयंतिखलु । इष्टनाशकस्यमुखमुद्रणंजायतइत्यर्थः ॥ ३१ ॥ आकंठेति । आकंठंकंठपर्यंतंउदकेवसतीत्याकंठोदकवा
सि । तपस्व्यपिकंठदघ्नोदकेस्थित्वातपश्चरणात्तथाविधः । हृद्गस्यमुकुलीभावसमयेउदरगतस्यमधुकृतोमधुकरस्यझंकारएवरम्यारमणीयाॐकृतिरोंकारःप्रण
वोयस्यतत्तथोक्तं भ्राजंतोल... कंटकाएवकंटकारोमांचास्तेषांद्युतिःकांतिर्यस्यतत्तथोक्तं तपस्व्यपिध्यानजानंदेनपुलकांकितोभवति । मुहुः मंत्रार्थसंचिं
तयामंत्रार्थचिंतनेनईषत्कंपितेनईषच्चालितेनमूर्ध्नाशोभतइतितत्तथोक्तं । तपस्विनोपिस्वजप्यमंत्रार्थध्यानेनशिरःकंपोजायते । स्वांतेस्वोदरेस्थापितःसन्निहि

तोधाताचतुर्मुखोयेनतत् कमलासनत्वादितिभावः । तपस्व्यपिस्वेष्टदेवतांहृदिध्यात्वातपःकरोति । प्रकृतेमित्रस्रष्टेरपेक्षितत्वात्सृष्टिकर्तुश्चतुर्मुखस्यस्थापनंयु क्तमितिभावः । हंसौघैःहंसपक्षिसमूहैःसंशिक्षितंतुंडैर्व्रणीकृतं । तपस्व्यपिपरमहंसैर्गुरुभिःशिक्षितोभवति । नलिनंपद्मंमित्रस्यसुहृदोमित्रस्यसूर्यस्योदयमु त्पत्तिमाकांक्ष्यसाधुसम्यक्तपतीवतपस्यांकरोतीव । अत्रप्रकृततपस्विसाम्येनौपम्याद्प्रकृतगोचरातुल्ययोगितानतुश्लेषः । तस्यविशेषस्यापिश्लिष्टत्वनिय मात् । प्रस्तुतानांतथान्येषांकेवलंतुल्यधर्मतः । औपम्यंगम्यतेयत्रसामतातुल्ययोगितेत्युक्तेः । उत्प्रेक्षाव्यंजकेवशब्दप्रयोगात्स्वोपजीवितयोत्प्रेक्षयासंकीर्त्यते ॥ ३२ ॥ चंद्रोदयंवर्णयति । दिगायताक्षीमिति । दिशांपतौदिक्पतौ आपंचैवहलंतानामित्यापोविधानात् । सूर्येऽन्यामपरां दिगायताक्षींदिगंगनांप्रतीचींदि शमित्यर्थः । उपेत्यगत्वा । अनेनकस्यचित्कांतस्यान्यासंगोध्वन्यते । रागंरक्तिमानं उपेयुषिगच्छतिसति नकेवलंसपत्नीगमनमात्रंतत्रानुरागमपिसंपादितवा

दिगायताक्षीमपरामुपेत्य दिशांपतौ रागमुपेयुषींदुः ॥ अदृश्यतैंद्र्यां दिशि रोषरक्तं निबद्धनीलभ्रुकुटीव वक्रम् ॥ ३३ ॥ नक्षत्रालिभिरिंद्रदिग्मृगदृशं संधाय पूर्वं पुनस्तत्पादे प्रणतिं विधाय नितरामाशांतरासक्तिजम् ॥ तस्याः कोपसमं तमः परिहरन् स्वीयैः करैस्तां स्पृशन् वक्रांभोरुहचुंबनाय शनकैरुद्याति नूनं शशी ॥ ३४ ॥

नितिध्वनिः । इंदुश्चंद्रऐंद्र्यामिंद्रसंबंधिन्यांदिशिप्राच्यामित्यर्थः । अनेननायिकायाउत्तुंगत्वंध्वन्यते । अदृश्यतसूर्यास्तमयानंतरंचंद्रोदयोपिजातइत्यर्थः । कथमिव प्रियेऽन्यासंगिनिसति । रोषेणामर्षेणरक्तं निबद्धानीलाभ्रुकुटीभ्रूभंगोयस्यसतथोक्तः अपराधिनंनायकंरोषेणपश्यंत्याऐंद्र्यानायिकायावक्त्र मिव । उत्प्रेक्षालंकारः । अत्रप्रस्तुतापराधिनायकस्यखंडितायानायिकायाःप्रतीतेःसमासोक्त्यासंकीर्त्यते । नायकोदक्षिणस्तुल्योतुल्यमेकत्रदक्षिणइत्यु क्तेः । नायिकातिप्रलब्धाखंडिताच । ज्ञातेन्यासंगिकतेखंडितेष्याकषायितइत्युक्तेः ॥ ३३ ॥ नक्षत्रालिभिरिति । शशीचंद्रःपूर्वंप्रथमत इंद्रदिग्मृगदृशं प्राचीदिगंगनांनक्षत्रालिभिस्ताराख्यसखीभिःकिरणैः आलिःसखीवयस्याचेत्यमरः । संधायसंधिंकृत्वा चंद्रोदयात्पूर्वंनक्षत्रोदयस्यजायमानत्वात् पुनस्त स्यादिगंगनायाःपादेचरणे प्रणतिंप्रणामं विधाय दिगधोभागेचंद्रोदयस्यजायमानत्वादितिभावः । सखीद्वाराकिंचित्कोपशांतावपिपादप्रणामंविनासर्व

थाकोपशांतेरभावात्पादप्रणाममपिकृत्वेत्यर्थः । आशांतरासक्तिजंदिगंतरसंबंधजन्यंतमसश्चंद्रस्थितदेशादन्यदेशावस्थितेः । तस्याइंद्रदिङ्मृगलोचनायाः कोपसमंकोपसदृशंतमोंधकारंपरिहरन्स्वकीयैःकरैःकिरणैस्तांदिशंस्पृशन् चंद्रोदयानंतरंकिरणप्रसारैस्तमोनाशयदितिभावः । वक्त्रांभोरुहचुंबनायमुखारविंदचुंबनाय शनकैर्मंदंउद्यातिऊर्ध्वंयाति नूनंनिश्चयः यथापराधीनायकःकुपितांनायिकांसखिप्रेषणप्रणामकरग्रहणादिनाकोपंपरिहृत्याननचुंबनंकरोति तद्वदितिभावः । उपमासमासोक्त्योःसंकरः । नायिकानायकविभेदस्तुग्रंथगौरवभयान्नलिख्यते ॥ ३४ ॥ चंद्रस्येति । ताःसूर्यभार्यात्वेनोक्तादिशपरांगनाइतिध्वनिः । चंद्रस्य सुंदरपुरुषस्येतिध्वनिः । कोमलकरैर्मृदुकिरणैर्हस्तेनेतिध्वनिः । रचितोंगसंगोयासांताआलिंगिताइतिध्वनिः । सांद्रांधकारमपिनिबिडांधकारमपिभर्तृविरहजदुःखमपीतिध्वनिः । विहायत्यक्त्वा अखिलजंतुषुसकलप्राणिषुस्वपत्सुनिद्रितेषुसत्सुपरपुरुषगमनस्यजनसंचाररहि

**चंद्रस्य कोमलकरै रचितांगसंगाः सांद्रांधकारमपि ताः सहसा विहाय ॥ ईशं स्वपत्स्वखिलजंतुषु वव्रुरेनमाशा हि नूतनविषया गणयंति नैनः॥ ३५॥ पूर्वाब्धाववगाह्य फेननिचयश्रीखंडलेपद्युतिः स्वांकालंकृतिमूलनीलतिलकस्तारौघहारान्दिशन् ॥ व्योमाख्यां कबरीं प्रगृह्य सुकरैराश्लिष्य दिक्कामिनीमैंद्रीमिंदुरसौ चुचुंब सरसो रागेण तां रंजयन्॥ ३६॥**

तकालिकत्वादितिभावः । एनंचंद्रमीशंवव्रुरंगीकृतवत्यः । अन्यस्त्रीणामन्यपुरुषस्वीकारःकथंयुज्यतइत्यतआह । आशाहीति । नूतनविषयानूतनवस्तुविषयाआशाअभिलाषाः । आशादिगभिलाषयोरितिभास्करः । एनःपापंनगणयंतिहि । दिशामप्याशात्वादितिभावः । अर्थांतरन्यासः । तेनोत्कटोरागोविवेकिनामपिबलवदनिष्टविषयकंज्ञानंप्रतिबध्नातीतिवस्तुव्याजेननायकउपपतिः संधितौवारयावस्तुविनापिविधिनास्त्रिया । संकेतंनीयतेयस्तुबुधैरुपपतिस्तुसइत्युक्तेः । नायिकाजारिण्यः अभिसारिकाः । स्मरार्ताभिसरेत्कांतंसारयेद्वाभिसारिकेत्युक्तेः । संभोगःशृंगारः । अनुकूलौनिषेवेतेयत्रान्योन्यंविलासिनौ । दर्शनस्पर्शनादीनिससंभोगोमुदान्वितइत्युक्तेः ॥ ३५ ॥ पूर्वाब्धाविति । सरसोविलासीअसाविंदुश्चपूर्वाब्धौप्राचीसमुद्रेवगाह्यस्नात्वा प्रसादनविधेःस्नानपूर्वकत्वादितिभावः । फेननिचयएवश्रीखंडलेपस्तस्यद्युतिःकांतिर्यस्यसःश्रीखंडलेपेनद्योत्यतइतिवा । स्वस्यांकएवकलंकएवालंकृतेरलंकारस्यमूल

मायंनीलंकस्तूर्यादिरचितंश्यामंतिलकंविशेषकोयस्यसतथोक्तः तमालपत्रतिलकचित्रकाणिविशेषकमित्यमरः। तारौघहारान्नक्षत्रचयाख्यमुक्ताहारानूदिश न्वितन्वन् सुकरैःशोभनकिरणैरूर्ध्वमुखैर्हस्तैनेतिध्वनिः । व्योमाख्यामाकाशस्यनीलत्वात्तद्रूपांकबरींकेशवेशं । कबरीकेशवेशोथधम्मिल्लःसंयताःकचा इत्यमरः । प्रगृह्यगृहीत्वाऐंद्रींइंद्रसंबंधिनीदिक्कामिनींदिगंगनांप्राचीदिशमित्यर्थः । सुकरैस्तिर्यगायतैःकिरणैराश्लिष्याऽऽलिंग्यदिक्कामिनींरागेणस्वगतरक्तिम्ना अनुरागेणेतिध्वनिः। रंजयन्रागयुक्तांकुर्वन्चुचुंबचुंबनंकृतवान्। क्रमेणचंद्रोभिवृद्धोजातइत्यर्थः। रूपकमलंकारः। अत्रनायकोदयितः। वासोगरागमा ल्याद्यैर्हृद्यैर्यैःप्रेयसींरहः। प्रसादयन्रमयतिदयितःसोभिधीयतइत्युक्तेः। ऐंद्रीमित्युक्तेर्नायिकापरकीयाचालंकारेणध्वन्यते । संभोगशृंगारः ॥ ३६ ॥ सुवर्णेति। उदाराउत्कृष्टास्तारानक्षत्राणियस्यतत्तथोक्तं उदिताऊर्ध्वाऊर्ध्वगतारश्मयःकिरणायस्यसचासौशशांकस्तस्यसंगोस्यास्तीतितत्तथोक्तं अभ्रंग

सुवर्णसंवीतवरेंद्रनीलसुमध्यनिष्कांचितकृष्णवक्षः ॥ सहारमन्वेत्युदितोर्ध्वरश्मिशशांकसंग्यभ्रमुदारतारम् ॥ ३७ ॥ वार्वाहावृतसर्वभागमुदितं बिंबं शशांकं विधोरीषद्दर्शितकोणमच्युतमनस्तोषं नभोग्रस्थितम् ॥ रेजे कुंकुमशोभि रम्यवसनच्छन्नं मरुद्दर्शितप्रांतं श्रीकुचकोशमीषदुदयन्मध्योपरिष्टादिव ॥ ३८ ॥

गनंकर्तृ सहारंमुक्ताहारसहितं सुवर्णसंवीतेननतमहेमपरिवीतेनवरेंद्रनीलमुत्तमनीलरत्नंसुमध्येयस्यतत्तच्चतन्निष्कंग्रैवेयकंतेनअंचितमलंकृतंतच्चतत्कृष्णवक्ष उरस्थलं अन्वेतिअनुकरोति तत्साम्यंप्राप्नोतीत्यर्थः। पूर्णोपमा। अनयोर्द्दीपनकारित्वंचंद्रस्यध्वन्यतेइत्यलंकारेणधर्मध्वनिः ॥ ३७ ॥ वार्वाहावृते ति । वार्वाहैर्मेघैरावृतआच्छन्नःसर्वभागःसर्वप्रदेशोयस्यतत् शशएवअंकश्चिह्नंयस्यतत्तथोक्तं ईषत्किंचिद्दर्शितंकोणमेकदेशोयस्यतत्तथोक्तं नभसआ काशस्याग्रेस्थितं अच्युतस्यकृष्णस्यमनस्तोषोयस्मात्तत् उदितंविधोश्चंद्रस्यबिंबंमंडलंकर्तृ । रम्येणवसनेनमनोहरोत्तरीयेणच्छन्नमाच्छन्नं कुंकुमेनका श्मीरजेन अथकुंकुमं। काश्मीरजन्माग्निशिखमित्यमरः । शोभतइतिकुंकुमशोभि मरुतावायुनाउत्तरीयावधूननाद्दर्शितःप्रांतोयस्यतत् । मध्योपरिष्टान्म ध्योर्ध्वभागात् ईषदुदयत्किंचिदाविर्भवत् श्रियोलक्ष्म्याःकुचकोशंस्तनमुकुलमिव कोशोऽस्त्रीकुड्मलेर्थौघेगुह्यांडेशास्त्रदिव्ययोरितिरत्नमाला । अतएवा

च्युतमनस्तोषकमित्युक्तं । रेजेशुशुभे । पूर्णोपमा ॥ ३८ ॥ गतइति । दिशांभर्तरिभरणकर्तरिपत्यौ कर्तृकरणयोःकृतीतिषष्ठी । दिवाकरेसूर्ये अन्यंदेशंदेशांतरं गतेसतिचंद्रोमंदंशनैरुपेत्य अनेनचौर्येणगमनंद्योत्यते । तदंबरंतासांदिशामंबरंआकाशमवकाशमित्यर्थः । वस्त्रमितिध्वनिः । स्वैःकरैरंशुभिः । हस्तेनेतिध्वनिः । यद्यस्माज्जगृहेगृहीतवान् । ततःपरदारांबरग्रहणात्कारणात्कलंकीतिलांछनवानितिअपवादवानितिममप्रतर्कः । कलंकोंकापवादयोरित्यमरः । उत्प्रेक्षालंकारः ॥ ३९ ॥ यदीति । पौर्णमास्यांपूर्णिमायांनिशिरात्र्यांयत्पूर्णंपुष्कलंवस्तुउदयति तन्नंदसूनोःकृष्णस्यकुमार्याबालायाःकीर्तिनार्यायशोंगनायाः वक्रंमुखंमन्ये । कीदृशंवक्रं कस्तूरिकयाक्तंसिक्तं । कस्तूरीतिलकोपेतमित्यर्थः । अनेनकलंकस्यनिर्वाहःकृतः । पुनःकीदृशं प्रविरलानिप्रकीर्णानिकचविन्य

**गते दिशां भर्तरि देशमन्यं दिवाकरे मंदमुपेत्य चंद्रः ॥ तदंबरं यज्जगृहे करैः स्वैस्ततः कलंकीति मम प्रतर्कः ॥ ३९ ॥ यत्पूर्णं पौर्णमास्यामुदयति निशि तत्कीर्तिनार्याः कुमार्या वक्रं कस्तूरिकाक्तं प्रविरलकचविन्यस्तपुष्पं हि मन्ये ॥ स्तोत्रव्याजेन देवैर्वदनविनिहितं नंदसूनोर्न चेत्तत्प्रीत्यै गोपांगनानां कथमहितवधूवर्गतापाय च स्यात् ॥ ४० ॥ दिवसकरे हृततस्करप्रचारे नरनयनस्य विदूरवर्त्म याते ॥ रजनिकरो यमुपेत्य मानवानां श्रममधरीकुरुते स्म पूर्णबिंबः ॥ ४१ ॥**

स्तानिकेशपाशनिहितानिपुष्पाणियस्यतत्तथोक्तं । अनेननक्षत्राणांनिर्वाहःकृतः । पुनःकीदृशं स्तोत्रव्याजेनस्तुतिकरणापदेशेनदेवैर्वदनेमुखेविनिहितंनिक्षिप्तं । अनेनप्रतिदिनंक्रियमाणस्यकलापनस्यगतिरुक्ता । नचेत्कृष्णकीर्तिनारीमुखंनभवतिचेत्गोपांगनानांगोपस्त्रीणांप्रीत्यैहर्षायअहितानांकृष्णविरोधिनांवधूवर्गस्यकांतासमूहस्यतापायसंतापायचकथंस्यात् । गोपीनांसंतोषमहितवधूनांसंतापंचकथंदद्यादित्यर्थः । व्याजेनेतिसतयोःसंकरः । म्रभ्नैर्यानांत्रयेणत्रिमुनियतियुतास्रग्धराकीर्तितेयम् ॥ ४० ॥ दिवसकरइति । हृतःपरिहृतस्तस्कराणांचोराणांप्रचारःसंचारोयेनतस्मिन् दिवसकरेसूर्ये नराणांमनुष्याणांनयनयलोचनस्य जात्यैकवचनं । विदूरवर्त्मदूरमार्गं यातेगतेसति पूर्णबिंबःसंपूर्णमंडलः अयंरजनीकरोनिशाकरश्चंद्रः उपेत्यआगत्य मानवानांश्रमंखेदं

मायंनीलंकस्तूर्यादिरचितंश्यामंतिलकंविशेषकंयस्यसतथोक्तः तमालपत्रतिलकचित्रकाणिविशेषकमित्यमरः । तारौघहारान्नक्षत्रचयाख्यमुक्ताहारान्दिशान्वितन्वन् सुकरैःशोभनकिरणैरूर्ध्वमुखैर्हस्तैरितिध्वनिः । व्योमाख्यामाकाशस्यनीलत्वात्तद्रूपांकबरींकेशवेशं । कबरीकेशवेशोथधम्मिल्लःसंयताःकचा इत्यमरः । प्रगृह्यगृहीत्वाऐंद्रींइंद्रसंबंधिनीदिक्कामिनींदिगंगनांप्राचीदिशमित्यर्थः । सुकरैस्तिर्यगायतैःकिरणैराश्लिष्यालिंग्यदिक्कामिनींरागेणस्वगतरक्तिम्ना अनुरागेणेतिध्वनिः । रंजयन्नूरागयुक्तांकुर्वन्नूचुचुंबचुंबनंकृतवान् । क्रमेणचंद्रोभिवृद्धोजातइत्यर्थः । रूपकमलंकारः । अत्रनायकोदयितः । वासोंगरागमाल्यादैर्हृद्यैर्यःप्रेयसींरहः । प्रसादयन्रमयतिदयितःसोभिधीयतइत्युक्तेः । ऐंद्रीमित्युक्तेर्नायिकापरकीयाचालंकारेणध्वन्यते । संभोगशृंगारः ॥ ३६ ॥ सुवर्णेति । उदाराउत्कृष्टास्तारानक्षत्राणियस्यतत्तथोक्तं उदिताऊर्ध्वाऊर्ध्वंगतारश्मयःकिरणायस्यसचासौशशांकस्तस्यसंगोस्यास्तीतितत्तथोक्तं अभ्रंग

सुवर्णसंवीतवरेंद्रनीलसुमध्यनिष्कांचितकृष्णवक्षः ॥ सहारमन्वेत्युदितोर्ध्वरश्मिशशांकसंग्यभ्रमुदारतारम् ॥ ३७ ॥ वार्वाहावृतसर्वभागमुदितं बिंबं शशांकं विधोरीषद्दर्शितकोणमच्युतमनस्तोषं नभोग्रस्थितम् ॥ रेजे कुंकुमशोभि रम्यवसनच्छन्नं मरुद्दर्शितप्रांतं श्रीकुचकोशमीषदुदयन्मध्योपरिष्टादिव ॥ ३८ ॥

गनंकर्तृ सहारंमुक्ताहारसहितं सुवर्णसंवीतेननतप्तहेमपरिवीतेनवरेंद्रनीलमुत्तमनीलरत्नंसुमध्येयस्यतत्तच्चतन्निष्कंग्रैवेयकंतेनअंचितमलंकृतंतच्चतत्कृष्णवक्ष उरस्थलं अन्वेतिअनुकरोति तत्साम्यंप्राप्नोतीत्यर्थः । पूर्णोपमा । अनयोद्दीपनकारित्वंचंद्रस्यध्वन्यतइत्यलंकारेणधर्मध्वनिः ॥ ३७ ॥ वार्वाहावृतेति । वार्वाहैर्मेघैरावृतआच्छन्नःसर्वभागःसर्वप्रदेशोयस्यतत् शशएवअंकश्चिह्नंयस्यतत्तथोक्तं ईषत्किंचिद्दर्शितंकोणमेकदेशोयस्यतत्तथोक्तं नभसआकाशस्याग्रेस्थितं अच्युतस्यकृष्णस्यमनस्तोषोयस्मात्तत् उदितंविधोश्चंद्रस्यबिंबंमंडलंकर्तृ । रम्येणवसनेनमनोहरोत्तरीयेणच्छन्नमाच्छन्नं कुंकुमेनकाश्मीरजेन अथकुंकुमं । काश्मीरजन्माग्निशिखमित्यमरः । शोभतइतिकुंकुमशोभि मरुतावायुनाउत्तरीयावधूननाद्दर्शितःप्रांतोयस्यतत् । मध्योपरिष्टान्मध्योर्ध्वभागात् ईषदुदयत्किंचिदाविर्भवत् श्रियोलक्ष्म्याःकुचकोशंस्तनमुकुलमिव कोशोऽस्त्रीकुड्मलेखड्गपिधानेर्थौघदिव्ययोरितिरत्नमाला । अतएवा

च्युतमनस्तोषकमित्युक्तं । रेजेशुशुभे । पूर्णोपमा ॥ ३८ ॥ गतइति । दिशांभर्तरिभरणकर्तरिपत्यौ कर्तृकरणयोःकृतीतिषष्ठी । दिवाकरेसूर्ये अन्यंदेशंदेशांतरं गतेसतिचंद्रोमंदंशनैरुपेत्य अनेनचौर्येणगमनंद्योत्यते । तदंबरंतासांदिशामंबरंआकाशमवकाशमित्यर्थः । वस्त्रमितिध्वनिः । स्वैःकरैरंशुभिः । हस्तेनेतिध्वनिः । यद्यस्माज्जगृहेगृहीतवान् । ततःपरदारांबरग्रहणात्कारणात्कलंकीतिलांछनवानितिअपवादवानितिममप्रतर्कः । कलंकोंकापवादयोरित्यमरः । उत्प्रेक्षालंकारः ॥ ३९ ॥ यदीति । पौर्णमास्यांपूर्णिमायांनिशिरात्र्यांयत्पूर्णंपुष्कलंवस्तुउदयति तन्नंदसूनोःकृष्णस्यकुमार्याबालायाःकीर्तिनार्यायशोंगनायाः वक्त्रंमुखंमन्ये । कीदृशंवक्त्रं कस्तूरिकयाक्तंसिक्तं । कस्तूरीतिलकोपेतमित्यर्थः । अनेनकलंकस्यनिर्वाहःकृतः । पुनःकीदृशं प्रविरलानिप्रकीर्णानिकचविन्य

गते दिशां भर्तरि देशमन्यं दिवाकरे मंदमुपेत्य चंद्रः ॥ तदंबरं यज्जगृहे करैः स्वैस्ततः कलंकीति मम प्रतर्कः ॥ ३९ ॥ यत्पूर्णं पौर्णमास्यामुदयति निशि तत्कीर्तिनार्याः कुमार्या वक्त्रं कस्तूरिकाक्तं प्रविरलकचविन्यस्तपुष्पं हि मन्ये ॥ स्तोत्रव्याजेन देवैर्वदनविनिहितं नंदसूनोर्न चेत्तत्प्रीत्यै गोपांगनानां कथमहितवधूवर्गतापाय च स्यात् ॥ ४० ॥ दिवसकरे हृततस्करप्रचारे नरनयनस्य विदूरवर्त्म याते ॥ रजनिकरोयमुपेत्य मानवानां श्रममधरीकुरुते स्म पूर्णबिंबः ॥ ४१ ॥

स्तानिकेशपाशनिहितानिपुष्पाणियस्यतत्तथोक्तं । अनेननक्षत्राणांनिर्वाहःकृतः । पुनःकीदृशं स्तोत्रव्याजेनस्तुतिकरणापदेशेनदेवैर्वदनेमुखेविनिहितंनिक्षिप्तं । अनेनप्रतिदिनंक्रियमाणस्यकलापनस्यगतिरुक्ता । नचेत्कृष्णकीर्तिनारीमुखंनभवतिचेत्गोपांगनानांगोपस्त्रीणांप्रीत्यैहर्षायअहितानांकृष्णविरोधिनांवधूवर्गस्यकांतासमूहस्यतापायसंतापायचकथंस्यात् । गोपीनांसंतोषमहितवधूनांसंतापंचकथंदद्यादित्यर्थः । व्याजेनेतिसतयोःसंकरः । म्रभ्नैर्यानांत्रयेणत्रिमुनियतियुतास्रग्धराकीर्तितेयम् ॥ ४० ॥ दिवसकरइति । हृतःपरिहृतस्तस्कराणांचोराणांप्रचारःसंचारोयेनतस्मिन् दिवसकरेसूर्ये नराणांमनुष्याणांनयनयलोचनस्य जात्यैकवचनं । विदूरवर्त्मदूरमार्गं यातेगतेसति पूर्णबिंबःसंपूर्णमंडलः अयंरजनीकरोनिशाकरश्चंद्रः उपेत्यआगत्य मानवानांश्रमंखेदं

अधरीकुरुतेस्म अपाकरोतिस्म। अनेनप्रजार्थालकेचंद्रेराज्ञिगतेसमीचीनस्तत्पुत्रोपिअधिकंप्रजाःसुखयतीत्यर्थोध्वन्यते। तुरगरयंदत्तं तुरगरयंदत्तिनौनजौज रौगः ॥ ४१ ॥ सइति । स्मरेणमन्मथेन तंचंद्रंआत्मसात्कर्तुमात्माधीनंकर्तुमुत्कृष्टतयाप्रयुक्तोमुक्तः मारस्यमदनस्यमौर्व्यांमटन्यांस्थितेषुर्मल्लिकेषुःकुसुमाख्य बाणइवस्थितः सचंद्रः व्रजस्त्रीहृदयंविजित्यशनैर्हरेःकृष्णस्य पदंपादं प्राप । कृष्णमपिजेतुमागतइत्यर्थः । हरेःपदमित्यनेनव्रजस्त्रीजयवन्नकृष्णजयःकिंतु पादप्रणामादिनाअभिमुखीकरणमात्रमितिध्वन्यते। चंद्रोदयंदृष्ट्वाव्रजांगनानांकृष्णेनरंतुमिच्छाकृष्णस्यताभिःसहरंतुमिच्छाचोत्पन्नेतिभाव ॥ ४२ ॥ गंधर्वेति। मुकुंदःकृष्णः गंधर्वाणांगीतेनगानेन आवृतमपारतारमनेकनक्षत्रयुक्तंचंद्रेणरंजितमभ्रंगगनमुदीक्ष्यदृष्ट्वामधुपानांभ्रमराणांमंजुर्मनोहरोरवोयस्यतत् । अने

स मारमौर्वीस्थितमल्लिकेषुरिव व्रजस्त्रीहृदयं विजित्य ॥ हरेः पदं प्राप शनैः स्मरेण तमात्मसात्कर्तुमिव प्रयुक्तः ॥ ४२ ॥ गंधर्वगीतवृतमभ्रमपारतारं चंद्रेण रंजितमुदीक्ष्य मुदा मुकुंदः ॥ वृंदावनं मधुपमंजुरवं प्रसूनसंदोहसांद्रमविशत्तरुजालनीलम् ॥ ४३ ॥ इंदुः स्वरम्यकिरणैर्विपिनं पुपूर मंदानिलश्च मुदितोत्पलमाल्यगंधैः ॥ सांद्रप्रसूननिचयैस्तरवः समंतात् कंदर्पतातमवलोक्य पिकाश्च गीतैः ॥ ४४ ॥

नगंधर्वगीतप्रतिरूपकमुक्तं । प्रसूनसंदोहैःपुष्पनिचयैःसांद्रंनिबिडं । अनेननक्षत्रप्रतिरूपकमुक्तं । तरूणांजालैःसमूहैर्नीलंश्यामलं । अभ्रसाम्यार्थमिदं । वृंदावनंमुदासंतोषेणअविशत्प्रविष्टवान् । चंद्रस्यकृष्णःप्रतिनिधिरितिबोध्यं । अत्रबिंबप्रतिबिंबभावेनोपगम्यस्यगम्यमानस्योपमालंकारः ॥ ४३ ॥ इंदुरिति । कंदर्पतातंमन्मथजनकंकृष्णमितिवीक्ष्य इंदुश्चंद्रः स्वरम्यकिरणैर्विपिनंवृंदावनंपुपूरापूरयत् । मदनमित्रत्वाच्चंद्रःस्वमित्रतातप्रविष्टेवनेस्वकिरणान् प्रसारितवानितिभावः । एवमुत्तरत्रापिद्रष्टव्यं । मंदानिलश्चमुदितस्यचंद्रकिरणसंपर्कात्प्रमोदयुक्तस्यविकसितस्येत्यर्थः । उत्पलस्यकुमुदस्यमाल्यगंधैःसेव्यपरमलैःपुपूरेतिप्रत्येकंसंबंधः । तरवोवृक्षाःसांद्रप्रसूननिकरैर्निबिडकुसुमसमूहैःपिकाःकोकिलाश्च गीतैरुतैःपुपूरुः । दीपकालंकारः ॥ ४४ ॥

विश्वस्येति । हिमांशुश्चंद्रः । हेईश हेस्वामिन्कृष्ण विश्वस्यजगतः । कर्तृकर्मणोःकृतीतिषष्ठी । मोहयतीतिमोहनःकर्तरिल्युट् । ( टित्करणसामर्थ्यात्ल्युटःस्त्रीलिं गत्वं ।) वशीकरणशक्तिमानितिमदीयंयशःकीर्तिं ललनाभिःकामिनीभिःसहितस्त्वमिहवृंदावनेविहृत्यविस्तारयविस्तारंकुरु । कृष्णस्यापिमोहकश्चंद्रइतिममय शोविस्तारोभवेत् । इत्यनेनप्रकारेण इतिहेतुप्रकरणप्रकारादिसमाप्तिष्वित्यमरः । अर्थनाकृदिवयाञ्चाकृदिववृक्षतलप्रविष्टैस्तरुपत्रांतरेणवृक्षमूलगतैर्हृद्यकरैर्मनोह रकिरणैःकृष्णांघ्रिंश्रीकृष्णचरणं आस्पृशति । उत्प्रेक्षालंकारः ॥४५॥ व्याकीर्णकामइति । विविधैर्नानाप्रकारैस्तैःपूर्वोक्तैःप्रभावैरत्याख्यस्थायिभावस्यरसत्वा पादकैःचंद्राद्युद्दीपनविभावैः । तदुक्तं । विभावैरनुभावैश्चसात्विकैर्व्यभिचारिभिः । आनीयमानस्वादुत्वंस्थायिभावोरसःस्मृतइति । तत्रविभावास्तुद्विविधाः ।

विश्वस्य मोहन इतीश यशो मदीयं विस्तारयेह ललनासहितो विहृत्य ॥ इत्यर्थनाकृदिव वृक्षतलप्रविष्टैः कृष्णांघ्रिमास्पृशति हृद्यकरैर्हिमांशुः ॥ ४५ ॥ व्याकीर्णकाम इव तैर्विविधैर्विभावैराकर्षयन् व्रजवधूर्निजसंगयोग्याः ॥ वेणुं क्रमेण रणयन् बहुतानगानमानज्ञमौलिरुदगायदधीश्वरोऽसौ ॥ ४६ ॥ हृद्यं हृद्यनुरंजयन् सवयसः संहर्षयन् कर्षयन् गोपस्त्रीहृदयं पशूनृषिगणान्निश्चेष्टयन् स्पष्टयन् ॥ विश्वं स्वस्य वशं वियद्गृहवधूः संमूर्छयंश्चारणान् सिद्धान्संत्रपयन् सुरान्विनिमयन् वेणुं पुपोषाच्युतः ॥ ४७ ॥

आलंबनविभावाउद्दीपनविभावाश्चेति । चंद्रोदयोघनध्वांतंकोकिलारणितंमधु । उद्दीपनविभावास्युरिति । व्याकीर्णोरसीभूतःकामोरतीच्छाविशेषोयस्यसइ वकामोद्रेकवानिवेत्यर्थः । निजसंगस्यस्वसंबंधस्ययोग्याःपात्रीभूताः व्रजवधूर्व्रजांगनाः आकर्षयन् । बहवस्तानाःस्वरविशेषाःस्तैर्युक्तंगानंगीतंतस्यमानं प्रमाणंजानंतीतितथोक्तास्तेषांमौलिर्मुकुटभूतःश्रेष्ठइत्यर्थः । धम्मिल्लेमुकुटेमौलिरितिभास्करः । अधीश्वरोजगदीश्वरोऽसौकृष्णः क्रमेणवेणुंरणयन्उदगायत् उत्कृष्टतयागानंकृतवान् ॥ ४६ ॥ हृद्यमिति । अच्युतःकृष्णोहृद्यंहृदयगतंकुक्षिस्थमित्यर्थः । जगत् हृद्येवानुरंजयन्अनुरक्तंकुर्वन् सवयसःस्निग्धान्संह र्षयन्सम्यक्सुखयन् गोपस्त्रीणांहृदयंमनःकर्षयन्आकर्षयन् पशून्गवादितिर्यक्प्राणिनऋषिगणान्मुनीन्निश्चेष्टयन्निर्व्यापारीकुर्वन् वियदेवाकाश

एवगृहंयासांताबियद्गृहास्ताश्वताःकृष्णगीतश्रवणायाकाशगतसुरवधूरित्यर्थः । संमूर्छयन्विवशीकुर्वन् चारणान्सिद्धान्संगीताभिज्ञदेवयोनिभेदान्संत्रपयन् स्वसंगीतविद्यायामेतादृशप्रावीण्याभावात्लज्जासहितान्कुर्वन् सुरान्विनिमयन् नम्रीकुर्वन्विश्वंविश्वजिदुक्तप्रकारेणस्वस्यवशंअधीनं स्पष्टयन्प्रकटयन् वेणुं मुरलींपुपोषध्वनयामासेत्यर्थः ॥ ४७ ॥ शुष्कामपि । मुरंमुरनामकासुरंजयतीतिमुरजित् कृष्णः शुष्कामपिनिरसामपि वंशस्यार्द्रतायांस्वराणामभिव्यक्तेरभावादितिभावः । मुरलींवेणुं अधरामृतेनाधरोष्ठसुधया सरसामार्द्रां विधाय । अनेनकठिनहृदयानायिकातामप्युपायेनमृदुचित्तांकुर्वन्नायकश्चध्वन्यते । मृदूक्तिशून्यामपिजडत्वान्मृदुवचनरहितामपि हृद्योमनोहरःस्वनोध्वनिर्यस्यास्तां विधाय । पूर्ववद्ध्वनिः । छिद्रंरंध्रभागंनिगूह्यांगुलिभिःपिधायदोषमाच्छाद्येतिध्वनिः । चुचुंबेआचुंबितवान् । नन्वेतावंतंप्रयासमनुभूयतदंगीकारेकिंनिमित्तमित्यतआह । सद्वंशेति । सद्वंशेसत्कुलेजातासूत्पन्नासुललनासुस्त्रीषु क

**शुष्कामपि स्म सरसामधरामृतेन हृद्यस्वनामपि विधाय मृदूक्तिशून्याम् ॥ छिद्रं निगूह्य मुरलीं मुरजिच्चुचुंबे सद्वंशजातललनासु न कस्य पक्षः ॥ ४८ ॥ अपरवशमपीशं स्वानुरक्तं विधत्ते सहजमपि विरोधं हंति जंतुष्वभेद्यम् ॥ वशयति जगदेतन्मान्यतामाप वेणुर्मधुरनिनदभाजां किन्न साध्यं हि लोके ॥ ४९ ॥**

स्याप्यभिजात्यकामस्यपुरुषस्य पक्षःपक्षपातोन । अभिजात्यकामाःपुरुषाःकुललोभात्गुणहीनामपिगुणवतींकृत्वारमयंतीत्यर्थः । कीचकान्वययोर्वंश इत्यभिधानात् । मुरल्याअपिवक्रव्रणादिदोषरहितवंशजातत्वादितिभावः । सामान्येनविशेषसमर्थनरूपोर्थांतरन्यासः । प्रकृतमुरलीविशेषणसाम्यादप्रकृतगुणहीनकुलांगनाप्रतीतेःसमासोक्त्यासंकीर्यतइति । प्रकृतानांतथान्येषांकेवलंतुल्यधर्मतः । उक्तिःसंक्षेपरूपत्वात्समासोक्तिर्मतेत्युक्तेः ॥४८॥ अपरवंशमिति । वेणुःपरवशोनभवतीत्यपरवशस्तमपिस्वतंत्रमपीत्यर्थः । ईशंकृष्णं स्वानुरक्तंस्वस्मिन्ननुरागयुक्तंविधत्तेकरोति । जंतुषुगोव्याघ्रादिप्राणिषुसहजमपिस्वाभाविकमपिअतएवअभेद्यंकेनाप्यनाश्यंविरोधंवैरंहंति । वेणुगीतरसपारवश्याज्जंतवःस्वाभाविकमपिविरोधंनस्मरंतीतिभावः । गोव्याघ्रौसर्पनकुलौगजसिंहौकृष्णगीतपारवश्यात्स्ववैरंविहायसहैवपरितःस्थिताइतिपौराणिकप्रसिद्धेः । एतज्जगद्विश्वंवशयतिस्वाधीनंकरोति मान्यतांकविवर्ण्यतामाप । वेणोरेतद्युक्तमित्याह ।

हीति । हित्थाहि । मधुरनिनदभाजांमधुरस्वनभाजांमृदुभाषिणामित्यर्थः । लोकेकिंनसाध्यं वाङ्माधुर्यात्सर्वमपिकार्यंसाधयितुंशक्यमित्यर्थः ॥ ४९ ॥
सइति । करेणधृतोवरउत्तमोवेणुर्येनसतथोक्तः सुंदरोरमणीयोऽपांगस्यनेत्रांतस्यलीलाविलासोयस्यसतथोक्तः सजलोजलसहितोजलदोमेघस्तद्वन्मूर्तिस्तनुर्यस्यसतथोक्तः साधुभिःसज्जनैर्गीताकीर्तिर्यस्यसः । पुनःकीदृशः कामिनीनांगोपस्त्रीणांकामधेनुरिवसकलकामितार्थप्रदः आविताविश्रवणंकृतान्यनेकगीतानिबद्धविचित्रगायनानियेनसतथोक्तः सुललितामनोहरावनमालावनपुष्पमालायस्यसः । यदूनांनाथःस्वामीसकृष्णोजयतिउत्कृष्टोवर्तते गोपीनांचित्तंपराभवतीतिवा । जयेर्जयाभिभवयोरायेर्थेसावकर्मकः । उत्कर्षप्राप्तिरायोर्थोद्वितीयेर्थेसकर्मकइतिवचनात् ॥ ५० ॥ चंद्रेइति । तन्मुखस्यकृष्णवक्त्रस्यत्विडिवत्विट्कांतिर्यस्य स्युःप्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयइत्यमरः । तस्मिन्चंद्रेजृंभतिविकसतिसतितद्वपुषःकृष्णशरीरस्यगंधइवगंधोयस्यतस्मिन्वि

स जयति यदुनाथः श्रावितानेकगीतः करधृतवरवेणुः कामिनीकामधेनुः ॥ सुललितवनमालः सुंदरापांगलीलः सजलजलदमूर्तिः साधुभिर्गीतकीर्तिः॥ ५० ॥ चंद्रे जृंभति तन्मुखत्विषि मुहुर्मंदानिले तद्वपुर्गंधे वाति वियोगवह्निसचिवे तत्कोमलालापवत् ॥ वेणौ कूजति पंचबाणविशिखैः शाणायितैस्ताडिता मानिन्योपि ययुर्मनोभवपितुः श्रेयोनिधिं सन्निधिम् ॥ ५१ ॥

योगवह्निसचिवेविरहाग्निसहाये मंदानिलस्यउद्दीपनविभावत्वादितिभावः । मंदानिलेवातिसंचरतिसति तस्यकृष्णस्यकोमलालापवत्मृदुवचनवत् वेणौकूजतिध्वनतिसति मानिन्यःपृथुमानवत्योपिसगर्वाअपीत्यर्थः । मानश्चित्तसमुन्नतिरित्यमरः । गोप्यःशाणयाशस्त्राणांतैक्ष्ण्यापादकयंत्रोपलेनशितैस्तीक्ष्णैःपंचबाणस्यकामस्यविशिखैर्बाणैः पृषत्कबाणविशिखाइत्यमरः । ताडितास्सत्यः कामार्ताइत्यर्थः । उद्दीपनविभावानामपिचंद्रादीनांकृष्णसंबंधित्वेनैवमोहकत्वोक्त्यागुणातिशयस्तासांकृष्णैकशरणत्वंध्वन्यते । श्रेयांसिनिधीयंतेऽस्मिन्नितिश्रेयोनिधिस्तंश्रेयसामाश्रयमित्यर्थः । मनोभवस्यमनसिजस्यपितुःकृष्णस्यसन्निधिंसमीपंययुःप्रापुः । यथापुत्रदौर्जन्यमावेदयितुंतत्पितृसमीपंगच्छंतितद्वदितिभावंद्योतयितुंमनोभवपितुरित्युक्तम् ॥ ५१ ॥

कत्वंप्रियत्वंभर्तृत्वं धवःप्रियःपतिर्भर्तेत्यमरः। अगमन्नगच्छन्। तत्तस्मात्कारणात्कुत्रकस्मिन्जन्मनिविद्यमानस्यपित्रादेरर्चनंकुर्मःकरवाम पितृत्वादेर्व्यभि चारित्वादितिभावः। नकेवलंपितृत्वादेर्व्यभिचारित्वात्तत्सेवाव्यर्था किंतुतदानींसेवनासेवनयोरेतज्जन्मनिपितृत्वंप्राप्तस्यजन्मांतरेशत्रुत्वप्राप्तेःसंभावितत्वेनत दानींकृतवैरस्यचतुल्यायव्ययत्वादपीत्याहुः। वैरमिति। एषुपित्रादिषुवैरंवाकतिवारंकियद्वारंनकृतं बहुधावैरकरणस्यसंभावितत्वादितिभावः। तत्तस्मात्पितृत्वा देर्व्यभिचारित्वान्मानावमानयोस्तुल्यायव्ययत्वाच्चतत्सेवाव्यर्थातस्मात्कारणादित्यर्थः। हेविश्वांतरात्मन्जगदंतर्यामिन्विभोसमर्थकृष्णनित्यंसर्वदापितरंपतिं चजननींमातरंत्वामेवसेवामहेपरिचराम पूर्वोक्तदोषद्वयाभावादितिभावः। काव्यलिंगमलंकारः॥ ५८ ॥ कृष्णस्यपतित्वादिकमुपपादयंत्योवदंतिजगत्पितेति। हेसखेकृष्णजगत्पिताविश्वजनकस्त्वमासांजगदंतर्गतानांगोपीनांनःपितानकिं नभवसिकिं जगतोविश्वस्यप्रसूतिरव्यवधानेनोत्पत्तिर्यस्माच्चत्वंनोजननीमातानभव

जगत्पिता त्वं न पिता किमासां जगत्प्रसूतिर्जननी न किं नः ॥ जगत्पतिः किं न पतिः सखे नस्तदन्य जुष्यालमरिष्टवृष्या ॥ ५९ ॥ कांतः स एव यः स्थैर्यशौर्यसौंदर्यसागरः ॥ सुखस्यांतकरं कांतमपरं त र्कयामहे ॥६०॥ यः सारभागमनुभूय शरीरभाजां शिष्टं प्रयच्छसि किलारसमल्पभोग्यम्॥ दुःखातिदू रगतपारसुखैकभोक्तुस्तस्येश योग्यमखिलं हृदि तर्कयामः ॥ ६१ ॥

सिकिं। जगत्पतिस्त्वंनोस्माकंपतिःकिंक स्मान्नभवसि। यस्मात्पितृत्वादिकंत्वय्येवास्तितत्तस्मात्कारणादरिष्टस्यानिष्टस्यदृष्टिर्विषयस्यास्तयाऽन्यजुष्यात्वद्व्यतिरिक्तपित्रादिसेवनयालं अन्यसेवाभा स्त्वित्यर्थः। त्वत्परित्यागेपिपित्रादिपरित्यागदोषापत्तेरितिभावः॥ ५९ ॥ कांतइति। यःपुमान्स्थैर्यमचांचल्यंशौर्यंपराक्रमःसौंदर्यंलावण्यंतैःसागरइव स्थै र्यादिगुणभरितइत्यर्थः। सएवकांतःप्रियोभवेत्। अपरमन्यंकांतंसुखस्यांतकरंतर्कयामहेतर्कयामः। कंसुखंतस्यांतोनाशोयस्मादितिव्युत्पत्तेरितिभावः॥६०॥ परदारगमनंनिषिद्धंकथंकर्तुंशक्यतेइत्याशंक्यायंनिषेधोलौकिकानांनत्वलौकिकस्यतवेत्याहुः। यइति। हेईशयस्त्वं सारभागंशरीरिभिरनुभूयमानविष यसारांशमनुभूयभुक्त्वा शुभंपिबत्यसौनित्यमितिस्मृतेः। शिष्टमुच्छिष्टमरसंरसरहितमल्पभोग्यंकिंचिद्भोग्यंशरीरभाजांशरीरिणांप्रयच्छसिकिल। किलेत्युक्त

प्रमाणप्रसिद्धिंद्योतयंति । दुःखातिदूरंदुःखासंस्पृष्टं गतपारमनंतमित्यर्थः यत्सुखंतस्यएकभोक्तुर्मुख्यभोक्तुस्तस्यतवाखिलंभोग्यंवस्तुयोग्यंहृदितर्कयामः । अखिलसारभोक्तृत्वात्पतिभिरस्माभिःसहक्रियमाणभोगस्यापिमुख्यतस्त्वमेवभोक्तेतिवयमपितवैवयोग्याइत्यस्मन्निषेधोनयुक्तमितिभावः ॥ ६१ ॥ आपाततोनंगीकारमंततोंगीकारमेकयैवोक्त्यागूढाभिसंधिनोवदतःकृष्णस्याभिसंधिंजानंतीनांगोपीनामुक्तिप्रत्युक्तीवर्णयति धर्मइति । हेश्रुतिसंगताक्ष्यःश्रुतिभिर्वेदैःसंगतानिसंबद्धान्यक्षाणींद्रियाणियासांतासांसंबुद्धिः जगुप्स्तितंचसर्वत्रह्यौपपत्यंकुलस्त्रियइत्यागमज्ञाइत्यर्थः । अयंपरपुरुषपरिग्रहोवोयुष्माकंधर्मोनभवतितस्माद्दंतव्यमित्यनंगीकारोबाह्यः । आंतरंतुहेश्रुतिसंगताक्ष्यःश्रुतिभिःश्रवणैःसंगतान्यक्षीणिलोचनानियासांताः बहुव्रीहौसक्थ्यक्ष्णोरितिषच् षिद्गौरादिभ्यश्चेतिङीप् आकर्णायतलोचनाइतिगोपीनांचित्ताकर्षणार्थंस्तुतिः श्रवणाम्नाययोःश्रुतिरित्युभयत्रापिकोशः।अयंपत्यादिकंपरित्यज्यमत्सेवैवकर्तव्येतिभवतीभिरुक्तोधर्मो

धर्मो न वोयं श्रुतिसंगताक्ष्यो धर्मो नवोयं श्रुतिसंगताक्ष ॥ मान्यं भजध्वं रमणं विहाय मान्यं भजामो रमणं विहाय ॥ ६२ ॥ हिताहिताज्ञा बत यूयमंगना यतो त्वधर्मे मतिरस्ति निश्चला ॥ हिताहितज्ञा वयमच्युत प्रभो यतो त्वधर्मे मतिरस्ति निश्चला ॥ ६३ ॥

नवःनूतनोपूर्वइत्यर्थः। सर्वधर्मान्परित्यज्यमामेकंशरणंव्रजेतिप्रमाणसिद्धत्वादितिभावः । इतिकृष्णोक्तागोप्यःकृष्णस्याभिसंधिमुद्घाटयंति धर्मइति । हेश्रुतिसंगताक्षआकर्णांतलोचनअयंगोपीनांप्रेमोद्रेकोत्सवोयंत्वत्सेवारूपोधर्मोनवोनूतनोविषयासक्तैरज्ञातचरः।पुनर्गूढाभिसंधिःकृष्णोवदति मान्यमिति।रमणंस्वपतिंविहायान्यंमाभजध्वं इदंतुबाह्यं।रमणंविहायत्यक्त्वामान्यंपूज्यंमामेवभजध्वं औपपत्यनिषेधस्तुलौकिकनिषेधपरइतिहृदयम् । गोप्योहृदयमुद्घाटयंति मान्यमिति। हेकृष्णरमणंपतिंविहायमान्यंपूज्यंत्वांभजामः॥ ६२ ॥ हिताहितेति। अंगनागोप्योयूयंहितमिष्टमहितमनिष्टंचनजानंतीतिहिताहिताज्ञाः कुतःकारणादधर्मेनिषिद्धेनिश्चलादृढामतिर्बुद्धिरस्तिहि बतखेदे इतिबाह्यः।हेअंगनाः शुभांग्यइतिस्तुतिः। यूयंसर्वभूतानांहितोपदेष्ट्रापितामहेनाहितादत्ताआज्ञायासांताः संभवंतुसुरस्त्रियइतिभागवतवचनादितिभावः।कुतःकारणादस्यअकारवाच्यस्यपरमात्मनःसंबंधिनि अइतिब्रह्मेतिश्रुतेः । धर्मेवैष्णवधर्मइत्यर्थः।निश्चलामतिरस्तीतिहृदयं। हृदयमुद्घा

टयंति । हेअच्युतप्रभोकृष्णहिताहितज्ञावयंयतोऽधर्मेनिश्चलामतिरस्ति अक्षरार्थस्तूक्तः । वाकोवाक्यालंकारः । उक्तिप्रत्युक्तिचातुर्यंवाक्यमित्युक्तेः ॥ ६३ ॥ वाग्वैखरीमिति । सकृष्णः वाग्वैखरींपरवचनेनैवपरस्योत्तररूपांवाक्प्रौढिंनिरीक्ष्यैव प्रीतःसंतुष्टःसन् प्रियोक्तिपरिरंभणचुंबनाद्यैःप्रियवचनालिंगनचुंबनादिभिः सुप्तमनाविर्भूतं मदनंकामं प्रबोध्याविर्भूतंकृत्वा स्वांस्वकीयां कामिविदूरतांकामिजनाप्राप्यतां सत्यामबाध्यां कर्तुमिव वल्लवीनांगोपीनां अदृश्यःसमभूत् अंतर्दधे । शांतावस्थायांताभिःसहसंभाषणंकृत्वातासांकामितायांसत्यांअदृश्यत्वेकामिविदूरत्वंस्पष्टंभवतीतिभावः । अतएवसुप्तंमदनंप्रबोध्येत्युक्तम् ॥ ६४ ॥ ताइति । पत्यपत्यभवनेषुपतिपुत्रागारेषु विरक्तंरागरहितंचित्तंयासांताः विषयद्वेषावस्थांप्राप्ताइत्यर्थः । पुंडरीकवत्श्वेताब्जवन्नय

**वाग्वैखरीमिव निरीक्ष्य स वल्लवीनां प्रीतः प्रियोक्तिपरिरंभणचुंबनाद्यैः ॥ सुप्तं प्रबोध्य मदनं समभूददृश्यः सत्यां विधातुमिव कामिविदूरतां स्वाम् ॥ ६४ ॥ ताः पत्यपत्यभवनेषु विरक्तचित्ताः श्रीपुंडरीकनयनेक्षणकार्यसक्ताः ॥ आरण्यकेषु मुनिवर्ग इवातिमुग्धाश्चेरुर्विमृग्य बहुधा तमरण्यकेषु ॥ ६५ ॥ समसमुदितविमोहावस्थया क्वापि मुग्धाः समुदितघनचिंतावस्थया क्वापि शांताः ॥ वशयितुमिव कांतं योगिपूगैरचिंत्यं, मधुरवचनदक्षास्तंजगुस्ताः परोक्षम् ॥ ६६ ॥**

नेयस्यश्रीपुंडरीकाक्षस्यकृष्णस्यईक्षणमेवदर्शनमेवकार्यंकर्तव्यंतत्रसक्ताआसक्ताः अतिमुग्धाअतिमनोहराविमोहावस्थांप्राप्ताइतिवा । तागोप्यः अरण्यकेषुविपिनेषु तंकृष्णं बहुधाविमृग्यान्विष्य चेरुरितस्ततःपर्यटनंचक्रुः । कथमिव । पत्यपत्यभवनेषुविरक्तचित्तोवैराग्यरूपप्रथनसाधनवान्श्रीपुंडरीकाक्षनयनेक्षणकार्यसक्तोपरोक्षज्ञइत्यर्थः । मुनिसंघोमुनिसमूहआरण्यकेषूपनिषत्स्विव ॥ ६५ ॥ सममिति । समंसमसमयं उदितासंजाताविमोहावस्थोन्मादावस्थातया क्वापिकचिन्मुग्धावक्तव्यावक्तव्यविवेकशून्यासमुदितासमुत्पन्नाघनानिबिडाचिंतावस्थाध्यानावस्थातया क्वापिकचित्शांताविवेकवत्यः तागोप्योयोगिपूगैरचिंत्यमुनिवृंदैर्मुख्यतोध्येयंकांतंकृष्णं वशयितुमिववशीकर्तुमिव इवेत्यनेनयोगिभिरपिध्येयस्यास्यवशीकरणंदुःसहमितिद्योतयंति ।

मधुरवचनदक्षामधुरोक्तौसमर्थाःसत्यःपरोक्षमदृश्यंतंकृष्णंजगुर्गानंचक्रुः ॥ ६६ ॥ रोम्णामितिव्याख्यातमेतत् ॥ ६७ ॥ ॥ इति श्रीरुक्मिणीश

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायिनी ॥
संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातः सुरमंडलीषु महितः सर्गः स षष्ठो मुदाम्
॥ ६७ ॥ इति श्रीमद्वादिराजपूज्यचरणविरचिते रुक्मिणीशविजये महाकाव्ये षष्ठः सर्गः समाप्तः ॥ ६ ॥

विजयेषष्ठसर्गव्याख्यानं समाप्तम् ॥



श्रीकृष्णायनमः । ॐ रासक्रीडारसोत्कंठमानिनीमानसालयः । पद्मासद्मीभवद्वक्षाः कृष्णः पुष्णातु मां मुहुः । हयग्रीवकृपादृष्टिदृष्टेनकृतिनामया । गुरूपदेशातिशयाद्विशेषोप्यत्रलिख्यते ॥ यदुतिलकेति । हेयदुतिलककृष्ण अस्मान् धैर्यमात्रेण एताःकिंचिदायासयिष्यामीतिधाष्टर्यमवलंब्यैवनत्वस्मत्परित्यागसामर्थ्यसद्भावेनापीत्यर्थः । हित्वात्यक्त्वा गतोसि । यथात्वद्विरहासहिष्णुत्वमस्माकं तथास्मद्विरहासहिष्णुत्वंतवाप्यस्त्येवेतिभावः । नचेदेवंनचेदयाज्ञाप्राप्तसंगमप्रार्थनालब्धसुंदरीसंबंधंकथंत्यजसि । स्वयमेवागतावरेत्युक्तेरितिभावः । इतिमोहावस्थापन्नानांवचनं । एतादृशीःप्रतिशांतावस्थापन्नाकाचनगोपीवदति । तदिदमिति । हेतन्विकृशांगिजात्यैकवचनं । उरसाश्रियंबिभर्तीतिश्रीभृत्तस्यास्यकृष्णस्यतदिदमस्मत्परित्यागलक्षणंकार्यमुचितंयुक्तमेव । लक्ष्मीपतेःकिंत्वयेतिभावः । यद्यस्मात्कारणादस्यचरणकमलधूलिःपादाब्जरेणुस्तन्वींनारींविधातुंकर्तुंसमर्थाभवति । रामावतारेशिलीभूतायायोषित्करणात् अनेनरा

यदुतिलकगतोस्मान्धैर्यमात्रेण हित्वा त्यजसि कथमयाज्ञाप्राप्तसंगं न चेत्त्वम् ॥ तदिदमुचितमस्य श्रीभृतो यत्समर्था चरणकमलधूलिस्तन्वि तन्वीं विधातुम् ॥ १ ॥ अश्वत्थद्रुम नः प्रियः किल भवन्मध्ये सदा वर्तते तस्मै ज्ञापय वल्लवीजनदशां कष्टामदृष्टप्रियाम् ॥ नो चेत्त्वद्धृदि लग्नमग्निमथवा त्वत्संस्थितिं तेऽभिधां नो देह्यंग वियोगरोगरहितां त्वं मर्त्यतामाश्रय ॥ २ ॥

मएवकृष्णइतिसूच्यते । पादधूलिमात्रेणास्मत्तोप्यधिकसुंदरीकरणसमर्थस्यकिमस्माभिःकृत्यमितिभावः ॥ १ ॥ कृष्णान्वेषणायेतस्ततोवनेसंचरंत्योमोहावस्थांप्राप्ताअश्वत्थादिवृक्षान्प्रतिवदंति । अश्वत्थेत्यादिना । हेअश्वत्थद्रुमपिप्पलतरो नोस्माकं प्रियःप्राणेश्वरःकृष्णः भवन्मध्येत्वदुदरेसदावर्ततेतिष्ठति किल । किलेत्यनेनमूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे । अग्रतःशिवरूपायवृक्षराजायतेनमइतिस्मार्तप्रसिद्धिंद्योतयंति । भवन्मध्येवर्ततइत्यनेनोक्तवचनेरूपशब्दस्यप्रतिमार्थकत्वमुक्तंभवति । ततश्चकिमित्यतआहुः । तस्माइति । अदृष्टःप्रियोयासांताअतएवकष्टांक्लेशदायिनीं वल्लवीजनानांदशामवस्थांतस्मैत्वन्मध्यस्थितायज्ञापयविज्ञापय । त्वद्विरहेणगोप्योतिकष्टमापन्नाइतिकथयेत्यर्थः । नोचेन्मयाकिमर्थंकथनीयमित्यस्मानुपेक्ष्यनविज्ञापयसिचेत् हे

अंगाश्वत्थवृक्षत्वद्बुद्धितवोदरेलग्नंसंबद्धंस्थितमित्यर्थः । अग्निंवह्निं अग्निगर्भःशमीगर्भइत्यश्वत्थस्याग्निगर्भत्वोक्तेरितिभावः । अथवात्वत्संस्थितिंतवाव
स्थांतरुत्वमित्यर्थः।अथवातेतवाभिधांअश्वत्थइतिनामनोदेहि।किमित्यतआहुः।वियोगरोगरहितामिति। वियोगएवविरहएवरोगस्तेनरहितां इदंचविशेषण
सर्वत्रसंबध्यते । त्वद्दत्ताग्निनास्माकंभस्मिभावउच्यते । तरुत्वावस्थायांवाश्वोनतिष्ठतीत्यश्वत्थःइतिनामधारणेइहैवमरणप्राप्त्यावियोगस्याकिंचित्करत्वा
दितिभावः । श्वोनतिष्ठतीत्यश्वत्थइत्यत्रवह्निरश्वरूपेणात्रतिष्ठतीत्यश्वत्थइतिनैघंटिकनिरुक्तावेवनिरुक्तत्वात्सकारलोपः । मदीयंसर्वंयुष्मभ्यंदत्तंचेन्मया
कथंस्थातव्यमित्यतआहुः । त्वमिति । त्वंमत्यतामस्मदीयांमनुष्यतामाश्रयकृष्णकृपाविधुराणांतरुत्वंमरणंवावरमितिभावः ॥ २ ॥ मूलासेचनेति ।
आर्द्रंक्लिन्नंवस्त्रंयस्यसः पुमान्पुरुषः मूलेंघ्रिमूलप्रदेशआसेचनपूर्वकंजलप्रक्षेपपूर्वकंयथातथा परिसरन्परितोगच्छन्प्रदक्षिणंकुर्वन्नित्यर्थः । स्वाभीष्टंस्व
स्यपतिपुत्रधनाद्यभीष्टं लभतेप्राप्नोतिकिल । किलेत्यनेनस्मार्तप्रसिद्धिंद्योतयंति । बतआश्चर्ये । हेअश्वत्थअनेनैवविधिनाप्रदक्षिणंकुर्वतीषुअस्मासूपे

**मूलासेचनपूर्वकं परिसरंस्त्वामार्द्रवस्त्रः पुमान्स्वाभीष्टं लभते किल प्रतिवनं विष्वक् चरंतीर्बत॥**
**कायक्लेशवशात्स मुत्थितघनस्वेदांबुनार्द्रांबरा अस्रौघैः किमुपेक्षसे विदधतीरार्द्रां भवद्वेदिकाम्॥ ३॥**

क्षाकिमर्थंक्रियतेइत्याहुः । प्रतिवनमिति । वनंवनंप्रतिवनं लक्षणेनाभिप्रतीआभिमुख्यइत्यव्ययीभावः । विष्वक्समंतात् चरंतीःकृष्णान्वे
षणार्थंपरितोगच्छंतीः नकेवलंतवैवप्रदक्षिणमस्माभिःक्रियतेकिंतुत्वज्जातीयानामपीतिभावः । नन्वार्द्रवस्त्राद्यंगाभावेकथंफलंभविष्यतीत्यतआहुः । का
येति । कायक्लेशवशाद्व्यायामजन्यशरीरायासवशाद्धेतोः समुत्थितंयद्घनंबहुतरंस्वेदांबु तेनार्द्राणिक्लिन्नान्यंबराणियासांताः अनेनार्द्रांबरतासंपादि
ता । अस्रौघैःकृष्णविरहजन्याश्रुप्रवाहैः रोदनंचास्रमश्रुचेत्यमरः । भवतस्तववेदिकांवितर्दिं स्याद्वितर्दिस्तुवेदिकेत्यमरः । आर्द्रांविदधतीःकुर्वतीः ।
नकेवलंमूलमात्रस्यासेचनंकृतमपित्वाधारबंधस्यापीतिभावः । एवंसांगंप्रदक्षिणकर्माचरंतीर्नःकिंकिमर्थमुपेक्षसे । कृष्णसंदर्शनलक्षणफलंकिमर्थंनददा
सीत्यर्थः । किंशब्दआक्षेपे । वैदिकस्यसांगस्यकर्मणःफलवैकल्येवेदाप्रामाण्यप्रसंगादितिभावः । अत्रमूलासेचनाद्यसंबंधेपिसंबंधोक्त्याऽतिशयोक्तिर

लंकारः । किंशब्देनोपेक्षांनकुर्वित्याक्षेपादाक्षेपालंकारेणसंकीर्त्यते ॥ ३ ॥ नवदतीति । हेसख्यः अयमश्वत्थः नोस्माकंप्रियमप्रियंवानवदति । बतखेदे । स्वैरं यथेच्छं आराधितोपिपूजितोपीष्टमभिलषितंकृष्णदर्शनलक्षणफलंनदिशतिनददातीतिमुग्धावचनं । अथकाचनमुग्धावदति । हरिचरणौविदूरेयासांताःकृष्णविमुख्यइत्यर्थः । नोस्मान्कोनुवासंभावयेत् तदाज्ञारूपंसुकृतमपिपुण्यमपिकिंफलमर्थमापादयेत् । हरिविमुखःसर्वजनवैमुख्यंप्राप्नोतीतिभावः । तरुत्वान्नव दतीत्यस्मिन्नंशेमोहो हरिविमुखानांकिमपिनभवतीत्यस्मिन्नंशेविवेकः । अतएवावतारिकायांअर्धमुग्धेत्युक्तं । विभावालंकारः ॥ ४ ॥ प्रेष्ठमिति । अश्वत्थःस्वांतरेस्वमध्ये संस्थितंप्रेष्ठंप्रियंकृष्णं नदिशतिनददातीतिकृत्वा भृशमत्यर्थमार्तादुःखितास्तागोप्यःकोपादश्वत्थोपरिक्रोधात्शापमयोजयन्निवददुरिव । कथ

न वदति बत सख्यो नः प्रियं विप्रियं वा न दिशति फलमिष्टं स्वैरमाराधितोपि ॥ हरिचरणविदूराः को नु संभावयेन्नः सुकृतमपि तदाज्ञारूपमापादयेत्किम् ॥ ४ ॥ प्रेष्ठं स्वांतरसंस्थितं न दिशतीत्यार्ता समस्ता भृशं कोपात् शापमयोजयन्निव सतां स्यात्त्वत्फलं निष्फलम् ॥ विष्ठातो जनिरस्तु ते निशि तवच्छाया विगेयास्त्वियं क्रूरस्ते हृदि वह्निरस्तु न सदा स्पर्शस्य योग्यो भव ॥ ५ ॥

मित्याकांक्षायामाह । हेअश्वत्थ फलंतवफलंसतांसत्पुरुषाणांनिष्फलमनुपादेयंस्यात् तेतवविष्ठातःजनिरुत्पत्तिरस्तु । काकविष्ठासमुद्भवइत्युक्तेः । इयंतवच्छायानिशिरात्रौविगेयानिंदितास्तु । दिवाबिभीतकच्छायारात्राववश्वत्थसंभवा । दिवानिशंनरच्छायाहंतिपुण्यंपुराकृतमितिवचनादितिभावः । निशीत्यनेनरात्रौस्वेष्टाप्रदानस्यैवच्छायायाविगेयत्वरूपशापप्रदानाद्गोपीभिरपराधानुसारिदंडःकृतइतिद्योत्यते । तेहृदितवोदरेक्रूरस्तीक्ष्णोवह्निरस्तु । वह्निस्तवोदरंदहत्वित्यभिशापः । कुपितानांस्त्रीणामियंजातिः । सदासर्वदा स्पर्शस्ययोग्योनभव अस्पृश्योभवेत्यर्थः । अश्वत्थसागरौसेव्यौनस्प्रष्टव्यौकदाचनेतिस्मृतेः । उच्चनीचाश्वत्थस्वभावाभ्यांगुणदोषत्वकल्पनायास्तुतिशापवर्णनादुत्प्रेक्षालंकारः । अनेनकार्यार्थितयागुणमपिसगुणीकृत्यस्तवनात् तदसिद्धावदोषमपिदोषीकृत्याभिशापप्रदा

नाङ्गोपीनांकृष्णदर्शनलक्षणकार्येआग्रहातिशयोवर्णितोभवति । एवमुत्तरत्रापिद्रष्टव्यम् ॥ ५ ॥ अस्माकमिति । योऽश्वत्थोऽस्माकंवचनंनशृणोतिप्रत्युत्तरं वानोवक्तिनवदति अतःकारणादसावश्वत्थोबधिराग्रणीःकर्णशून्याग्रेसरोमूकश्चवाग्व्यापारशून्यश्चभवतु । अपराधानुसारादितिभावः । योऽश्वत्थोऽस्माकंरम णंकांतंकृष्णंनैवदर्शयेत्नदर्शयति । अतःस्वांतस्थितोप्यच्युतःकृष्णएतस्याश्वत्थस्यदृष्टिपथंलोचनमार्गंनप्रयातु । स्वसन्निहितमपिकृष्णंनपश्यतादित्यर्थः । किंबहुनाऽस्याश्वत्थस्यपार्श्वेऽसौपुरुषोवसतात्तिष्ठतु योद्विजकुलेप्रेत्यमृत्वास्वर्नगतःपिशाचत्वंप्राप्तोब्रह्मराक्षसस्याश्रयोभवतु । नात्रास्माभिःस्थेयमित्यर्थः । अश्वत्थमूलेब्रह्मराक्षसोस्तीतिलोकप्रसिद्धेरितिभावः ॥ ६ ॥ हेजातीति । हेजातिहेमालतिहेअम्येतुलसि अयिमल्लिके योगिजनप्रियस्यपरमहंसप्रिय

अस्माकं न हि यः शृणोति वचनं प्रत्युत्तरं वक्ति नो मूकोऽसौ बधिराग्रणीश्च भवतु स्वांतस्थितोऽप्यच्युतः ॥ नैतद्दृष्टिपथं प्रयातु रमणं यो दर्शयेन्नैव नस्तत्पार्श्वे वसतादसौ द्विजकुले यः प्रेत्य न स्वर्गतः ॥ ६ ॥ हे जाति मालति तुलस्ययि मल्लिकेम्ये योगं समादिशत योगिजनप्रियस्य ॥ यद्यैकजन्मनि कदापि तदंघ्रिसंगो युष्म भ्यमाभिरबलाभिरदायि साध्व्यः ॥ ७ ॥ तुलसि मिलसि कृष्णांघ्र्यंबुजे पुण्यभूजे वरय वरयतींद्रैर्वंदितेऽस्मा न्वयस्याः ॥ मनसि मनसिजादेर्निर्वृतिं निर्मिमीते वनजवनजगंधोप्यंतरेणांब न त्वाम् ॥ ८ ॥

स्यकृष्णस्य । अनेनकृष्णस्याकामुकत्वंध्वन्यते । योगंसंबंधंसमादिशतदत्त । हेसाध्व्योहेशोभनाः यर्हियद्यनंतजन्ममध्यएकजन्मनितत्रापिकदाचिदपि आभिरबलाभिस्तस्यकृष्णस्यांघ्रिसंगश्चरणसंबंधोयुष्मभ्यमदायिदत्तः । यद्यस्माभिर्भवतीनांकृष्णांघ्रिसंगोदत्तस्तर्हीदानीमस्माकंभवतीभिरपिकृष्णांघ्रिसंगो देयइत्यर्थः । उपकारस्यप्रत्युपकारेणैवचारिताथ्यादितिबाह्योभावः । आंतरस्तुजन्मांतरेपुष्पैःकृष्णःसमाराधितश्चेत्सलभ्यतामिति ॥ ७ ॥ तुलसीति । पुण्य भूजेपवित्रमहीरुहे वरयतींद्रैःपरमहंसैः वंदितेनमस्कृतेहेतुलसि त्वंकृष्णांघ्र्यंबुजेकृष्णचरणकमलेमिलसिमेलनंप्राप्नोषि । वयस्याःसखीरस्मान्वरयां गीकुरु । मेलनसमयेस्मानपिकृष्णांघ्रिंनयेत्यर्थः । हेअंबमातस्तुलसि त्वामंतरेणविना अंतरांतरेणयुक्तइतिद्वितीया । वनेजलेजायंतइतिवनजानि

कमलानि जीवनंभुवनंवनमित्यमरः । तेषांवनंसमूहस्तज्जोगंधआमोदः अनेनगंधस्यबाहुल्यंसूच्यते । मनसिजस्यमन्मथस्यादेहेंतुभूतस्यपितुरित्यर्थः । कृष्णस्य मनसिचित्ते निर्वृतिंसुखंनर्निर्मिमीतेनजनयति तुलसींविनाकेवलपुष्पैर्विष्णवर्चनस्यनिषिद्धत्वादितिभावः ॥ ८ ॥ वृंदावनमिति । हेबतजात्यादिपुष्पलताः चंद्रस्यसंबंधिनश्चांद्राःप्रमोदंकुर्वंतीतिप्रमोदकराःस्तेचतेचारुकराश्चमनोहरकिरणाश्चतैरभिरामंसुंदरं वृंदस्यावनंरक्षणंयस्मात्तद्वृंदावनंविपिनंभवदीयवासःकिल । यद्यपिवृंदायाःस्त्रियोवनंइतिवस्तुस्थितिस्तथापिविमोहाद्वाकार्यार्थितयावृंदस्यावनंयस्मादितिपदच्छेदसंभवादियमुक्तिः । भवन्मातृस्थानीयस्यापिवनस्यवृंदरक्षकत्वंकिलप्रसिद्धंभवतीनामपीतिभावः । एतादृशस्थलेवर्तमानायूयंव्रजसुंदरीणांव्रजवधूनांवृंदंसमूहं वृथानिरर्थकं कंदर्पस्यमदनस्यबाणैःशरैर्दलितंछिन्नं । जात्यादीनांकामोद्दीपनत्वादितिभावः । कुरुत । हाकष्टं । वृंदविघातकमनोहरस्थलउत्पन्नानांव्रजांगनाघातकत्वंकुलोचितंनभवतीत्यर्थः ।

वृंदावनं किल वनं भवदीयवासश्चांद्रप्रमोदकरचारुकराभिरामम् ॥ कंदर्पबाणदलितं बत यूयमासां वृंदं वृथा कुरुत हा व्रजसुंदरीणाम् ॥ ९ ॥ नः संदिशंतु नयनोत्सवमच्युतं तं नक्रातिभीतगजगीतचरित्रजातम् ॥ पश्चात्तदंघ्रियुगले विनिवेश्य कुर्मः पद्मासनादिसुरसंचयसत्कृता वः ॥ १० ॥

उत्तमास्तुस्वकुलानुसारेणकार्यंकुर्वंतीतिभावः ॥ ९ ॥ स्तुतिकुलप्रशंसाभ्यामप्यजायमानेकार्येमध्यमप्रकृतयःकृतोपकारंनिवेद्यापिस्वाभीष्टंप्रार्थयंते । नःसंदिशंत्विति । हेसाध्व्योभवत्यो नक्रात् ग्राहोवराहोनक्रस्तुइत्यमरः । अतिभीतोयोगजोद्विरदस्तेनगीतमभिवर्णितंचरित्रजातंचरित्रसमूहोयस्यसतथोक्तस्तं । अनेनमंदबुद्धित्वान्नास्मासूपेक्षाकार्येतिसूच्यते । नयनानामुत्सवोयस्यसतथोक्तस्तमच्युतंकृष्णंनोस्माकं संदिशंतु । पश्चात्कृष्णस्यप्राप्त्यनंतरंवोयुष्मांस्तस्यकृष्णस्यांघ्रियुगलेचरणयुग्मेविनिवेश्यसमर्प्यपद्मासनोब्रह्मादिर्येषांतेसुरादेवास्तेषांसंचयेनसमूहेनसत्कृतामानिताःकुर्मः । पूर्वमनर्पितबुद्ध्यानंगीकृताबःअस्माभिःकृष्णपादार्पणेकृतेब्रह्मादयोदेवाहरिनैर्माल्यबुद्ध्याशिरसाधारयिष्यंतीतिमहानुपकारोभविष्यतीतिभावः । यद्यपिपूर्वश्लोकेउपकारोनिवेदितस्तथापितस्यातीतत्वेनमनुसृत्यकार्यकारणत्वमुत्तमस्वभावएवेतिनासौमध्यमकोटौनिवेशितः अतएवात्रपश्चादित्युक्तम् ॥ १० ॥

उपकारांतरमपिनिवेदयंति । बतेति । हेबत जात्यादयोनतजनस्यनमस्कृतजनस्यबंधुंसुहृदं सांद्रंघनीभूतंसौंदर्यलावण्यंतेनसिंधुरिवतमुदारहारमुत्कृष्टमुक्ताहारं यदुनृपस्यकुलंवंशस्तत्रसारंयदुकुलोत्तममित्यर्थः । कृष्णंयच्छतप्रयच्छत । तदनुकृष्णप्रदानानंतरंप्रहृष्टावयंसंतुष्टाः कृतमिष्टंयाभिस्तायुष्मान्परमपदयुगाब्जे कृष्णपादयुगलारविंदेपूरयामोर्पयामः । तदनुसमर्पणानंतरंशिरसिधारयामः । इदानींकृष्णविरहात्स्रगाद्यसहिष्णुतालक्षणविषयद्वेषेणास्माभिःपरित्यक्ताव कृष्णप्राप्त्यनंतरंकृष्णायसमर्प्यशृंगारार्थंकवरीषुधारयामइतिहृदयं । शिरसाधारणलक्षणप्रत्युपकारप्राप्तिरिति ॥ ११ ॥ इदानींस्वापकारमाशंक्यास्मद्याज्ञांनि घ्नंत्यएताउदरंभरत्वेनाधमाइत्यभिप्रायेणाहुः गच्छंत्विति । तदीयाःकृष्णसंबंधिन्योयागेयमालास्तुत्यमालाःकर्मसमालंब्यआश्रित्य कृतोंगसंगःकृष्णस्योरो लक्षणांगसंबंधोयाभिस्ताः । अनेनसपत्नीत्वंध्वनयंति । एताजात्यादयोगाढंदृढं नोस्माकं परिरंभणआलिंगनेकृष्णेनकृतेसतिस्वायासंस्वप्रयासं उभयोरंगसं

बत नतजनबंधुं सांद्रसौंदर्यसिंधुं यदुनृपकुलसारं यच्छतोदारहारम् ॥ तदनु शिरसि युष्मान् धारयामः कृतेष्टाः परमपदयुगाब्जे पूरयामः प्रहृष्टाः ॥ ११ ॥ गच्छंतु पत्युर्गतिमासु नैता वक्ष्यंति गाढं परिरंभणे नः ॥ स्वायासमाशंक्य तदीयगेयमालाः समालंब्य कृतांगसंगाः ॥ १२ ॥ अन्यांचनान्मुकुलितं सरसीरुहास्यमन्वेति मंदमरुताचलितं द्विरेफः ॥ सन्नाथ पश्य सदयाग्रग साधुवक्ष्य किं नः परित्यजसि खिन्नहृदस्त्वदर्थे ॥ १३ ॥

घट्टनायमध्यस्थितानांचूर्णीभावेनस्वरूपहानिमित्यर्थः । आशंक्यासुगोपीषुपत्युःकृष्णस्यगतिं अनेनमार्गेणैवकृष्णोगतइतिगमनंनवक्ष्यंतिनवदिष्यंति यतोऽ तोऽन्यत्रगच्छंत्वितिकस्याश्चिद्वचनं । तरुत्वादवचनेप्यायासाशंकयानिमित्तत्वकल्पनाद्विभावनालंकारः । कल्पनमपिविमोहेनेतिभ्रममूलकः । अनेनकृष्णो लभ्यतेचेद्दृढपरिरंभणंकरिष्यामइतिगोपीनांरणरणिकाव्यज्यते ॥ १२ ॥ वायुनाचलितंमुकुलितंकमलमन्वीयमानंभ्रमरंदृष्ट्वादंपतीप्रकल्प्यकृष्णंप्रतिवदंति अन्यांचनादिति । द्विरेफोभृंगः अन्यस्यांवल्ल्यामंचनाद्गमनादन्यस्त्रीगमनादितिध्वनिः । अंचनादित्यनेनार्हणपूर्वकंगमनंनतुयदृच्छयेतिध्वन्यते । मुकुलितंमुद्रि तंकांतांगीकारवैमुख्यमितिध्वनिः । मंदमरुतामंदानिलेनचलितंकंपितं । मंदेत्यनेननायकस्यापराधितयाभीरुत्वंद्योत्यते । चलितमित्यनेनकांतप्रार्थनानंगीकारस्त

चकंशिरोवधूननंद्योत्यते । सरसीरुहस्यकमलस्यास्यंमुखमन्वेत्यनुसरति सरसीरुहास्यमित्यनेननायिकायाःकिंचित्कोपशांतिर्ध्वन्यते । अन्वेतीत्यनेनरसिकः पुरुषोंगीकारपराङ्मुखीमपिस्वचाटूक्त्यादिनाभिमुखीकरोतीतिसूच्यते । तथाप्रियवचनस्वभावेनदक्षिणत्वंद्योत्यते । हेसन्नाथसतांपतेसत्पतेदययासहिताः सदयास्तेषामग्रगअग्रेसरसाधुवश्यसज्जनाधीनहेकृष्णपश्यविमुखीमप्यनुसरंतंद्विरेफंवयंतुकमलिनीवत्सापराधेपित्वयिविमुखानइत्याहुः । त्वदर्थैत्वत्प्राप्त्यर्थमि त्यर्थः । खिन्नंहृद्धृदयंयासांताइतस्ततःपर्यटनात्खेदयुक्तचित्तानोस्मान्किंकिमर्थंपरित्यजसि । सत्पतित्वात्कृपायुक्तत्वाच्चत्वत्संगाभिमुखीनामस्माकंपरि त्यागोनोचितइतिभावः ॥ १३ ॥ हेपद्मिनीति । हेपद्मिनिपद्मवतिसरसि पीवरौपीनावंसौस्कंधौयस्यतं स्कंधोभुजशिरोंसोऽस्त्रीत्यमरः । प्रियंप्राणकां तंकृष्णमस्माकमीरयकृष्णोत्रतिष्ठतीतिकथय । कृष्णःकुत्रतिष्ठतीतिनज्ञायतेकथंवक्तव्यमित्यतआहुः सइति । सतुपुनर्नाराआपोयनमाश्रयोयस्यसनारा

हे पद्मिनि प्रियमुदीरय पीवरांसं नारायणः स तु तवास्त्युदरे निगूढः ॥ त्वं हि स्वभावमधुरेति बतार्थ्य सेव नो चेद्दृगंबुनिकरैः कलुषा खलु स्याः ॥ १४ ॥ पत्या समं तव जले विमले विहृत्य कुर्मः कुचौघकृ तकुंकुमरंजितां त्वाम् ॥ मुग्धप्रसन्नमुखसारसशोभमानां स्वर्मुक्तपुष्पनिकरैः परितः सुपूर्णाम् ॥ १५ ॥

यणःकृष्णः आपोनाराइतिप्रोक्ताआपोवैनरसूनवः । अयनंतस्यताःपूर्वंतेननारायणःस्मृतइतिवचनात् । जलवासित्वात्तवोदरे सरस्याजलात्मकत्वादितिभावः । निगूढश्छन्नस्तिष्ठति अतस्तवकृष्णज्ञानंनास्तीत्यर्थः । भवतीपुकिमर्थंमयाकथनीयमित्यतआहुः त्वंहीति । बतहेअंबपद्मिनित्वंस्वभावतोमधुरामाधुर्योपेता अपांमधुररसस्यस्वाभाविकत्वात् रसांतरस्योपाधिकत्वादितिभावः । मृदुस्वभावेतिध्वनिः । इतिकृत्वाअर्थ्यसेप्रार्थ्यसे सरसहृदयेषुयाञ्चानव्यर्थाभवतीतिभावः । विपक्षेबाधकत्वात्रसांतरस्यौपाधिकत्वादितिभावः । मृदुस्वभावेत्यप्याहुः नोचेदिति । नोचेत्कृष्णंनवदसिचेद्दृशामंबुनिकरैरस्रसमूहैस्त्वंकलुषाआविलास्याः खलु । अस्मच्छोकाश्रुप्रवाहस्योष्णत्वेनतवमाधुर्यहानिर्निश्चयेनस्यादित्यर्थः ॥ १४ ॥ पत्येति । हेपद्मिनिविमलेनिर्मलेतवजले पत्याकृष्णेन समंसाकं विहृ त्यत्वां कुचौघेनस्तनसमूहेनकृतेनलिप्तेनकुंकुमेनरंजितांमुग्धानिमनोहराणिप्रसन्नानिमुखान्येवसारसानिसरसीरुहाणितैःशोभमानां स्वःस्वर्गान्मुक्तानंदेवैर्दृष्टा

निपुष्पाणितेषांनिकरैःपरितःसमंतात्पूर्णांकुर्मः । स्वर्मुक्तेत्यादिनास्त्रीक्रीडासमयेब्रह्मादिदेवैःपुष्पवर्षस्यक्रियमाणत्वात्कृष्णस्यसाक्षात्परब्रह्मत्वंद्योत्यते ॥ १५ ॥ इदानींपद्मिनीमाक्षिपंति । नैषेति । यापद्मिनीस्वीयप्रवाहस्यनिर्झरस्यभरेणधिक्कृताधिक्षिप्ताश्रवणपथंनप्रापितेत्यर्थः । लोकस्यजनस्यवार्तावृत्तांतोय यासेयं भृंगावलीभिर्भ्रमरसमूहैश्चुंबितानिसरोरुहाण्येवकोमलंमनोज्ञमास्यंमुखंयस्याःसा । अतएवेतरार्तिंपरदुःखमजानती । नहिवंध्याविजानातीतिन्याया त् । स्वयंसुखिततयापरदुःखानभिज्ञेत्यर्थः । सैषापद्मिनीनवांबुदतनुंनूतनमेघसदृशशरीरंयस्यतंनिजंकृष्णंनोस्माकंनकथयेत् । स्वीयप्रवाहेत्यादिनैश्वर्यमत्तः पुरुषःनकेवलंपरैःसार्धंनवदतिकिंतुपरेषांवचनमपिनशृणोतीतिद्योत्यते । अतोस्मत्प्रयोजनमत्रनभवति अन्यत्रगच्छामइतिभावः ॥ १६ ॥ पद्मानीति । हेपद्मा

नैषा नवांबुदतनुं कथयेन्निजं नः स्वीयप्रवाहभरधिक्कृतलोकवार्ता ॥ या चुंबिताखिलसरोरुहकोमला स्या भृंगावलीभिरितरार्तिमजानती या ॥ १६ ॥ पद्मानि शंसत पयोब्धिसुताकलत्रं युष्मद्वनेषु वस तीति वदंति सतः ॥ कुक्षिस्थिताय विधयेऽपरथा ललाटलेखां स्म जीवनकृते रचितां विमार्ष्टुम् ॥ १७ ॥ इमानि लक्ष्म्याः किल नः सपत्न्याः समाननामानि सदा गृहाणि ॥ अस्त्राणि चास्मान् द्विषतस्त दीयपुत्रस्य तद्गच्छत देशमन्यम् ॥ १८ ॥

निकमलानि पयोब्धेःक्षीरसमुद्रस्यसुतालक्ष्मीःसैवकलत्रंजायायस्यतंकृष्णंशंसतकथयत । सकुत्रतिष्ठतीत्यतआहुः । युष्मद्वनेषुवसतीतिसंतःसज्जनावदंति । तुलसीकाननंयत्रयत्रपद्मवनानिच । वसंतीवैष्णवायत्रतत्रसंनिहितोहरिरितिवचनादितिभावः । अपरथाभवत्यःकृष्णंनकथयंतिचेत् इदंवाकर्तव्यमित्याहुः । जीवनकृतेप्राणधारणायरचितांलिखितांललाटलेखांललाटाक्षरंनिमार्ष्टुमार्जयितुंकुक्षिस्थितायकमलासनत्वादुदरस्थितायविधयेब्रह्मणेवाशंसतकथयत । कृ ष्णविरहंसोढुंक्षणमात्रमपिजीवनान्मरणमेववरमितिभावः ॥ १७ ॥ पद्मानांस्वाभाविकमेवधर्मंस्वप्रयोजनासिद्धौनिमित्तंमत्वाहुः । इमानिपद्मानि नो स्माकं सपत्न्याःसमानएकःपतिर्यस्यास्तस्याः लक्ष्म्याःश्रीदेव्याः समानंपद्मेत्येकंनामधेयंयेषांतानिसपत्नीनामधारणात्तद्दासभूतानीत्यर्थः । अतो

स्मत्प्रयोजनमत्रनभवतीतिभावः । किंचतस्याःसदागृहाणिमंदिराणि लक्ष्म्याःपद्मालयत्वादितिभावः । अपिच अस्मान्द्विषतः तस्याःलक्ष्म्याःसंबंधात्तदी यःसचासौपुत्रश्चेतितदीयपुत्रस्तस्यकामस्यास्त्राणिच अरविंदमशोकंचेतितद्बाणेषुगणनादितिभावः । तत्तस्मात्कारणादन्यंदेशंगच्छतव्रजत । नहिशत्रुसं बंधिनोस्मत्प्रयोजनंसंभवतीतिभावः ॥ १८ ॥ चूतादीन्प्रत्याहुः । हेचूतेति । हेचूतकृशानांनोस्माकंकृष्णपदवींकृष्णस्यमार्गंवदशंसय । हेनारिकेल हेप नसकंटकिफल हेआम्लतिंत्रिणि कृष्णपदवीं वदेत्यस्यप्रत्येकंसंबंधः । हियस्मात्कारणाद्यूयंपुष्पाणिफलानिवल्कलानित्वचोमूलानिपत्राणिच्छायाःसमुल्ल सितपल्लवाःशोभमानकिसलयानिकोटराणिसुषिराणिआद्यानिनिर्यासादीनितैःपरान्पुष्णीथपोषणंकुरुथ । सर्वस्वैरपिपरपोषणंकुर्वतां वाङ्मात्रेणास्मत्प्रयोजन साधनेकःप्रयासइतिभावः ॥ १९ ॥ प्रतिवचनादानात्तानधिक्षिपंति तिंत्रिणीत्यादिना । हेतिंत्रिणित्वमास्वतूष्णींतिष्ठ । त्वत्तोस्मत्प्रयोजनाभावादितिभावः । य

हे चूत कृष्णपदवीं वद नः कृशानां हे नारिकेल पनसाम्ल परान् हि यूयम् ॥ पुष्णीथ पुष्पफलवल्कल मूलपत्रच्छायासमुल्लसितपल्लवकोटराद्यैः ॥ १९ ॥ तिंत्रिण्यास्व यतः फलान्यपि सदा वक्राणि ते प्रा णिनां सा त्वं ताडनकर्मसूपकुरुषे किं नारिकेलेन नः ॥ मस्ते यः फलमभ्रचुंबिनि नरालभ्ये त्वचा पक्षि णाप्यग्राह्यं दधदध्वनीनसृतिदं शस्त्राद्यसाध्यं बलात् ॥ २० ॥

तःकारणात्तेतवफलान्यपिसदासर्वदावक्राणिकुटिलानिफलप्रदानसमयेपिकौटिल्यंनत्यजसीत्यर्थः । तिंत्रिणीफलानांवक्रत्वादितिभावः । त्वंकेवलंनोपकारि णीतिनप्रत्युतापकारिणीत्याहुः । सेति । साफलदानसमयेवक्रात्वंप्राणिनांताडनकर्मसुवधकर्मसूपकुरुषेतत्रोपयुक्तासीत्यर्थः । अतस्तूष्णीमास्वेतिपूर्वेणान्वयः । नोस्माकंनारिकेलेनकिंप्रयोजनंनकिमपीत्यर्थः । हेनारिकेलअभ्रचुंबिनिअभ्रंकषेअतएवनरालभ्येमनुष्याप्राप्येमस्तेमस्तके । स्वार्थेकप्रत्ययः । त्वचाप क्षिणाशुकादिपतत्रिणाप्यंबरचरसमर्थेनापीतिभावः । अग्राह्यंग्रहीतुमशक्यं अध्वनीनांपांथानां अध्वनीनोध्वगोध्वन्यःपांथःपथिकइत्यपीत्यमरः । मर णदंसृतिदं स्वच्छायाश्रितानामुपरिफलपतनादितिभावः । बलाद्बलात्कारेणशस्त्रेणलविन्नाद्यायुधेनसाध्यंफलंदधदास्वेतिपूर्वेणान्वयः । अनेनयाचकानु

पकारिणाराजायपदार्थवित्तसंग्रहीनिष्ठुरःप्रकृतिलुब्धोध्वन्यते ॥ २० ॥ यइति। यःपनसः पक्वंपाकावस्थांप्राप्तं फलसंमितमपक्वफलसंमितंसदृशंपाकापाक दशयोरपिकदलीफलवद्वर्णविशेषाभावात्। अतएवभुविगतैःस्थितैरज्ञेयं दुर्जरकंटकैर्दुःसहकंटकैरावेष्टितं धत्ते। सपनसःप्राक्प्रथमं काकभोग्यःकाकभक्ष्यो ध्रुवंनिश्चयः। वृक्षेपक्वस्यपनसफलस्यप्राक्काकभोज्यत्वनियमादितिभावः। अत्रापिपूर्ववत्लुब्धोध्वन्यते। तस्मात्पनसादपिनास्मदिष्टसिद्धिरितिभावः। हे सखि फलपुष्पैस्तोषिताःखगाःपक्षिणोयेनसः स्वोपांतगानांस्वसमीपगतानांनृणांपक्वानिफलानिप्रदिशन्योयंचूतःसचापिचूतोनोस्माकंमनस्तोषायनस्यात् ॥ २१ ॥ पूर्ववत्परित्यागनिमित्ताभावेपिनिमित्तांतरमस्तीत्याहुः। कंदर्पमंत्रिणीति। हियस्मादेषचूतः कंदर्पमंत्रिणिवसंतेसमीयुषिसमागतेसति।

यः पक्वं फलसंमितं भुवि गतैरज्ञेयमावेष्टितं धत्ते दुर्जरकंटकैः स पनसः प्राक् काकभोग्यो ध्रुवम् ॥ चूतोऽयंफलपुष्पतोषितखगः स्वोपांतगानां नृणां पक्वानि प्रदिशन् स चापि न मनस्तोषाय न स्यात्सखि ॥२१॥ कंदर्पमंत्रिणि समीयुषि यः सरागस्तत्पक्षपातिपिकगायकहर्षहेतुः ॥ तद्बंदिनः शुकचयस्य सखा तदीयबाणौघजन्मधरणी स हि चूत एषः ॥ २२ ॥ हे माधवि प्रांतनिगूढवेल्लि श्रीमानिनीमानदमादिशेह ॥ देहि त्वदीयां स्थितिमेव नो चेन्नाम्नापि यत्राऽस्ति हि माधवी त्वम् ॥ २३ ॥

इण्गतावितिधातोर्लिटःक्वसुः। सरागःपल्लवरागेणसहितःस्नेहवानितिध्वनिः। तस्यकामस्यपक्षपातोस्यास्तीतिसचासौपिकश्चसएवगायकस्तस्यहर्षहेतुःपल्लवांकुरप्रत्यर्पणसंतोषहेतुः। तस्यकामस्यबंदिनःपाठकस्यशुकचयस्य मंजुवाक्यत्वादितिभावः। सखासुहृत् तदीयबाणौघस्यकामसंबंधिशरव्रातस्यजन्मधरणी उत्पत्तिस्थानंभवति। चूतंचनवमल्लिकेत्युक्तेः। अस्मद्विरोधिभूतमदनपरिवारस्यसर्वस्यसहायभूतत्वान्मनस्तोषायनस्यादितिभावः ॥ २२ ॥ हेमाधवीति। प्रांतेसमीपेनिगूढोत्पन्नावेल्योलतायस्यास्तस्याःसंबुद्धिः। अनेनयोषिदंतरासहिष्णुत्वंनास्तीतिध्वन्यते। हेमाधवि माधवीतिकाचनलता हेवासंति इहअस्मासु श्रीमानिन्यालक्ष्मीमानिन्यामानंचित्तसमुन्नतिंददातीतितथोक्तस्तंकृष्णं अनेनकृष्णस्यश्रीप्रियत्वमस्मदभावेप्यालस्याभावश्चध्वन्यते। आदिशप्रादिश।

नोचेत्कृष्णंनदिशसीचेत्त्वदीयांत्वत्संबंधिनींस्थितिमवस्थांमाधवीलतात्वमित्यर्थः । देहि । हियस्माद्यत्रमाधवीलतात्वेनाममात्रेणापिमाधवीत्वमस्ति माधवस्ये मामाधव्यइतिव्युत्पत्तेः । नाम्नातदीयाभवामेत्याशयः ॥ २३ ॥ अशोकइति । एषपुरोवर्ती अशोकोवृक्षविशेषः शोकरहितइतिध्वनिः । अतएवापरेषामन्येषां वेदनांनजानातीत्यपरवेदनानभिज्ञः किंचपादस्याहतेःपादताडनादेवपरोपकर्तापरोपकारशीलः स्त्रीवामपादताडनादेवाशोकः पुष्पितोभवतीतिइहलोकेकथि तत्वादितिभावः । शिथिलात्मनांकृष्णवियोगेनशिथिलितांगानांपादप्रहारेप्यसमर्थानामितिभावः । नोस्माकंकार्यकारीप्रयोजनकारीनसंभवतितत्तस्मात्का रणात् हेसख्यः अपरत्रान्यत्रप्रतियातगच्छत यातेर्लोट् ॥ २४ ॥ हेपारिजातेति । सुरसंसदिदेवसभायांगीतस्तुत सुरतरुत्वादितिभावः । दातर्दानशी ल । कल्पतरुत्वादितिभावः । हेपारिजाततरो सिद्धगम्यंश्रीनंदनंदनंश्रीकृष्णमुदीरयकथय । त्वमाश्रितानामुरुविधानिइंद्रनीलादिरत्नानि रासिकिलददा

अशोक एषोपरवेदनाज्ञः पदाहतेरेव परोपकर्ता ॥ न कार्यकारी शिथिलात्मनां नः ततोपरत्र प्रतिया
त सख्यः ॥ २४ ॥ हे पारिजात सुरसंसदि गीत दातः श्रीनंदनंदनमुदीरय सिद्धगम्यम् ॥ रत्नानि रास्यु
रुविधानि किलाश्रितानामस्माकमच्युतहरिन्मणिमेव देहि ॥ २५ ॥ तदंघ्रिलाभेन निजावमानविशंकि
चेता न दिशेन्निजं नः ॥ सहोदरोयं ननु सिंधुपुत्र्याः सहस्रनेत्रार्हणदत्तवृत्तिः ॥ २६ ॥

सिकिल । अस्माकमच्युतहरिन्मणिंकृष्णाख्यमरकतमेवदेहि । एवेत्यनेनतदतिरिक्तरत्नाशाराहित्येनवैराग्यंव्यज्यते ॥ २५ ॥ इदानींपारिजातमधि क्षिपंति । तदंघ्रीति । तस्यकृष्णस्यांघ्रिस्तस्यलाभेनप्राप्त्यानिजस्यस्वस्यावज्ञांविशंकतइतिनिजावमानविशंकितच्चेतोयस्यसतथोक्तोयंपारिजातः पारिजाता दपिकृष्णांघ्रेःसहस्रगुणितफलदातृत्वमस्तीतिभावः । अतएवनिजंकृष्णंनोस्माकंनदिशेत् कृष्णपदप्राप्तौस्वात्मानमेतानप्रार्थयिष्यंतीतिभीत्येतिभावः । किं चायंपारिजातःसिंधुपुत्र्यानःसपत्न्यालक्ष्म्याःसहोदरोननुभ्राताननु । उभयोरपिक्षीरसमुद्रोत्पन्नत्वादपिचसहस्रनेत्रस्येंद्रस्यार्हणेनपूजयाजलादिदानेनदत्तावृ त्तिर्वर्तनंयस्यसतथोक्तः तस्मान्नदिशेदितिपूर्वेणान्वयः ॥ २६ ॥

गीतेनेति । हेकमनीयमूर्तेमनोहरविग्रह कृष्णदर्शनमात्रेणवशीकरणसमर्थेत्यर्थः । तेतवगीतेनगानेन गिरःसरस्वत्याःपतिर्गीष्पतिर्ब्रह्माशर्वःशिवस्तौपूर्वौप्राथमिकौयेषांतेचतेगीर्वाणवर्याश्चदेवश्रेष्ठानम्रभावंनम्रत्वंनीताःप्रापिताःकिल किलेत्यनेनशर्वशक्रपरमेष्ठिपुरोगाःकवयआनतकंधरगात्राइतिपुराणप्रसिद्धिंद्योतयति । तत्तस्मात्कारणादस्मान्वशेविधातुमेतावताऽदृश्यत्वदूरगमनादिनाकिंप्रयोजनम् ॥ २७ ॥ मुरलीति । हेमुरलि मोहनंमनोहरंहंसानांयतीनामभ्युदयोऽभिवृद्धिर्यस्मात्तं । उदयदिंदुवत्श्रीमुखंयस्यतं वीतोगतःशोकोयस्मात्सतथोक्तस्तं त्वंमुररिपुंकृष्णंशंसवद नोचेत्तंनवदसिचेत् हेतरुणिमुरलिअत्रास्मानृंदावनांतइदंदृश्यमानंतेतवकुलंवंशकीचकसमूहमित्यर्थः । विरहदहनभासाअस्मन्निकटकृष्णवियोगाग्नितेजसानिर्दहामोभस्मीकुर्मः । हंतखेदे कुलनाशस्त्व

गीतेन ते गीष्पतिशर्वपूर्वगीर्वाणवर्याः किल नम्रभावम् ॥ नीतास्तदस्मान् स्ववशे विधातुमेतावता किं कमनीयमूर्ते ॥२७॥ मुरलि मुररिपुं तं मोहनं शंस हंसाभ्युदयमुदयदिंदुश्रीमुखं वीतशोकम् ॥ विरहदहनभासा निर्दहामोऽत्र नोचेत्तरुणि कुलमिदं ते हंत वृंदावनांते ॥ २८ ॥ हे वृंदावन कृष्णवर्त्म वद नो नोचेत्पुमांसं हि तं दास्यामः प्रियविप्रयोगजनितं तेन त्वदीयोदयैः ॥ साकं प्रज्वलितेंग गोपललनाभास्वच्चकोरीचये लोके नाम निरर्थकं तव पुनः को वा कविः कीर्तयेत् ॥ २९ ॥

याकथंसोढव्यइतिभावः । त्वंतुसदाकृष्णसंयोगिनीनास्माभिश्चालयितुमपिशक्या कुलनाशभयादेवशंसयेतिभावः ॥ २८ ॥ हेवृंदावनेति । हेवृंदावननोस्माकंकृष्णवर्त्मकृष्णस्यमार्गंवदकथय । अयनंवर्त्ममार्गाध्वेत्यमरः । नोचेत्कृष्णोनेनमार्गेणगतइतिनवदसिचेत्प्रियस्यकृष्णवियोगेनवियोगजनितमुत्पन्नंपुमांसंतंकृष्णवर्त्मानं कृष्णवर्त्मपदस्याग्निवाचकत्वेननिघंटप्रसिद्धिंद्योतयति । बर्हिःशुष्माकृष्णवर्त्माशोचिष्केशउषर्बुधइत्यमरोक्तेः । दास्यामस्तुभ्यमितिशेषः । ततश्चकिमित्यतआहुः । तेनेति । हेअंगतेनाग्निनात्वदीयोदयैस्तवाभ्युदयैर्लतावृक्षादिरूपैः साकंसार्धंगोपललनागोपस्त्रियस्ताएवभास्वच्चकोर्यस्तासांचयस्तस्मिन् । चकोरीचयइत्यनेनकृष्णस्यचंद्रसदृशत्वंध्वनयंति । प्रज्वलितेसतिपुनस्तवनिरर्थकमर्थरहितं वृक्षादिदाहेसतिबहुवृक्षसमुदायात्मकवृंदावनत्वायोगादितिभावः । नामनामधेयंकोवाकविःकीर्तयेत्कथयेत् । मिथ्यावादित्वप्रसंगादितिभावः ॥ २९ ॥

सखीति । हेसखि अज्ञोज्ञानरहितोलौकिकेपिबाहुल्येनज्ञानरहितोयंतरुरेतावत्कालंत्वयाप्रार्थ्यमानोवृक्षः जात्येकवचनं । कृष्णंनजानात्येव । एवकारे
णकृष्णस्यालौकिकत्वंध्वन्यते । इतिशांतायावचनं । किमितिकस्मात्कारणादितिमुग्धावचनं । विधिनिदेशादाज्ञातः अववादस्तुनिर्देशोनिदेशःशासनंचसः । शि
ष्टिश्चाज्ञाचेत्यमरः । वृक्षोज्ञानशून्योहियस्मात्तस्मादितिपुनःशांतावचनं । यदुतिलकस्यकृष्णस्यवियोगाद्विरहान्ममज्ञानहानिरस्तु प्रियवियोगस्यचित्त
वैकल्यादितिभावः । गतंविरहभयंयस्यतस्यास्यवृक्षस्यज्ञानहानिःकुतः चित्तवैकल्यहेतुप्रियविप्रयोगाभावादितिभावः ॥ ३० ॥ सखीति । हेसखि
अयंगगनेदृश्यमानःकइतिमुग्धावचनं । हेतन्विकृशांगिपीयूषरश्मिरमृतकिरणश्चंद्रइतिशांतावचनं । यद्येवंतर्हिमउदग्रंतीक्ष्णंकालकूटंविषंदिशति इतिपुनर्मु

**सखि तरुरयमज्ञो नैव जानाति कृष्णं किमिति विधिनिदेशाज्ज्ञानशून्यो हि वृक्षः ॥ यदुतिलकवियोगादस्तु मे ज्ञानहानिर्गतविरहभयस्य ज्ञानहानिः कुतोऽस्य ॥ ३० ॥ सखि कथय स कोयं तन्वि पीयूषरश्मिर्दिशति कथमुदग्रं तर्हि मे कालकूटम् ॥ हरिरिव पदमात्रश्लाघ्यधर्मः स नूनं वहति गरमगौरं ह्रासभागेष चंद्रः ॥ ३१ ॥ धन्ये यामिनि कामिनीव शशिनं सानंदमाचुंब्य या मान्यैस्तस्य करैः सुधारसधरैरालिंगितांगी सदा ॥ विश्ले षाच्चकितानुयासि बत तं देशांतरे प्रस्थितं कृष्णायाध्वनि शंस कंजनयनायास्मन्मनोवेदनाम् ॥ ३२ ॥**

ग्धावचनं । इतिचंद्रसंगाच्छांतापिविमोहितासतीतांप्रत्याह । हरिरिति । सएषचंद्रोहरिरिवकृष्णइवपदमात्रश्लाघ्यधर्मःपदमात्रेणश्लाघ्यःपीयूषरश्मित्व
रूपधर्मोयस्यसतथोक्तः । भक्तानामस्माकमनिष्टप्रदस्यकृष्णस्यभक्तानामनिष्टंहरतीतिव्युत्पत्तिलभ्यधर्माभावेपिसंज्ञामात्रेणयथाहरिपदवाच्यतेत्याक्रोशा
दृष्टांतीकरणं । ह्रासभागगौरंश्यामंगरंविषंहृदिवहतिनूनंनिश्चयः । अतएवह्रासभागित्युक्तम् ॥ ३१ ॥ धन्यइति । धन्येकृतार्थे हेयामिनिरजनि । रज
नीयामिनीतमीत्यमरः । यात्वंकामिनीवकामवतीनारीवसानंदमानंदेनसहितंयथातथामान्यैः सुधारसंधारयंतीतिसुधारसधरास्तैस्तस्यकरैःकिरणैःसदालिंगितां
गीसतीयावत्प्रदेशेरात्रिस्तावच्चंद्रकिरणानांव्याप्तेरितिभावः । शशिनंपतिं चंद्रस्यदिशांपतित्वादितिभावः । आचुंब्यचुंबनंकृत्वारात्रेरुपरिभागेचंद्रस्यास्थितेस्त

योक्तिः। देशांतरेमेरोरुपरिदेशेप्रस्थितंयातंविश्लेषाद्वियोगाच्चकितासती अनुयास्यनुगच्छसि । यत्रयत्रचंद्रस्तत्रतत्ररात्रेर्गमनादितिभावः। अध्वनिमार्गेकं जनयनायपुंडरीकाक्षाय नेत्रसौंदर्यलक्षणतच्चिह्नोक्त्यर्थमिदं। कृष्णायास्मन्मनोवेदनांमनोदुःखंशंस। अनेनकृष्णविरहान्वितंबगौरवेणगमनआयासविशेषाच्च अतीताल्पापिरात्रिर्बह्वी उर्वरितातुबह्वय्यप्यल्पीयसीतितासांभ्रमोव्यज्यते । अतएवभ्रमालंकारस्यव्यंग्यता ॥ ३२ ॥ जडत्वात्प्रत्युत्तरदानेगर्वेणानुक्तिरितिभा त्याधिक्षिपंति । निशाचराइति । यस्यांरात्र्यांनिशाचराराक्षसाःप्राणहराश्चोराः प्राणहराइतिगवाक्षदीपिकान्यायेनोभयत्रान्वेति। चरंतिसंचरंति। सुबोधाः शोभनबुद्धयोःबुधाविद्वांसोनचरंतीतिपूर्वेणान्वयः। निशीथेपिशाचादीनांसंचरणादन्येषामसंचरणादितिभावः । यामिनीस्वयंचकृष्णपक्षेऽप्रियंचंद्राभावेन लोकानामप्रियंसौभगंसौभाग्यंयस्यःसातथोक्ता अस्मत्प्रियस्यकृष्णस्याप्रियसौभगेतिध्वनिः । हेआर्याइयंरात्रिरस्मदानंदकरीकिं। कृष्णभक्तानांबोध्रीणा

निशाचराः प्राणहराश्च चोराश्चरंति यस्यां न बुधाः सुबोधाः॥ स्वयं च कृष्णाप्रियसौभगा या किम
स्मदानंदकरीयमार्याः॥ ३३॥ कालिंदि तं कथय कंजदलायताक्षं नाम्ना गुणेन सदृशी ननु नंदसूनोः॥
ब्रह्मण्यदेवमृषयः सखि शांतगम्यं ब्रह्मह्रदे कृतगृहं ब्रुवते भवत्याः॥ ३४॥

मस्माकंसंतोषकारिणीकिं नसंतोषकारिणीत्यर्थः ॥ ३३ ॥ कालिंदीति। हेकालिंदियमुने त्वंकंजदलवद्विशालेअक्षिणीयस्यतंकृष्णंकथय। कृष्णस्त्वद्वा क्यंश्रोष्यतीत्याहुः। नाम्नेति। नाम्नाकृष्णेतिनामधेयेनगुणेननैर्मल्येनच नंदसूनोःकृष्णस्यत्वंसदृशीननुसमानाननुनिश्चयः। तमहंकिंजानामीत्यतआहुः। ब्रह्मण्यदेवमिति । हेसखिकालिंदि सखीत्याभिमुखीकरणोपायः । ऋषयोज्ञानिनः शांतगम्यंज्ञानिगम्यं अनेनाक्रूरगम्यइतितासामनागतज्ञानंग म्यते। ब्रह्मण्योब्राह्मणप्रियःसचासौदेवश्चतंकृष्णं भवत्याब्रह्मह्रदेब्रह्मह्रदाख्येतीर्थे अक्रूरायकृष्णःस्वात्मानंयत्रादर्शयत् तस्यनामब्रह्मह्रदइति। तस्मिन् कृत गृहंकृतालयंसंनिहितमित्यर्थः। ब्रुवतेवदंति अतस्त्वंजानासीत्यर्थः॥ ३४॥

कालिंदीति । हेकलिंदि त्वं अघेनपापेनान्वितान्युक्तानपिसतःसज्जनान्पवित्रात्मनःपूतात्मनःकृत्वातवभ्रातुर्यमस्यनिकेतंगृहंप्रतिगंतुमेवनमुंचसि यातनातु
दूरतोपास्तेतिभावः । किंतुप्रीतात्वमाश्रितान्क्षीरपयोधिवासनिरतान्क्षीरसमुद्रमध्यस्थश्वेतद्वीपवासिनःकरोषि । तथाहिभर्तरिस्निग्धेस्नेहयुक्तेसतिकामिनीनां
कामवतीनांनारीणांजनस्यरुचिःप्रीतिरलमत्यर्थं । तस्यभर्तुःपक्षएवहि भर्तुःप्रेमातिशयजन्यसुखाभिज्ञत्वादस्माकमपिभर्तारंदिशेतिभावः । श्वेतद्वीपंप्रतिप्रे
षणेनकृष्णसंघटकत्वशक्तिरस्तीतिध्वन्यते । पूर्वार्धेनकृष्णविरहेणत्वत्तीरस्थानामस्माकंयमलोकप्राप्तिरपित्वयापरिहार्यैतिध्वन्यते ॥ ३५ ॥ रंगदिति । हेका
लिंदित्वंरंगंतःचलंतःतरंगास्तेषांचयेनसंगतःसंबद्धःसचासौवायुश्चतेनसमीपेनिकटेकृतालयानांस्थितानामित्यर्थः । मांगल्यदाशोभनदाकिल । भृंगीरिवतवांतिक

कालिंदि त्वमघान्वितानपि सतः कृत्वा पवित्रात्मनो गंतुं नैव कदापि मुंचति तव भ्रातुर्निकेतं प्रति ॥ किं तु क्षीरप
योधिवासनिरतान् प्रीता करोष्याश्रितान् स्निग्धे भर्तरि कामिनीजनरुचिस्तत्पक्ष एव ह्यलम् ॥ ३५ ॥ रंगत्तं रगच
यसंगतवायुना त्वं मांगल्यदा किल समीपकृतालयानाम् ॥ भृंगीरिवांतिकवने तव संचरंतीः संगीतकृष्णचरिताः
किमुपेक्षसे नः ॥ ३६ ॥ हे मंदमारुत मुकुंदपदाब्जगंधश्रीमाननीय तमिहानय मान्यगम्यम् ॥ नो चेद्बहिर्नय तवांग
समानजातिं प्राणं हृदि स्थितमथार्पय कृष्णपादे ॥ ३७ ॥

वनेसमीपवनेसंचरंतीःसंगीतंसम्यग्गीतंकृष्णस्यचरितंयाभिस्तानोस्मान्
किंकस्मादुपेक्षसे । त्वत्तीरवासमात्रेणफलदायास्तवहरिप्रसंगरूपसाधनवतीषूपेक्षानोचितेतिभावः ॥ ३६ ॥ हेमंदमारुतेति । मुकुंदस्यकृष्णस्यपदाब्जगंध
श्रियाचरणारविंदामोदसंपदामाननीयपूज्य हेमंदमारुत मानिभिरगम्यमप्राप्यंतंकृष्णमिहास्मन्निकटआनय वायोरन्यैरप्राप्यमानयनसामर्थ्यादितिभावः ।
हेअंगप्रियवायोनोचेत्तंनानयसिचेन्नोहृदिस्थितंतवसमानजातिंप्राणंबहिर्नय अस्मदनुपकर्तुस्तवजातिमेवनसहामइतिबाह्यभावः । आंतरंतुमरणंध्वन्यते ।
अथहृदयदेशान्नयनानंतरंकृष्णस्यपादेश्रीचरणेअर्पय त्वद्द्विषयसंबंधोमास्त्वितिभावः । अनेनमरणानंतरमपिकृष्णसंबंधाभिलाषोध्वन्यते ॥ ३७ ॥

अतींद्रियेति। अतींद्रियस्यइंद्रियागोचरस्यामितविक्रमस्यापरिमितपराक्रमस्यकृष्णस्यपादाब्जगंधंप्रदर्शयसि । हेअदृश्यदृश्यः प्रत्यक्षयोग्यआत्मनःस्वस्य विशेषधर्मोपाकजानुष्णाशीतस्पर्शाख्योयस्यतस्यसंबुद्धिर्दृश्यात्मविशेषधर्मन् परमस्यकृष्णस्यसाम्यमपेक्षसेकिं स्वरूपेणातींद्रियत्वंधर्मेणेंद्रियकत्वमिति त्वदीयोर्धजरतीयोन्यायः योग्यानांसुगुणतयादृश्यरूपस्य अयोग्यानांसुगुणतयादृश्यरूपस्यास्मत्कृष्णस्यनसंयोजनीयमितिभावः ॥ ३८ ॥ हेपक्षिणइति। हेपक्षिणःपापापहंपापघ्नंपावनपावनंपवित्राणामपिपवित्रंकृष्णमुदीरयध्वंकृष्णोत्रास्तीतिकथयध्वं। तेनपापनाशादिनाभवतांकृष्णप्राप्त्याऽस्माकंचसाफल्यमि तिभावः। नोचेद्भवतांकंठशोषणैर्नोस्माकं श्रोत्रस्यजात्यैकवचनं। श्रोत्राणामित्यर्थः शल्योपमितैःशरोपमितैः एतैर्वृथास्वरैःकिं उभयेषामप्यनिष्टप्राप्तेरितिभावः

अतींद्रियस्यामितविक्रमस्य प्रदर्शयस्यंग पदाब्जगंधम् ॥ अपेक्षसे किं परमस्य साम्यमदृश्य दृश्यात्मविशेषध र्मन् ॥ ३८॥ हे पक्षिणः कृष्णमुदीरयध्वं पापापहं पावनपावनं तम् ॥ नोचेद्भवत्कंठविशोषणैर्नः श्रोत्रस्य शल्यो पमितैः किमेतैः ॥ ३९ ॥ स्वरेण स्मारयन् शौरिं प्रयच्छति न नः सखि ॥ परपुष्टः स विस्पष्टं पोष्टुर्वै विप्रलंभकः ॥ ४० ॥ हे कृष्णसार कृतकौतुकमात्मदृष्टेः श्रीकृष्णवर्ष्म किमलक्षि भरं बिभर्षि ॥ नेत्रोदयस्य मुरलीरवरंजित स्य श्रोत्रस्य चोन्नतिरियं भवतश्चकास्ति ॥ ४१ ॥ ॥३९॥ स्वरेणेति। हेसखि स्वरेणकृष्णस्वरसदृशस्वरेणशौरिंकृष्णंस्मारयन्नयंपरपुष्टो नोस्माकंनप्रयच्छति अनेनपरान्नोपजीवीलुब्धोध्वन्यते । विशेषेणस्पष्टंयथाभवतितथापोष्टुःपोषकस्यविप्रलंभकोवै वंचकःपिकःखलु । पक्षोत्पत्तिपर्यंतं काकैःपोषितस्तदनंतरंतान्वंचयित्वान्यत्रगच्छतीतिप्रसिद्धिः। एतादृशस्यास्मद्वंचनंदुष्करमितिभावः ॥४०॥ हेकृष्णसारेति। हेकृष्णसारमृग आत्मदृष्टेःस्वनय नस्य कृतंकौतुकंकुतूहलंयेनतत् श्रीकृष्णवर्ष्मशरीरं शरीरंवर्ष्मविग्रहइत्यमरः। त्वयाअलक्षिकिंअदर्शिकिं । लक्षितेःकर्मणिलुङ् । किमितिप्रश्ने। तत्रनिमि त्तमाह्नः। यतस्त्वंनेत्रोदयस्यनयनोत्सवस्यभरमतिशयं भरोतिशयभारयोरित्यमरः। बिभर्षिदधासि। मुरलीरवेणवेणुनादेनरंजितस्यभवतःश्रोत्रस्येयमुन्नतिरौन्न त्यंचकास्तिशोभते। अनेनकृष्णविलासदर्शनंविनान्यन्नयनायुत्सवस्यकारणंनास्तीत्यर्थः। अनेनभक्तियोगोध्वन्यते । अत्रेतःपूर्वतनपद्येषुवृक्षादीनामामंत्रणा

तृप्रायोविमोहावस्था उन्मादश्चित्तवैकल्यंमोहइत्युक्तेः ॥ ४१ ॥ अन्यतःकार्यमलभमानाःकृष्णमेवप्रार्थयंते । यदीति । हेनाथकृष्णनिगमस्यवेदस्यविदूरअगोचर । यतोवाचोनिवर्तंतइतिश्रुतेः । त्वंनृणांदूरदूरोतिशयेनागोचरस्तर्हि अतिसमीपाद्धृदयकमलात्किमर्थंनापैषि अन्यत्रकुतोनगच्छसि गच्छेत्यर्थः । अन्याएवंवदंत्याआशयमुद्घाटयति । तरुणीति । हेतरुणि अनेनमरणकालोध्वन्यते । तनुवियोगःशरीरत्यागस्तेतवसंमतोभिमतः किमितिप्रश्ने । हृदयात्कृष्णापसरणस्य ब्रह्मणात्यक्तदेहस्तुमृतइत्युच्यतेनरइतिस्मृतेस्तस्यमरणरूपत्वादितिभावः । एवमुक्ताप्यनुमतिंसयुक्तिकंकरोति । हेमनोज्ञेहृदयज्ञेतंतनुवियोगंप्रियस्यप्रेमास्पदीभूतस्यपुरुषस्यवियोगाद्विरहाद्दुःसहंसोढुमशक्यंनमन्ये । कृष्णपाददर्शनरहितानांमरणमेववरमितिभावः ॥ ४२ ॥ त्वयीति । हेतरुणि कृष्णस्त्वंप्रगल्भाप्रौढानभवसीतित्वयिमानंबहुमानंनवहति । अप्रौढौहेतुमाह । यद्यस्मात्क्षणेनकृष्णविरहेक्षणमात्रेणतनुकार्श्यंशरीरस्यकृशताऽजनिजातम् । अनेनतनुतालक्षणावस्था

यदि निगमविदूरस्त्वं नृणां दूरदूरो हृदयकमलतः किं नाथ नापैषि तर्हि ॥ तरुणि तनुवियोगः किं मतस्ते मनोज्ञे प्रियपुरुषवियोगाद्दुःसहं तं न मन्ये ॥ ४२ ॥ त्वयि न वहति मानं न प्रगल्भेति कृष्णो यदजनि तनुकार्श्यं दैन्यमंतः क्षणेन ॥ न हि सखि मम दैन्यं दीननाथप्रयुक्तं कृशतरनिखिलांग्याः किंतु विश्लेषवह्नेः ॥ ४३ ॥ अनृतलपितमेनं नार्थयध्वं तथा तद्विदधति बत चेतः प्रार्थनाशीलमेते ॥ परभृतशुकभृंगा गीतवाक्यालकाभाः पथि पथि परमस्य श्रीमुखश्रीश्च चंद्रः ॥ ४४

दर्शिता । तदभावात्तनोःकामज्वरेणतनुतायथेत्युक्तत्वात् । अतोहृदयांतर्दैन्यंदीनभावश्च । अनेननायिकायाअधीरताद्योत्यते । अजनीतिपूर्वेणसंबंधः तस्मान्नप्रगल्भेत्यर्थः । प्रगल्भाहिउत्पन्नंदुःखंनिगूह्यधीरेवतिष्ठति । एवमुक्ताप्रत्याह । हेसखि कृशतरनिखिलांग्याअत्यंतकृशीभूतसर्वावयवायाममदैन्यंदीननाथेनकृष्णेननप्रयुक्तंहि । किंतुविश्लेषवह्नेर्विरहाग्नेःप्रयुक्तमयुक्तमितिशेषः । अनेनस्वधीरताप्रदर्शनायकृष्णंधिक्कर्तुकामाया छटीप्रभादृष्टांतेनवाचोभंग्याकृष्णमेवहेतूकृत्यस्वप्रेमातिशयःप्रदर्शितोभवति । अतएवतत्प्रयुक्तस्वदैन्यदृढीकरणायदीननाथेत्येवप्रागुक्तं । उद्बोधितयामयाकृष्णोऽवज्ञातुंशक्यतइतिभावः ॥ ४३ ॥ तत्रैकासर्वाःप्रत्याह । अनृतेति । अनृतंलपितंभाषितंयस्यतं व्याहारउक्तिर्लपितंभाषितमित्यमरः । युष्मान्सुखयिष्यामीत्यार्याव्रतचर्यासमयउक्तस्येदानी

मन्यथाकरणादितिभावः । एवंकृष्णंनार्थयध्वंनप्रार्थयध्वं । एवमुक्तांप्रत्याहुः । त्वयोक्तंतथा परंतुकृष्णस्यवाक्यंवचनंगीतंगानमलकाःकुंतलास्तेषामाभेवाभा येषांतेतथोक्ताः परभृतागायंतःपिकाः शुकाश्चाटुवचनाःकीराः भृंगानीलावर्तुलाभ्रमराश्चतेपरभृतशुकभृंगा अस्यकृष्णस्य श्रीमुखश्रीरिवश्रीर्यस्यसः चंद्रश्चइत्येतेपथिपथिप्रतिमार्गंचेतोनश्चित्तंप्रार्थनाशीलंविदधतिकुर्वंति । बततूर्णांगच्छामइत्युक्तेप्येतेस्मारयंतिकिंकुर्मइतिभावः । अत्रापिपूर्ववदेवद्योत्यंद्र ष्टव्यम् ॥ ४४ ॥ कृष्णेनसमूहाद्याप्रेम्णेवनीतातामपिवियुक्तांदृष्ट्वासोपहासमाहुः । रमणीति । हेरमणिमनोहरइत्युपहासः । रुचिररूपोमनोज्ञरूपः बलाद्धैर्य मवलंबितुमुद्युक्तायाह्रूपस्मारणेनधैर्यंप्रच्यावयितुंमयैवत्यक्तइत्यहंकारोक्त्यनवसरायचेदंसौंदर्यातिशयेनत्यागायोगात्कृष्णस्तवापिदूरआसीत्किं । प्रत्याह न हिनहीति द्विरुक्तिःस्वाहंकारपरिरक्षणार्था । कृष्णोनदूरंगतइत्यर्थः । किंतुहेतन्वि बह्वीष्वेकवचनप्रयोगोविरहजनितचित्तवैकल्येन । ममपुण्यमेवसुकृतमेव

रमणि रुचिररूपः किं नु दूरे तवासीन्नहि नहि मम पुण्यं तन्वि दूरे प्रयातम् ॥ बत यदुकुलनाथः स त्वया मृ
ग्यते किं नहि सखि सहनीतं चित्तमन्वेषयामि ॥ ४५ ॥ वितनुत बत सख्युः सुस्थिरं चित्तमस्मन्मृदुलहृदवलो
क्य स्थैर्यमालंबयेत्सः ॥ अनुवनमयि कांतं संचरंतं समंतादनुसरदनुरक्तं कारयेत्कः स्थिरं तत् ॥ ४६ ॥

दूरेप्रयातंगतं । अत्रापिपुण्यलभ्यःकृष्णःपुण्यहीनायाममकथंलभ्यतइतिभावः । तथाचैतदुपहासपरिहारायवाचोभंग्यास्वाहंकारंरक्षितुमुद्युक्तयापिपुण्य हीनयामयाकथंसलभ्यइतिपुण्यहीनत्वकृष्णवियुक्तत्वाभ्यांदैन्यप्रदर्शनेनसुतरामहंकारच्युतिरेवभवतीतिकृष्णाख्यवस्त्वतिशयस्तत्रस्वप्रेमातिशयश्चद्योत्यते । हेबतसखि यदुकुलनाथःकृष्णस्त्वयामृग्यतेन्विष्यतेकिं इतिपूर्वासांवचनंप्रत्याह । हेसखि । मदुपपहासेनालमित्याभिमुख्यसंपादनायसखीतिसंबुद्धिः । अत्रापिबहुष्वेकवचनंलज्जीकृतभ्रमेण । नहिकृष्णान्वेषणंनक्रियते किंतुसहकृष्णेनसाकंनीतंचित्तंममनोन्वेषयामिमृगयामि । अत्रापिपूर्ववद्वस्त्वतिश यादिकंद्योत्यमूह्यम् ॥ ४५ ॥ वितनुतेति । हेबत सख्युः चित्तंसुस्थिरंसम्यक्स्थिरंवितनुतकुरुत । यस्मात्कारणादस्माकंमृदुलंहृदयंविलोक्यसःकृष्णःस्थै र्यमनागमनेस्थिरतामालंबयेत् आश्रयेत् । अयिसखि अनुवनंप्रतिवनंसमंतात्परितःसंचरंतंकांतंकमनीयंकृष्णमनुसरदनुसृत्यगच्छदनुरक्तंस्नेहयुक्तंचित्तं

कः स्थिरंकारयेत्कुर्यात् ॥ ४६ ॥ सइति । सप्रसिद्धोविधिर्ब्रह्मापितस्यकृष्णस्यनिदेशमाज्ञांनूनंनिश्चयेनविधत्तेकुरुते । यद्यस्मात्कारणात् विरहदहनस्य वियोगाग्नेःशांतिःशमनंयस्यांतांमूर्छांनददाति । अपिचहृदयांतर्हृन्मध्ये कृष्णसंश्लेषशंकी स्वप्नदशायांकृष्णालिंगनमासांस्यादितिशंकीसन् निशिरात्रौ सुषुप्तिंचनदिशति बतकष्टं हतानष्टाःस्म । अत्रकिंविधेयंकिंकर्तव्यंस्वविरहेणास्मान्क्लेशयतःकृष्णस्याज्ञापरइवमूर्छांस्वप्नयोरप्रदानेनस्वयमपिक्लेशयतीति भावः । केनचिद्व्याजेनकृष्णस्यब्रह्मादिनियामकत्वरूपमाहात्म्यमेवकथितंभवति । अनेनजागरावस्थादर्शिता । प्रियानवाप्यातच्चिन्तासातत्याज्जागरोयथेत्युक्तेः ॥ ४७ ॥ यदीति । यद्यस्माभिर्मधुरंस्वादुतरंस्वीयंकृष्णसंबंधिगाथामृतंकथापीयूषं प्राक्पूर्वमपायिपीतं । पिबतेःकर्मणिलुङ् । मुकुंदःकृष्णः स्वां

स विधिरपि निदेशं तस्य नूनं विधत्ते विरहदहनशांतिं यन्न मूर्छां ददाति॥ अपि निशि हृदयांतः कृष्णसंश्लेषशंकी न दिशति च सुषुप्तिं हा हताः किं विधेयम् ॥ ४७॥ यदि मधुरमपायि स्वीयगाथामृतं प्राक् स्फुरदधरसुधां स्वां तर्हि यच्छेन्मुकुंदः॥ क्वचिदपि निजधाम स्थावरं जंगमं वा यदि विमलमदर्शि स्वं तदा दर्शयेन्नः॥ ४८ ॥ कररुहपदभास्वद्गात्रविश्लेषभीत्या न मृतिरनुमता नः कृष्ण ते दर्शनाच्च ॥ असुभृतिरपि तस्मात्सौम्य सौंदर्यधामन्नधिगहनमुभाभ्यां बद्धकंठा इव स्मः ॥ ४९ ॥

स्वकीयांस्फुरतोलसतोऽधरस्यसुधामस्माकंयच्छेत्प्रयच्छेत् । प्रागप्यमृतभोजनजन्यसुखस्यौचित्यादधुनाप्यमृतमेवदेयमितिबाह्योभावः । कृष्णकथाकथनादिनापुण्यमस्तीतिचेत्कृष्णोलभ्यतामितिहृदयं । एवमुत्तरत्रापिद्रष्टव्यं । किंच क्वचिदपिकुत्रचित्प्रदेशेविमलंस्थावरंजडंजंगमंचरंवानिजधामस्वसंनिधानंमंदिरंप्रतिमेत्यर्थः । यद्यदर्शिदृष्टं दृशेःकर्मणिलुङ् । तदातर्हिस्वमात्मानंदर्शयेत् ॥ ४८ ॥ कररुहेति । हेसौम्यसुमुखसौंदर्यस्यधाममंदिरंयस्मिन् गमकत्वाद्व्यधिकरणोबहुव्रीहिः । कृष्णकररुहाणांनखानांपदंस्थानंक्षतमित्यर्थः । तेनभास्वदुल्लसद्गात्रंशरीरंतस्यविश्लेषोवियोगस्तस्माद्भीतिर्भयंतयानोस्माकंमृतिर्मरणमनुमतानसंमतानोभवति । शरीरलोभान्नमृतिरनिष्टाकिंतुतवविलासचिह्नलोभादितिवदंतीभिःकृष्णेस्नेहातिशयोदर्शितोभवति । एवमुत्तरत्रापिद्रष्टव्यं । तेतवादर्शनाद्दर्शना

भावादसुभृतिश्चप्राणधारणंचनानुमतायस्मात्तस्मादधिगहनंवनमध्ये उभाभ्यांपुरुषाभ्यामुभयतोबद्धकंठाइवस्मोवर्तामहे ॥ ४९ ॥ नयनगेति । नयनंने त्रंगतःप्राप्तःसचासौनलिनेषुःकामस्यपद्मशरः अनेनस्वभावतएवारविंदलोचनत्वं अरविंदशरघातेनेतिभावयंतीभिःकृष्णदर्शनौत्कंठ्यंसूचितंभवति । अतएवविभावालंकारेणवस्तुसूचनं । हेकांतकृष्णवक्रेंदुकांत्यामुखचंद्रश्रिया शमयनाशय । चंद्रस्यारविंदविरोधित्वात्त्वन्मुखदर्शनावधिश्चक्षुःकामइतिभावः । नवपदरविभासानूतनपदाख्यसूर्यतेजसा नोस्माकं कुचस्थमुत्पलेषुंकामस्योत्पलशरंशमय । सूर्यस्यकुमुदविरोधित्वादत्रापिस्वभावतएवनीलस्यकुचाग्रस्यनीलोत्पलशरघातेननीलतांविभावयंतीभिर्हृद्गतकामातिशयस्तस्यकृष्णपादस्पर्शावधित्वंसूचितं । हेसदयदयासहितकृष्णतवदासीर्नःगाढालिंगनेनार्द्धगात्रीःपरिदृश्यमानार्द्धशरीरवतीर्विरचय अर्द्धमस्मद्गात्रमर्धंत्वद्गात्रमितिमिलित्वायथैकंशरीरमितिप्रतीतिःस्यात्तथागाढालिंगनंकुर्वित्यर्थः । तेनबहुशएकार्धनारीश्वरभवनी

**नयनगनलिनेषुं कांतवक्रेंदुकांत्या नवपदरविभासा नः कुचस्थोत्पलेषुम् ॥ शमय सदयगाढालिंगनेनार्धगात्रीर्विरचय तव दासीस्तेन कंदर्पदर्पम् ॥ ५० ॥ अयि रमण मुरारे सुंदरीकांत शौरे नरकमथन कृष्ण प्रौढवाराशिधिष्ण्य ॥ करजितसुरवृक्षाहंकृतात्मीयशिक्ष स्वकविजयसहाय ध्वस्तधर्मांतराय ॥ ५१ ॥**

त्याएकस्मादप्यर्धनारीश्वराद्बिभ्यतःकंदर्पस्यदर्पंशमय । अस्मत्पूर्णकामोद्रेकस्तवगाढालिंगनावधिरितिभावः । अनेनत्रपानाशावस्थासूचिता । मानत्यागस्त्रपानाशोगौरवागणानादिचेत्युक्तेः ॥ ५० ॥ अयीति । हेरमणमुरारे अनेनमुरनामकदैत्यंहनिष्यसीतिस्त्वासामनागतज्ञानित्वंसूच्यते । सुंदरीणांरमणीनां कांतमनोहरनरकोपरुद्धनारीपरिणयनमनागतमनेनसूच्यते । शौरेशूरपुत्र इदानींनंदसूनुतयाप्रतीयमानस्त्वंवस्तुगत्यावसुदेवसूनुरित्यतीतज्ञानं । नरकमथनस्मरतांनिरयविनाशन नरकासुरंहनिष्यसीत्यनागतज्ञानं । प्रौढकुशल अनेनोक्तिचातुर्यज्ञस्त्वमेवेतिसूचितं । वाराशिधिष्ण्यक्षीराब्धिमंदिर अनेनसमुद्रमध्येद्वारवतीनिर्माणस्यानागतस्यज्ञानं । करेणहस्तेनदानशक्त्येत्यर्थः । जितस्तिरस्कृतःसुरतरुःकल्पवृक्षोयेनसतस्यसंबुद्धिः । स्वकरेणपारिजातहरणमनागतंचसूच्यते । अहंकृतानामहंकारिणामात्मीयानांस्वभक्तानांशिक्षायस्मात्सतस्यसंबुद्धिः । अनेनपारिजातहरणकालेअहंकारेणयुद्धार्थमागतानांदेवानामागा

मिनीशिक्षासूच्यते । स्वकानांस्वभक्तानांविजयस्योत्कर्षस्यसहायसंपादक । अनेनस्वभक्तस्यविजयस्यार्जुनस्यसारथ्यकरणमनागतंसूचितं । ध्वस्तोधर्मस्य पुण्यस्यांतरायोविघ्नोयेनसतस्यसंबुद्धिः । अनेनधर्मस्ययुधिष्ठिरस्यांतरायदुर्योधनसेनासंहारोप्यागामीसूचितः । हेकृष्ण गाढालिंगनेनार्धगात्रीविरचये तिपूर्वेणान्वयः । ज्ञानिप्रियस्त्वमतीतानागतज्ञानवतीरस्मान्नोपेक्षस्वेतिभावः ॥ ५१ ॥ वृक्षेष्विति । वृक्षेषुपक्षिषुमृगेषुकृष्णंविचारयंत्यःप्रमुग्धहृदयाः मोहावस्थांप्राप्ताःश्रुतंतत्त्वंयैस्तेश्रुततत्त्वाज्ञानिनस्तेषांकांतिरिवकांतिर्यासांताःवृक्षादिषुकृष्णविचारेणस्वसर्वव्यापकरूपतत्त्वज्ञानवतांसदृशीरित्यर्थः । प्रेक्ष्याविर्बु भूषुरपिप्रत्यक्षीभवितुमिच्छुरपिरम्याणांमनोहराणांतदीयानांगोपस्त्रीसंबंधिनांवाक्यानांभावमभिप्रायंपुनर्विविदिषुरिवज्ञातुमिच्छुरथापिकंचित्कालमेवंवस्तुवंत्वि तीच्छावानित्यर्थः । सकृष्णस्तदातस्मिन्कालेतिरोभूत्तिरोदधे ॥ ५२ ॥ कामिनीति । जिताआपत्दुःखंयेनससुखीकृष्णः कामिनीरागवतीनिकृत्वायांगोपीं

वृक्षेषु पक्षिषु मृगेषु विचारयंतीर्वीक्ष्य प्रमुग्धहृदयाःश्रुततत्त्वकांतीः ॥ आविर्बुभूषुरपि रम्यतदीयवाक्यभावं पु
नर्विविदिषुः स तदा तिरोऽभूत् ॥ ५२ ॥ कामिनीति जितापद्यां निनाय सुखयन् सुखी ॥ कामिनीतिजिता पद्यां
कांचिदासाद्य सोज्झिता ॥ ५३ ॥ सारसासारसंसारे ससार सुरसूरसम् ॥ सुसारसरसारोरःसरसीसरसारसी ॥ ५४ ॥

सुखयन्हर्षयन्निनायनीतवान् । जितापत्सुखीत्यनेनपरार्थमेवकृष्णस्यप्रवृत्तिर्नतुस्वदुःखपरिहारायसुखप्राप्तयेवेतिद्योत्यते । कामिनांकामुकानांनीतिंजय तीतिकामिनीनिर्जितातेनकृष्णेन कांचित्पद्यांमार्गं सरणिःपद्धतिःपद्येत्यमरः । आसाद्यप्राप्य सानारी उज्झितात्यक्ता । कामीचेन्नत्यजेदेव त्यागेनकामि नांस्वभावोजितइतिभावः । यमकमलंकारः । वस्तुस्वभावादियथासंभवमूह्यं । यमकलक्षणंदंडिनोक्तं । अव्यपेतव्यपेतात्माव्याहृतिर्वर्णसंहतेः । यमकंतच्च पादानामादिमध्यांतगोचरम् । एकद्वित्रिचतुष्पादयमकानांविकल्पना । आदिमध्यांतमध्यांतमध्याद्यंतसर्वतः । अत्यंतबहवस्तेषांभेदाःसंभेदयोनयः । सु करादुष्कराश्चैववर्ण्यंतेतत्रकेचनेति । अस्मिन्श्लोकेआदिपादयमकम् ॥ ५३ ॥ सारसेति । सा अरसा असारसंसारे ससार सुरसूरसं उपर्येकमेव पदं । नविद्यतेसारःसुखंयस्मिन्सचासौसंसारश्चतस्मिन् । अरसारागरहिता निर्यासरागगरलद्रवपारदेष्वितिरत्नमाला । साकृष्णेनत्यक्तागोपी । सुरान्देवान्सूतेइ

तिसुरसूःसुरमातालक्ष्मीउरसियस्यतंकृष्णं । सुरसुवःलक्ष्म्यारसःशृंगारोयस्मादितिवा । सुरसुवःउराःश्रेष्ठोवरइतिवा उरसीश्रेष्ठवक्षसीतिरत्नमाला । ससारअनुगतेत्यर्थः । श्रीललनासहितःकृष्णेनवानुसर्तव्यइतिद्योतनायैतत् । तदाकथंभूना । सुसाराःअत्यंतवराःसराःमुक्ताहाराःतैःसारंश्रेष्ठंउरःतदेवसरसीसरोवरंसुसारसरंचसारंजलंयस्याइतिवा । सारोबलेस्थिरांशेर्थेपुमान्यायेवरेत्रिषु । क्लीबमंबुनीतिरत्नमाला । तांसरतिगच्छतीतिसुसारसरसारोरःसरसीसरा साचसासारसीचसारसपक्षिणःस्त्रीभूतासैवससारेतिपूर्वेणान्वयः । सारसीप्राकृस्वभावात्सरोवरमिवकृष्णेनोरसिधृत्वाप्राङ्नीतागोपीतत्रैवस्नेहादनुससारेतिभावः । यद्वासुसारसरसारोरसरसीसरे स्वोरसिचलंतावित्यर्थः । तारस्यौकुचाख्यौसारसौयस्याःसाद्भुतगमनत्वाच्चलत्कुचासतीदुद्रावेतिभावःद्व्यक्षरयमकमिदम् ॥ ५४ ॥ अलक्षयंतीति । स्मरस्यतातंपितरमेनंकृष्णमलक्षयंती अपश्यंती तंपरोक्षमेनंकृष्णंस्मरताचिंतयता हृदाहृदयेन आत्तःखेदोदुःखंययासागोपीजगाद किमिति ।

## अलक्षयंती स्मरतातमेनं हृदात्तखेदा स्मरता तमेनम् ॥ जगाद सौम्यं नयनातिदूरं विधे न कुर्या नय नातिदूरम् ॥ ५५ ॥ कांतोपमानेन दिवापि कुट्यामंतर्हितं कालभतेजसाथम् ॥ स्वांते बिभर्मीश विनेह तं त्वामंतर्हितं का लभतेऽज सायम् ॥ ५६ ॥ रासि सारोऽसि सुरसमेहि हे महि मामिह ॥ दासीं ससादां सदसि वेदवादविदो वद ॥ ५७ ॥

हेविधे सौम्यंसुमुखंकृष्णमतिदूरंननयनप्रापय । किमर्थमित्यतआह । नयनयोर्नेत्रयोरतिदूरंनकुर्यानकुरु । लोचनागोचरत्वमेवदूरगमनं व्याप्तस्यनान्यदितिभावः ॥ ५५ ॥ कांतोपमानेनेति । हेईशकांत दिवापि कुट्यामपिगृहेपि देहंकुट्टीचमंदिरमितिहलः । अंतर्हितंवनगमनेनव्यवहितंयंत्वां कलभस्यकरिशावकस्यबालगजस्येत्यर्थः । संबंधिकालभं । कलभःकरिशावकइत्यमरः । तच्चतत्तेजश्चतेनोपमानेनदृष्टांतेनपुष्टत्वनीलत्वमंदगमनादिसादृश्यात् । स्वांतेहृदये स्वांतंहृन्मानसंमनइत्यमरः । बिभर्मिधारयामि ध्यायामीत्यर्थः । अनेनचित्तासक्तिलक्षणावस्थादर्शिता । चित्तासक्तिमुकुंश्चिताप्रतिकृत्यादिभिर्यथेत्युक्तत्वात् । इहवनेतंत्वांविनाहेअजजननरहितकृष्ण कानारी अंतर्हितं सायंलभतेप्राप्नोति नकापीत्यर्थः । अह्निमंदिरेपित्वद्व्यवधानंममदुःखदंरात्रौवनेदुःखदमितिकिंवक्तव्यमितिभावः ॥ ५६ ॥ रासीति । हेईशत्वंसारःश्रेष्ठोसि । कुतःसुशोभनंरसंमुखंशृंगारंवा रासिददासि । रादानेइतिधातोः । तस्मादेहिआग

च्छ । हेमहिपृथ्वीइहवने दासीमांससादांदुःखसहितां वेदवादविदःकृष्णस्य सदसिसभायां वद । द्व्यक्षरपदोपेतयमकम् ॥ ५७ ॥ मधुपालिरिति । हेईशकृष्ण सरसासस्नेहा मधुपानामालिःपंक्तिः सरसांसरोवराणामुपकंठंसमीपं एत्यमधुनामकरंदेन मुदितांसंतुष्टां सभयानुष्ठातृब्राह्मणसंसदाकारणेनसभयांभयसहिता मालिंसर्वांभृंगीमनुनीयसांत्वयित्वा उदितोर्ध्वंगतासती अधुनेदानीमनुयाति अनुसरतिचपश्य । इदानींभृंगोपिभृंगीमनुसरति । त्वयातुअनुसरंत्यप्यहमुपेक्षितेत्यन्यापदेशः । प्रमिताक्षरासजससैरुदिता । चतुष्पादांतयमकम् ॥ ५८ ॥ नगायतेति । हेअंगप्रियकृष्णनगैर्वृक्षैः अगोनगश्चभुजगेभानौभूरुहिभूधरइति रत्नमाला । आयतोविस्तृतःआकाशमितःआकाशपरिमितः अभ्रंकषइत्यर्थः । एतादृशोऽगःपर्वतोगोवर्धनस्तस्यसानु ततूनगायताकाशमितागसानुकर्म समे

मधुपालिरीश सरसा सरसामुपकंठमेत्य मुदितामुदिता ॥ अनुयाति पश्य सभया सभयामनुनाय चालिमधुना
मधुना ॥ ५८ ॥ नगायताकाशमितागसानु समेत्य पुंस्कोकिलसुस्वनेन ॥ न गायता का शमितागसा नु त्वया मृ
गाक्षी विमदीकृतांऽग ॥ ५९ ॥ कंदर्प सर्पतल्पस्य नंदनाऽनंदकारण ॥ तं देशं नय मां यत्र बंधुरास्ते सतां हरिः
॥ ६० ॥ र मा नयाहंकृतिदूरवृत्तिरमानयाहं कृतिदूरवृत्तिः ॥ रमा न याहं कृतिदूरवृति रमानयाहंकृतिदूरवृत्तिः ॥ ६१ ॥

त्यप्राप्य गायतागानंकुर्वता पुंस्कोकिलवत्सुस्वनेनशोभमानस्वरवता अतएवशमितागसापरिहतापराधेन आगोपराधोमंतुश्चेत्यमरः । त्वद्गानश्रवणमात्रेणत्वत्कृतसर्वापराधशांतिर्भवतीतिभावः । एतादृशेनत्वयाकानुकावामृगाक्षीमृगलोचनानविमदीकृतानभवति । गानश्रवणेनास्मन्मनसिस्थितःसर्वोपिगर्वोगतः तत्किमदर्शनेनेतिभावः ॥ ५९ ॥ स्वोपद्रवकारिणंकामंप्रत्याह । सर्पतल्पस्यसर्पशयनस्यकृष्णस्यनंदनकुमार आनंदकारणकंदर्पकाममांतंदेशंनयप्रापय । यत्रयस्मिन्देशेसतांसज्जनानांबंधुःसुहृद्धरिःकृष्णआस्तेतिष्ठति । मातृस्थानीयानामस्माकंहानिर्नद्रष्टव्येतिभावः ॥ ६० ॥ र । मा । नय । अहंकृतिदूरवृत्तिः । अमानया । अहं । कृतिदूरवृत्तिः । रमा । नयाअहंकृतिदूरवृत्तिः । उपर्येकमेवपदं । हे र [illegible] । रःपुमान्पावकेकामेइतिरत्नमाला । या अहं । कृतिर्गमनादिव्या

पारस्तस्यदूरवृत्तिर्दूरवर्तनंयस्यांसाऽस्मि । अतएवअमानयाऽहंकाररहितयामयाकारणेन अहंकृतेरहंकारस्यदूरावृत्तिर्वर्त्तनंयस्यसःत्वं अहंकाररहितायांम यित्वयाप्यहंकारोनकर्तव्यइतिभावः । मामां नय कृष्णसमीपंप्रापय । मानयेत्येकंवापदं तदामामितिशेषः । मांमानयसत्कुरु । अथवाहेकंदर्पेरमतइतिरः तंररमणंकृष्णं रमतेःकर्तरिऔणादिकोडप्रत्ययः। आनयइहआनय मयीवतस्मिन्नुज्जृंभितोभवेत्यर्थः। अस्मिन्पक्षेरंआनयेतिच्छेदः। अथवा चंद्रादयस्तुमन्यंते सर्वस्मादुभयंपदमितिवचनादमानयाअनयामयासहहेकृष्णअहंकृतिदूरवृत्तिस्त्वंरमरमस्वेतिकृष्णंप्रत्येवप्रार्थना। सकृदप्यहंकारःकृतःखल्वित्यतआह। रमेति। प्रकृतेरुत्पत्तेर्दूरावृत्तिरंतःकरणंयस्याःसाअप्राकृतचित्तेत्यर्थः। अतएवामायाअज्ञानस्यअनयस्यअन्यायस्यअहंकृतेरहंकारस्यदूराद्वृत्तिःप्रवृत्तिर्यस्याःसारमा लक्ष्मीरहंनभवामिहि। प्राकृतास्वस्मासुतद्वत्सर्वदाअहंकारादिदोषविरहस्यायोगादितिभावः । अथवासर्वत्रविद्यमानस्यकृष्णस्यायोगएवत्वयाकथंशंक्यतइत्या ह। रमेति। उक्तएवार्थः। अहंकृतेरहंकारस्यदूरतोप्यधिकादेशकालीनावृत्तिरवस्थितिर्यस्याइतिशेषः । एनंसमयव्याख्यात्रघटनाभावेपिरमावत्। अन्यत्रकृ

ततातततातीततत्त्वततितातोऽनते तु तत् ॥ तत्तातौतातितेती तेऽताताऽतीते ततोऽस्ति ताम्॥ ६२ ॥

ष्णालिंगनेननित्यापरोक्षित्वेनाज्ञानाभावादत्रैववाभवद्दर्शनेनसंतुष्टास्यामि तिभावः ॥ ६१ ॥ ततेति । ततातततातीततत्त्वततितातः अतते तु तत् तत्तातौतातितेती ते अतात अतीते ततः अस्ति तां । हेअतातजनकरहित अनुत्पन्नकृष्ण यद्यस्मात्कारणात् ततंव्याप्तंगगनादि अततमव्याप्तंपृथिव्यादि अतीतमतिशयेनेतंव्याप्तंत्वत्समीपंप्राप्तंभवमतिक्रम्येतंप्राप्तमितिवातीतंमुक्तमित्यर्थः। इणूग ताविति धातोःकर्तरिक्तः। ततातततातीतानितत्त्वानिचमुक्तामुक्तप्रपंचइत्यर्थः। तेषांततिःसमूहस्तस्यतातोजनकःसकलजगत्स्रष्टेत्यर्थः। यस्मात्भवान्तांपूर्वोक्तां तत्त्वततिंतुविशेषणनियामकतयेत्यर्थः। अततेव्याप्नोति। अतसातत्यगमनइतिधातोःकर्तरिलट् । यस्माच्चततःस्थित्यनंतरंतांपूर्वोक्तांतत्त्वततिमत्तिभक्षयतिसं हरतीत्यर्थः। तत्तस्मात्कारणात्ततेतव तत्तातस्यजगतोभावस्तत्तातिमायावाद्युक्तजगत्तादात्म्यमित्यर्थः । तौतातितानांमीमांसकानांइतिर्बाधामीमांसकोक्त निरीश्वरत्वलक्षणस्वरूपबाधेत्यर्थः । तत्ताचतौतातितेतिश्चअतीतेअतिक्रांतेपरिहृतेइत्यर्थः । अनेनतवानुत्पन्नत्वात्जगतउत्पन्नत्वाद्भवत्स्रष्टृत्वाज्जगतःस्र

१ एतत्पक्षे रम, अनया इतिच्छेदः। २ भवामीतिशेष ।

ज्यत्वाद्भवतोनियामकत्वात् जगतोनियम्यत्वात् तवसंहर्तृत्वाज्जगतःसंहार्यत्वात् उत्पन्नानुत्पन्नयोःस्रज्यस्रष्ट्रोर्नियम्यनियामकयोःसंहर्तृसंहार्ययोश्चभेदावश्यंभा वादितितादात्म्यनिरासेयुक्तिचतुष्टयमुक्तंभवति। अतीतपदेनमुक्तानांग्रहणात्तन्नियामकत्वान्मुक्तानांमुक्तभेदस्याविद्यानिवृत्तिरूपमुक्तिकालीनत्वेनज्ञानविघ्न कत्वंचोक्तंभवति । सृष्टिनियमनसंहाराणांकार्यत्वेनसकर्तृकत्वावश्यंभावात्। व्यानगगनादिकर्तृत्वस्यास्मदादिष्वभावत्कर्तुरीश्वरस्यसिद्धानिरीश्वरत्वंचनि रस्तंभवति अतएवतत्तेत्युक्तं। तत्त्वपदेनअनारोपितत्वरूपजगत्सत्यत्वंसूचितं। उपपादनंतुउत्तरत्रकरिष्यतइत्यलम् ॥ ६२ ॥ अधरामृतमिति। हेकृष्णतवा धरामृतमधरोष्ठसुधांप्रदिशदेहि। दिशतेधरामृतंददतेतेतुभ्यंतनुंमच्छरीरमर्पयेददामि। विहरताक्रीडतात्वयाइहतनौरतेसुरतेविहितेकृतेसति अराणांपापानां

अधरामृतं प्रदिश ते दिश ने तनुमर्पये विहरतेह रते॥ विहिते हतिं विरचयेऽरचये स्फुटमित्यदायि भवताऽ भवता ॥ ६३ ॥ इत्थं गिरा कापि तमर्चयंती यं तीव्रयोगैर्मुनयोऽगुरंते ॥ रंतेति मत्वा गलितात्महारा हारामकृष्णेत्यपतच्छुचार्ता॥ ६४॥ रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायिनि॥ संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातः सुर मडंलीषु महितः सर्गो मुदां सप्तमः॥ ६५॥

चयेसमूहेहतिंहननंविरचयेकरोमि त्वदंगसंगात्पापंसंहरामीत्यर्थः। इत्यनेनप्रकारेणभवतात्वयानविद्यतेभवःसंसारोयस्यसोऽभवःस्तस्यभावोऽभवता मुक्तत्व मित्यर्थः। स्फुटंस्पष्टं अदायिदत्ता। अंततःसर्वपापक्षयेनमोक्षदस्यावश्यंभावादितिभावः ॥ ६३ ॥ इत्थमिति। मुनयस्तीव्रयोगैरुत्कृष्टध्यानैर्यंकृष्ण मगुःप्रापुः तंहरिंरंतारतिशीलइतिमत्वानिरूप्यगिरावाचाइत्थमनेनप्रकारेणार्चयंतीगलिताविरहवशाद्विगलिताआत्मनःस्वस्यहारायस्याःसा हेरामकृष्णहाकष्ट मितिरुदंतीकापिगोप्यपतद्भूमौनिपपात। अनेनमूर्छावस्थादर्शिता। मुहुरिंद्रियवैकल्यान्मूर्छाज्ञानक्षयइत्युक्तेः॥ ६४ ॥ रोम्णामिति। उक्तोर्थः॥ ६५॥ इति श्रीमद्वादिराजतीर्थपूज्यचरणविरचितरुक्मिणीशविजयटीकायांगुरुभावप्रकाशिकायांसप्तमःसर्गःसमाप्तः॥ ७॥ ॥ ७॥ ॥ ७॥

विरहेति । विरहवह्निबलाः मलयानिलाः जगत् इव अखिल
श्रीगुरुभ्योनमः ॥ व्याहारैर्दीनताधारैरुदारैर्मधुरैरपि । कृष्णंगोपीभिराकृष्टंनौमिनावंशवोदधेः । धाम लयानिलाः चलति वीक्ष्य भिया अमल यान् इला बत तुदंतितरां अलयानिलाः । हेबतअमलनिर्दोषकृष्णयान्मलयानिलान् वीक्ष्य भियाभीत्या
॥ १ ॥ इलापिभूरपि चलति । वायौवातिधूलेरुत्थानाद्भीत्याचलतीतिभ्रमः । विरहवह्नेर्वियोगाग्नेर्बलंयेभ्यस्ते नविद्यतेलयानिलोमंदवायूपघातकोझंझानिलोयेषांते
अलयोनाशरहितोनिलःप्राणवायुर्यासांताजीवतीरित्यर्थः । अस्मानितिवा । मलयानिलामलयमारुताः अस्मान्तुदंतितरामतिशयेनव्यथयंति । किमेतिद्व्य
यघादाम्वद्रव्यप्रकर्षेइत्याम्प्रत्ययः । कथमिव । अखिलानांधामआश्रयं जगत्भुवनं लयानिलाइवप्रलयकालीनानिलाइव । अनेनविषयद्वेषावस्थासूचि
ता । प्रियवादिनीवृत्तं । भुविभवभ्रमरैःप्रियवादिनी ॥ १ ॥ देवेशेति । अष्टदअणिमाद्यष्टैश्वर्यंद रक्षणशक्तिद्योतनायेदं । देवेशदेवश्रेष्ठकृष्ण देवेअशनिवर्षस्याश

विरहवह्निबला मलयानिला जगदिवाखिलधाम लयानिलाः ॥ चलति वीक्ष्य भियामल यानिला बत तुदंतितरामलयानिलाः ॥ १ ॥ देवेश देवेऽशनिवर्षहेतौ पातासि पातासितघातकल्पे ॥ दावेष्टदावेष्टयता हयो भूर्मा नः समानः स निजे त्यजाद्य ॥ २ ॥ नानाननानननुन्नूनं नैनेनोनन्नेऽन्निनां नु नौः ॥ नाना ननुन्नेनानेन नोनो नेन न नो ननु ॥ ३ ॥

निसहितवर्षस्य मध्यमपदलोपीसमासः । हेतौकारणभूतेसतिवर्षतिसतीत्यर्थः । असि ॥ १ ॥
तपातात्जातःखड्गनिष्ठतैलधारायाश्यामलःयोघातःक्षतस्तस्यकल्पेसमाने निशितखड्गप्रहारसदृशइत्यर्थः । दावेवनाग्नौ वनवह्निर्दवोदावइतिहलः । आवेष्टयति २
सति इहास्मान्परितोःवेष्टयतिसतियस्त्वंपातारक्षिताऽभूः । निजेस्वभक्तेसमानोभिमानसहितःसत्वमद्याधुना नोऽस्मान् मात्यज । इदानींत्यागेपूर्वमस्मद्रक्षार्थं
कृतंप्रयासवैयर्थ्यापत्तेरितिभावः । गृहीतग्राहिपादचतुष्टययमकम् ॥ २ ॥ कृतापराधासुकथंरक्षेत्यतआहुः । नानेति । नानाननानननुत् नूनं न एनः अनन्ने अन्नि
नां नु नौः । नानाननुन्नेन अनेन ना ऊनः न इन न नः ननु । हेनानाननानननुत् नानाअनेकानिआननानिमुखानियस्यसश्चतुर्मखःपंचमुखोरुद्रोवा अनःप्रा

णोमुख्यप्राणस्तौनुदतिप्रेरयतीतिनानाननाननुत्तस्यसंबुद्धिः । ब्रह्मरुद्रादीनामपित्वत्प्रेरणयैवदोषपरिहारःकिमस्माकमितीदंविशेषणं । हेइनस्वामिन् ए पापं नूनंप्रायेण अनन्नेअन्नरहितेत्यक्ताहारेपुरुषइत्यर्थः । ननास्ति । अन्नजन्यचित्तविकाराभावात्तस्यैवनिर्दोषत्वमितिभावः । विषयाविनिवर्तंतेनिराहारस्यदेहिनइतिवचनात् । विपक्षेबाधकंचाहुः । अन्निनां अन्नवतांविषयलालसानांसोऽनन्नःपुरुषोनौर्नुतरीनु । अन्नरहितस्ययोगिनोपिदोषित्वेसंसारोदधिमग्नानां अस्मदादीनामुत्तारकाभावेनानिर्मोक्षप्रसंगइतिभावः । नानान्नैर्नानाविधान्नैःषड्रसान्नैरित्यर्थः । नुन्नेनप्रेरितेनउत्पन्नेनेत्यर्थः । अनेनएनसा नापुरुषोपि पुरुषाःपूषानराइत्यमरः । ऊनोन्यूनोरहितइत्यर्थः । ननभवति । वेदशास्त्रविदःपुरुषस्यापिअन्नकृतविकारोस्त्येवेतिभावः । केवलंनोस्माकमेवनननु नभवतिखलु । एकाक्षरमिदम् ॥ ३ ॥ मनसेति । मनसां अहित स्वरमित्रहृदां अनसामहितस्वरमित्र हृदा मनसा महित स्वरमित्रहृदां अनसा अमहितस्वर मित्र हृदा । स्वःस्वर्गस्यअमित्रंविरोधिहृत्मनोयेषांतेस्वरमित्रहृदोदैत्याइत्यर्थः । तेषांमनसांचित्तानां अहितदुःखद । अनेनत्वयादुःखंदैत्यानामेवदेयंनत्वस्माकमितिसूचितं । हृदाहृदयेन

**मनसामहित स्वरमित्रहृदामनसामहितस्वरमित्र हृदा॥ मनसा महित स्वरमित्रहृदामनसामहितस्वर मित्रहृदा ॥ ४ ॥ वरयासुरमोदारे तरसा किंकरीरिमाः ॥ वर यासु रमोदारे त्वयि नेदं गुणोचितम् ॥ ५ ॥**

अनस्यमुख्यप्राणस्यसामानिबृहद्रथंतरादीनि मुख्यप्राणगीयमानसामर्चइत्यर्थः । तेषांहिताःस्वराःसुस्वरास्तेषांमित्रप्रिय । मनःपूर्वकंमुख्यप्राणगीतसामवेदप्रियेत्यर्थः । अनेनवेदाभ्यासेनत्वत्प्रीतिसंपादकत्वंमुख्यप्राणस्यैवनास्माकमितिसूच्यते । स्वरेप्रणवेमित्रंस्नेहयुक्तंहृदयंयेषांतेप्रणवोपासकापरमहंसाइत्यर्थः । स्वरेणमंत्रेणेतिप्रयोगात् । अचःस्वराइतिवास्वरशब्दःप्रणववाचकः । तेषांमनसाचित्तेनमहितपूजित । अनेनमानसपूजादिनात्वत्प्रीतिसंपादकत्वंपरमहंसानामेवेतिसूच्यते । अनसाशकटासुरेणामहितोऽसत्कृतःस्वरोरोदनस्वरोयस्यतस्यसंबुद्धिः । रुदताकृष्णेनशकटस्यचूर्णितत्वात् । अनेनपूर्वोक्तदैत्याहितत्वंनिदर्शितंभवति । हृदावक्षसामित्रइवसूर्यवद्दीप्यमानवक्षःस्थलयुक्तेत्यर्थः । अनेनसद्रूपत्वसावयवत्वादिज्ञानमेकैकावयवमात्रध्यानमस्माकमप्यस्तीतिसूचितं । एतावतैवास्मान्वरयेत्युत्तरेणान्वयः । एकपादयमकमिदं । तोटकवृत्तं । इहतोटकमंबुधिसैःकथितम् ॥ ४ ॥ वरयेति । हेअसुरमोदारेअसुराणांदैत्यानांमोदस्यहर्षस्यअ

रेशाञ्चो । वरश्रेष्ठकृष्ण । यास्वस्मासु । रमालक्ष्मीर्वर्तंतेताइमाःकिंकरीर्दासीः । तरसाशीघ्रेण । वरयअंगीकुरु । यासुरमेत्यनेनलक्ष्मीसंनिधानरूपंस्ववरणेका रणांतरंसूचितंनिमित्तांतरमप्याहुः । उदारेऔदार्यगुणयोगिनित्वयि । इदंअस्मदुपेक्षणंगुणोचितंनभवति । अस्मदीप्सिताप्रदानेतवौदार्यंभज्येतेतिभावः ॥ ५ ॥ वृणीतेति । हेकवीशज्ञानिश्रेष्ठ । ईशस्वामिनृहेकृष्ण । वनेअरण्ये । दासीःकिंकरीः । नःअस्मान् । यदि । नवृणीतनांगीकुर्यात् । तर्हि । आत्मवृत्ताआत्मनः स्वस्मात्प्रवृत्ता । गौःवाक् । हृताऽपहृतात्यक्तेत्यर्थः । संभवंतुसुरस्त्रियइतिस्वोक्तेत्यर्थः । यद्यपीदंचतुर्मुखवचनंतथापिकृष्णोक्तस्यैवतेनापिकथनादात्मवृत्तेत्यु क्तं । स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्योःस्त्रियांपुंसिगौरित्यमरः । स्ववचनव्याघातभियास्मान्वरयेतिभावः । आत्मवृत्तौस्वांतःकरणे । कवी शगौरीशहृतबलादास्थापितध्यातेत्यर्थः । यद्यस्मात्त्वंनोस्माकं । अवनेरक्षणे । इनःसमर्थः । तत्तस्मात्कारणात्तदाअनंगीकारे । ऋणीऋणिकः । आसीः

वृणीत दासीर्यदि नो वने न कवीश गौरीश हृतात्मवृत्ता ॥ कवीशगौरीशहृतात्मवृत्तावृणी तदासीर्यदि नोऽवनेनः ॥ ६ ॥ जानतीर्नस्त्वमानवेषु स्थितिं न त्यजेमाः प्रभो मा नवेषु स्थितिम् ॥ कुर्वसौ किं प्रिया मा नवेषुः स्थितिं नेह किंतु प्रियेमा नवेषुस्थितिम् ॥ ७ ॥

अभवः । वाग्दत्तस्याप्रदानेऋणित्वस्यस्मृतिसिद्धत्वादितिभावः । अनेनऋणिभित्वयावावरयेतिनिमित्तांतरंसूचितम् ॥ ६ ॥ ज्ञानशून्यत्वाद्भुक्तभोग्यत्वान्नांगीक रोमीत्यतआहुः । जानतीरिति । हेप्रभोकृष्ण । तव । अमानवेषुदेवेषु । निर्धारणेसप्तमीदेवानांमध्यइत्यर्थः । तेनश्रेष्ठेनेतिलभ्यते । स्थितिमवस्थितिंजानतीर्नो नत्यज । नवेषुनूतनेष्वभुक्तपूर्वेष्वित्यर्थः । स्त्रीजनेषुस्थितिमवस्थानंमाकुरु । असौतवप्रियाप्राणकांतामालक्ष्मीर्नवानूतनाअभुक्तपूर्वाकिंनैव । कुतइत्यत स्तस्याअनादिपतीत्वादितियुक्तिसूचनायासावित्युक्तंप्रलयकालेपिविद्यमानेत्यर्थः । स्यानंगीकारेमरणावस्थापिस्यादित्याहुः । हेप्रियकृष्णत्वंत्यजसिचेदि मागोप्यःस्त्वद्विरहमसहमानाणोप्यइहशरीरेस्थितिंनेषुर्नैच्छन्किंतुनवेषौस्थितिंशितशरेस्थितिंइषुःऐच्छन् त्वदनंगीकारेनिशितायुधोपरिपतित्वाशरीरत्यागेच्छा वत्योजाताइत्यर्थः । अतोनत्यजेतिसंबंधः । स्रग्विणीवृत्तं । रैश्चतुर्भिर्युतास्रग्विणीसंमता ॥ ७ ॥

मरणेपिमद्वियोगोनपरिहरिष्यतइत्यतआहुः । व्रजइति । ईशेस्वामिनि । त्वयिचक्षुर्विषयेसतिव्रजेगोकुले । तोषेणसितंबद्धं षिञ्बंधनइतिधातोःक्तप्रत्यये धात्वादेःषःसइतिषकारस्यसकारः । विकुंठंकुंठनरहितंनाशरहितमित्यर्थः । महमुत्सवं महउद्धवउत्सवइत्यमरः । भजेमसेवेमहि । संतोषेणगोकुलेव सामइत्यर्थः । नचेत्त्वक्षुर्विषयोनभवसिचेत् तवईक्षादर्शनंसैवउत्सवःस्तस्यभंगोनाशःस्तेनहीनंरहितंप्रसिद्धं विकुंठवैकुंठलोकंविकुंठंनाशरहितंतंप्रसिद्धंलोकमिति वा । उषसिप्रातर्व्रजेमगच्छेम । हंत । मरणानंतरंत्वद्वियोगरहितंत्वल्लोकमेवगच्छामइतिभावः ॥ ८ ॥ वियोगइति । गोविंद । तववियोगेविरहेसतिदिवसोपिवा सरोपिभयंकरःभयजनकः । हेकांतकृष्णदिशासुव्याप्तंतमिस्रंयस्यांसेयंनिशारात्रिर्भयंकरी । किंपुनःकिंवक्तव्यम् ॥ ९ ॥ समायतेति । समायता । इयं । न । शरैः । समा । अयते । समायते । स्वेषु । किल । असमायते । समाय । तेन । अंग । नमः । समाय । ते । सः । मा । यतेः । वर्त्म । भज । असमाय । ते ।

**व्रजे महं तोषसितं विकुंठं भजेम चक्षुर्विषये त्वयीशे॥ व्रजेम हंतोषसि तं विकुंठं न चेत्त्वदीक्षोत्सवभंगहीनम् ॥८॥ वियोगे तव गोविंद दिवसोपि भयंकरः॥ इयं निशा दिशाव्याप्ततमिस्रा कांत किं पुनः ॥ ९ ॥ समायतेयं न शरैः समायते समायते स्वेषु किलासमायते ॥ समाय तेनांग नमः समाय ते स मा यतेर्वर्त्म भजासमाय ते ॥१०॥ करोऽनिकार्यो दधिमंथसंगमपि स्म कर्तुं यतते न तेन ॥ त्वदंघ्रिजुष्टेरपरं मुरारे करोति कार्योदधिमंथसंगः॥ ११ ॥**

हेकृष्ण । शरैःशल्यैः । समासदृशी । समायनासम्यक्दीर्घाहिमकालेरात्रेर्बाहुल्यात् । इयंनिशा । नायतेनगच्छति अयपयगतावितिधातुः । हेअसमायतेअस माआसदृशीआयतिर्व्याप्तिर्यस्यतस्यसंबुद्धिः । कृष्णभवान् । स्वेषुसमायतेकिलसमवदाचरतिकिल । सर्वानपिभक्ताननुगृह्णातीत्यर्थः । तेनभक्तेषुवैषम्या भावेनहेसमायमायासहितमायाविन् । अंगकृष्ण । मयालक्ष्म्यासहितःसमस्तस्मैसमायतेतुभ्यंनमः । हेअसमायअसमोसदृशआयोलाभोयस्यतस्यसंबुद्धिः । अवाप्तसकलकामेत्यर्थः । सत्वंतेतवसंबंधिनोयतेःसंन्यासिनोवर्त्मकांतापरित्यागलक्षणमार्गंमाभजमाश्रय । अवाप्तसकलकामत्वेनसंन्यासिमार्गाश्रयणस्य प्रयोजनाभावादितिभावः ॥ १० ॥ करोतीति । हेउदधिमंथसंगउदधेर्मथामंथानोमंदरःस्तस्यसंगोयस्यतस्यसंबुद्धिः । मंथामंथश्चमंथानोइतिहलः । मुरारे

कृष्ण । येनकारणेन । अतिक्रांतंकार्यंकर्मयेनसोतिकार्यःकार्यकारीत्यर्थः । करोऽस्मद्धस्तः । दघ्नोमंथानिर्मंथानदंडस्तस्यसंगंसंबंधमपिकर्तुंनयततेस्मप्रयत्नंनाकरोत् । स्मातीते । गोकुलेभवद्विरहदशायामेवमभवदित्यर्थः । तेनकारणेन । त्वदंघ्रिजुष्टेस्त्वत्पादसेवायाअपरमन्यत्कार्यंकावाआर्याश्रेष्ठानारीकरोतिनकापीत्यर्थः ॥ ११ ॥ दयेति । दीनानामार्तानांबंधोसुहृत्हेअंगप्रियकृष्ण । यदियद्यपि । आस्वस्मासुतवदयाकृपाननास्ति । तथापिइनस्यसूर्यस्यबंधोकृष्णस्यसदासूर्यमंडलेस्थितत्वादितिभावः । अतएवप्रियेयंनदीसूर्यपुत्रीतवाप्याप्राप्याहि प्रियत्वमेवोपपादयंति । हृतइति । अस्यायमुनायाभगस्यसर्वजनसेव्यत्वरूपभाग्यस्यारिर्विरोध्यसौकालीयः । यद्यस्मात्कारणात्तोदयस्यमेघस्यसौभाग्यमिवसौभाग्यंयस्यनीलमेघश्यामस्येत्यर्थः । ओजसासामर्थ्येनहृतोपहृतस्ततोनिष्कासितइत्यर्थः ॥ १२ ॥ इहेति । रामावरबलरामानुज । हंतउदारान्श्रेष्ठान्सुरानमुंचदेवलोकंचविहायत्यक्त्वातवसंगसिद्ध्यैइहभूमावागताःप्राप्ताः अनेन

दयांग यद्यासु न दीनबंधो प्रियेयमाप्या हि नदीनबंधो ॥ हृतोरिरस्या यदसौ भगस्य तवौजसा तोयदसौभगस्य ॥ १२ ॥ इहागता हंत सुरानुदारानमुं च रामावर सिद्धभद्राः ॥ विहाय लोकं तव संगसिध्यै न मुंच रामा वरसिद्धभद्राः ॥ १३ ॥ उचितैव नाथ सुदयासु दया चकितासु दुष्टभयदाभ यदा ॥ न भवांस्तदा गृहमदो हमदोभयदं किमुत्स्वनवनं न वनम् ॥ १४ ॥

स्वानामप्सरस्त्वंसूचयंति । वरेणभवतीनांकृष्णांगसंगोभवत्वितिअस्मदाराधितदेवप्रदत्तवरेणसिद्धंसंपन्नंभद्रंमंगलंयासांतासिद्धानांदेवयोनिभेदानामपिभद्रामनोहरारामाःसुंदरीःनोनमुंचनत्यज । पुण्यहीनत्वलावण्यविधुरत्वरूपत्यागकारणाभावात्स्वयमेवागतत्वरूपांगीकारकारणसद्भावाच्चेतिभावः ॥ १३ ॥ उचितैवेति । सुदयशोभनदयायुक्तदुष्टानांभयंददातीतिदायिनीआभाशोभायस्यतस्यसंबुद्धिः । तेजोमात्रेणदुष्टानांभयजनकेत्यर्थः । हेनाथकृष्ण । चकितासुभीतास्वास्वस्मासुगोपीषुदयाकृपोचितैवतवातर्बंधुत्वादितिभावः । यदाभवान्नवर्ततेनतिष्ठतितदाऽदोहंगोदोहनक्रियाविरहितमदस्तदस्मद्गृहमपिभयदंत्वद्विरहदशायांगृहेपिकष्टमेवेतिभावः । उत्उत्कृष्टःस्वनोध्वनिर्यस्यतद्वनंनिर्झरोदकंयस्मिंस्तद्वनमरण्यंभयदंनकिंभयदमेवेत्यर्थः । वनंकाननंनीरयोरितिरत्नमाला ॥ १४ ॥

भ्रमरंजितइति । हेविभो जितमरिकुलंशत्रुकुलंयेनतस्यसंबुद्धिः । सदयदयासहितकृष्ण । भ्रमेणपरिभ्रमणेनरंजितःशोभितःवियुक्तानांतरुणीनांकांतानांस्थिरतांस्थैर्यंहरतीतिवियुक्ततरुणीस्थिरताहृत् । अयंभृंगचयःभ्रमरसमूहस्तवपदाब्जयुगेभ्रमरंभृंगायमाणंनोस्मद्धृदयंचित्तमर्दयति । जितारिणात्वयात्वत्पादाब्जभ्रमरस्यास्मन्मनसःभ्रमरकृतपराभवोयंपरिहरणीयइतिभावः ॥ १५ ॥ चरणांबुजमिति । हेअच्युतकृष्ण । विषयेक्षयाविषयदर्शनेन । सपदितत्क्षणे । दृशोज्ञानस्यक्षतिःविनाशोदृक्क्षतिःतांपश्यतीतिदृक्क्षतिदृक्एतादृशीदृगस्मदृष्टिःतवचरणांबुजंपादारविंदंकरसरोजरुचंकरपद्मकांतिंकवीनांवर्णनस्याकरःआश्रयभूतंयसरस्तद्रूपकंअजरस्यब्रह्मणोरुक्कांतिर्यस्मात्तमजरुचंनाभिंचदिदृक्षतिद्रष्टुमिच्छति । प्रमिताक्षरावृत्तं । प्रमिताक्षरासजससैरुदिता ॥ १६ ॥ पदारविंदमिति ।

भ्रमरंजितस्तव पदाब्जयुगे भ्रमरं जितारिकुल नः सदय ॥ हृदयं वियुक्ततरुणीस्थिरताहृदयं विभोऽर्दयति भृंगचयः ॥ १५ ॥ चरणांबुजं करसरोजरुचं कविवर्णनाकरसरोजरुचम् ॥ तव नाभिमच्युत दिदृक्षति दृग्विषयेक्षया सपदि दृक्क्षतिदृक् ॥ १६ ॥ पदारविंदं हृदि देहि नः प्रियं सदास्मरन्निर्मलदेहिनः प्रियम् ॥ तदेहि शांतस्तवनंदनोऽज यन्निहंति शांतस्तव नंदनो जयन् ॥ १७ ॥ ननु चंपकाच्युतपदांबु जयोदयमस्ति तेऽच्युतपदांबुजयोः ॥ उचितं च पुष्पमलिनाकलितं तमिहेक्षयाशु मलिनाकलितम् ॥ १८ ॥

सदासर्वदास्मरतोनिर्मलस्यनिर्दोषस्यदेहिनःप्रियमिष्टंनोस्माकमपिप्रियंप्रीतिजनकंतेपदारविंदंहृदिवक्षसिदेहिस्थापयेत्यर्थः । हेअजकृष्णयद्यस्मात्कारणात्शांतानांगर्वरहितानांस्तवंस्तोत्रंनंदतिहृष्यतीतिशांतस्तवनंदनःस्तोत्रप्रियइत्यर्थः । तत्तस्मादेहिआगच्छ । शांतःपूर्वंपरिरंभणादिनाईषच्छांतस्तवनंदनःकुमारःकामोधुनाजयन्नुत्कृष्टःसन्नोस्मान्निहंति ॥ १७ ॥ नन्विति । हेचंपकवृक्ष । जयस्याभिवृद्धेरुदयोयस्मात्तज्जयोदयंअच्युतपदाद्विष्णुपदादाकाशाद्वृष्टमंबुजलंतेतवास्तिननु । अच्युतस्यकृष्णस्यपदांबुजयोःपादाब्जयोरुचितंयोग्यमलिनाभृंगेणाकलितमनाकलितमनाघ्रातमित्यर्थः । पुष्पंचास्तिननु । अतस्त्वंकृष्णंपरिचिनोषीतिभा

वः। मलिनैर्दोषिभिरकलितमज्ञातंतंकृष्णमिहाशुईक्षयदर्शय ॥ १८॥ अलिरिति। अयमलिर्भ्रमरो मधुद्विषंकृष्णं। नवेत्तिहिनजानातिहि। येनतद्वत्सरसानांपरित्यागःसंभवेत्तदपितथापिशिवेशोभनेत्रचंपककुसुमेद्विषन्द्वेषंकुर्वन्मधुमकरंदंनात्तिनास्वादयति। एतद्युक्तमित्याहुः। बहूनिपदानियस्यतस्मिन्षट्पदइत्यर्थः। बहुषुस्त्रीजनेषुपदंस्थानंयस्येतिबहुस्त्रीवल्लभइतिकृष्णःकक्षीकृतध्वनिःविषमाएकत्रप्रीतिरन्यत्राप्रीतिरित्येवमाकारिकास्थितिःप्रकृतिःस्वभावःइहास्मिन्निकटेअस्थितिःकृष्णस्यानवस्थानंपरंकेवलंविषंकालकूटंआतनुतेविस्तारयति। तस्यस्वभावोस्माकंप्रयासइतिभावः ॥ १९॥ मुरलीति। हेअजकृष्ण। यतेरपिसंन्यासिनोपि। मोहदा। त्वदुद्यमस्यतवोद्योगस्यास्मदाकर्षणलक्षणस्यहितानुकूलामहितापूजितातवमुरलीवेणुर्मनोस्मच्चित्तंविजयतेपराभावयति। यालयेप्र

अलिरयं न हि वेत्ति मधुद्विषं तदपि नात्र शिवेत्ति मधु द्विषन् ॥ बहुपदे प्रकृतिर्विषमास्थितिः परमिहातनुते विषमस्थितिः ॥ १९ ॥ मुरली मनो विजयतेऽज यतेरपि मोहदाग्र्यवलयेव लये ॥ कमलातवाधरसुधारसुधाः पिबति त्वदुद्यमहिता महिता ॥ २० ॥ तव वेणुना सुरनता रणता विनता वधूततिजितातिजिता ॥ यमुनागतांतिकमलं कमलं ददतीव ते करमुदार मुदा ॥ २१॥ करजप्रसक्त्युरुरुचा रुरुचार्ववलोकनाकलितयालितया ॥ कमलान्वकारि रुचिरारुचिराश्यपद्मप्रियेश्वरसतीरसती ॥ २२ ॥

लयकालेअग्र्यःश्रेष्ठोवलयःकटकंयस्याःसा। कमलेवलक्ष्मीरिव। तवाधरस्यशोभनाधारायासांतासुधारास्ताश्चताःसुधाश्चअधरसुधारसुधाःपिबतिपानंकरोति। अस्मद्योग्यत्वदधरपानस्यस्वयंकरणादस्माकंमनोग्लानिरितिभावः॥ २०॥ तवेति। हेउदारकृष्ण। रणताध्वनता। वधूनांस्त्रीणांततिंजयतीतिवधूततिजित्तेन। तववेणुना। सुरैर्नताःसुरनतादेवश्रेष्ठाइत्यर्थः। विनताःनम्रभावंप्राप्ताःएतादृशेनवेणुनाअतिजिताअतिशयेनजितायमुनानदीतुभ्यंमुदाहर्षेणकमलंपद्मंकरंउपायनंददतीवअर्पयंतीवअलमत्यर्थंअंतिकंतेसमीपमागताप्राप्ता एतादृशानामप्येवमस्माकमागमनंकिंवक्तव्यमितिभावः॥२१॥ करजेति। हेआलिसखिकरजानांनखानांप्रसक्त्यासंबंधेन। उर्वीरुक्शोभायस्यास्तया। रुरुवत्कृष्णसारवत्चारुमनोहरंअवलोकनंतेनआकलितयादृष्टयातयामुरल्यारुचिरामनोहरा

अरुचीनामस्वरसानांराशिःसमूहःतमपहंतीत्यरुचिराश्यपहःसचासौप्रियइष्टश्चतन्नयोरसःप्रवाहमानस्तस्यतीरेसतीतिष्ठतीआचुंबनंकुर्वतीत्यर्थः । एतादृशी कमलालक्ष्मीःअन्वकारिअनुकृता। एतानिविशेषणानिविभक्तिविपरिणामेनउभयत्रद्रष्टव्यानि ॥ २२ ॥ मुरलीति । हेमुरलिइमंकृष्णमानयतवआयतावाक् गीतप्रबंधाद्यनुकारिशब्दःतयाजितचेतसाहृतचित्तेनकारणेनांतिकंसमीपमिताःप्राप्तावधूःनिजेभक्तजनेऽभिनवाधूर्भारोयस्यसःकमिताकांतःकृष्णःनविसृजेत् नत्यजेत् । हेसाध्विमुरलि । विनतौसत्यांनम्रीभावेसतिइनताप्रभुत्वं । नचकास्तिनशोभते ॥ २३ ॥ व्रजभूरिति । हेअजनेजननरहितईश्वरकृष्ण तव जनेःप्रा दुर्भावात् अविभिरुरणैस्तताविव्याप्तापि इयंव्रजभूर्गोष्ठभूमिः भुविभूलोके तताख्याता उद्भूत् । हेसुरमणेसुरश्रेष्ठकृष्ण कमलापिश्रीरपि तत्रगोष्ठे लसतेचका

मुरलीममानय तवायतवाग्जितचेतसांतिकमिताः कमिता ॥ विसृजेन्निजेभिनवधूर्न वधूर्न चकास्ति साध्वि विनताविनता ॥ २३ ॥ व्रजभूरियं भुवि तताऽवितताप्युद्भूत्तवेश्वर जनेरजने ॥ कमलापि तत्र लसतेऽलसते त्यधुनोत्सृजेत्सुरमणे रमणे ॥ २४ ॥ विजने वने स्वजनमुत्सृजतस्तव नागमं यदि मनो मनुते ॥ विनिहंसि हंसनुतपुण्ययशस्तवनागमं परम तर्हि तव ॥ २५ ॥ अयोगभिन्ना नयतीशमानी तवांघ्रिदासीर्बत दंडपाणिः ॥ अयोऽगभिन्ना न यतीशमानी ह्रियेत कस्तेन भवद्वियोगे ॥ २६ ॥

स्ति। अधुनासाकमला रमणेत्वयि अलसताआलस्यं किंगोष्ठवासेनइतिउपेक्षणमस्तीतिकृत्वाउत्सृजेत्गोष्ठंत्यजेत् ॥ २४ ॥ विजनइति । हेपरमउत्तमकृष्ण विजनेजनरहिते वनेविपिने स्वजनंभक्तजनं उत्सृ जतःपरित्यजतः तव मनश्चित्तं । आगमंआगमनं यदि नमनुते नांगीकरोति तर्हि तव हंसैःसंन्यासिभिःनुतंस्तुतंपुण्यंपवित्रंयशस्ततत्स्तौतीतिपुण्ययशस्तवनः सचासावागमोगीताशास्त्रं तेषांनित्याभियुक्तानांयोगक्षेमंवहाम्यहमित्यादिकंविनिहंसिनाशयसि ॥ २५ ॥ अयोगेति । हेबतकृष्ण ईशमानीअतःपरमेता सामहमीश्वरइत्यभिमानवान् दंडपाणिर्यमः अयोगेनतवविरहेणभिन्नाविशीर्णास्तवांघ्रेःश्रीपादस्यदासीर्नःनयतिबतखेदे । तथाहितेनदंडपाणिनाभवद्वियो गेविरहेसतिअयःअश्मसारमगंचपर्वतंचभिनत्तीत्ययोगभिदितिसमर्थइत्यर्थः । एतादृशोनापुरुषःयतीशमानीयतीश्वरइत्यभिमानवान्योगीवाकः नह्रियेतनाप

क्रियेत अतिसुंदरस्यतववियोगेसर्वेषामपीदृशीअवस्थास्यादेवेतिभावः ॥ २६ ॥ विनाशेति हेईशकृष्ण अनादितःअनादिकालमारभ्यविनाशोमृतिःनानाम यानानाव्याधयःदेहपुष्टिःशरीरपोषणंताःपरंकेवलं त्वमुज्झसि । इदानींवयंचवयमपिअशनंभोजनंअनामयोव्याधिपरिहारःदेहपुष्टिर्देहपोषणंताविनात्यक्त्वे त्यर्थः । त्वत्तुलनांसाम्यंलभेमहि । त्वद्विरहाद्येनकेनचित्प्रकारेणदेहंत्यक्त्वात्वत्साम्यमनुप्राप्स्यामइतिभावः ॥ २७ ॥ अधुनाज्ञानित्वंविस्तारयंति । विधिश र्वेति । विधिर्ब्रह्माशर्वःशिवस्तौपूर्वौयेषांतेतेचसुमनसोदेवास्तेषांसुशोभनंमनश्चित्तंतदेवसरसीसरोवरंतत्रनिवसतीतिविधिशर्वपूर्वसुमनःसुमनःसरसीनिवासस्तस्य संबुद्धिः । अनेनध्येयत्वतद्भावरूपविरुद्धधर्माक्रांतत्वमभेदनिरासेहेतुःसूचितोभवति । हेअजजननरहितकृष्ण । जगताप्रपंचेनसहत्वदभिन्नतातवाभेदः । गता निरस्तेत्यर्थः । तत्रदृष्टांतमाहुः । तुहिनतःहिमात् । नतोयज्विभिर्नमस्कृतोदहनोवह्निः अपरोहिभिन्नोहि । अनेनदहनतुहिनयोर्दार्ष्टांतिकानुसारेणनम्यत्वानम्यत्व

विनाशनानामयदेहपुष्टीरनादितस्त्वं परमुज्झसीश ॥ विनाशनानामयदेहपुष्टीर्लभेमहि त्वत्तुलनां वयं च ॥ २७ ॥ विधिशर्वपूर्वसुमनःसुमनःसरसीनिवास जगताज गता ॥ त्वदभिन्नता तुहिनतो हि नतो दहनोऽपरोऽसदृश तादृशता ॥ २८ ॥ कमलासनाच्च भवतोऽभवतो महतींदिरा किल तया लतया ॥ तरुवद्भवान् परिवृतोऽरिवृतोदयदाव सेदमनु ते मनुते ॥ २९ ॥

रूपविरुद्धधर्मःप्रदर्शितोभवति । निगमनंकुर्वंति । हेअसदृशसदृशरहितकृष्ण । युवयोरपितादृशतातत्सदृशता । दहनतुहिनत्ववद्विरुद्धधर्मवत्तयाभिन्नेत्यर्थः । अनेनजीवपरमौपरस्परंभिन्नौविरुद्धधर्माक्रांतत्वाद्दहनतुहिनवत् इमौचतादृशौतस्माद्भिन्नाविति पंचावयवानुमानमुक्तंभवति ॥ २८ ॥ ननुजीवपरयोर्भेदेपि साम्यमेवास्त्वित्यतोभणीसूक्तोक्तप्रमेयेनसर्वोत्तमत्वंसमर्थयंते । कमलासनादिति । इंदिरामहालक्ष्मीःकमलासनात्चतुर्मुखात्भवतोभवात्शिवात् । अभव तःनविद्यतेभवःसंसारोयस्येतिअभवःमुक्तःतस्मादित्यर्थः जात्येकवचनं । महतीकिलउत्तमाकिल । किलेत्यनेन । यंकामयेतंतमुग्रंकृणोमीतिश्रुतिःसूचिता । अरिभिःवृतःप्राप्तोयउदयःअभ्युदयःतस्यदाववनाग्निवन्नाशकेत्यर्थः । एतादृशहेकृष्णतयालक्ष्म्याभवानूलतयावल्ल्या । तरुवत्तरुरिवपरिवृतःकिलभर्तृतयात

याआलिंगितःकिल। किलेत्यनेनममयोनिरितिश्रुतिंसूचयति। अस्तुब्रह्मभवोत्तमतासर्वोत्तमतातुकथमित्यतआहुः। सेति। तेतव। संबंधिनीसालक्ष्मीः। इदंसर्वं जगदनु। स्वस्याअनंतरंनिकृष्टमित्यर्थः। मनुतेजानाति। किलेत्यनेनअहंरुद्रेभिर्वसुभिश्चरामीत्यादिसमग्राश्रुतिःसूचिता। ब्रह्मादिसकलजगदभ्यधिकलक्ष्मीपतित्वंश्रौतंसर्वोत्तमत्वेकेवलव्यतिरेकीहेतुःसूचितोभवति ॥ २९ ॥ निगमइति। हेअसमअसदृशहेकृष्ण। तेतवनिखिलेश्वरत्वसमयेनिरवधिकसर्वोत्तमत्वसिद्धांते। मतिमतःबुद्धिमतः। पुरुषस्यअतिमतःअतिशयेनसंमतःनिगमः। साक्षात्सर्वोत्तमताप्रतिपादकःएषसर्वेश्वरः। नतेविष्णोजायमानोनजातःनत्वत्समोस्त्यभ्यधिकःकुतोन्यइत्यादिकोवेदःअस्ति। येअसुभृतःपुरुषाःतंप्रसिद्धंवेदमपिअतत्त्वावेदकत्वोक्त्यात्यजंति उपेक्षंते। अक्षरहितैःअंधैस्तैःअहितैःअस्मन्मतवैरिभिःस्वनयःअद्वैतादिरूपःस्वसिद्धांतःकुतःप्रमाणात्सुभृतःसुष्ठुधृतः वेदत्वाविशेषादस्मदीयवेदवत्स्वाभिमतवेदस्यापित्यागसंभवेनस्वमतेपिप्रमाणाभावादितिभावः। अतएवस्वव्याघातपश्यंतोऽक्षरहिताइत्युक्तम् ॥ ३० ॥ ननुब्रह्मव्यतिरिक्तस्यसर्वस्यमिथ्यात्वाद्भवतुभेदादिप्रमेयंतत्प्रतिपादकवेदादिप्रमाणंवाकिमपि

**निगमोस्ति ते मतिमतोतिमतो निखिलेश्वरत्वसमयेऽसम ये ॥ तमपि त्यजंत्यसुभृतः सुभृतः स्वनयः कुतोऽक्षरहितैरहितैः ॥ ३० ॥ अनृतं जगत्कलयतेऽलय ते यदि कोपि मानसहितं स हितम् ॥ रुचिरं कथं निजनये जनयेन्नहि रज्वहेः क्षतिरभूतिरभूत् ॥ ३१ ॥**

नास्तीत्यतउक्तमेवप्रमेयमुपपादयंति। अनृतमिति। हेअलयनाशरहित कृष्ण। यःकोपिवादीमानेनप्रमाणेनसहितंतेजगत्त्वदधीनंविश्वं। अनृतंमिथ्याभूतंकलयतेमनुतेसवादीनिजनयेस्वसिद्धांते। हितमिष्टंऐक्यादिकंरुचिरंमनोहरंपरांगीकारार्हमित्यर्थः। कथंजनयेत् प्रमाणाभावेनपरबोधनासंभवात् मिथ्याभूतप्रमाणेनबाधयामीत्यतस्तस्यस्वरूपत्वेनैवाभावात् नसाधकत्वसंभवतीत्याहुः। नहीति। रज्वहेःरज्जौआरोपितसर्पादिभूतिर्मरणहेतुत्वादमंगलाक्षतिःक्षतंनाभूद्धियदिमिथ्याभूतमप्यर्थंसाधयेत्तर्हिरज्जुसर्पादपिदंशनंस्यादितिभावः। अतोज्ञायतेनमिथ्याभूतमर्थंसाधकंइति। नचप्रातिभासिकमेवतत्रासाधकत्वेतंत्रमितिवाच्यं। प्रातिभासिकेअसतिअसाधकत्वप्रयोजकतयाप्रसिद्धस्यस्वरूपाभावस्यैवासाधकत्वप्रयोजकतयावक्तव्यत्वात्। उभयोःप्रयोजकत्वेगौरवात् इदमपिप्रसिद्धिद्योतकेनहिशब्देनसूचितम् ॥ ३१ ॥

भयकंपादिहेतुत्वंरज्जुसर्पस्यास्तीत्यतआहुः । भयेति । अस्यरज्जुसर्पस्यनकेवलंदंशनहेतुत्वाभावः । भयहेतुताभयजनकत्वं कंपस्यभावःकंपताकंपजनकत्व मित्यर्थः । ननास्ति । तर्हिकुतोभयाद्युपपत्तिरित्यतआहुः । अस्यरज्जुसर्पस्यचितएवज्ञानस्यैवोभयहेतुताभयकंपहेतुत्वं । कुतइत्यतस्तयोर्ज्ञानकार्यत्वेअन्वय व्यतिरेकौदर्शयंति । नहीति । निशिरात्रौचितज्ञानंगतायस्मात्सचिद्गतःसुप्तइत्यर्थः । तस्मिन्नर्थमहिमासर्परूपार्थसामर्थ्यंसुप्तस्योपरिसर्पोपसर्पणेपीतितिभावः । तानूउभयानूभयकंपाख्यान्नरातिहिनप्रदिशतिहिइत्यर्थः । अनेनसत्यप्यर्थेज्ञानाभावान्नभयकंपादिकमितिव्यतिरेकोदर्शितः । इहरज्जुसर्पस्थलेअर्थेगतेपिसर्प रूपार्थाभावेपीत्यर्थः । अहिश्चित्सर्पज्ञानंअयंसर्पइतिभ्रममात्रमित्यर्थः । तानुभयानूभयादीनूरातिहिदिशतिहि । अनेनार्थाभावेपिज्ञानेसतिभयकंपादिकमित्य न्वयोदर्शितः । अर्थस्यपूर्वपादेअन्वयतोव्यभिचारः उत्तरपादेव्यतिरेकतोव्यभिचारश्च । अहेतुतासमर्थनायनिरूपितोभवति । अतएवतत्रार्थमहिमाअत्रतुगतेर्थे

भयहेतुतास्य न च कंपकताभयहेतुतास्यचित एव परम् ॥ नहि चिद्गतेऽर्थमहिमा निशि तानहिचिद्गतेऽ
र्थ इह राति हि तान् ॥३२॥ यदि भेदशून्यमखिलं मखिलंघ्यसुरार्दिता सुरसभार सभा॥ नव धाम किं
मुररिपोऽररिपो स्तुतिरप्युदारचरिताचरिता ॥ ३३ ॥ अमितोरुविक्रम तवामतवागभिदां वदन्खरमते
रमते ॥ क्व विरुद्धधर्मजलधी जलधीकलिताऽभिदा क्व निजयोनिजयोः॥ ३४ ॥

इत्युक्तम् ॥३२॥ इदानींदशमस्कंधोक्तप्रमेयैर्नेवाभेदंदूषयंति । यदीतिहेअररिपोदोषशत्रोउदारचरितोत्कृष्टचरित्रमुररिपोकृष्णयद्यखिलंसमस्तंजगद्भेदशून्यंभे दरहितंतर्हिमखिनोयाज्ञिकानूलंघयंतीतिमखिलंघिनस्तेचतेऽसुराश्वतैरर्दितापीडिता सभाभासाकांत्यासहितासुराणांब्रह्मरुद्रादीनांसभातवधाममंदिरंक्षीरसमुद्रं किंकिमर्थमारप्राप । काकतालीयंगमनमित्यतआहुः । स्तुतिरपिपुंसूक्तेनस्तोत्रमपिकिंकिमर्थमाचरिताकृता । अनेनभेदेगम्यगंतृभावस्तोतृस्तुत्यभावःसामर्थ्यत  द्भावरूपाविरुद्धधर्माःस्मार्ताःकथिताभवंति । जगामसत्रिनयनस्तीरंक्षीरपयोनिधेःइत्यादेः ॥३३॥ उपपादिताभेदनिरासमुपसंहरति । अमितेति । अमिताअपरि मिताउरवःश्रेष्ठाविक्रमाःपराक्रमाःयस्यतस्यसंबुद्धिः । कृष्णतवअभिदामैक्यंवदनूअमतवाकूश्रुत्याद्यसंमतवचनोवादीखरमतेरासभसिद्धांतेरमतेऐक्यवादीखरइ

त्यर्थः । विरुद्धधर्मैः पूर्वोक्तैः जलधीइवसमुद्राविवविद्यमानौजीवपरमौक । निजश्चयोनिजश्चनिजयोनिजौतयोरुत्पन्नानुत्पन्नयोरित्यर्थः । जीवपरमयोर्जला नांजडानांमूर्खाणामित्यर्थः । धियाबुद्ध्याकलितानिरूपिताजडैःस्वकपोलकल्पितेत्यर्थः । लडयोरभेदान्नयमकभंगः । अभिदाअभेदःक । अभेदस्त्वत्यंतासंभवी तिभावः ॥३४॥ इदानींपूर्वोक्तमिथ्यात्वनिराकरणमुपसंहरंति । स्मृतीति । स्मृतयश्चभारतंअव्रणानिचनिर्दोषाणिपुराणानिचसात्विकपुराणानीत्यर्थः । पुरातनो ऽपौरुषेयोवेदश्चशास्त्रंब्रह्ममीमांसाचतेषांविभवंसंपदंविगतोभवःसंसारोयस्मात्सविभवः अविद्यागंधरहितइत्यर्थः । तंपरमंनारायणंचमानसमयैर्मानसविकारैःश्च नोविकारमात्रकृतैरित्यर्थः । समयैः सिद्धांतैः अनृतंमिथ्याभूतंवदन्मायीसुसभासुशोभनसभासुश्रोत्रियसभास्वित्यर्थः । सभाःशोभासहितोननभवति । एतादृशत्र

स्मृतिभारताव्रणपुराणपुरातनवेदशास्त्रविभवं विभवम् ॥ परमं च मानसमयैः समयैरनृतं वदन्न सुस भासु सभाः ॥ ३५ ॥ फणिराजगर्वशमनः शमनःक्षयकारकः स कुरुतात्कुरुतात् ॥ चकितात्मनामिह वने हवने विनुतः कृपावसुहृदां सुहृदाम् ॥ ३६ ॥ मुखसारसं च सुरसं सुरसंस्तुतचारुभावसुगलं युगलम् ॥ नयनाब्जयोरज मनोजमनोजयि सुस्मितं हृदयतेऽदय ते ॥ ३७ ॥

दिनंबौद्धइतिश्रोत्रियास्तिरस्कुर्वंतीतिभावः ॥३५॥ फणिराजेति । फणिराजःकालीयस्तस्यगर्वंशमयतीतिफणिराजगर्वशमनः अनसःशकटासुरस्यक्षयंकरोती तिसतथोक्तः । हवनेयज्ञेविनुतःस्तुतःसकृष्णःइहवने । कुरुतात्कुत्सितघूकसिंहादिरवात् तिरश्चांवासितंरुतमित्यमरः । चकितात्मनांभीतमनसां । कृपैववसुद्रव्यंत स्मिन्हृदयंयासांतासांसुहृदांबंधूनामस्माकंशंसुखंकुरुतात्करोतु ॥३६॥ मुखसारसमिति । अजजनिरहित । अदयदयारहितेत्याक्रोशेनसंबुद्धिः । हेकृष्णनोस्मा कंहृन्मनःसुरसंलावण्यरसभरितंमुखारविंदंअलमत्यर्थंसुरैःसंस्तुतःचारुभावःमनोहरत्वंतेनयुज्यतइतियुक् । नयनाब्जयोर्युगलंयुग्मंमनोजस्यकामस्यमनश्चि

१ विद्यमानौजीवपरमौउक्तपूर्णत्वापूर्णत्वोपजीव्यत्वापजीवकत्वबद्धमुक्तत्वाद्यनंतविरुद्धधर्मसंग्रहायजलधिपदं । २ प्रलयकालेपिशायिनःनारायणस्यसृष्टिकालमात्रवर्तिना जीवस्यनिजयोनिजत्वाख्यविरुद्धधर्मावपिबोधयितु मिदंविशेषणम् ।

त्तंजयतीतिमनोजमनोजयितत्सुस्मितंअयतेगच्छतिस्मरतीत्यर्थः ॥ ३७ ॥ गोपीनामिति । उडुपतिःचंद्रःइत्यनेनप्रकारेणगोपीनांगोपस्त्रीणांपरितापंकृष्णविरहज न्यसंतापंकृष्णायशंसन्निवकथयन्निवअव्ध्येःकृष्णनिवासभूतस्यसमुद्रस्यांतिकंसमीपंप्राप चंद्रःप्रतीच्यांदिशिगतइत्यर्थः । एतस्यचंद्रस्यापसरणेसतिगोपीनांव क्षोजाख्यगिरिस्तनाख्यपर्वतं । करैर्हस्तैःपरिमृजन्स्पृशन्चंद्रोपिउदयकालेपर्वताग्रेकरान्परिसारयति । नेत्रोत्पलंतासांनयनेंदीवरंहर्षयन्संतोषयन्हृद्व्योमतासांहृ दयाख्याकाशमप्यनुरंजयन्ननुरागयुक्तंकुर्वन्प्रमोदांबुधेस्तासांसंतोषसमुद्रस्यवृद्धिमभिवृद्धिंविरचयन्नच्युतेंदुःकृष्णाख्यचंद्रस्तासांपुण्यपुंजःपुण्यसमूहःसए वाचलःपर्वतस्तस्मात्उदितःदर्शनसमयएवविलासंकुर्वन्तासांपुण्यवशादागतइत्यर्थः । विनियमालंकारः सचरूपकेणगर्भितः॥३८॥ काचिदिति । संचितस्यअ

गोपीनां परितापमित्यु डुपतिः कृष्णाय शंसन्निव प्रापाब्ध्यंतिकमच्युतेंदुरुदितस्तत्पुण्यपुंजाचलात् ॥ वक्षोजाख्य गिरिं करैः परिमृजन्नेत्रोत्पलं हर्षयन् हृद्व्योमाप्यनुरंजयन्विरचयन्वृद्धिं प्रमोदांबुधेः ॥ ३८ ॥ काचिन्मुकुंदमुखसारससौरभाढ्यं तांबूलचर्वितमभक्षयदंबुजाक्षी ॥ अंतर्निलीनमदनायुधघातजातशांतिं विधातुमिव संचितपुण्यशेषा ॥३९॥ अन्या तदंसपरिलंबितपाणिपद्मा धन्या स्फुरन्मकरकुंडलशोभिगंडम् ॥ प्रेष्ठांतरांकुरितरासविलासतृष्णा पुष्टिप्रदेव मृदु हृष्टमुखी चचुंबे ॥ ४० ॥

र्जितस्यपुण्यस्यशेषोयस्याःसाअंबुजवत्अक्षिणीयस्याःसाहर्षोद्रेकेणविकसितनयनेत्यर्थः ।काचिद्गोपीअंतर्हृदिनिलीनोगूढःमदनःकामःतस्यायुधैःशरैर्जातोघा तःक्षतंतस्यशांतिंपरिहारंविधातुमिवमुखस्थवीटिकयाआयुधघातशांतिर्भवतीतिप्रसिद्धिः ।मुकुंदस्यकृष्णस्यमुखसारसंमुखारविंदंतस्यसौरभेणपरिमलेनआढ्यं संपन्नंतांबूलचर्वितंअभक्षयत् । कृष्णोच्छिष्टवीटिकाभक्षणेनैवविरहजन्यमदनवेदनापरिहृतेत्यतःकृष्णस्यसौंदर्यंकिंवर्णनीयमितिभावः ॥३९॥ अन्येति । तस्य कृष्णस्यांसेबाहुमूलेपरिलंबितंपाणिपद्मंकरसरोजंयस्याःसाअतएवधन्यापुण्यवतीहृष्टंहर्षयुक्तंमुखंयस्याःसाअन्याअपरागोपीप्रेष्ठस्यप्रियस्यकृष्णस्यांतरेहृ दिअंकुरिताईषदुत्पन्नारासविलासस्यरासक्रीडायाःतृष्णाआकांक्षातस्याःपुष्टिंअभिवृद्धिंप्रददातीतितथोक्तासैवपरस्परमंसालंबितपाण्योःस्त्रीपुंसयोश्चुंबनादिवि

लासोरासविलासः अनयापितथैवचुंबनात्‌ज्ञातास्वादस्यतत्रतृष्णाभिवृद्धिर्वर्धिष्यतइतिबुद्ध्येवेतिभावः । स्फुरतीलसतीमकरकुंडलेताभ्यांशोभिगंडंतन्मृदुयथाभवतितथाचुचुंबेचुंबनमकरोत्‌ ॥ ४० ॥ काचिदिति । काचित्तन्वीगोपीरुचिराअलकाश्चूर्णकुंतलायस्यतद्रुचिरालकंआस्यंमुखंयस्यसतंरमणंकृष्णंप्रति । बिंबोष्ठस्यचुंबनरुचिंचुंबनस्यअभिरुचिंभ्रूसंज्ञयादर्शयंतीवदष्टंमृदुलंपेशलंओष्ठपुटंयस्याःसासतीमुकुंदंतरलस्यचंचलस्यात्मकटाक्षस्यस्वकीयापांगदर्शनस्यलक्षंलक्ष्यंततानचकार । अनेनचक्षुःप्रीतिरेवास्यादर्शिता ॥ ४१ ॥ नस्वैरिणीति । काचिद्गोपी नयेनीतौकोविदकुशलहेकृष्ण । अहंस्वैरिणीतिव्यभिचारिणीतिकृत्वा । मयि । तवोपेक्षानयुक्तेतितंकृष्णंप्रतिबोधयंतीवविज्ञापयंतीवसुखजाश्रुधारासती अनेनकन्यादानधारोदकंसंपादितं । हर्षंकुर्वंतीतिहर्षकराःकंक

काचिच्च दष्टमृदुलोष्ठपुटी मुकुंदं तन्वी ततान तरलात्म कटाक्षलक्षम्‌ ॥ भ्रूसंज्ञयेव रमणंप्रति दर्शयंती बिंबोष्ठचुंबनरुचिं रुचिरालकास्यम्‌ ॥ ४१ ॥ न स्वैरिणीति नयकोविद मय्युपेक्षा युक्ता तवेति तमिव प्रतिबोधयंती ॥ पस्पर्श पाणिकमलं सुखजाश्रुधारा हस्तेन हर्षकरकंकणसुस्वनेन ॥ ४२ ॥ रत्युत्सवार्ह तनुमंदिरसंगितुंगवक्षोजसत्कलशमंडनधीरिवान्या ॥ संयोज्य तच्चरणपल्लवमाशु मारधिक्कारचिह्नमखनद्ध्वजमुत्पताकम्‌ ॥ ४३ ॥

णसुस्वनाःयस्यसः अनेनविवाहोचिततुर्यध्वनिःसंपादितः । तेनहस्तेनस्वहस्तेनपाणिपद्मंकृष्णहस्तकमलंपस्पर्शकिलजग्राहकिल किलेतिपौराणिकीप्रसिद्धिःसूचिता । अनेनभार्यात्वोचितपाणिग्रहणंसूचितम्‌ ॥ ४२ ॥ रतीति । अन्यागोपी । रत्युत्सवार्हंसुरतोत्सवयोग्यंतनुमंदिरंस्वशरीराख्यगृहंतत्रसंगिनौसंबंधवंतौतुंगौउच्चौवक्षोजौकुचौतावेवसत्कलशौशोभमानपूर्णकुंभौ । यथाक्रीडागृहंपूर्णकुंभादिनाअलंकुर्वंतितद्वत्‌कृष्णसंभोगगृहस्थानीयस्यस्वशरीरस्यस्तनावेवपूर्णकुंभावितिभावः । तयोर्मंडनंविकसितपल्लवैरलंकारस्तत्रधीर्बुद्धिर्यस्याःसेवअलंकर्तुकामेवेत्यर्थः । तच्चरणपल्लवंकृष्णपादपल्लवंसंयोज्यस्वकुचेस्थापयित्वाआशुशीघ्रंमारस्यकामस्यधिक्कारःपराभवःतस्यचिह्नं । उत्पताकंउच्छ्रितःपताकःध्वजपटोयस्यतंध्वजं । अखनत्‌स्थापितवती । कृष्णपादसंबंधमात्रेणकामशांतौस्वकुचकुंभोपरिदृश्यमानतत्पादध्वजरेखयाकामजयसूचकध्वजंनिचखानेवे

तिभावः । पल्लवैःकुचकुंभालंकरणायपादपल्लवानंक्षिपंत्याध्वजादिविजयचिह्नंप्राप्तयुक्त्याहरिकिंकराणामेकोद्देशेनप्रवृत्तावनुद्दिष्टप्रयोजनांतरंसिध्यतीतिद्यो तितम् ॥ ४३ ॥ अन्याचेति । पुलकैःरोमांचैःशोभितानिसर्वाणिगात्राण्यवयवाःयस्याःसा । धन्याकृतार्था । अन्याकाचित् । तंकृष्णं । हृदिनिधायध्या त्वा । निमीलिताक्षीमुकुलिताक्षीसती । आभिःपूर्वोक्ताभिःसर्वाभिःगोपीभिरनुभूतंभोगंवीटिकाभक्षणकंठालिंगनचुंबनपाणिस्पर्शादिकमभुक्तअनुभूतवती । तथाहि । लोकेमुनिमार्गजुषामृषिमार्गसेविनांकिंनामफलंनास्तिसर्वंफलमस्त्येवेत्यर्थः । ध्यानधारणादेर्मुनिमार्गत्वादितिभावः । अनेनसंकल्पावस्थादर्शिता । मनोरथैःप्रियावाप्तिःसंकल्पइत्युक्तत्वात् ॥ ४४ ॥ नयनैरिति । गोप्यः । खेगगने विधुश्चंद्रःतंविहसंतंविशेषेणपरिहसंतंततोप्यधिककांतमितियावत् । अ

अन्या च तं हृदि निधाय निमीलिताक्षी धन्यापि यं पुलकशोभितसर्वगात्री ॥ सर्वाभिराभिरनुभूतमभुङ्क्त
भोगं किं नाम नास्ति मुनिमार्गजुषां हि लोके ॥ ४४ ॥ नयनैर्दधुर्मुखविधुं खविधुं विहसंतमस्य चरणे
च रणे ॥ जयदायिनी स्तनयुगेन युगे क्षणतां शमावधिगतेऽधिगते ॥ ४५ ॥ स्वानंदं प्रकटीचकार सुखदं
सायुज्यमालिंग्य ताः साधर्म्यं स्वकृतानुलेपतिलकैर्मोक्षं हृदिस्थावृतेः ॥ ताभिः सस्मितमीक्षितो यदुपतिः
सारूप्यसार्ष्टी दिशन्नासाख्यं च तदुत्सवं न हि कथा व्यर्था परब्रह्मणः ॥ ४६ ॥

स्यकृष्णस्यमुखविधुंमुखचंद्रंनयनैर्नेत्रैःदधुःधृतवत्यः सोत्कंठमीक्षितवत्यइत्यर्थः । अनेनचक्षुःप्रीत्यवस्थादर्शिता । रणेयुद्धे । जयदायिनीजयप्रदे स्मरतामिति शेषः । अस्यकृष्णस्यचरणेपादौच पदंघ्रिश्चरणोस्त्रियामित्यमरः । स्तनयुगेनकुचयुग्मेनदधुः । शमस्यस्वगर्वशमनस्यअवधौस्वगर्वशमपर्यंतंगतेअदर्शनंगतेक्ष णेअधिगतेप्राप्तेदृष्टेसतियुगेयुगपरिमितेकालेक्षणतामल्पकालतांदधुः । प्रियसमागमसंतोषेणमहानपिकालोल्पइवाभवदितिभावः ॥ ४५ ॥ स्वानंदमिति । ताभि र्गोपीभिः । सस्मितंस्मितेनसहितंयथाभवतितथा । ईक्षितःदृष्टः । श्रवणजन्यापरोक्षइतिध्वनिः । यदुपतिःकृष्णः । हृदिस्थायाआवृतेराच्छादनस्यकुचाच्छादन वस्त्रस्येत्यर्थः । हृन्निष्ठप्रकृतिरूपाच्छादनस्येतिध्वनिः । मोक्षंअपसरणंप्रकटीचकार । स्वानंदंस्वविलासजनितसुखंस्वरूपसुखमितिध्वनिः । प्रकटीचकारेत्यस्यस र्वत्रान्वयः । तागोपीरालिंग्य सुखदंसायुज्यंदृढसंयोगंसायुज्याख्यमोक्षमितिध्वनिः । स्वेनकृतगाढालिंगनवशाद्गोपीषुकृताअनुलेपाअंगालंकारभूतचंदनानुलेप

नानितिलकाललाटालंकारभूतकस्तूरितिलकाश्चतैःसाधर्म्यंसमानधर्मत्वंकृष्णांगानुलेपतिलकवत्गाढालिंगनेसतितासामप्यंगानुलेपनतिलकानांजातत्वादिति भावः । सारूप्यसार्ष्टर्यवस्थाविशेषौमोक्षावितिध्वनिः । तथासारूप्यंसमानरूपत्वं सार्ष्टिर्नामपरस्परांसविन्यस्तहस्ततयावस्थितिः दिशन्प्रदिशन् । रासाख्यमुत्सवंप्रकटीचकारेतिपूर्वेणान्वयः । तद्युक्तमित्याह । नहीति । परब्रह्मणःकृष्णस्य । क्व थाव्यर्थानहि ॥४६॥रम्यस्थलीमिति । असौशौरिःकृष्णः । साराश्रेष्ठाजनिरुत्पत्तिर्यासांतासांगोपीनांईहितायइष्टाय । रासमहायरासोत्सवाय । रम्यांसमायतांस्थलीमगादगमत् । आसांगोपीनांईप्सितदातरीशेकृष्णेरागात्स्नेहात्सारजनीरात्रिःअसुःप्राणस्तस्मिन्विषयेहितायअनुक्रमणरूपहितायअभूत् । पूर्वंकृष्णायोगेनप्राणोऽसह्यआसीत् । इदानींतत्समागमेसह्यएवासीदितिभावः ॥४७॥ कंठेति । यदुपतिःकृष्णः । कंठस्यआश्लेषःआलिंगनंकराग्रस्यनखस्यपातःप्रक्षेपःमधुरःमनोहरोव्याहारउक्तिःमंदस्मितंमंदहासःतैः । लोलापांगनिरीक्षणेनएतैरालंबनविभावैःमरुतामंदवायुना । गीतेनसंगीतेन । शीतांशुनाचंद्रेण । एतैरुद्दीपनविशेषैश्चशृंगाररसंपोषयन्पुष्टीकुर्वन् । उच्चकैःसम्यक् । कुसुमितेपुष्पितेवृंदावने । गोपीनांमंडलेनसमूहेनमंडितमलंकृतं । रासोत्सवंरससंबंधीरासःसचासावुत्सवश्चतंशृंगाररसभरितोत्सवमित्यर्थः । निर्ममेकृतवान् ॥ ४८ ॥ प्रेष्ठस्येति । प्रेम्णास्नेहेनउत्थाउत्पन्नाःरोमोद्गमारोमांचायेषांतैःस्वहस्तैःप्रेष्ठस्यपरमप्रियस्यकृष्णस्यांसयुगंपुनःपलायनभियेवउभयतःपार्श्वद्वयेषुदृढंआलिंग्यऔत्सुक्यतःकौतूहलात्वीक्षतांपश्यतांसिद्धानांनयनैःसमंसमुदितंउत्पन्नंमध्यस्थंमंडलाकारेणस्थितानांतासांमध्येस्थितंशृंगाररसंमिथःपरस्परंधृतःकरोयाभिस्ताःबहिःक्वचिदपिगंतुंनमुमुचुः । यथास्नेहास्पदंकांतंमिथोगृहीतप्रसारितहस्तानायिकाबहिर्गंतुंनमुंचतितद्वन्मध्यस्थरससिद्धनयनबहिर्गमनेनिरोधायमिथोहस्तंजगृहुरितिभावः ॥ ४९ ॥

रम्यस्थलीं रासमहाय शौरिरगादसौ सारजनीहिताय॥ आसामभूदीप्सितदातरीशे रागादसौ सा रजनी हिताय॥ ४७॥ कंठाश्लेषकराग्रपातमधुरव्याहारमंदस्मितैर्लीलापांगनिरीक्षणेन मरुता गीतेन शीतांशुना॥ शृंगारं रसमुच्चकैः कुसुमिते वृंदावने पोषयन् गोपीमंडलमंडितं यदुपती रासोत्सवं निर्ममे॥ ४८॥

प्रेष्ठस्यांसयुगं करैरुभयतः प्रेमोत्थरोमोद्गमैः सुष्ठ्वालिंग्य पुनः पलायनभियेवौत्सुक्यतो वीक्षताम्॥

सिद्धानां नयनैः समं समुदितं शृंगारसंज्ञं रसं मध्यस्थं मुमुचुर्मिथो धृतकरा गंतुं बहिर्न क्वचित्॥ ४९॥

सइति । सशौरिःप्रागिवपूर्ववदासांअस्माकंमध्येमनोरमांकाचिन्नारींनेष्यतीतिभियेवपरस्परंबद्धःमनोज्ञहस्तोयाभिस्ताइंदीवरलोचनाःगोप्योविरेजुः ॥ ५० ॥ विष्वगिति । विष्वक्समंतात्विसर्पिणिरसविशेषदर्शनायपतंतिनयनानियासांताःपरिमुच्यमानंविश्लथमानंवक्षोजवस्त्रंकुचवस्त्रंचकबरीभरःकेशपाशश्चभव्या शोभमानानीवीयासांताः सिंजन्विभूषणगणःशब्दंकुर्वन्नाभरणसमूहोयासांताःगोप्यः । नाट्यच्छलेननृत्यव्याजेनमिषतांसिद्धानामलौल्यंअचांचल्यंधैर्य मित्यर्थः । चरणैःक्रणशःकणान्चूर्णमित्यर्थः । वितेनुःचक्रुः । यथाकिंचित्कठिनंवस्तुपादघातेनचूर्णयंतितद्वदितिभावः ॥ ५१ ॥ कृष्णांसेति । कृ

स नेष्यति प्रागिव कांचिदासां मनोरमां शौरिरितीव भीत्या ॥ परस्परावद्धमनोज्ञहस्ता विरेजुरिंदीवर लोचनास्ताः ॥ ५० ॥ विष्वग्विसर्पिनयनाः परिमुच्यमानवक्षोजवस्त्रकबरीभरभव्यनीव्यः ॥ सिंजद्वि भूषणगणा मिषतामलौल्यं नाट्यच्छलेन चरणैः कणशो वितेनुः ॥ ५१ ॥ कृष्णांसविन्यस्तकराब्जमाला हृष्टाः स्त्रियस्ता ननृतुः सलीलाः ॥ आनंदमूर्तिं परिरभ्य मर्त्यः को नाम नो नृत्यति सिद्धकृत्यः ॥ ५२ ॥ आबध्य मुक्तगणवल्लभकंठमेका बाला विमुक्तकबरीभरबंधनाय ॥ चक्रे न यत्नमलसा गुरुकार्यलाभे लघ्वर्थसाधनकृतिर्न हि दृष्टपूर्वा ॥ ५३ ॥

ष्णस्यांसेविन्यस्तानिहिताकराब्जमालायासांताः । हृष्टाःसंहृष्टाः । सलीलालीलासहितास्तास्त्रियःननृतुः । तथाहि । आनंदमूर्तिंपरिरभ्य । सिद्धकृत्यःकृतकृ त्यः । कोनाममर्त्यःमनुष्यःनोनृत्यति । सर्वोपिनृत्यत्येवेत्यर्थः ॥ ५२ ॥ आबध्येति । एकाबालामुक्तानांगणस्यवल्लभःकृष्णःतस्यकंठमाबध्य । बाहुलतयाबद्धा आश्लिष्येत्यर्थः । मुक्तकबरीभरबंधनायश्लथद्धम्मिल्लबंधनाय । अलसाजडासतीयत्नंप्रयत्नंनचक्रेनकृतवती । तथाहिगुरुकार्यस्यलाभेसतिलघ्वर्थस्य तुच्छप्र योजनस्यसाधनेसंपादने । कृतिःप्रयत्नःदृष्टपूर्वा पूर्वंदृष्टानहि । नित्यमुक्तस्यबंधनलक्षणमहाप्रयोजनेलब्धेसद्योमुक्तमात्रकबरीबंधनस्यायोगादितिभावः ॥ ५३ ॥

कृष्णेति । कृष्णालिंगनस्य भंगंविच्छेदंशंकतइतिकृष्णालिंगनभंगशंकिनस्वतद्धृदयंचमनोयासांताःगोप्यः । स्रस्तंकचंप्रच्युतंवक्षोजांबरंउद्गतांमुच्यमानां ग्रंथिंनीवींचनबबंधुःकिल किलेत्यस्वरसे । भर्त्राकृष्णेनसहरतिसूचकंतत्कबरीवक्षोजांबरनीवीमोचनंदृष्ट्वाप्रहृष्टाननाःरतिर्भविष्यतीतिप्रहृष्टमुख्यःतामृगदृ शःअमतंअनभिमतंरत्यंतोचितकर्मसुरतांतेक्रियमाणंकर्मकबरीबंधनादिकंनचक्रुरेवेतिममचेतःममहृदयंममाभिप्रायइत्यर्थः ॥५४॥ काचिदिति । अब्जनेत्राकृ मलाक्षीकाचित्कारुण्यसिंधोःकमलेक्षणस्यकृष्णस्यकरंहस्तंममकंठमाश्लिष्यपूर्ववत्हेबतकृष्णकरस्वीयांमांनमुंचेतितंकरमंचयंतीवचुचुंबे ॥ ५५ ॥ श्रीलोलेति । श्रीलोलस्यलक्ष्मीपतेःकृष्णस्यकोमलकपोलेविलग्नःसंबद्धोगंडस्तेनलोलंमनोहरं । अन्याचसावधूश्चतस्याआननंकयाप्यबलयागोप्यास्ववक्त्रगत वीटिकयाजघ्नेताडितं । तदेववीटिकाताडनमेवतांस्ववक्त्रगनवीटिकांदित्सतोदातुमिच्छतःकृष्णस्यसूचकमभूदिवेत्युत्प्रेक्षा ॥५६॥ विलासमिति । विलासं । अ

कृष्णालिंगनभंगशंकिहृदयाः स्रस्तं कचं प्रच्युतं वक्षोजांबरमुद्गतामपि न ता नीवीं बबंधुः किल ॥ तद्भर्त्रा रतिसूचकं मृगदृशो दृष्ट्वा प्रहृष्टाननाः रत्यंतोचितकर्म चक्रुरमतं नैवेति चेतो मम ॥५४॥ काचिच्चुचुंबे कमलेक्षणस्य कारुण्यसिंधोः करमब्जनेत्री ॥ आश्लिष्य कंठं बत पूर्ववन्मां स्वीयां न मुंचेति तमंचयंती ॥ ५५ ॥ श्रीलोलकोमलकपोलविलग्नगंडलोलं कयाप्यबलयाननमन्यवध्वाः ॥ जघ्ने स्ववक्त्रगतवीटिकया तदेव कृष्णस्य सूचकमभूदिव दित्सतस्ताम् ॥५६॥ विलासमस्यां वरसिद्धसत्कृताविलाऽसमस्यांबरसिद्धसत्कृता ॥ ततान वीणाध्वनिगानविद्ययाऽऽतता नवीनाध्वनि गानविद्यया ॥ ५७ ॥

स्यां । वरसिद्धसत्कृताविला । बवयोरभेदान्नयमकभंगः । असमस्य । अंबरसिद्धसत्कृता । ततान । वीणाध्वनिगानविद्यया । आतता । नवीनाध्वनि । गानवित् । यया । अस्यांरासक्रीडायां । वरेणसिद्धलब्धंसत्कृतंसत्कर्मपुण्यमित्यर्थः । तेनआविलासंमिश्राअंबरसिद्धैराकाशसिद्धैःसत्कृतामानिता वीणायाध्वनिवत्मनोहरायागानविद्यातयाआतताआसमंतात्पूर्णाकाचित्असमस्यअसदृशस्यविलासंततान । कृष्णवत्स्वयमप्यगायदित्यर्थः । ययानार्यालोकःनवीनाध्वनिनूतनगानमार्गेगानवित्गानज्ञोऽभूत् काचित्मुकुंदेनस्वरजातीरगायत । उन्निन्येइतिकथासूचनार्थमिदं ॥ ५७ ॥

भर्तुरिति । भर्तुःकृष्णस्यमृदुस्वरेणमनोहरसंगीतस्वरेणकृताअनुगतिरनुकरणंयस्यांसाकाचिद्गोपीहृद्यकलकंठवधूरिवमनोहरपिकपत्नीवस्वगीतंविस्तार्यवितत्य सकलेषुजनेषुअद्धानिश्चयेनमुग्धीभवत्सुविवशीभूतेषुसत्सुरहसीवएकांतइवविशंकंनिःशंकंयथाभवतितथास्निग्धासतीमुकुंदवक्त्रंचुचुंब । संगीतरसातिशया त्संमोहनास्त्रादिवाखिलेषुतदेकविधतांगतेषुव्यापारांतरानभिज्ञेषुसत्सुस्वयंचुचुंबइत्यर्थः ॥ ५८ ॥ किमिति । हेईशकृष्णाप्तकामस्याप्तसकलकामस्यपूर्णस्ये त्यर्थः । तवाभिरस्माभिःकिंकार्यंनकिमपीत्यर्थः । तथापिविलासैःस्वविलासैर्नोस्मान्तोषयसेसुखयसि । इतीत्थमीरयंतीवदंतीवकापिबालामुरारेःकृष्णस्यकरं स्तनेकुचेबलेनबलात्कारेणन्यधादर्पितवती ॥ ५९ ॥ उरोजेति । याबालाकृष्णकरंस्वहस्तेन्यधादसौगोपीअसाधारणंस्वात्मन्येवनिष्ठंउरोजयुग्मेस्वकुचयुग

भर्तुर्मृदुस्वरगतानुगतिः स्वगीतं विस्तार्य हृद्यकलकंठवधूरिवाद्धा ॥ मुग्धीभवत्सु सकलेषु मुकुंदवक्त्रं स्निग्धा चुचुंब रहसीव विशंकमेका ॥ ५८ ॥ किमाप्तकामस्य तवाभिरीश तथापि नस्तोषयसे विलासैः ॥ इतीरयंतीव करं मुरारेः स्तने न्यधात्कापि बलेन बाला ॥ ५९ ॥ उरोजयुग्मांकितकुंकुमांकमसावसाधारणमात्मभर्तुः ॥ करे स्थिरीकृत्य चकार चारुं तमन्यमानिन्यभिरुच्ययोग्यम् ॥ ६० ॥ मुदावहाभासुरगीतशोभा विभाति वृंदावनरासलीला ॥ हरेश्च मूर्तिः शतशोऽगनाल्यामुदावहाभा सुरगीतशोभा ॥ ६१ ॥

लेअंकितस्यचिह्नितस्यकुंकुमस्यांकंचिह्नंआत्मभर्तुःस्वरमणस्यकरेस्तनसंगिनिहस्तेस्थिरीकृत्यस्थिरस्थापनेनदृढीकृत्यचारुंमनोहरंतंकृष्णकरंअन्यासांकामि नीनांअभिरुचेराकांक्षायाअयोग्यंसपत्नीकुचकुंकुमांगसाहित्यादनर्हंचकार । स्वविलासैकयोग्यंचकारेत्यर्थः ॥ ६० ॥ मुदावहेति । मुदंसंतोषमावहतिप्रापय तीतिमुदावहाभासुरगीतस्यशोभाकांतिर्यस्याःसावृंदावनेरासलीलाविभाति । अंगनाल्यांस्त्रीसमूहे । उदंउदकंआवहतिप्रापयतीतिउदावहोमेघस्तस्याभेवाभा यस्याःसा ।सुरगीतशोभा हरेःकृष्णस्यमूर्तिरेकैवशतशःशतसंख्याकाभूत्वाविभातियावत्योगोप्यस्तावत्योभूत्वेत्यर्थः । अतएवसारूप्यमितिप्रागुक्तम् ॥ ६१ ॥

रोम्णामितिव्याख्यातमेतत्प्राक् ॥६२॥ इतिश्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थविरचितरुक्मिणीशविजयटीकायांगुरुभावप्रकाशिकायामष्टमःसर्गः ॥

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायि
नि ॥ संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातः सुरमंडलीषु महितः सर्गोऽष्टमोयंऽमु
दाम् ॥ ६२ ॥ इति रुक्मिणीशविजये महाकाव्ये अष्टमः सर्गः ॥ ॥ ॥७॥ ॥ ॥७॥



॥ अथ श्रीरुक्मिणीशविजये नवमसर्गप्रारंभः ॥

श्रीगुरुभ्योनमः ॐ रासक्रीडातितृष्णाय कृष्णायानंदमूर्तये । नमः कारुण्यधिष्ण्याय विष्णवे केशिजिष्णवे ॥१॥ तुरंगतुंडकरुणामंडितः खंडितेषणः।धरासु राग्रणीर्दद्यादाद्यादिराजगुरुर्दृशम् ॥२॥ इदानीमेकादशपद्यैः रासंवर्णयते । मंडलीकृतेति । मंडलीकृतानांमंडलाकारतया स्थितानांमनोरमाणां रामाणांस्त्रीणांकुंड लद्युतिभिस्ताटंककांतिभिः सुदीपिता सम्यक्प्रकाशितासीमारासभूप्रदेशोयस्मिन्सतथोक्तः गंडचुंबनेकपोलचुंबनेकुतूहलंकौतुकंयेषांतानिकामेनरागेणअखं डितान्यभग्नानियुक्तानीत्यर्थः । अतिर्यक्कृतानिवाआननान्येवसरोरुहाणितेषांधामयस्मिन्नसौरासविलासःजयतीत्युत्तरकुलकं । स्वागतावृत्तं स्वागतेतिरनभा द्गुरुयुग्मम् ॥१॥ मुच्यमानेति । नृत्यातिशयान्मुच्यमानःकवरीभरस्यधम्मिल्लस्यबंधोयस्मिन् । प्रोच्यमानःकथ्यमानःगोपीभिर्याच्यमानइत्यर्थः । रसःसुखंतस्य

मंडलीकृतमनोरमरामाकुंडलद्युतिसुदीपितसीमा ॥ गंडचुंबनकुतूहलकामाखंडिताननसरोरुहधामा ॥१॥ मुच्यमानकबरीभरबंधः प्रोच्यमानरसदातृमुकुंदः ॥ दृश्यमाननखलांछनचंद्रः कथ्यमानहरिविक्रमवृंदः ॥ २ ॥ हृष्टरोमनिकरैर्वनसत्वैर्दृष्टरम्यविभवो हृतचित्तैः ॥ तुष्टनिर्जरगणैर्गगनस्थैर्वेष्टितः स्तुतमुकुंदचरित्रैः ॥ ३ ॥ चारुपादतलसंनखकांत्याधीरनूपुररुचा विचरंत्या ॥ साररत्नमयमंडपपंक्त्याऽऽहारिभूमिविभवो विलसंत्या ॥ ४ ॥

दातामुकुंदोयस्मिन्सतथोक्तः दृश्यमानःनखलांछनमेवचंद्रोयस्मिन् । नखलांछनस्यार्धचंद्राकारत्वात् । कथ्यमानंश्लाघ्यमानंहरेःकृष्णस्यविक्रमाणांवृंदंयस्मि न्सतथोक्तः ॥ २ ॥ हृष्टेति । हृष्टरोमनिकरैःप्रहृष्टरोमनिकरैःप्रहृष्टरोमोद्गमैःहृतंचित्तंयेषांतैःवनसत्वैःवृंदावनस्थमृगादिप्राणिभिःदृष्टःरम्योविभवःसंपत्तयस्यसत थोक्तः । गगनस्थैःस्तुतानिमुकुंदस्यचरित्राणियैस्तैस्तुष्टनिर्जरगणैःसंतुष्टदेवसमूहैःवेष्टितः ॥३॥ चार्विति । विलसंत्याचारुपादतलसंनखकांत्यापद्मरागमौक्तिक प्रतिनिधिभूतयाविचरंत्यानृत्यवशात्प्रसर्पंत्याअधीरनूपुररुचाचंचलनानारत्नखचितमंजीरकांत्यासाररत्नमयमंडपाःउत्तमातिशयितरत्नखचितमंडपपंक्तीराहरते रंजयतीतितथोक्तःभूमेःक्रीडाभुवोविभवोयस्यसतथोक्तः ॥ ४ ॥

वेणुवाद्येति । वेणुवाद्यपटुनावेणुवाद्यवादनकुशलेनव्रजनारीमानदेनहरिणाकृष्णेनअंतरहारीमनोहरःआननतानम्राअब्जजनिर्ब्रह्मामारुतःमुख्यप्राणःगौरीप्राणनाथःशिवःतेषांनयनोत्सवकारी ॥ ५ ॥ पादेति । पादसंचरणेनदर्शितस्तालोयत्रसतथोक्तः । स्वादूनिगीतानांगानानांवरविभ्रमाणांश्रेष्ठविलासानांवीक्षणचुंबनस्मितादीनांजालानियस्मिन्सतथोक्तः । मोदिताःप्रमोदिताःद्विजाःपक्षिणःअंघ्रिपाःवृक्षाःशैलाःपर्वताःयेनसतथोक्तः । स्थावरतिरश्चामप्यानंदकारीकिम्वन्येषामितिभावः । श्रीधरस्यईक्षणंदयावलोकनंनदेवरसायनंअमृतंतेनलोलःमनोहरः ॥६॥ कृष्णेति । कृष्णस्यमूर्तीनांशतंतदेववासवनीलानिइंद्रनीलरत्नानियस्मिन्सतथोक्तःपुष्टगोपतरुण्यएवमणयःस्वर्णमणयोमौक्तिकानिवातेषांमालापंक्तिर्यस्मिन्सतथोक्तः। हृष्टाअन्योन्यसंबद्धाःपाणयएववरंश्रेष्ठंदामसूत्रंतेनविलोलोमनो

वेणुवाद्यपटुना व्रजनारीमानदेन हरिणांतरहारी ॥ आनताब्जजनिमारुतगौरीप्राणनाथनयनोत्सवकारी ॥ ५ ॥ पादसंचरणदर्शिततालः स्वादुगीतवरविभ्रमजालः ॥ मोदितद्विजमृगांघ्रिपशैलः श्रीधरेक्षणरसायनलोलः ॥ ६ ॥ कृष्णमूर्तिशतवासवनीलः पुष्टगोपतरुणीमणिमालः ॥ हृष्टपाणिवरदामविलोलश्चित्रहारसरहारणशीलः ॥ ७ ॥ हारभास्वदुरसा सकलाशापूरितस्मरशताधिकभासा ॥ शारदांबुजदृशा वरभूषाधारिणातिरुचिरः कमलेशा ॥ ८ ॥ सप्रियामरविमानवितानस्तूयमानविततानः ॥ स्वल्पमेघरवमर्दलसांद्रः स्वःप्रसूनरुचिमद्दलसांद्रः ॥ ९ ॥

हरःचित्रहारसरस्यइंद्रनीलरत्नमौक्तिककांत्यारचितकंठमालायाहारणंविद्रावणंतिरस्कारइत्यर्थः । तत्रशीलंस्वभावोयस्यसतथोक्तः अन्योन्याबद्धबाहुसूत्रनद्धानांगोपानांमध्येमध्येस्थितकृष्णमूर्तीनांचमंडलाकारतयाएकैकानंतर्येणावस्थानादितिभावः ॥७॥ हारभास्वदिति । हारेणभास्वत्लसत्उरोयस्यतेनसकलाशासुसर्वदिक्षुपूरितास्मरशताधिकाःकामशतादप्यूर्जिताभासःअवयवशोभायस्यतेन । शारदांबुजदृशाशरत्कालीनकमलवद्विकसितनयनेनवरभूषाधारिणाउत्तमालंकारधारेणकमलायालक्ष्म्याइट्ईशस्तेनकृष्णेनातिरुचिरोत्यंतमनोहरः ॥८॥ सप्रियेति । प्रियाभिःप्राणकांताभिःसहितास्तेचतेअमरास्तेषांविमानान्येववि

तानानियस्मिन् तृप्तानांतुष्टानांवंदिनांस्तुतिपाठकानांचयस्यमानमुपमानंयस्यसः।वीनांपक्षिणांतानः विस्तारोयस्मिन्सतथोक्तः।बंदिवत्स्तोतृशुकादिपक्षिसमूहैःप रितोवस्थितइत्यर्थः।स्वल्पमेघरवःईषन्मेघरवःसएवमर्दलोवाद्यविशेषस्तेनसांद्रोनिरंतरः स्वःप्रसूनानांस्वर्गाद्वृष्टपुष्पाणांरुचिमंतिकांतिमंतिपादघाताद्दलीभावात् तैःसांद्रोनिबिडः ॥९॥ जृंभमाणेति।जृंभमाणानांविकासमाप्तानांनूतनकिसलयानांशोभायस्यतस्मिन्। शंबरारिपितुःमनसिजजनकस्यकृष्णस्यपत्पादःतरयल वशोभाअल्पकांतिःयस्मिन्तस्मिन्। अंबुजेऽरविंदेअर्पितंस्थापितंहृत्यस्यतेन।अनेनमांद्यसौरभ्येदर्शिते। हिमस्यशीतस्यदात्रा अहिःसर्पःमदायहर्षायअत्ताभक्ष कोयस्यसर्पाहारयोग्यइत्यर्थः। अहिमंउष्णंद्यतिखंडयतीतिअहिमदातातेनेतिवा। तेनवातेनमरुतामंदवायुनाउज्जृंभितः ॥ १० ॥ मंज्विति। मंजुयथातथासिंजं

जृंभमाणनवपल्लवशोभे शंबरारिपितृपल्लवशोभे ॥ अंबुजेर्पितहृदाहिमदात्रा जृंभितश्च मरुता हिमदात्रा ॥ १० ॥ मंजुसिंजदतिभासुरभूषः कंजनाभवहुसुंदरवेषः ॥ अंसलग्नकरसारसपाशः संस्तुतो जयति रासविलासः ॥ ११ ॥ पुंडरीकमुखमुख्यविकासः खंडितारितिमिरोरुतराशः ॥ शौंडमध्वकविवर्ण्यविलासः पांडुरंगरविरत्र ललास ॥ १२ ॥ गात्रकोकिलरवश्रुतिपूतौ स्फीतभृंगनिनदैः श्रुतिपूतौ ॥ जातु यत्पदमसिद्धमृगाद्यैर्ध्यातमेतदिह सिद्धमृगाद्यैः ॥ १३ ॥

त्यःअतिभासुराःभूषानूपुरवलयाद्यायस्मिन्कंजनाभस्यबहवःसुंदरामनोहरावेषारूपाणियस्मिन् । अंसलग्नाःकरसारसपाशाःकरकमलपाशायस्मिन्सस्तुतःप्र थितःरासविलासःरासमहोत्सवोजयति ॥ ११ ॥ पुंडरीकेति । पुंडरीकमुखस्यपुंडरीकाख्यमुनिमुखस्यमुख्यःश्रेष्ठःविकासोयस्मात् । अन्यत्रसितांभोजमुख स्यखंडितानाशिताअरयःशत्रवोदैत्याएवतिमिराणितमांसितेषांउरुतराबहुलाआशाअभिलाषोयेन। अन्यत्रखंडितानिनाशितानिअरितिमिराणियासांताउरुतरा आशादिशोयस्यसतथोक्तः शौंडःकुशलःमध्वकविःमध्वाचार्याख्यकविस्तेनवर्ण्योविलासोयस्य। अन्यत्रकविवर्ण्यविलासस्यसूर्योदयस्यकाव्येषुवर्णनात्पांडु रंगरविःश्रीविठ्ठलाख्यरविरत्ररासक्रीडायांललासबभासे ॥ १२ ॥ गात्रेति। यत्पदंयस्यकृष्णस्यपादंजातुसकृदपिकृगाद्यैर्वेदैरसिद्धंसाकल्येनाज्ञातं यतोवाचो

निवर्तंतइतिश्रुतेः । एतत्कृष्णपदंगातॄणांगायकानांकोकिलानांरवेणध्वनिनाश्रुतेःश्रवणस्यपूर्तिःपूर्णंयस्मिन्गुंफिताव्याप्ताभृंगनिनदाभ्रमरध्वनयःश्रुतेस्तानप्रदा नस्यपूर्तिःसंपूर्तिर्यस्मिंस्तस्मिन्विहारासोत्सवेसिद्धमृगाद्यैरपिसिद्धमृगप्रभृतिभिरपिध्यातंचिंतितंरासोत्सवेकृष्णःसकलदृग्विषयोभूदित्यर्थः ॥ १३ ॥ हस्तिनीति । ह स्तिनीनांगोपीनांशतमेवरमाकृतयःलक्ष्म्याकृतयःआकारास्तासांःपूरोयस्मिन्सतथोक्तःकृष्णमूर्तयएवसुरपादपसाराःपारिजातवृक्षश्रेष्ठायस्मिन्सतथोक्तःअतए वोदारउत्कृष्टःसुद्युतयःशोभनकांतयश्वस्मितानिचहसितानिचतान्येवपयांसिक्षीराणिअमृतधारायस्मिन्सरासविलासःपयोब्धिएकरमाकृतिरूपलसितंक्षीरसमु द्रंधिक्चकारतिरस्कृतवान् ॥ १४ ॥ रासोत्सवस्येति । श्रीशएवकृष्णएवउडुराजःचंद्रस्तस्यनिजंसहजंसौभगंसौंदर्याद्यैश्वर्यंतेनरंजितस्यालंकृतस्यरासोत्सवस्य

हस्तिनीशतरमाकृतिपूरः कृष्णमूर्तिसुरपादपसारः ॥ धिक्चकार स पयोब्धिमुदारः सुद्युतिस्मितपयोमृत धारः ॥ १४ ॥ रासोत्सवस्य हि रसं भुवि वर्णयेत्कः श्रीशोडुराजनिजसौभगरंजितस्य ॥ यद्भृंगहंसशु ककोकिलकेकिमुख्या द्रष्टुं प्रहृष्टमनसः परितः समीयुः ॥ १५ ॥ यत्तांडवं पक्षिमृगांघ्रिपाद्रीनुद्भूतहर्षा बुदृशो व्यकार्षीत् ॥ उन्नम्ररोम्णः स मदंतरंगे ननर्तु मामीदृशमेव कुर्वन् ॥ १६ ॥

रसंसौभाग्यंभुविकःवर्णयेत्यस्मात्कारणाद्भृंगाभ्रमराःहंसाराजहंसाःशुकाःकीराःकोकिलाःपिकाःकेकिनोमयूरामुख्यायेषांतेविलासानभिज्ञाःतिर्यग्योन्युत्प न्नाइत्यर्थः । प्रहृष्टमनसःसंतः । इमंरसंद्रष्टुंपरितःसमीयुःप्राप्ताः ॥ १५ ॥ रासोत्सववर्णनेनकृष्णेजातप्रेमातिशयःकविःस्वाभीष्टंप्रार्थयते । यत्तांडवमिति । यस्यकृष्णस्यतांडवंनाट्यंकर्तृ । पक्षिणःमृगाअंघ्रिपावृक्षाअद्रयश्चतानुद्भूतहर्षांबुदृशिनयनेयेषांतान् । उन्नम्राणिउन्मुखानिरोमाणियेषांतान् । अकार्षीत् हिअकरोद्धि । हीत्यनेनहृष्यत्त्वचोश्रुमुमुचुस्तरवःसदर्भाइतिपुराणप्रसिद्धिंसूचयति । सकृष्णःमांईदृशमेवआनंदाश्रुदृशमेवआनंदाश्रुपूर्णनयनंपुलकितांगंच कुर्वन्मदंतरंगेमच्चित्तेननर्तुनर्तनंकरोतु चित्तद्रवायोग्यपर्वतादीनामपिचित्तद्रवदानान्ममानुषजातेश्चित्तद्रवोनदुष्करइतिभावः ॥ १६ ॥

बर्हीति । यंकृष्णंप्रति । तर्हितदाकृष्णस्यतांडवसमयेबर्हीमयूरःननर्त । नगाःवृक्षाःपुष्पंसमर्प्यअर्चयन्आनर्चुः । मंजुरवामनोहरध्वनयोमधुकराःभ्रमराःस्वैरंस्वेच्छानुसारेणजगुर्गानंचक्रुः मृगाहरिणाःसाक्षात्प्रैक्षंतईक्षितवंतः । उच्चाःफणायेषांतेफणीश्वरगणाःसर्पश्रेष्ठसमूहाःकंपेनकृष्णगानास्वादनजन्यकंपेनयंपर्यगुःप्रदक्षिणीचक्रुः सोयंबर्हिनर्तनवृक्षकृतार्चनभ्रमरगानमृगवीक्षणाद्यैरेकैकोपकारेणप्रीतःकृष्णःमयारचितयाअर्चयारासक्रीडावर्णनलक्षणपूजयाप्रीणातुप्रीतोभवतु ॥ १७ ॥ शृंगारेणशांतरसंसमर्थयमानआह । रासोत्सवइति । इहलोके । रासोत्सवःकृष्णकृतरासक्रीडास्मरणेलालसमुत्कंमानसंयेषांतेषामसत्यबंधंसंसारबंधंमोचयतीतिनापूर्वनाश्चर्यं यद्यस्मात्संसारिव्रजवल्लवीनांगोपीनांकेशपक्षस्यकेशपाशस्य । हस्तःपक्षःपाशःकेशेषुबहुत्ववाक्शब्दइतिहलः । कुचकंचुक

बर्हीं तर्हि ननर्त वृक्षनिचयाः पुष्पं समर्प्यार्चयन् स्वैरं मंजुरवा जगुर्मधुकराः प्रैक्षंत साक्षान्मृगाः ॥ उत्क्षिप्तोच्चफणाः फणीश्वरगणाः कंपेन यं पर्यगुः सोयं श्रीरमणो मया रचितया प्रीणातु देवोर्चया ॥ १७॥
रासोत्सवः स्मरणलालसमानसानां नासत्यबंधमिह मोचयतीत्यपूर्वम् ॥ यत्केशपक्षकुचकंचुकरम्यनीवीग्रंथिं स विश्लथयते व्रजवल्लवीनाम्॥१८॥यास्मिन्नुद्यति नागकेकिनकुलाः फेरुंडसिंहद्विपा गोशार्दूलमृगाः किरातविहगा वैरं विसृज्य स्फुटम् ॥ मित्रामित्रकलत्रपुत्रविरसास्तस्थुः समं षड्ढ्रिपूंस्तद्वृंदावनरासमंडलमहः स्वांतस्थितान्कृंततु ॥ १९ ॥

स्यरम्यनीव्याश्चबंधंश्लथयतेशिथिलीकरोति । एकैकांगनानिष्टबंधत्रयमोचकस्यरासस्यस्मरतामेकबंधमोक्षणंकिमाश्चर्यमितिभावः ॥ १८ ॥ यस्मिन्निति । यस्मिन्रासोत्सवेउद्यतिउदयतिसति । नागकेकिनकुलाःसर्पमयूरनकुलाःपरस्परसहजवैरमत्सरोपेताःफेरुंडसिंहद्विपाःफेरुंडोगजविरोधीपक्षिविशेषःसिंहोमृगेंद्रःद्विपाःगजाःगोशार्दूलमृगाःगोव्याघ्रहरिणाःकिरातविहगाःव्याधपक्षिणःस्फुटंस्पष्टंवैरंविरोधंमत्सरंचेत्यपिद्रष्टव्यं । विसृज्यमित्रेषुअमित्रेषुवैरिषुकलत्रेषुस्त्रीषुपुत्रेषुविरसाःस्नेहरहिताःसंतः अनेनकामलोभमोहमदानांपरिहारःप्रदर्शितोभवति । समंसार्धंतस्थुः । तद्वृंदावनरासमंडलमहःरासमंडलश्रीःस्वांतस्थितान्ष

मचित्तस्थानूरिपूनूकामक्रोधादिशत्रूनूकंतंतुछिंद्यात् ॥ १९ ॥ रासममयेस्थितमूर्तिंवर्णयन्नभ्यर्थयते । अंसेति । अंसेकृष्णांसेआलंबितानिपाणिपद्मानिहस्तकमलानियासांताललनास्त्रियस्तासांसंसदःसमूहस्यकपोलस्थलीषुगंडस्थलीषुसंसक्तंसम्यक्संबद्धंउज्ज्वलगंडमडनंतस्यरुक्कांतिर्यस्यसतथोक्तःतं हंसासनाद्यैःब्रह्माद्यैःस्तुतंवंशेवेणौस्थापितानिमंगलांगुलिदलानियेनसतथोक्तःतं स्त्रंसंतीविलासपारवश्येनविचलंतीविस्खलंतीविभूषावलिःहाराद्याभरणपङ्क्तिर्यस्यतंहरिनीलनीलंइंद्रनीलश्यामलंअमलंनिर्दोषंसंसारसारंसंसारेसारभूतंतंरासोत्सवाध्यक्षंकृष्णंसेवेभजे ॥२०॥ हारेति हाराःकंठमालास्तेषामाधारेमनोहरेउरसिअधिकरणेलसन्नारीणांकरांभोरुहंयस्यतंताराधीशमुखंचंद्रमुखंविहारेणसरसंरसयुक्तंउदारमुत्कृष्टंस्फुरद्वीक्षणंशोभमानावलोकनंयस्यतंस्मेरंस्मितानंचारूणिमनो

अंसालंबितपाणिपद्मललनासंसत्कपोलस्थलीसंसक्तोज्ज्वलगंडमंडनरुचं हंसासनाद्यैः स्तुतम्॥वंशस्थापितमंगलांगुलिदलं स्रंसद्विभूषावलिं तं सेवे हरिनीलनीलममलं संसारसारं हरिम्॥ २० ॥ हाराधारमनोहरोरसि लसन्नारीकरांभोरुहं ताराधीशमुखं विहारसरसोदारस्फुरद्वीक्षणम् ॥ स्मेरं चारुपरार्घ्यभूषणधरं कारुण्यवारांनिधिं कारागारमिदं विहाय भजतं धाराधरश्यामलम् ॥ २१ ॥ विस्तीर्णामरशाखिरत्नभवने छत्रायिताहीश्वरे सत्सिंहासनशोभिमूलविभवे विभ्राजमानं विभुम्॥ भृत्यैर्ब्रह्मभवादिभिः परिवृतं सद्वंदिभिः संस्तुतं चित्तोपास्व विलोलगोपललनानेत्रांतसच्चामरम् ॥२२॥ हराणिपरार्घ्याणिश्रेष्ठानिभूषणानिधरतीति

सतथोक्तःतंकारुण्यवारांनिधिंकृपासमुद्रंधाराधरवन्मेघवत्श्यामलंतंकृष्णं इदंशरीरलक्षणं । कारागारंबंधनगृहंविहायउपेक्ष्यभजसेवस्व ॥ २१ ॥ इदानींकृष्णंराजाधिराजत्वेनवर्णयति । विस्तीर्णेति । विस्तीर्णोविशालःअमरशाखीनवरत्नभरितःसुरतरुःसएवरत्नभवनंरत्नखचितमंदिरंतस्मिन्कथंभूतेछत्रायितःछत्रवदाचरितःअहीश्वरःशेषोयस्मिन्पुनःकथंभूतेसत्सिंहासनवत्रत्नालंकृतसिंहासनवत्शोभिमूलविभवोयस्यतस्मिन्वैडूर्यादिखचितंकल्पद्रुममूलमितिप्रसिद्धिः। तत्रविभ्राजमानंदेदीप्यमानंविभुंप्रभुंभृत्यैर्ब्रह्मादिभिःपरिवृतंसंतोनारदाद्याएववंदिनस्तैःसंस्तुतंविलोलालज्जावशात्सकृत्प्रव्रज्यनिवर्तितागोपललनाःतासांनेत्रांताएवस

च्चामराणियस्यतंकृष्णंहेचित्त। उपास्वसेवस्व ॥२२॥ हेचेतइति। हेचेतः। क्षितिपालजलक्रीडौचित्यप्रदर्शनायक्षितिपालत्वेननिरूपणं। इंद्रियाणांमनश्चास्मीतिस्मृतेश्च। भक्तिरमणीयुक्तेकामिनीरहितजलक्रीडायाःसंन्यासिमज्जनवदप्रयोजकत्वाद्भक्तिरहितध्यानवदप्रयोजकत्वादिदंविशेषणं। अक्षीणिलोचनान्येव मीनाःमत्स्याःविश्वतःपाणिपादंतद्विश्वतोक्षिशिरोमुखमितिस्मृतेस्तेषामाश्रये नाभिरेवावर्तःभ्रमिस्तद्वति श्रुतिःश्रोत्रमेवह्रदोऽगाधस्थलंतेनयुतेयुक्ते केशौघएवकेशसमूहएवशैवालंजलनीलीसोस्यास्तीतितथोक्तः।सुभ्रूःसद्वलिपंक्तिःसमीचीनवलिराजिःत्रिवलिरित्यर्थः।ऊर्मिस्थानीयेइमेमंदहसितंच क्रमेणोत्तुंगोर्मिःफेनश्चताभ्यामाविले। हस्ताश्चअंघ्रयश्चतएवाब्जानिसरोजान्यस्यसंतीतितथोक्तः विठ्ठलांगमेवसरसीतोयंसरोवरजलंतत्रअनिशंरमस्वविहरस्व।एतादृशंविठ्ठलंरुदाध्या

हे चेतः क्षितिपाल भक्तिरमणीयुक्तेऽक्षिमीनाश्रये नाभ्यावर्तवति श्रुतिह्रदयुते केशौघशैवालिनि ॥
सुभ्रूसद्वलिपङ्क्तिमंदहसितोत्तुंगोर्मिफेनाविले हस्तांघ्र्यब्जिनि विठ्ठलांगसरसीतोये रमस्वानिशम् ॥२३॥
हे हस्तांबुज विठ्ठलांघ्रितरणिं मा मुंच दृक्कैरव श्रीमंतं मुखचंद्रमस्थिरमनश्चोरालकाख्यं तमः ॥ जिह्वाद
र्दुर तत्कथासुजलधिं वक्षःकपाटं सदा हृद्गेह श्रुतिपंजर प्रतिदिनं हृद्यं शुकस्योदितम् ॥ २४ ॥

यस्वेत्यर्थः ॥२३॥ हेहस्तांबुजेति। हेहस्तांबुज करारविंदविठ्ठलस्यकृष्णस्यअंघ्रितरणिंपादाख्यबालसूर्यंमामुंचसूर्यंविहायकमलस्यसौख्यायोगात् एवमुत्तरत्रापिहेतुमद्भावोद्रष्टव्यः। दृक्कैरवनयनोत्पल श्रीमंतंमुखचंद्रंविठ्ठलस्येतिशेषः। मामुंचेतिप्रत्येकंसंबंधः। अस्थिरएकत्रस्थितिरहितहेमनश्चोर अलकाख्यंतमः मामुंच। हेजिह्वादर्दुरजिह्वाख्यमंडूक निरर्थकशब्दसमेतत्वादियमुक्तिः॥ तत्कथासुजलधिंकृष्णकथामृतसमुद्रंमामुंच हेहृदयाख्यमंदिरवक्षःकवाटंमामुंच। हेश्रुतिपंजर श्रोत्रपंजरप्रतिदिनंहृद्यंमनोहरंशुकस्यशुकाचार्यस्यकीरस्येतिध्वनिः। उदितंवचनंभागवतमित्यर्थः। मामुंच॥ २४ ॥

भातेति। भ्रांतयुक्तहेस्वांत चित्त विनिंदितैर्जुगुप्सितैः विष्ठयाउदरस्थामेध्येनअतिपुष्टैरत्यंतंपोषितैः क्रिमिशतैर्जंतुशतैर्वृतंआवृतंमूत्रस्यामत्रंपात्रंअमेयमसंख्येयंपूयंयस्यतंअतएवविगेयंनिंद्यंअबलाकायंस्त्रीशरीरंत्यज तत्रासक्तिंमाकुर्वित्यर्थः। कस्तर्हिममाधारइत्यतआह। नित्यंसर्वकालीनंनिर्मलविग्रहंनिर्दोषचिदानंदात्मकशरीरं अनेनपूर्वोक्तसकलदोषविरहःप्रदर्शितः। निजवशंभक्ताधीनंनीलोत्पलवत्श्यामलंप्रेष्ठंपरमप्रेमास्पदंव्रजवधूतृष्णासमुज्जृंभकंविठ्ठलंकृष्णंस्मर ॥२५॥ इदानींप्राकृतापराधंसूचयंतीषुगोपीषुतत्परिहारचातुर्यंवर्णयति। हृद्यनाथकृष्णइतोस्मन्निकटात्क्वकुत्रगतोसि हेमुग्धेमृगयांकर्तुंगतोस्मि सामृगयाप्रभोःसमर्थस्यतवांतरेचित्तेअद्यैवअस्मदागमनकालएवकथमंकुरिताउत्पन्ना अद्यैवेतिवदंत्याअस्मद्वंचनार्थमेवएवंवदसीतिहृदयंतदेवकारणीकृत्यकृष्णःप्रतिवक्ति। परिलसतःकुंभींद्रकुंभस्यगजेंद्रमूर्धायस्यत्विडिवत्विट्कांतिर्यस्यतस्मिन्तवस्तनतटेलुब्धान्त्वासाध्याबुद्ध्यालालसान्केसरिणःसिंहान्स्पर्धायुतान्प्रतिगजबुद्ध्या मत्सरोपेतान्द्विपांश्चवेद्धुंशरेणहंतुमितीरयन्समुरारिपुःमेममबुद्धिंदद्यात् ॥ २६ ॥ तर्हिमोघव्यापारस्यतवमृगयालब्धवस्तुकेत्यतआह। साजात्येति। हेसखिवराहाणांसिंहानांनिवहंसमूहंसाजात्येनमत्समानजातिमत्तयात्स्वस्यवराहनरसिंहाख्यरूपद्वयसद्भावात्स्वजातिहननंनिषिद्धमितिसंत्यज्यपरित्यज्यसारंगान्कुरंगांस्तेतवचक्षुषोःसाम्येनसादृश्येनप्रियासदृशवस्तुनःप्रेमास्पदत्वात्संत्यज्य विधोःचंद्रस्यगर्वशंकीअहंकारशंकीशशानपिसंत्यज्यएकंकाकासुरंलक्षीकृत्यशरप्रयोगेपिसकल

भ्रांत स्वांत विनिंदितैः क्रिमिशतैर्विष्ठातिपुष्टैर्वृतं मूत्रामत्रममेयपूयमबलाकायं विगेयं त्यज॥ नित्यं निर्मलविग्रहं निजवशं नीलोत्पलश्यामलं प्रेष्ठं संस्मर विठ्ठलं व्रजवधूतृष्णासमुज्जृंभकम् ॥ २५॥ हृद्येतः क्व गतोसि नाथ मृगयां कर्तुं कथं सा प्रभोरद्यैवांकुरितांतरे परिलसत्कुंभींद्रकुंभत्विषि ॥ लुब्धान्केसरिणस्तव स्तनतटे स्पर्धायितांश्च द्विपान् मुग्धे वेद्धुमितीरयन् मुररिपुर्बुद्धिं स दद्यान्मम ॥ २६ ॥ साजात्येन वराहसिंहनिवहान्साम्येन ते चक्षुषोः सारंगान् विधुगर्वशंक्यपि शशान्नाम्ना शिखंडिव्रजम् ॥ त्वत्पुष्पांचितकेशपक्षतुलया संत्यज्य सख्यागमं कृत्वा त्वद्दुरिते मृगाक्षि मृगयामित्यालपन्पात्वसौ ॥ २७ ॥

काकानांतत्फलभोगवदेकशशंलक्षीकृत्यशरेप्रयुक्तेचंद्रकलंकापादकशशस्यापिविनाशमाशंक्येतिभावः।शिखंडिव्रजंमयूरसमूहंनाम्नाशिखंडिनाम्नानहिवीरेण शिखंडीहंतुंयोग्यइतिभावः । त्वत्पुष्पांचितकेशहस्ततुलयातवपुष्पालंकृतकेशसमूहसादृश्येनरतिविगलितबंधुपुष्पालंकृतप्रियाकेशपाशस्यबर्हाणांसाम्यादि तिभावः । संत्यज्यहेमृगाक्षित्वद्दुरितेतवमत्संगप्रतिबंधकीभूतानिष्टेमृगयांकृत्वा अनेनामोघव्यापारत्त्वंसमाहितंभवति । आगतंअत्रागतोस्मीत्यनेनप्रकारेणलप नूवदन्नसौकृष्णःपातुरक्षतु ॥ २७ ॥ एकांप्रत्युक्त्वाइदानींसर्वाःप्रत्याह । कस्मादिति । हेनाथकृष्णनोस्मान्विहायत्यक्त्वाकस्मात्कारणादगमःअन्यत्रागच्छः इतिसर्वासांवचनंप्रत्याह । हेमुग्धाःवृक्षाभ्यंतरवर्तिचंद्रमहसःसकाशात् युष्मान्पृथक्पार्थक्येनाज्ञात्वापत्रांतरपतितचंद्रकिरणानाममुष्यपरिमाणेनतत्रतत्रपरि

कस्मान्नाथ विहाय नस्त्वमगमः कर्तुं भवन्मार्गणं वृक्षाभ्यांतरवर्तिचंद्रमहसोष्माँच्छुकौघाक्षरात् ॥ युष्म
न्मंजुगिरः पिकौघनिनदान्मुग्धाभवत्सुस्वरा न ज्ञात्वा पृथगित्युदीर्य शमयन् सौख्यं स दद्यान्मम ॥ २८ ॥
दंतक्षतस्फुरितगंडरुचः कराब्जसंबद्धमध्यमधुराः कुचकुंभपार्श्वे ॥ संजातमंजुलनखव्रणरंजितास्ताः सांद्रा
पराधफलमापुरिवेंदुमुख्यः ॥ २९ ॥ परभृतमधुपाद्यैः सेवितो गंधलुब्धैः करपदधरहासापांगतुंगेषु संगः ॥
सुललितवनमालाकार्मुकांसो विरेजे स्मरइव वररूपी हृमयोषित्सहायः ॥ ३० ॥

च्छिन्नत्वेनगोपीवत्प्रतीतेःधम्मील्लस्यचसमीपस्थपत्रच्छायोपमितत्वेनपृथगज्ञानमितिभावः।अतएववृक्षाभ्यंतरवर्तीत्युक्तं।शुकौघाक्षरात्कीरसमूहोक्तवचना त्युष्मन्मंजुगिरःभवन्मनोहरवचनानिपृथगज्ञात्वा पिकौघनिनदान्भवत्सुस्वरान्पृथगज्ञात्वा भवन्मार्गणंकर्तुंअगममित्युदीर्यशमयन्दुःखरहिताःकुर्वन्सकृष्णः ममसौख्यंदद्यात् ॥ २८ ॥ दंतक्षतेति । दंतक्षतेनस्फुरितस्यशोभितस्यगंडस्यकपोलस्यरुक्कांतिर्यासांताःकराब्जेनकृष्णकराब्जेनसम्यक्बद्धमध्यस्थल मधुराःकुचकुंभपार्श्वेसंजातानिमंजुलानिनखव्रणानितैरंजितास्ताइंदुमुख्यःस्त्रियःसांद्रस्यदृढस्यापराधस्याहंकाररूपस्य । फलमापुरिव।अपराधिनमपिदंशनबं धननखताडनादिनाशिक्षंतितद्वदितिभावः ॥२९॥ परभृतेति । गंधलुब्धैःपरभृतःकोकिलःमधुपोभृंगःतावेवाद्यौयेषांतैःशुकादिभिःसेवितःकरश्चपदंचअधरश्च

हासश्चअपांगश्चतएवतुंगाइषवः अशोकारविंदचूतमल्लिकानीलोत्पलाख्यास्तेषांसंगोयस्यसः कृष्णस्यकराद्यवयवाः तथाचित्ताकर्षकाइत्यतइषवइत्युक्तं । सु
ललितावनमालैवकार्मुकंपौष्पंधनुरंसेयस्यसः दृप्तायोषितः स्त्रियएवसहायोयस्यसकृष्णः वररूपीस्मरइवविरेजे ॥ ३० ॥ नालीकेति । नालीकंपद्मंतदे
वागारंगृहंयस्यसतथोक्तः । नालीकंपद्मबाणयोरित्यमरः । मारः काम त्रिपुरंपुरत्रयंतत्हरतीतिशिवः तौमुखंयेषांतैस्तैरंबरस्थैर्देवैर्गीयमाना । माला
यावनमालायाअलंकारस्यकुंडलादेः कांत्या । विघटिताविमोचिताहृदयग्रंथिः कंचुकग्रंथिः मनोरमपुरुषदर्शनेकंचुकग्रंथिर्विभज्यतइतिप्रसिद्धिः । अविद्याग्रं
थिरितिध्वनिः । इंदीवरस्याभेवाभायस्याः सा । कालिंदीतीरसंस्था अनेनरासक्रीडास्थलाद्यमुनातीरंप्रत्यागतइतिसूचितं । करेणधृतामुरलीवेणुर्य

नालीकागारमारत्रिपुरहरमुखैर्गीयमानांबरस्थैर्मालालंकारकांत्या विघटितहृदयग्रंथिरिंदीवराभा ॥ का
लिंदीतीरसंस्था करधृतमुरली कामिनीकेलिलोला लीलापांगावलोका लसतु मम हृदि प्रेयसी देवता
सा ॥ ३१ ॥ लीलासंगीतमंजुस्तनितकृतरुचिः पुष्टिहेतुः स्रवंत्याः सालोक्याद्यंबुवर्षी निजतनुमहसाच्छा
दितोर्कोडुराजः ॥ बालानेत्रोत्सवश्रीर्जयति सुरवरस्तोमहृद्व्योमधामा नीलांभोदोपमोऽसौ वरवसनतडि
त्सांद्रमाल्येंद्रचापः ॥ ३२ ॥

यासा । कामिनीनांकेलिः क्रीडातस्यांलोलालालसासतृष्णा । लीलापांगावलोकाप्रेयसीपरमप्रियादेवताकृष्णाख्याममहृदिचित्तेलसतु ॥ ३१ ॥ लीलेति ।
लीलयाविलासेनकृतंसंगीतंगानंतदेवमंजुमनोहरंस्तनितमेघनिर्घोषः तेनकृतारुचिः कांतिर्यस्यसः । स्रवंत्यानिम्नगायाः पुष्टिहेतुः स्रवंतीनिम्नगापगेत्यमरः । कृष्ण
पादस्पर्शार्थंस्रोतोनिवृत्यायमुनायाअभिवृद्धिर्जातेतिभागवतीप्रसिद्धिः । सालोक्यसामीप्यादिकमेवांबुतापापनोदित्वाज्जलंवर्षतीतितथोक्तः निजतनुमहसा
स्वशरीरकांत्याआच्छादितौतिरस्कृतौअर्कोडुराजौसूर्याचंद्रमसौयेनततोप्यधिककांतिरित्यर्थः । बालानांगोपीनांनेत्रोत्सवश्रीः यस्यसः सुरवराणांस्तोमस्यसमूह
स्यहृद्व्योमैवहृदयाकाशमेवधामगृहंयस्यसः वरंवसनंपीतांबरमेवतडित्यस्यसः सांद्रंनीलपुष्पैर्निबिडंमाल्यमेवेंद्रचापंयस्यसः अतएवनीलांभोदोपमोसौकृष्णः

जयति । अनेनकृष्णेतीरंप्रत्यागतेयमुनायाहर्षोद्रेकेणाभिवृद्धिर्जातेतिसूचितम ॥ ३२ ॥ यमुनेति । यमुनायाजघनेतटेनिवसतीतितथोक्तः । कमनीयंमनोरमं । कामिनीभिःस्त्रीभिःकलितंज्ञातं । विमृशतांविचारवतांयोगीशानांचेतसश्चित्तस्यदूरं ब्रह्मकृष्णाख्यंपरब्रह्म । मदीयमघंशमयतु । आर्यावृत्तम् ॥ ३३ ॥ श्रांतेति । श्रांतैर्गंधलोभेनदूरमनुगमनात्परिश्रांतैः । अलिभिःपरिवृतः दानलुब्धैरलिभिःपरिवृतइत्यन्यत्र । अंभसिगाहमानःअवगाहमानः कांताःमनोहरागोप्यस्ताएवकरेणवःकरिण्यस्ताभिःसहितः कनकोज्ज्वलांगःस्वर्णालंकृतावयवःप्रांतेसमीपेस्थितानांअब्जानांचयंचुंबतीतितथोक्तःसकरोयस्यसः अन्यत्रशुंडायस्येति । मुकुंददंतीकृष्णाख्यगजः ममांतरेहृदयेविद्यमानामोहमोचाःविमोहाख्यकदलीः रंभाकदलीमोचेतिहलः । निकृंततुछिनत्तु कृतीछेदनेइतिधातुः

यमुनाजघननिवासं कमनीयं ब्रह्म कामिनीकलितम् ॥ शमयत्वघं मदीयं विमृशद्योगीशचेतसो दूरम् ॥ ३३ ॥ श्रांतालिभिः परिवृतोंभसि गाहमानः कांताकरेणुसहितः कनकोज्ज्वलांगः ॥ प्रांतस्थिताब्जचयचुंबिकरो मुकुंददंती निकृंततु ममांतरमोहमोचाः ॥ ३४ ॥ अभिगतिजलदानप्रेमसंश्लेषयोगात्प्रकटितकुचभागा दृश्यमानोरुदेशाः ॥ कचविगलितमाल्याःसंगतैरंगसंगैः सरितमपि सरागां चक्रुरासां किमन्ये ॥ ३५ ॥ सत्कैरवास्यविभवोत्पललोलनेत्रा व्यक्तस्तनाभमधुपांकितपद्मकोशा ॥ आवर्तनाभिरुचिरा यमुनोर्मिहस्ता गोपीव लक्ष्यजघनास्ति सुफेनहासा ॥ ३६ ॥

॥ ३४ ॥ जलक्रीडांवर्णयति । अभिगतीति । अभिगतिराभिमुख्येनगमनं जलदानंजलप्रक्षेपः प्रेमसंश्लेषःप्रेमालिंगनंतेषांयोगाद्व्यापारात्प्रकटितःकुचयोर्भागोयासांता दृश्यमानऊरुदेशोयासांताः कचात्कबरीभारात्विगलितानिमाल्यानियासांतागोप्यःसंगतैर्जलसंयुक्तैःकलिलैरित्यर्थः । अंगरागैःकुंकुमाद्यनुलेपनैःसरितमपिनदीमपि अपिपदेनरासानभिज्ञत्वमभिप्रैति । स्त्रीलिंगपदप्रयोगेणस्त्रीत्वंच । तथाचरासानभिज्ञांस्वसमानजातीयांस्त्रियमित्यर्थः । सरागांरक्तिमासहितांसकामामितिध्वनिः । चक्रुः आसामन्येपुरुषाः किं नकिमपीत्यर्थः ॥ ३५ ॥ सत्कैरवेति । सद्विकसितंकैरवंसितोत्पलमेवास्यंतस्यविभवःसंपद्यस्याः उत्पलमेवनीलोत्पलमेवलोलंचंचलंनेत्रंयस्याःसा व्यक्त

स्यप्रकटीभूतस्यस्तनस्याभेवाभायस्यसः मधुपेनांकितश्चिह्नितः पद्मकोशोयस्यांसा आवर्तएवभ्रमएवनाभिस्तेनरुचिरामनोहरामूर्तिः । तरंगएवहस्तोयस्याःसा लक्ष्यजघनादृश्यतीरा दृश्यनितंबेत्यन्यत्र । सुफेनएवहासोयस्याःसायमुनागोपीवास्ति ॥३६॥ गाढेति । अधिजलंजलमध्येआकंठोदकइत्यर्थः । अनेनमुखा तिरिक्तावयवादर्शनेहेतुरुक्तोभवति। दृढंगाढमालिंगितोवल्लभःप्रियःकृष्णोयया अतएवनिःशब्दभूषावलिं अब्जास्यांअब्जमुखीं अनेनजलस्थिताब्जभ्रांत्यामुख स्याप्यज्ञानंसूचयति । एतादृशींगोपीमविमृश्याज्ञात्वाउपगतातयालिंगितकृष्णसमीपंविलासंकर्त्तुंप्राप्ताकाप्यन्यागोपीतदासीत्कारनादश्रुतेःतदाक्रियमाणकृ ष्णाधरसीत्कारशब्दश्रवणात्सपत्नीवशंकृष्णंज्ञात्वाक्रुद्धासाशशिमुखीभूदृढचापेलग्ननयनप्रांतएवकटाक्षएवइषुःशरःतस्यपातात्पूर्वमेवकुपितायानिबद्धभ्रुकु

गाढालिंगितवल्लभामधिजलं निःशब्दभूषावलीमब्जास्यामविमृश्य काप्युपगता सीत्कारनादश्रुतेः ॥ क्रु द्धा भ्रूदृढचापलग्ननयनप्रांतेषुपातात्पुरा कृष्णेनापररूपिणा शशिमुखी साम्ना समालिंगिता ॥ ३७ ॥ करधृतदृतितोयैः स्नापयित्वा मुकुंदं कुचतटगतगंधालिप्तमालिंग्य कृत्वा ॥ शिरसि निहितमाल्यैरर्च्यमा नर्चुरेनं गतिमिव यतियोग्यां साधयंत्योऽबलास्ताः ॥३८॥ सिक्तोपि रम्यललनाकरपद्मपत्रैः भूत्यामरा वलिसमर्पितपुष्पपुंजे ॥ विस्तीर्णरेणुनिकरं दधदात्मनोऽगे हस्तीश्वरप्रकृतिमार्जयदेव देवः॥३९॥

ट्यवलोकनात्पूर्वमि त्यर्थः । अपररूपिणारूपांतरवताकृष्णेनसाम्नासामोक्त्यासमालिंगिता ॥३७॥ करधृतेति । करधृतानांदृतीनांसेचनचर्मपात्राणांतोयैरुदकैर्मुकुंदंस्नापयित्वाआ लिंग्यकुचतटेगतःसंबद्धःतेनगंधेनालिप्तंकृत्वायतियोग्यांसंन्यासियोग्यांमुक्तिमित्यर्थः । साधयंत्यइवताअबलागोप्यःशिरसिनिहितमाल्यैरर्च्यंपूज्यमेनंकृष्णं आनर्चुरर्चयामासुः । मुमुक्षवोपिस्नानगंधमाल्याद्यैरर्चयंति ॥३८॥ सिक्तइति । रम्यललनानांकराएवपद्मपत्राणितैःसिक्तोपिस्नापितोपिभूत्यानाममराणामाव ल्यासमर्पितपुष्पाणांपुंजेविस्तीर्णानांरेणूनांपुष्परजसांनिकरंसमूहमात्मनोंगेदधद्देवःकृष्णः उन्मज्जनानंतरसमयेसुरदृष्टपुष्परजसादिग्धांगइत्यर्थः । हस्तीश्वरस्य गजराजस्यस्वभावमार्जयत्अर्जितवान्प्राप्तवानित्यर्थः । पूर्वंगजत्वेनवर्णनंगुणोचितमभूदित्यर्थः । गजोपिस्नानानंतरंपुनःपांसुदिग्धोभवतीतिगजस्वभावः॥३९॥

इदानींपुष्पोपचयंवर्णयति । द्विरेफेति । द्विरेफस्यभ्रमरस्यशावेनशिशुनाअंकितंशोभितंवक्रंयस्यतत् सुस्वरराजहंसैः मधुरवचनकृष्णमूर्तिभिरितिध्वनिः । कृतक्षतंसारसकोशंकमलकोशमेकाबालाघनस्तनस्यस्पर्द्धि दृष्ट्वाचकर्तअलुनात् ॥ ४० ॥ माद्यदिति । माद्यद्विरेफैःमत्तद्विरेफैःकृतंगीतजातंगीतसमूहं यस्मिन्श्रीमतांगेहंतादृशंहिअब्जासनस्यब्रह्मणःइष्टंपवनेनवायुनाजुष्टंसेवितं लक्ष्मीगृहमपिपुत्रयोरिष्टं सुगंधिशोभनगंधयुक्तंपद्मंमुकुंदयोग्यंकृष्णयोग्यंसपत्न्यालक्ष्म्याःपद्मालयत्वादितिशंक्येवव्यलुनात् ॥ ४१ ॥ श्रीपतेरिति । श्रीपतेःकृष्णस्ययोऽधरस्तस्यसीत्कृतिकालेचुंबनकालेइतरागोपिकामामीक्षयति पश्यतीतिकोपतप्तहृदयेवकापिगोपीएत्यगत्वासरागंरागसहितं कामवशादनुरागसहितमितिध्वनिः । कोकनदंरक्तोत्पलंजहारापहृतवती । स्वागतावृत्तं स्वागतेति

द्विरेफशावांकितशोभिवक्रं कृतक्षतं सुस्वरराजहंसैः ॥ मनोरमं सारसकोशमेका घनस्तनस्पर्धि चकर्त
बाला ॥ ४० ॥ माद्यद्द्विरेफैः कृतगीतजातं पद्मासनेष्टं पवनेन जुष्टम् ॥ पद्मं सुगंधि व्यलुनात्सपत्नीसद्मा
भिशंक्येव मुकुंदयोग्यम् ॥ ४१ ॥ श्रीपतेरधरसीत्कृतिकाले गोपिकेक्षयति मामितरेति ॥ कोपतप्तहृदये
व सरागं कापि कोकनदमेत्य जहार ॥ ४२ ॥ दृप्तभृंगसदपांगविलोलं सत्सरोजमलुनात्किल काचित् ॥
सीत्करिष्यति हरिः स मदीयं वक्त्रमेतदिति भीतियुतेव ॥ ४३ ॥ आकंठमंभसि गतस्य हरेर्मनोज्ञमास्यं
समीपगसखीजनजातलज्जा ॥ नीलोत्पलं विलसदेतदधीरभृंगमाताम्रकेसरमिति प्रवदंत्यजिघ्रत् ॥ ४४ ॥

रनभाद्गुरुयुग्मम् ॥ ४२ ॥ दृप्तभृंगेति । दृप्तभृंगएवसदपांगःतेनविलोलंचंचलंसत्सरोजंकाचिन्नारीसहरिःकृष्णःएतत्पद्मंमदीयंवक्त्रमितिसीत्करिष्यतिचुंबिष्यतीतिभीतियुतेवालुनात्चकर्त ॥ ४३ ॥ आकंठमिति । आकंठमंभसिगतस्यहरेःकृष्णस्यमनोज्ञंआस्यंसमीपगात्सखीजनाज्जातलज्जाकाचित्अधीरौचंचलौभृंगौयस्य कटाक्षरूपकमेतत् । आताम्रकेसरंईषद्रक्तकिंजल्कयुक्तंबिंबोष्ठरूपकमेतत् । अनेनान्याचुंबितत्वंलज्जाकारणंसूच्यते एतद्दृश्यमानंनीलोत्पलमितिप्रवदंतीसतीअजिघ्रत्आघ्रातवती।अन्याचुंबितमपिकृष्णाधरंत्यक्तुंसमर्थानीलोत्पलबुद्ध्यैवाघ्रातवतीनतुसापराधस्यमुखमितिस्वमानंरक्षितवतीतिभावःअन्यत्स्पष्टं ४४

इदानींव्रजस्थानांगोपीनांदूतीप्रेषणादिनाकृष्णंस्वगृहमानीयतेनसहविलासंवर्णयति । आर्येति । हेआर्यश्रेष्ठकृष्णआयाहिआगच्छत्वयाविरहितंगृहं संत्यज्यसत्वरात्वरयासहितासातवनायिकात्वच्चरणेचित्तंनिधायविवशासतीचित्रार्पितेवचित्रलिखितेवद्वारिगृहद्वारिआस्तेतिष्ठतित्वद्योगहीनां तवालिंगनादिसंबंधरहितांतनुमिवपुनस्तद्गृहंनविविक्षतिनप्रवेष्टुमिच्छति । तनुमिवेतिदृष्टांतेनकृष्णस्यानागमनेतस्यामरणमेवनिरणायि । हेईशप्रभोकृष्णनोचेत्त्वंनायासि चेत्तस्यानायिकायातनुरेवशाखीवृक्षःनिश्चेष्टत्वात्तेनतद्भवनंगृहंकाननमेवस्यात् ॥ ४५ ॥ निर्यांतीति । ईशहेकृष्णअदोगृहंप्रविशंतीनिर्यांतीचतदामम प्रेमालापमपित्वदागमनविषयकप्रियवचनमपि । प्रत्याक्षिपंतीनिराकुर्वंतीकापिकाहिंचित्आननंहस्तेपाणौनिवेश्यउरुशुचातीव्रदुःखेनश्वसंतीतववर्त्ममार्गंपश्यं

आर्या याहि गृहं त्वया विरहितं संत्यज्य सा सत्वरा द्वार्यास्ते न पुनर्विविक्षति तनुं त्वद्योगहीनामिव ॥ चित्तं त्वच्चरणे निधाय विवशा चित्रार्पितेव प्रभो नोचेत्तत्तनुशाखिनेश भवनं स्यादेव तत्काननम् ॥ ४५ ॥ निर्यांती प्रविशंत्यदो गृहमसौ प्रत्याक्षिपंती मम प्रेमालापमपि श्वसंत्युरुशुचा हस्ते निवेश्याननम् ॥ पश्यंती तव वर्त्म साश्रुनयना मां याचमाना मुहुर्मोहं क्वापि वहंत्यसौ न सदयं कस्येश कुर्यान्मनः ॥ ४६ ॥ सायं हीन नहीयं सा मारतात तता रमा ॥ क्षीणाऽदेववदेणाक्षी चारुराज जरारुचा ॥ ४७ ॥

ती साश्रुनयनासतीमुहुर्मांयाचमानाक्वापिकदाचिन्मोहंभ्रांत्यवस्थांवहंती असौतवनायिकाकस्यपश्यतःप्राणिनोमनःसदयंदयासहितंदयार्द्रमित्यर्थः । नकुर्यात् कुर्यादेवेत्यर्थः ॥ ४६ ॥ सायंहीति । मारस्यकामस्यतातपितःअतएवचारुराजमनोहरश्रेष्ठइनस्वामिन्हेकृष्ण । इदानींसायंहिसायंकालोहिरतिकालोही त्यर्थः । इयंगोपीसाप्रसिद्धाततात्याप्तारमानहियेनतवानागमेनापिइहैवत्वत्संगेनसंतुष्टास्यात् । एणाक्षीहरिणलोचनागोपीजरयाप्राप्ताअरुक्अकांतिःतयाजरे वक्रोगःतयेतिवाअदेववत्मनुष्यवत्यथामनुष्यःजरयाप्रशिथिलोभवतितद्वदित्यर्थः । क्षीणाशिथिलांगीजाता गतागतयमकमिदं ॥ ४७ ॥

इत्थमिति । दूत्यइत्थमनेनप्रकारेणनिगद्यउक्त्वानृत्यंतोमयूराःशुकाःकोकिलामत्तभृंगाश्चतेषांततिःसमूहस्तयाआदृतंउपवनंगृहारामस्तेनवासितंसुरभीकृतंअंगनायाःस्वसख्याःगोप्याःवितानैरुल्लोचैर्मणिभिःशोभिगृहंनिगमाकलितंवेदेनाप्यज्ञेयंकृष्णंनिशासुनयंति ॥४८॥ नेत्रेति । सागोपीप्रियेकृष्णेअभ्यागतेसतिमंजुकलशप्रख्यौमनोहरपूर्णकुंभसमानौस्तनौतत्रस्थायिनास्थितेनस्तनयोर्निरंतरत्वात्स्तनादधःअपतितेनेत्यर्थः । नेत्रानंदजलेननयनानंदवारिणाहिमवारिणेवपाद्यार्घ्यं पादेदीयमानंजलंपाद्यंहस्तेदीयमानंजलमर्घ्यंतदुभयमित्यर्थः । अनेनसागोपीकृष्णागमनकालएवपाद्यार्घ्येस्थापितवती । तेनचकरेणतस्यास्तनस्पर्शःकृत इतिद्योत्यते । स्त्रीपुंसयोःप्राथमिकौहीमौविलासौ । प्रसूनस्रुतौपुष्पात्स्रवद्भिर्मधुभिर्मकरंदैःस्नानं अनेनकृष्णमौलौपुष्पैरलंकृतिःकंठेपुष्पमालासमर्पणंपुष्पवृष्टि

इत्थं निगद्य निगमाकलितं नयंति दूत्यो वितानमणिशोभि गृहं निशासु ॥ नृत्यन्मयूरशुककोकिलमत्तभृंगतत्यादृतोपवनवासितमंगनायाः ॥ ४८ ॥ नेत्रानंदजलेन मंजुकलशप्रख्यस्तनस्थायिना पाद्यार्घ्यं हिमवारिणेव मधुभिः स्नानं प्रसूनस्रुतैः ॥ आश्लिष्यांगकलापरम्यतिलकश्रीखंडलेपांश्च सा लोलेक्षोत्पलमाल्यमोष्ठजसुधां प्रादात्प्रियेऽभ्यागते ॥ ४९ ॥ कांताननद्युतिनिवृत्तकटाक्षगंडबिंबोष्ठरम्यरुचिभिर्मिलिता स्मितश्रीः ॥ इंदीवरांबुरुहकोकनदैः सुगंधि सांद्रं तयाऽनुकुरुते मधु पीयमानम् ॥ ५० ॥

श्चद्योत्यते । आश्लिष्यकृष्णमालिंग्यअंगकलापःस्वांगस्थालंकारःनीलमेघश्यामस्यतस्यतडित्प्रभःस्वांगमेवालंकारोवारम्यतिलकःकस्तूरितिलकःश्रीखंडलेपश्चवक्षश्चर्चितचंदनलेपस्तान् । अनेनकृष्णमलंकृत्यतच्छेषेणस्वालंकरणमपिद्योत्यते । लोलाचंचलाईक्षाअवलोकनमेवउत्पलमाल्यंनीलोत्पलमाल्यंअसितापांगित्वात् । अनेनपादमारभ्यकंठपर्यंततस्याःश्रीकृष्णावयवसौंदर्यावलोकनंद्योत्यते । ओष्ठजसुधांअधरामृतंचप्रादात्कृष्णायअदिशत् । अनेनशृंगारविलासःनैवेद्यांतोपचाराश्चदर्शिताभवंति ॥ ४९ ॥ कांतेति । कांतस्यकृष्णस्यआननद्युतिभिःश्रीमुखकांतिभिर्निवृत्ताभिश्चुंबनकालेतदभिभूततयापरावृत्ताभिः । कटाक्षश्चनीलोत्पलदलस्थानीयःगंडःकमलदलस्थानीयःकपोलःबिंबोष्ठःकोकनदस्थानीयःअधरःतेषांरुचिभिःकांतिभिर्मिलितामिश्रितास्मितश्रीर्मंदि

रास्थानीयागोपीमुखस्यमंदहासकांतिः इंदीवरंनीलोत्पलंचांबुरुहंचकोकनदंरक्तोत्पलंचतैःसुगंधितयापीयमानसांद्रंमधुमद्यमनुकुरुतेअनुकरोति । तत्साम्यंभजतीत्यर्थः । अनेनकाव्येवर्णनीयंमधुपानं । वस्तुतोभावादौत्प्रेक्षिकंवर्णितंभवति ॥५०॥ विष्वगिति । विष्वक्समंतात्व्यापिनीमणीनांमुक्तामणीनांप्रभाभाःसैवाभिधाआख्यायस्यसचासौपयःसिंधुःक्षीरसमुद्रःतस्मिन् गृहबहिर्भित्तिखचितमौक्तिककांतिर्गृहंपरितोव्यापिनीक्षीरसमुद्रवत्तिष्ठतीतिभावः । स्फुरतःक्षीरसमुद्रमध्येलसतोमंडपस्यरत्नमयमंडपस्यप्रख्येसमानेवेश्मनिरत्नगृहेतदंतःभित्तेरंतः श्रीपतिमौलेःशयानकृष्णमुकुटस्यचरत्नानांमहसाकांत्याउत्सर्पिणीऊर्ध्वंप्रसरंतीस्वरत्नश्रीःकशिपुखचितरत्नकांतिःभित्तिमुकुटकांतिंउभयतोघनीभूतांनिर्भेत्तुमसमर्थाऊर्ध्वमेवलब्धावसराप्रसृतेत्यर्थः। तया पुष्टोन्नम्रफणिनांपुष्टोन्मुखशेषफ

विष्वग्व्यापिमणिप्रभाभिधपयःसिंधौ स्फुरन्मंडपप्रख्ये वेश्मनि भोगिकल्पकशिपौ साकं व्रजस्त्रीजनैः॥ भित्ति
श्रीपतिमौलिरत्नमहसोत्सर्पिस्वरत्नश्रिया पुष्टोन्नम्रफणत्विषां मुषि लसंस्तुष्टोऽस्त्वसौ विठ्ठलः॥ ५१ ॥ गोपी
काचन धीरतां हृदि बलादालंब्य रत्युत्सुके कोपेनेव निमील्य नेत्रयुगलं तल्पे शयाना सकृत्॥ कांतं निद्रित
माकलय्य शनकैरालिंग्य बिंबाधरं स्वीकुर्वत्यथ वीक्षिताऽपि विवशा मानं न सस्मार सा ॥ ५२ ॥ गंतुं कुत्र
समुद्यतोऽसि तरुणि त्वद्धाम तत्पद्धतिः किं तत्राऽस्ति मुकुंद मानिनि तव स्वच्छोर्जिताभीशुना ॥ क्रांतं
द्वारमलक्षयन् कृशमिदं गात्रं च तस्यांतरे गंताऽस्मीत्यभिधाय तन्मृदुकरं गृह्णन्स गृह्णातु माम् ॥ ५३ ॥

णिनांत्विषःकांतयःतासांमुषिअपहारिणिभोगिकल्पकशिपौशेषसमानशय्यायां । अस्त्रीकशिपुशय्यायामितिरत्नमाला । व्रजस्त्रीजनैःसाकंलसन्असौविठ्ठलःतुष्टोस्तुसंतुष्टोभूयात्॥५१॥गोपीति । काचनगोपीरत्युत्सुकेहृदिबलात्धीरतांधैर्यंआलंब्यकोपेनेवनेत्रयुगलंअंतःस्नेहयुक्तत्वादिवेत्युक्तं । निमील्यतल्पेशयानासतीसकृदेकवारंकिंचित्कालमित्यर्थः । कांतंश्रीकृष्णंनिद्रितंआकलय्यमत्वाशनकैर्मंदंआलिंग्यबिंबाधरंस्वीकुर्वतीचुंबंती । अथानंतरंवीक्षितापिकृष्णेनदृष्टापिविवशातत्सुखपरवशासामानंकोपंनसस्मारनस्मृतवती । चुंबनंनैवत्यक्तवतीत्यर्थः॥५२॥गंतुमिति । हेमुकुंदकृष्णकुत्रगंतुमुद्यतोसिइतिस्वात्मानंवंचयित्वान्यत्रगच्छं

तंकृष्णंप्रतिएकस्या:गोप्या:वचनं। हेतरुणिकांतेत्वद्धामतवगेहंगंतुमुद्यतोस्मीतिस्वकृतवंचनमाच्छादयतःकृष्णस्यवचनं । तस्यमद्गृहस्यपद्धतिर्मार्गःतत्रमद्गृहम तिक्रम्यततोपिदूरेस्तिकिमित्यपराधंस्थिरीकुर्वंत्यावचनं । हेमानिनितवस्वच्छोर्जिताभीशुनानिर्मलोत्कृष्टकांत्याक्रांतमाक्रांतंद्वारंत्वद्गृहद्वारंअलक्षयनूअपश्यनू तस्याभीशोःपुंजीभूतस्यअंतरेमध्येकृशंइदंतवगात्रंशरीरंचालक्षयनूअहंगतास्मि । नत्वन्यामुद्दिश्येत्यर्थः। इत्यभिधायतन्मृदुकरंगृह्णनूकृष्णःमांगृह्णातुअंगीक रोतु॥५३॥ यदीति। हेईशकृष्णयदिरिरंसयारंतुमिच्छया रमतेःसन्नंतत्वादेवप्रत्ययः। महितमलंकृतंमद्धाममममगृहंआयासिआगच्छसि। तर्हिंअध्वनिमार्गेस्नेहभ रितामतिक्रम्यगच्छतंःतवस्थापनार्थंपृष्ठतःसमागतांमामवलोक्यसद्यःतत्क्षणंभीतपदवींभयस्यमार्गंकुतःकस्मादलभीष्टाः भीतःकस्मादभूदित्यर्थः। इतिपुनर्नायि कावचनं। हेपद्माक्षिकंजनयनेतवस्तनावेवजृंभिणौकुंभौकरिमस्तकोर्ध्वभागौतयोर्युगलमुद्वीक्ष्यकुंभीश्वराशंकयागजःश्रेष्ठएवपृष्ठतःसमागतइतिआशंकयाभी

यद्यायासि रिरंसयेश महितं मद्धाम तर्ह्यध्वनि स्निग्धां मामवलोक्य भीतपदवीं सद्योऽलभीष्टाः कुतः ॥
उद्वीक्ष्य स्तनजृंभिकुंभयुगलं कुंभीश्वराशंकया पद्माक्षीति निगद्य सुस्मितमुखीं चुंबन्स तां जृंभते॥५४॥
अन्याचुंबनजातचिह्नमधुना बिंबाधरे दृश्यते तन्मां रंजयसीश किं प्रियगिरा धन्याऽबला सैव हि ॥ म
न्यूद्रिक्तहृदा मुहुः सखि भवच्छून्यां सभां पश्यतस्तन्मेऽभूद्व्रणितीति शमयन्मन्मानसे स्यादसौ ॥५५॥

तपदवींगतोस्मीतिनिगद्यउक्त्वासुस्मितमुखींअपराधपरिहारव्याजेनस्वलावण्यस्यैववर्णनात्स्मेराननांनायिकांचुंबनूअतःपरमपिकथंचित्स्वापराधमुद्घाटयिष्यती तिभियावाग्बंधनार्थंमुखमेवचुंबनूकृष्णोजृंभतेप्रकाशते॥५४॥अन्येति। हेईशकृष्णअन्ययापरयाकृतंआचुंबनंतेनजातंचिह्नंदंतक्षतरूपंअधुनाइदानींतवबिंबा धरेदृश्यतेतत्तस्मान्मांप्रियगिराप्रियोक्त्याकिंरंजयसिसांत्वयसि। सैवाबलाधन्याकृतार्था । हिययात्वमाचुंबितः। वाग्बंधनायचुंबनंकर्तुंउपनीतेमुखेअधरव्रण दर्शनात्तवापराधपरिहारोपायएवअपायोजातइतिपुनःप्रत्युवाचेतिभावः। हेसखिमन्यूद्रिक्तहृदाकोपोद्रिक्तहृदयेनदष्टोष्ठतयेतिभावः।भवच्छून्यांत्वद्रहितांसभां मुहुःमार्गेमार्गेपश्यतःमेतदधरव्रणंअभूत्। कोपेनदष्टारोहिदष्टोष्ठाःभवंतीतिभावः। इतितस्याःकोपंशमयनूअसौकृष्णःमन्मानसेममनसिस्यात्तिष्ठतु ॥ ५५॥

वृंदारण्येति । गोपललनावृंदंकर्तृ । वृंदारकप्रेषितैःसुरदत्तैःमंदारादिलसत्प्रसूननिकरैःप्रियस्यकृष्णस्यवर्त्मसंदृश्यदृष्ट्वास्त्रीरमणार्थंगच्छतोपिकृष्णस्यदेवाःपदेपदे पुष्पाणिवर्षंतीतिभावः । वृंदारण्यस्यवृंदावनस्यकुंजःलतापिहितस्थलंतदेवमंदिरंतस्मिन्गतंमंदानिलैर्वीजितंचंद्रस्यामंदकरेणलतागृहंप्रविष्टेनचंद्रकिरणेनसेवि तपदंकंदर्पतातंकृष्णंनिशिशनैःपद्यतेप्राप्नोति ॥ ५६ ॥ नृत्यदिति । मेघश्यामंकृष्णंदृष्ट्वानृत्यंतःकेकिनोमयूरायस्मिन्चित्राणिपुष्पाणियासांताः तिलकाएवरत्न स्फुरत्तोरणाःरत्नबद्धतोरणाःतैर्विष्वक्परितःशोभिनिपल्लवाख्यंकिसलयाभिधंविलसत्तल्पंशय्यायस्मिन्तस्मिन्विस्तीर्णौषधिभिःविस्तृतज्योतिर्लताभिःप्रदी पानांत्विड्यस्मिन्प्रसूनविलसत्पत्रैःवितानप्रभायस्मिन्मत्तालिव्रजएवगायकोयस्मिन्तस्मिन्कुंजेनिजांगोपींरंजयन्सुखयन्हरिःकृष्णःअभात्अशोभत् । महा

वृंदारण्यनिकुंजमंदिरगतं मंदानिलैर्वीजितं चंद्रामंदकरेण सेवितपदं कंदर्पतातं निशि ॥ मंदारादिल सत्प्रसूननिचयैर्वृंदारकप्रेषितैः संदृश्य प्रियवर्त्म गोपललनावृंदं शनैः पद्यते ॥ ५६ ॥ नृत्यत्केकिनि चित्र पुष्पतिलकारत्नस्फुरत्तोरणैर्विष्वक्शोभिनि पल्लवाख्यविलसत्तल्पे प्रदीपत्विषि ॥ विस्तीर्णौषधिभिः प्रसू नविलसत्पत्रैर्वितानप्रभे मत्तालिव्रजगायके हरिरभात्कुंजे निजां रंजयन् ॥ ५७ ॥ स्नातः सौंदर्यनद्यां परित्यक्तवसनो गोपिकालेपनश्रीः वक्षोजाब्जासनस्थः कृतवनवसतिर्हारमालाकराग्रः ॥ विभ्रत्केशौघ काशानधरजनिपयोमात्रवृत्तिर्विनिद्रः प्रेष्ठः श्रीविठ्ठलोऽसौ जयति मुनिगणं जारवार्ता कुतोऽस्य ॥ ५८ ॥

राजंकृष्णंलतागृहेपिराजवैभवंनामुंचदितिभावः ॥ ५७ ॥ स्नातइति । सौंदर्यनद्यांलावण्यसिंधौस्नातःलावण्यभरितइत्यर्थः । मुनिरपिनद्यांस्नातोभवति । परिह तरतिकालेत्यक्तंवसनंयेनसः । मुनिरपिदिगंबरोभवति । गोपिकानामालेपनस्यअनुलेपनस्यश्रीःकांतिःयस्यगाढालिंगनेतदनुलेपनेनलिप्तांगइत्यर्थः । मुनिरपिगो पीचंदनधारीभवति । वक्षोजएवकुचएवाब्जासनंपद्मासनंतत्रतिष्ठतीतितथोक्तः । मुनिःपद्मासनइतिस्फुटं । कृतावनेवृंदावनेवसतिर्येन । मुनिरपिवनवासी । हार मालामौक्तिककंठमालाकराग्रेयस्यप्रेयस्यादातुंकरधृतहारमालइत्यर्थः । मुनिरपिजपमालाधारी । केशौघकाशान्केशपाशदर्भान्गृह्णन्अधरजनिपयोमात्रवृ

त्तिः अधरजन्यामृतमात्रेणजीवनंयस्यसतथोक्तः। मुनिरप्यब्भक्षत्वात्पयोमात्रवृत्तिर्भवति। विनिद्रःप्रेष्ठःअसौश्रीविट्ठलःकृष्णःमुनिगणंजयति। अस्यैतादृशस्य मुनिमार्गजुष्टकृष्णस्यजारवार्ताकुतःनकुतोपीत्यर्थः। मुनिगणंजयतीत्यनेनस्त्रीभिःसहशयनेपिऊर्ध्वरेतस्थःकृष्णइतिद्योत्यते। इदंमुनेरपिनघटतइतिमुनिगणंजय तीत्युक्तम् ॥ ५८ ॥ चुंबंत्यइति । सौंदर्यसिंधुंसुस्मितमुखंतुंगात्मीयमनोरमस्तनतटेनखैःसंदर्शितांकंकृष्णंपुलकितैःगलंतिभूषणानियेषांतैःअंगैःस्वांगैःगाढंदृढंप रिरभ्यालिंग्यकृष्णस्यसरसाधरंचुंबंत्यःताःअबलागोप्यःमंदानिलैःमंजुलंमनोहरंअदःतद्वृंदारण्यंवृंदावनंदृष्ट्वाननंदुःहर्षिताबभूवुः ॥ ५९ ॥ कांतेति । कांताकदं बस्यकुचावेवकुंजरकुंभौगजकुंभौतत्रसंगिचतत्संतापहारिचतन्नखमंडलंतेनालमत्यर्थंमंडितोऽलंकृतोगंडानुषक्तःस्वकपोलसंसक्तःविलसन्मुखचंद्रःबहुवीमु

चुंबंत्यः सरसाधरं पुलकितैरंगैर्गलद्भूषणैस्तं गाढं परिरभ्य सुस्मितमुखं सौंदर्यसिंधुं मुदा ॥ तुंगात्मीयमनोरम स्तनतटे संदर्शितांकं नखैर्वृंदारण्यमदो ननंदुरबला मंदानिलैर्मंजुलम् ॥५९॥ कांताकदंबकुचकुंजरकुंभसंगि संतापहारिनखमंडलमंडितोऽलम् ॥ गंडानुषक्तविलसन्मुखचंद्रचुंबी कुंजेषु संचरति कृष्णविचित्रसिंहः ॥ ६० ॥ कृष्णांघ्र्यंबुजलक्ष्मलक्ष्यमखिलं यत्र स्थलं साचलं सस्त्रीका मुनयश्च पक्षिहरिणीहर्यक्षवृक्षादयः ॥ यत्पाथः सुर सिंधुसिंधुमहितं यस्मिन् व्रजस्त्रीवशं श्रुत्यंतांतरितं महः परमदो वृंदावनं स्यान्मुदे ॥ ६१ ॥ खचंद्रस्तंचुंबतीतितथो

क्तः। कृष्ण विचित्रसिंहःकृष्णाख्याद्भुतसिंहःकुंजरकुंभसंगिनखतयासिंहसाम्यंतस्यनखस्यसंतापहारित्वादद्भुतत्वंचंद्रसिंहराश्योःसंबंधोस्तीतिसिंहसाम्यं। सिंह श्चंद्रमाश्रयतीत्यपूर्वमितिभावः। कुंजेषुसंचरतिइदमुभयत्रसमम् ॥ ६० ॥ कृष्णांघ्रीति । यत्रयस्मिन्वृंदावनेसाचलंगोवर्धनाचलसहितंअखिलंस्थलंभूप्रदेशः कृष्णस्यांघ्रीचरणावेवांबुजेतत्रयानिलक्ष्माणिध्वजादिचिह्नानितैर्लक्ष्यंदृश्यंमनोहरमित्यर्थः । यत्रयस्मिन्वृंदावनेसस्त्रीकाःस्त्रीसहिताःमुनयश्चपक्षिणःहरि ण्यःहर्यक्षाःसिंहाःवृक्षादयोलतादयोयेषांते। यत्पाथःयत्रवृंदावनेपाथःउदकंसुरसिंधोर्देवनद्याः सिंधुनासमुद्रेणमहितंसत्कृतंसदाकृष्णमज्जनपानादिनेतिभावः। यस्मिन्वृंदावनेश्रुत्यंतांतरितंवेदांतविदूरंमहःकृष्णाख्यंतेजःव्रजस्त्रीवशंव्रजांगनाधीनंसत्तिष्ठति । अदस्तत्परमुत्तमंवृंदावनंमुदेअस्मत्संतोषायस्यात् ॥ ६१ ॥

यदिति । यस्यवृंदावनस्यकुंजालतामंडपाःमुरवैरिणाकृष्णेनसंगतानांवधूनांस्त्रीणांविक्रीडनैःसुरतक्रीडाभिःवासिताःतयोर्दिव्यांगसहजगंधेनतद्धृतचंदनकुंकुम कस्तूर्यादिगंधेनचपरिमलीकृताः । यद्वृंदावनसंजातानांसमुद्भूतानांसुरद्रुमाणांकल्पवृक्षाणामोघस्यसमूहस्यमहसाकांत्याविद्योतितानिप्रकाशितानिआशानांदि शांमुखानियस्यतत्तथोक्तं।यद्वृंदावनंचंद्रईशःशिवःसुरेशःदेवेंद्रश्चतएवमुख्यायेषांतैर्विबुधैःसुरैःसदास्तूयमानंतद्वृंदावनंप्रमत्तेममचित्तेसततंसंततंआविरस्तुआवि र्भवतु ॥ ६२ ॥ कस्त्वमिति । त्वंकइतिकृष्णंप्रतिकस्याश्चित्गोप्यानर्मवचनं । हेसुभगेअहंकश्चननिर्जरोदेवइतिकृष्णस्यप्रत्युक्तिः । देवश्चेदिहतेतवस्वर्गः क्वेतिगोपीवचनं । तत्स्वर्गस्त्वद्धृद्तवधामइतिकृष्णवचनं । पीयूषममृतंक्वास्तीतिपुनस्तस्यावचनं । तवाधरेपीयूषमस्तीतिकृष्णप्रत्युक्तिः । तवअनिद्रताअ

यत्कुंजा मुरवैरिसंगतवधूविक्रीडनैर्वासिता यत्संजातसुरद्रुमौघमहसा विद्योतिताशामुखम् ॥ यच्चंद्रेश सुरेशमुख्यविबुधैः संस्तूयमानं सदा तद्वृंदावनमाविरस्तु सततं चित्ते प्रमत्ते मम ॥ ६२ ॥ कस्त्वं कश्च न निर्जरोऽहमिह ते स्वर्गः क्व तत्त्वद्धृहं पीयूषं क्व तवाऽधरेऽस्ति सुभगे क्वाऽऽस्ते तवाऽनिद्रिता ॥ त्वत्प्रेम्णां सखि चिंतयाऽनिमिषता कुत्र प्रिये वीक्षतस्त्वद्रूपं त्विति बल्लवीं प्रियगिरा चक्री प्रचक्रे निजाम् ॥ ६३ ॥ प्रीतेर्लाभमवेक्ष्य चित्तमपि या तस्मै ददावंकगां तां कृत्वा रतिसंगरस्थहृदयामालिंग्य रम्यैर्भुजैः ॥ तस्या दृष्टिपथं गतं मुखमलं चित्ताय संरोचयन् कस्तूरीतिलकेन भूषयति यः स स्यान्मुदे विठ्ठलः ॥ ६४ ॥

स्वमताक्वकुत्रास्तीतिपुनस्तस्यावचनं । हेसखित्वत्प्रेम्णांत्वत्कृतस्नेहानांचिंतयास्मरणेनममानिद्रितेतिकृष्णोक्तिः । अनिमिषताकुत्रेतिपुनस्तस्यावचनं । हेप्रि येत्वद्रूपंतवसौंदर्यंपश्यतोममअनिमिषता । सौंदर्यातिशयात्त्वद्दर्शनोत्सुकंचक्षुःनिमेषमपिनसहतइतिभावः । इतिप्रियगिराप्रियोक्त्याप्रत्युत्तरव्याजेनतस्याएव स्तवनात्सचक्रीचक्रधरःकृष्णःबल्लवींगोपींनिजांस्वकीयांस्वानुरक्तचित्तांचक्रेकृतवान् ॥ ६३ ॥ प्रीतेरिति । यानारीप्रीतेःसुखस्यलाभमवेक्ष्यचित्तमपि । अ पिपदेनांतरत्वेनादेयतांसूचयति । तस्मैकृष्णायददौ । अदेयमपिचित्तंलाभातिशयाददिशत्चित्तदानंचसदातस्यैवस्मरणं । अतिशयितमनोहरस्यकृष्णस्य स्मरणमात्रेणबहुसुखंलब्ध्वासदातंसस्मारेतिभावः । अन्येनबहुद्रव्यलाभमवेक्ष्योत्तरस्यापिवस्तुनोदानाद्वैश्यधर्मोपिध्वन्यते । कृष्णस्तामंकगांउत्संगगांकृत्वा

स्वांकमारोप्येत्यर्थः। ऊरूतदस्ययद्वैश्यइतिस्वांकस्यवैश्यस्थानत्वाद्वैश्यधर्मवर्तीतामंकमारोप्येतिध्वनिः। रतिसंगरस्थहृदयांसुरतयुद्धेदत्तचितांरम्यैर्भुजैरालिं ग्यद्वौभुजौनालमितिचतुर्भुजैःसमालिंग्येतिभावः। युद्धकामनयाक्षत्रियधर्मवर्ती बाहूराजन्यःकृतइतिक्षत्रियोचितबाहुभिराश्लिष्येतिध्वनिः। दृष्टिपथंस्वदृ ष्टिमार्गगतंप्राप्तंतस्यामुखंपूर्वंविरहोच्छ्वासादिनाऔष्ण्यतयातिलकाभावेनचसूर्यसदृशंमुखं चक्षोःसूर्योअजायतेतिसूर्यचक्षुस्थानेचक्षुषीनिक्षिप्येतिध्वनिः। इतितत्रूपयावीततिलकयाकेवलंचक्षुषैवदृष्टंनतुमनोहर्षकरमभूदितियथाश्रुतस्यभावः। अतएवचिन्तायसंरोचयन्यःकृष्णःकस्तूरीतिलकेनभूषयतिअलंक रोति। अलंकारतुल्यतिलककरणेप्रियप्रेमातिशयदर्शनेनविरहनिमित्ताष्ण्यशैत्याचमुखस्यचंद्रसाम्यात् चंद्रमामनसोजातइतिचंद्रस्थानेमनसिघटयित्वेतिध्व निः। सविठ्ठलःनोमुदेसंतोषायस्यात् ॥ ६४ ॥ रोम्णामिति। एतत्पद्यंव्याख्यातमपिव्यवहितत्वात्पुनरपिव्याक्रियते। रोम्णांहर्षणंरोमोद्गमंकरोतीतितथो क्तस्तस्मिन्। श्रवणतःश्रवणमात्रात्पापानांदुरितानामोघंसमूहंविध्वंसयतीतितथोक्तस्तस्मिन्। प्रेम्णाभक्त्याचिंतयतांस्मरतांविचित्राआश्चर्यभूताविमलानिर्म

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायिनि ॥ संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातः सुरमंडलीषु नवमः सर्गो मुदां सत्कृतः ॥ ६५ ॥ इति श्रीमत्कविकुलतिलकाग्रणीवादिराजपूज्यचरणविरचिते रुक्मिणीशविजये नवमः सर्गः समाप्तः ॥ ९ ॥**

लाःश्लाघ्याः स्तुत्याःअर्थाधर्मादिचतुर्विधपुरुषार्थास्तान्सम्यग्ददातीतितथोक्तंतस्मिन्। संतोवादिराजावादिश्रेष्ठाःशुकादयस्तैरुदितेअभिवर्णितेरुक्मिणीश स्यकृष्णस्यविजयेपराक्रमेभुविभूमौसंजातेसतिउज्जृंभितेसतिसुरमंडलीषुसत्कृतःमुदांसंतोषाणांनवमःसर्गःसृष्टिःसंजातःअभवत्। पौनःपुन्येनसंतोषपरंपराजाते त्यर्थः। काव्यपक्षे। शब्दार्थचमत्कारदर्शनेनरोम्णांहर्षणकारिणिरोमांचजनकेप्रेम्णाआदरेणचिंतयतांचिंतनिकांकुर्वतांविचित्रःअनेकप्रकारोविमलःजुगुप्सा श्लाघ्यादिदोषरहितःश्लाघ्योवर्णनीयोर्थःअभिधेयःतंसम्यग्ददातीतितथोक्तःतत्प्रकाशकइत्यर्थः। तस्मिन्। सन्कामादिदोषशून्यःसत्पुरुषवत्विष्णुभक्त त्वादुत्तमइतिवासचासौवादिराजश्चवादिराजाख्योयतिस्तेनोदितेकृतेभुविसंजातेसंभूतेरुक्मिणीशविजयेरुक्मिणीशविजयाख्यकाव्येअधिकरणेसुरमंडलीषु सत्कृतःनवमःमुदांसंतोषाणांसर्गःसृष्टिरूपःसर्गःपरिच्छेदः। सर्गशब्दस्यावृत्त्यायोजना। संजातःसमभवत्। नवमसर्गोजातइत्यर्थः ॥ ६५ ॥ इतिश्रीवादिराजती र्थविरचितरुक्मिणीशविजयाख्यकाव्यस्यटीकायांलक्ष्मीपतिभट्टारकोपाध्यायसूनुनारायणभट्टेनकृतायांगुरुभावप्रकाशिकायांनवमःसर्गःसमाप्तः ॥ ९ ॥

श्रीकृष्णायनमः ॥ आक्रांतगोपिकाचक्रमक्रूरस्तुतविक्रमम् ॥ वक्रालकोल्लसद्वक्त्रंशक्रनीलच्छविंनुमः ॥ १ ॥ इत्थमिति । सःकृष्णःइत्थमनेनप्रकारेणरात्रौविविधान्विलासान्कृत्वानिशांतेप्रभातेगोपीःविससर्जतत्याज । प्रीत्यैसंतोषायविधोरन्वयजःवंशोत्पन्नःचंद्रप्रीत्यर्थंसोमवंशोत्पन्नइत्यर्थः । कृष्णःसलीलांस्वेनकृतरासक्रीडालीलांमित्रंसूर्यंनसंदर्शयतिस्मनसमदर्शयत् । नूनंनिश्चयः । रात्रौविलासकरणात्दिनेशेननदृष्टमितिवस्तुस्थितिः । तत्रहेतूत्प्रेक्षा ॥ १ ॥ दुर्गांवनइति । दुर्गावनेअंबिकावनेव्रतधरमुपवासव्रतधरंनंदगोपंनिशिबुभुक्षितासंजातभोजनेच्छाचित्तवृत्तिर्यस्यसःसर्पःअग्रसीत्जग्रास । किलेत्यत्वरसे । सकलेश्वरंकृष्णंविसृज्यअन्यदैवप्रत्यर्हणेदेवतांतरपूजायांअभिरतंनंदंअग्रसीदित्यहमूहयामि । सर्वोत्तमंकृष्णंविहायान्यदेवताभक्तिकरणदोषेणैवसर्पोग्रसीदित्यहमूहयामि ॥ २ ॥ तस्यनाम्नोऽन्वर्थतांसंपादयन्नाह । कृष्णइति । अब्जनेत्रःकृष्णःस्वस्यकृष्णस्यदर्शनेनसुदर्शनंसुष्ठुदर्शनंअवलोकनंयस्यतं । अनेनप्रसिद्धसुदर्शननाम्नःकृष्णसंबंधेनान्वर्थतासंपादिता । आत्मनःस्वस्यविद्यांधरंतीतिआत्मविद्याधराःतेषामन्वयोवंशोयस्यसःतत्रोत्पन्नइत्यर्थः । अनेनविद्याधरइतितत्कुलनाम्नोपिपूर्ववदन्वर्थतासंपादिता । एवंसर्परूपंगंधर्वंअमूमुचत्मोचयामासमुचेर्ण्यंताल्लुङिणिश्रीतिचङ् । तत्पादपूततनुःसोपिउत्तमपुरुषस्यकृष्णस्यांघ्रिप्रीत्यैवस्वोद्धारकपादप्रेम्णैवतस्यविष्णोःपदमेवाकाशमेवजगाम । गगनविष्णुपदयोरपिविष्णुपदवाच्यत्वादितिभावः ॥ ३ ॥

इत्थं स रात्रौ विविधान्विलासान्कृत्वा निशांते विससर्ज गोपीः ॥ प्रीत्यै विधोरन्वयजः स्वलीलां मित्रं न संदर्शयति स्म नूनम् ॥ १ ॥ दुर्गावने व्रतधरं निशि नंदगोपं सर्पोऽग्रसीत्किल बुभुक्षितचित्तवृत्तिः ॥ कृष्णं विसृज्य सकलेश्वरमन्यदैवप्रत्यर्हणाभिरतमित्यहमूहयामि ॥ २ ॥ कृष्णः स्वदर्शनसुदर्शनमेनमात्मविद्याधरान्वयममूमुचदब्जनेत्रः ॥ तत्पादपूततनुरुत्तमपूरुषांघ्रिप्रीत्यैव तस्य पदमेव जगाम सोऽपि ॥ ३ ॥

असह्येति । सःकृष्णःस्वात्मनिविद्यमानंअसह्याःनक्तंचराःराक्षसाःतेषांनाशकत्वंप्रकाशयन्सन्निगूढंनिलीनतयाआगतंशंखचूडंदितिजंशंखचूडाख्यंराक्षसंशार्दूलमिवव्याघ्रमिवक्षपायांरात्रौममर्दजघान । नक्तंरात्रौचरंतीतिव्युत्पत्तेः । अस्यरात्रावेवचरतोहननात् रात्रिचरनाशकत्वंप्रकाशितमेवेतिभावः ॥ ४ ॥ शिरोमणिमिति । सःकृष्णःतस्यशंखचूडस्यवधात्अवाप्तंप्राप्तंशिरोमणिंशिरोरत्नंबलायबलरामायदत्त्वास्वयंमनोज्ञकांतामणिभिःमनोहरस्त्रीरत्नैःसमेतंचंद्रंचयातिचारुंचंद्रसमूहादप्यतिमनोहरंयशोमणिंकीर्त्तिरत्नंबुभुजेपालितवान् ॥ ५ ॥ धूलीति । धूलीपालिभिःधूलीसमूहैःअंबरंगगनंविष्णोःपदमितिकृत्वामलिनयन् निघंट्वादिषुविष्णुपदशब्दश्रवणात्कृष्णपदभ्रांत्यातस्मिन्द्वेषेणमलिनयन्नित्युत्प्रेक्षा । तोयदान्मेघान्समरुचःकृष्णसमानकांतीन्लांगूलेनवालेनविदारयन्ककुदद्रिणाककुदाख्यपर्वतेनदेवेंद्रंखुरपुटैः पृथ्वींचतज्जन्ममूलंकृष्णावतारनिमित्तमितिसक्लेशयन्क्लेशेनसहितंकुर्वन्अजितंकृष्णंस्वविषाणलक्ष्यंशृंगलक्ष्यंकुर्वन्सअरिष्टासुरःअभ्यायात् । अयंविष्णुर्वैष्णवद्वेषीत्येवमुत्प्रेक्षितुःकवेर्हृदयम् ॥ ६ ॥ अग्रइति । उग्रःक्रूरःअरिष्टासुरःस्वविषाणयुग्ममग्रेनिधायपुरोनिधायतच्छृंगयुग्मंदोष्णाहस्तेनोत्पाटयतः उन्मूलयतःमुरारेःकृष्णस्यशिरोभारजिहीर्षयास्वमस्तकभारपरिहारेच्छयासहायंकुर्वन्निवअच्युतंप्रत्यगमत् । पूर्वमजितमितिप्रयोगेणेदानीमच्युतमितिप्रयोगेणचकृष्णस्यनपराभवइतिसूचितम् ॥ ७॥

असह्यनक्तंचरनाशकत्वं प्रकाशयन्स्वात्मनि विद्यमानम् ॥ स शंखचूडं दितिजं निगूढं ममर्द शार्दूलमिव क्षपायाम् ॥ ४ ॥ शिरोमणिं तस्य वधादवाप्तं बलाय दत्त्वा बुभुजे स्वयं सः ॥ यशोमणिं चंद्रचयातिचारुं मनोज्ञकांतामणिभिः समेतम् ॥ ५॥ धूलीपालिभिरंबरं मलिनयन् विष्णोः पदं तोयदान् लांगूलेन विदारयन् समरुचस्तज्जन्ममूलं क्षितिं ॥ देवेंद्रं ककुदद्रिणा खुरपुटैः पृथ्वीं च सक्लेशयन्नभ्यायास्वविषाणलक्ष्यमजितं कुर्वन्नरिष्टासुरः॥ ६ ॥ अग्रे निधाय स्वविषाणयुग्ममुग्रोच्युतं प्रत्यगमत्सहायम्॥ दोष्णा तदुत्पाटयतो मुरारेः कुर्वन् शिरोभारजिहीर्षयेव ॥ ७ ॥

यदुपतीति । यदुपतिमृदुहस्तेनकृष्णकोमलकरेणउद्धृतंशृंगयुग्मंकर्तृ । असुरमरिष्टासुरंव्यसुंविगतप्राणंअकार्षीत्अकरोत् । तदीयशृंगेणैवतंजघानेतिपुराणप्रसि
द्धिः । इतीदंयुक्तमुचितंयद्यस्मात्कारणाच्छिरसिधृतःस्वीयोप्यंतकालेविनाशकालेप्राप्तेसतिशत्रोःकरवशंशत्रुदत्तद्रव्यवशंउपयातःशत्रुतामेति । बलिह
स्तांशवःकराइतिहस्तस्यापिकरत्वाच्छिष्टगर्भार्थांतरन्यासः ॥ ८ ॥ यदीयेति । यस्यकृष्णसंबंधियदीयंनामनामधेयंस्मरतांमुनीनामरिष्टंआत्यंतिकनाश
मेतिसाकल्येननाशंप्राप्नोति । सएवएकोनाथोमुख्यस्वामीयस्यतदेकनाथंअतएवजैत्रंजयशीलंव्रजमेत्यअरिष्टस्यपुष्टिरभिवृद्धिःदृष्टपूर्वानहिपूर्वमदृष्टाहि । अ
स्यासुरस्यअशुभस्यचारिष्टशब्दवाच्यत्वादियमुक्तिः ॥ ९ ॥ कृष्णस्येति । भृशमार्ताःसपत्न्यंगनाःशत्रुभूतचाणूरकंसादीनामंगनाःकृष्णस्यप्रथमानोजृंभ

यदुपतिमृदुहस्तेनोद्धृतं शृंगयुग्मं व्यसुमसुरमकार्षीत्तत्क्षणेनेति युक्तम् ॥ अपि शिरसि धृतोयत्स्वीय एवांऽ
तकाले करवशमुपयातः शत्रुतामेति शत्रोः ॥ ८ ॥ यदीयनाम स्मरतां मुनीनामरिष्टमात्यंतिकनाशमे
ति ॥ तदेकनाथं व्रजमेत्य जैत्रमरिष्टपुष्टिर्न हि दृष्टपूर्वा ॥ ९ ॥ कृष्णस्य प्रथमानवीर्यतरणिं दृष्ट्वा सपत्न्यं
गनाः चिंताक्रांतमनोरथाः स्वनयनद्वाराऽश्रुधारा दधुः ॥ भाविस्वीयपयोधरद्वयमहाशुष्कत्वसंप्राप्तये हृ
द्रोदग्रपयोवियोगकरणोद्युक्ता इवार्त्ता भृशम् ॥ १० ॥

माणःशौर्यतरणिःप्रतापसूर्यःतंदृष्ट्वागोकुलेगतस्यतस्यवधदर्शनात्चिंताक्रांतमनोरथाःसत्यःस्वनयनद्वाराजलंससृजुः । अनिमेषदृष्ट्यासूर्यदर्शनेचक्षुषिआस्रोद
कस्यलोकसिद्धत्वात्तरणिमित्युक्तं । तदाकथंभूताभाविभविष्यत्स्वीयपयोधरद्वयस्यस्वकीयकुचयुग्मस्ययन्महाशुष्कत्वंकेवलशुष्कत्वंतस्यसंप्राप्तयेलब्ध्यैहृद्रा
गात् पयःपानीयदुग्धयोरित्यभिधानात्जलस्यापिपयःशब्दवाच्यत्वात्तदपसारयंत्यइवतिष्ठंतीतिभावः । आमरणंचिंतयाशरीरकार्श्यंप्रापुरितिहृदयम् ॥ १० ॥
निहृदयस्थितानिउदग्राणिपयांसितेषांवियोगोविश्लेषःअपसरणमित्यर्थः । तस्यकरणेकृतौउद्युक्ताइवविद्यमानाःकुचस्थौल्यहेतुपयसोऽपरित्यागेतच्छुष्कत्वायो

मुकुंदमिति । आजौयुद्धेमुकुंदंप्रतियास्यतोमेममश्वःजीविताशाजीवनेप्रत्याशानविद्यतेननुनन्विति निश्चये । इतिनिश्चित्येवकेशीदैत्यःअश्वरूपीसन्श्वोनविद्यतेइत्यश्वइतिव्युत्पत्तेरितिभावः । जवेनशीघ्रेणव्रजंनंदव्रजंजगाम ॥ ११ ॥ सइति । अग्र्यकीर्तिंउत्तमयशसंविश्वंजगत्मूर्त्तौतनौयस्यतंकृष्णं । अनेन स्थूलमूर्तितयाग्रासायोग्यत्वंसूचितं । ग्रसिष्णुःग्रसितुमिच्छुःसःकेशीविस्तृतास्यःव्यात्तमुखःसन्अभ्यागमत् । यदोःयदुनृपतेर्वंशेमणिरिवमणिःकृष्णःतद्वंश्येषुश्रेष्ठइत्यर्थः । स्वपाणिंनिवेशयन्तन्मुखेप्रवेशयन्अदःविस्तृतास्यतयाअभ्यागमनमीप्सितमिष्टमेवमेने ॥ १२ ॥ सइति । समुरारिःकृष्णःतदीयहार्दांबरमध्यसंस्थंतस्यकेशिनःहृदिविद्यमानमंबरंआकाशंतस्यमध्येस्थितमसुंप्राणंबहिष्कर्त्तुंईहमानइवचेष्टमानइवकेशिदैत्यस्यमुखेस्वकीयंकरंनिवेशयामास

मुकुंदमाजौ प्रतियास्यतो मे न जीविताशा ननु विद्यते श्वः ॥ इतीव निश्चित्य जगाम केशी जवेन नंदव्रजमश्वरूपी ॥ ११ ॥ स विस्तृतास्यः किल विश्वमूर्तिं ग्रसिष्णुरभ्यागमदग्र्यकीर्तिम् ॥ अदो यदोर्वंशमणिः स्वपाणिं प्रवेशयन्नीप्सितमेव मेने ॥ १२ ॥ स केशिदैत्यस्य मुखे मुरारिर्निवेशयामास करं स्वकीयम् ॥ तदीयहार्दांबरमध्यसंस्थमसुं बहिष्कर्तुमिवेहमानः ॥ १३ ॥ तद्धैर्यं जरयन् बलं च शमयन्नंगं मुहुः कंपयन् अक्षेभ्योऽपटुतां दिशन् दृढतरान्दंतान्बलात्पाटयन् ॥ तच्छ्वासं स्खलयन् जरेव बहुशस्तद्यौवनं दूरयन् हस्तोऽसौ ववृधेंऽतरंतकपुरातिथ्यं द्विषः सूचयन् ॥ १४ ॥

प्रवेशयामास । हस्तप्रवेशमात्रेणतस्यमरणंभविष्यतीतिभावः ॥ १३ ॥ तद्धैर्यमिति । असौहस्तःकृष्णकरःजरेवतस्यकेशिनोधैर्यंजरयन्नाशयन्बलंशरीरबलंचशमयन्मंदीकुर्वन्अंगंशरीरंमुहुःकंपयन्अक्षेभ्यश्चक्षुरादींद्रियेभ्यःअपटुतांअसामर्थ्यंदिशन्दृढतरान्दंतान्बलात्पाटयन्तस्यकेशिनःश्वासंनिःश्वासंस्खलयन् । जरापक्षेकासादिनाश्वासस्खलनंबोध्यं । तस्ययौवनंदूरयन्दूरीकुर्वन्द्विषःशत्रोःकेशिनःअंतकपुरस्ययमपुरस्यातिथ्यंअतिथिभावंमरणमित्यर्थः । सूचयन्अंतःवदनांतःबहुशःववृधेअभिवृद्धिंगतवान् ॥ १४ ॥

सइति । खलाग्रगण्यःसकेशीकृष्णस्यदोर्दंडवरस्याभिवृद्ध्याकायंशरीरंविससर्जम्मृतइत्यर्थः । तथाहिपरस्यान्यस्यजातान्करोदयान्परितःप्रामद्रव्याभि
वृद्धीःवीक्ष्यप्रकृतेतुपरस्यपरमात्मनःकृष्णस्यकरोदयोहस्ताभिवृद्धिः ।असूयाभिरताःमात्सर्यनिरताःपुरुषाःअसून्प्राणानपित्यजंति ॥ १५॥ अथोइति । अ
थोकेशिवधानंतरंसुरर्षिःनारदः । नारदाद्याःसुरर्षयइत्यमरः । कुशलेनवाक्कौशलेनविपक्षंशत्रुपक्षंनिंदन्दूषयन्उपलक्षणंचैतत् । स्वपक्षंस्तुवन्नितिद्रष्टव्यं ।
कंसमभ्येत्यहेअंगकंससोयंभोजराजउग्रसेनःतवपिताजनकोनभवति । त्वंमायामयात् उग्रसेनवेषधरात् कपटिनोजारादुपपतेर्जातोसि । अनेनस्वैरिणीपुत्रः
परजातइतिगालीद्वयंउक्तंभवति ॥ १६ ॥ तवेति । हेअंगकंसभुवियेतवानुगाभृत्याःतेदानवाः त्वमसुरसंचयेषुराक्षससमूहेषुअग्रगण्यःश्रेष्ठः । अनेनत्वदीयाःसर्वे

स कृष्णदोर्दंडवराभिवृद्ध्या खलाग्रगण्यो विससर्ज कायम् ॥ करोदयान्वीक्ष्य परस्य जातानसूनसूया
भिरतास्त्यजंति ॥ १५॥ अथो विपक्षं कुशलेन निंदन् सुरर्षिरभ्येत्य शशंस कंसम् ॥ पिता न सोऽयं
तव भोजराजस्त्वमंग मायामयजारजातः॥ १६॥ तवानुगा ये भुवि दानवास्ते त्वमग्रगण्योऽसुरसंच
येषु ॥ सुरेश्वरोऽसौ वसुदेवसूनुः सुराश्च तत्पक्षगताः समस्ताः ॥ १७॥ धृतः स गर्भे वसुदेवपत्न्या
ततः प्रसूतस्तव मंदिरेऽस्मिन् ॥ त्वदीयभीत्यानकदुंदुभिस्तं निनाय मित्रालयमालयात्ते ॥ १८ ॥

राक्षसाःत्वमपिराक्षसइतिगालीचोक्ता। असौवसुदेवसूनुःकृष्णःसुरेश्वरःदेवश्रेष्ठःतत्पक्षगताःकृष्णपक्षपातिनःसमस्ताश्चसुराःदेवाः। अनेनकृष्णोनमनुष्यमात्रःकिं
तुदेवोत्तमः तदीयाअपिनमनुष्यमात्राअपितुदेवाइतिस्तुतिरुक्ता ॥ १७ ॥ धृतइति । सकृष्णःवसुदेवपत्न्यादेवक्याततोवसुदेवाद्देवगर्भेधृतः । अनेनपरजातत्वस्वै
रिणीसुतत्वलक्षणदूषणद्वयंनस्वपक्षइतिसूचितं । अस्मिन्तवमंदिरेप्रसूतः । कथंतर्हिनंदसूनुरितिख्यातिरित्यतआह । त्वदीयभीत्याआनकदुंदुभिःवसुदेवःतंकृ
ष्णंतेतवालयात्गृहात्मित्रस्यनंदगोपस्यालयंनिनायनीतवान् । अनेननंदपोषितत्वान्नंदसूनुरितिख्यातिः नतुत्वद्वत्परजातत्वादितिसूचितंइतिशशंसेतिश्लो
कत्रयस्यैकएवान्वयः। कथातुभागवतादौस्पष्टैव ॥ १८ ॥

इतीति । इत्यनेनप्रकारेणईरितेसतिनारदेनोक्तेसतिशौरिवधोद्यतंवसुदेवहननोद्यतंतंकंसंसतुदेवयोगीदेवर्षिर्नारदोबुद्ध्याउपायेनेत्यर्थः । निषिध्यनिवार्यतदीयबंधंवसुदेवस्यशृंखलाबंधंतदातस्मिन्समयेमुकुंदस्यकृष्णस्यमतंसापराधत्वंसंपाद्यहनिष्यतोभिमतंविजानन्नूनवारयामास ॥ १९ ॥ ऋषिर्नारदस्तंकंसंएवंवसुदेवस्यशृंखलाबंधेनरचितापराधंकृतापराधंविधायकृत्वाकृष्णस्यांतिकंसमीपंआजगाम । पुरारिःशिवःप्रतिमाउपमायस्यसनारदःयथापराधंअपराधमनतिक्रम्य अपराधानुसारेणेत्यर्थः । खलानांदुष्टानांदंडकर्तुःशिक्षाकर्तुःकृष्णस्यपुरःअग्रेतंकंसंकृतापराधमूचे ॥ २० ॥ तथापीति । तथापिअपराधेसूचितेपिपूर्णस्यअवाप्तसकलकामस्यकृष्णस्यअस्यकृत्यंकर्तव्यंनास्तिइतिअसौनारदःमदीयंवचनंकृतंसत्यंविधातुमपिकर्तुंवाइहलोकेकार्याणिकर्तव्यानिक

इतीरिते शौरिवधोद्यतं तं निषिध्य बुद्ध्या स तु देवयोगी॥न वारयामास तदीयबंधं मतं मुकुंदस्य तदा विजानन् ॥ १९ ॥ ऋषिस्तमेवं रचितापराधं विधाय कृष्णांतिकमाजगाम ॥ यथापराधं खलदंडकर्तुः पुरः पुरारिप्रतिमस्तमूचे ॥ २० ॥ तथाऽपि पूर्णस्य न कृत्यमस्येत्यसौ भविष्यत्सकलं बभाषे ॥ कृतं विधातुं वचनं मदीयमपीह कार्याणि करिष्यतीति ॥२१॥ इतीरयित्वाऽब्जजनेः सुते गते व्यदृश्यताऽरिप्रहितः श्वफल्कजः ॥ मृगाधिपग्रस्तविमुक्तवीक्षितस्ववर्गहृष्यन्मृगशावविभ्रमः ॥ २२ ॥

रिष्यतीतिहेतोर्भविष्यदागामिसकलंमधुरागमनकंसवधादिकंबभाषे । अतःपरंनकृतंचेत्भक्तस्यास्यवचनंमिथ्याभविष्यतीतिसर्वंकरिष्यतीतिभावः । सत्यंविधातुंनिजभृत्यभाषितमितिस्मृतेः ॥ २१ ॥ इतीति । इत्यनेनप्रकारेणईरयित्वाउक्त्वाअब्जजनेःकमलोद्भवस्यब्रह्मणःसुतेनारदेगतेसतिअरिणाकंसेनप्रहितःप्रेषितः मृगाधिपेनसिंहेनग्रस्तःकवलीकृतश्चासौविमुक्तश्चयदृच्छयाविगलितश्चासौवीक्षितःदृष्टःस्ववर्गोयेनअतएवहृष्यन्मृगशावःहरिणपोतःतस्यविभ्रमइवविभ्रमोयस्यसःमृगाधिपग्रस्तविमुक्तवीक्षितस्ववर्गहृष्यन्मृगशावविभ्रमःश्वफल्कजःअक्रूरःव्यदृश्यतअलक्ष्यत । दृशेःकर्मणिलङ् ॥ २२ ॥

व्रजइति । सोऽक्रूरःव्रजेगोदोहनकर्मणिस्थितंदोग्धारमित्यर्थः । नीरदवत्जलदवत्नीलंविग्रहःशरीरंयस्यतंस्वभक्तानांसर्वेप्सितदोहेसकलेष्टदानेदक्षतांसंदर्शयितुंसमुद्यतंनिजंस्वकीयंप्रभुंसमर्थंकृष्णंददर्श ॥ २३ ॥ ननामेति । सोऽक्रूरःआदिपूरुषंपुराणपुरुषंनारायणंकृष्णंननामनमस्कृतवान् । नव्योत्सवात्नवीनकृष्णदर्शनलक्षणोत्सवात्जातःसंभ्रमोयस्यसतथोक्तःसन्ननर्तनृत्यंकृतवान् । नानादुरितौघंअनेकपापराशिंअर्दयन्नाशयन्ननादजगर्ज । नंदस्यतपःफलोदयंनंदन्तुतोष ॥ २४ ॥ तमिति । एणांकवत्चंद्रवत्शुचिशुभ्रंस्मितमाननंयस्यसतथोक्तःअच्युतःकृष्णः सशंकंशंकयासहितंप्रियमक्रूरंतदाश्रितमक्रूराश्रितंअ

व्रजे स गोदोहनकर्मणि स्थितं निजं प्रभुं नीरदनीलविग्रहम् ॥ ददर्श संदर्शयितुं समुद्यतं स भक्तसर्वेप्सितदोहदक्षताम् ॥ २३ ॥ ननाम नारायणमादिपूरुषं ननर्त नव्योत्सवजातसंभ्रमः ॥ ननाद नानादुरितौघमर्दयन्ननंद नंदस्य तपःफलोदयम् ॥ २४ ॥ तमालिलिंगे दृढमच्युतः प्रियं सशंकमेणांकशुचिस्मिताननः ॥ अनादिसिद्धं भवरूपबंधनं तदाश्रितं विश्लथयन्निवांऽजसा ॥ २५ ॥ हीनं महीनं मथितुं निनीषुमक्रूरमक्रूरजनप्रियः स्वम् ॥ गीर्वाणगीर्वाणगणातिदूरो रक्षोभरक्षोभकृदित्यवोचत् ॥ २६ ॥ क्षेमः किं तव नः पिता च कुशली स्वाध्यायतीर्थाप्लुतिस्वर्ग्याराधनमुख्यशोभनकृतिर्विघ्नोज्झिता वर्तते ॥ किं संसारविमुक्तये प्रयतसे कंसस्य का वा स्पृहा स त्वं वेत्स्यखिलं यदद्य हि मया कार्यं च तज्ज्ञापय ॥ २७ ॥

नादिकालमारभ्यगतंभवरूपबंधनंअंजसासम्यग्विश्लथयन्निवशिथिलीकुर्वन्निवदृढंयथाभवतितथाआलिलिंगेआलिंगनंकृतवान् । पूर्वकृतरज्ज्वादिबंधनस्यततोपिदृढतरबंधनांतरेसतिविश्लथनंभवतीतिलोकसिद्धम् ॥ २५ ॥ हीनमिति । अक्रूरजनस्यशांतजनस्यप्रियःगीर्वाणानांदेवानांगिरएववाचएवबाणाःअतिवेगित्वात्तेषांगणःतस्यातिदूरः । रक्षांस्येवभरोभूभारःतस्यक्षोभंनाशंकरोतितिरक्षोभरक्षोभकृत्कृष्णः । हीनंनीचंमहीनंमह्याइनंपतिंकंसंमथितुंहंतुंस्वमात्मानंनिनीषुंमधुरांनेतुमिच्छुमक्रूरंइतिवक्ष्यमाणप्रकारेणावोचत् ॥ २६ ॥ क्षेमइति । हेअक्रूरतवक्षेमःकुशलंकिं । कुशलंक्षेममस्त्रियामित्यमरः । नोऽस्माकंपिताव

सुदेवः कुशलीकिं । तवस्वाध्यायोवेदपाठःतीर्थाप्लुतिःतीर्थस्नानंस्वर्गिणांदेवानांआराधनंपूजाएतानिमुख्यानियस्याःसाशोभनकृतिःपुण्यकर्मविघ्नोज्झितावर्तते किं। संसारविमुक्तयेमोक्षायप्रयतसेकिं। कंसस्यकावास्पृहाइच्छा सत्वंअखिलंवेत्सिसर्वंजानासि। अद्यमयायद्विकार्यंतच्चज्ञापयइत्यवोचदित्यन्वयः॥२७॥ क्षेमइति । हेअनंतदेशकालाद्यंतशून्यकृष्णक्षेमःकुशलंतावत्पर्यंतंभवान्हृत्सरसिजेमद्धृत्कमलेयावद्वर्तते । ब्रह्मणात्यक्तदेहस्तुमृतइत्युच्यतेनरइतिवचनात् । स्वीयानांस्वाश्रितानांक्लेशवनस्यदुःखकाननस्यअनलेअग्नौत्वयिसतितवपित्रोःक्लेशःक्व। किंतुत्वत्पितृतापवादजनितंतच्छृंखलाबंधनंतयोःकंसकृतशृंखलाबंधनं अपवादेतिवदतालोकापवादएवनवस्तुस्थित्यापितृत्वमितिसूचितं । शृंखलाबंधस्यतज्जनितत्वोक्त्याकंसद्वेषोपिसूचितःभगवत्पितृत्ववार्तापिक्लेशकरीतिचसूचि

क्षेमस्तावदनंत हृत्सरसिजे यावद्भवान्वर्तते स्वीयक्लेशवनानले त्वयि सति क्लेशः क्व पित्रोस्तव ॥ किं तु त्वत्पितृतापवादजनितं तच्छृंखलाबंधनं चिंतासंततिहेतुरेव न तयोः संतापकारि प्रभो ॥ २८ ॥ तीर्थं सेवितमेव यत्पदरजो जुष्टं सुराः सत्कृता येनालिंगितवानहं तव वपुश्चीर्णा च पुण्यक्रिया ॥ यल्लब्धं तव दर्शनं परिचितो वेदश्च यत्ते श्रुतं कल्याणं वचनं भवोऽपि न भवत्सामीप्यभाजो मम ॥ २९ ॥

तम्। चिंतासंततिहेतुरेवनिरंतरस्मरणकारणमेवाहेप्रभोतयोःतवपित्रोःसंतापकारिनभवतीतिदूनोचितंबास्तं। हृदयंतुनतयोःनम्रयोस्तयोःसंतापकारीतिकंसकृताप राधसूचनम्॥२८॥ तीर्थमिति। यद्यस्मात्कारणात्त्वत्पदरजःजुष्टंसेवितंतत्तस्मात्तीर्थंसेवितमेव । त्वत्पादधूल्यांसकलतीर्थसन्निधेरितिभावः । अहंयेनकारणेन तववपुःशरीरमालिंगितवानस्मि। तेनसुराःदेवाःसत्कृताःसर्वदेवाश्रितत्वदंगालिंगनेसर्वदेवतालिंगनस्यापिकृतत्वादितिभावः। यद्यस्मात्तवदर्शनंलब्धंतत्तस्मात्पुण्य क्रियाचीर्णाकृता । कर्मणाज्ञानमातनोतीतिश्रुतेःपुण्याभावेतवदर्शनाभावादितिभावः । यद्यस्मात्तेकल्याणंशुभंवचनंश्रुतंतत्तस्मात्वेदश्चपरिचितःअभ्यस्तः। त्वद्वचनस्यसकलवेदोपबृंहितत्वादितिभावः। भवत्सामीप्यभाजोभवत्सामीप्येस्थितस्येत्यर्थः। ममभवःसंसारोपिन । किंसंसारविमुक्तयेप्रयतसेइत्यस्यसंसार

एवनास्तिकिमर्थंप्रयत्नइत्युत्तरं । सामीप्यादीनांमोक्षरूपत्वादितिभावः ॥ २९ ॥ किमिति । हेविष्णोकृष्णबहुनाउदितेनउक्तेनकिंभवद्दर्शनाद्विश्वंजगद्वि दितंविदितप्रायं । विश्ववेदनफलस्यत्वद्दर्शनादेवसिद्धेः येनाश्रुतंश्रुतंभवतीतिश्रुतेरितिभावः । अखिलंवेत्सीत्यस्योत्तरमेतत् । शत्रुरपिभवःसंसारोममित्रमभूत् । त्वद्दर्शनस्पर्शनलाभात् इदंसंसारविमुक्तयेप्रयतसेकिमित्यस्यअधुनासंसारोपिसारतयाप्रतीयतेकिंतद्विमुक्त्याइत्युत्तरांतरं । कुतइत्यतआह । यद्यस्मात्कारणात् कंसेनशत्रुभूतेनसंप्रेषितोहंतवसुंदरंवपुरद्राक्षंअपश्यम् । शत्रोरपिकंसस्यहितकारित्वात्शत्रुरूपोभवोप्येवमेवेतिभावः । हेसर्वज्ञचूडामणेअयंतेप्रश्नः नृविडंब नायमनुष्यानुकरणाय नत्वज्ञानादितिभावः । हेईशममप्रत्युक्तिश्चेदृशीविडंबनार्थेत्यर्थः । नतुतवाज्ञानमाशंक्येतिभावः ॥ ३० ॥ कंसइति । संप्रतीदानींकंसः

किं विष्णो बहुनोदितेन विदितं विश्वं भवद्दर्शनाच्छत्रुर्मित्रमभूद्भवोऽपि यदहं कंसेन संप्रेषितः॥ अद्राक्षं तव सुंदरं वपुरयं सर्वज्ञचूडामणे प्रश्नस्ते नृविडंबनाय मम च प्रत्युक्तिरीशेदृशी ॥ ३० ॥ कंसः संप्रति कार्मुकोत्सवकथाव्याजेन ते विप्रियं कर्त्तुं वांछति तेन मातुलमहं सार्थं विधातुं भवान् ॥ गत्वा तत्र विभुर्धुनोतु सबलं शत्रुं पुनः प्रस्फुरद्भ्रूचापोत्सवमारचय्य भजतामाधिं समाधिप्रियः ॥ ३१ ॥

कार्मुकोत्सवस्यकथाव्याजेनतेविप्रियंविशेषेणप्रियमितिदूतोचितंवचनं । विप्रियमनिष्टमितिहृदयं । कर्त्तुंवांच्छति । इदंकंसस्यकावास्पृहेत्यस्योत्तरं । तेन कारणेनभवान्मातुलमहंमातुलेनक्रियमाणोत्सवंसार्थंसप्रयोजनंधनुरुत्सवस्ययत्फलंहिशत्रुवधःतत्सहितमित्यर्थः । विधातुंकर्त्तुंतत्रमधुरायांगत्वासबलंसेना सहितंशत्रुंमातुलस्यशत्रुमित्यापाततः । शत्रुभूतंकंसमेवेतिहार्दम् । अतएवशत्रुमितिसामान्यपदप्रयोगः । धुनोतुसंहरतु । पुनस्तद्वधानंतरंसमाधिप्रियः भवान्स्फुरद्भ्रूचापोत्सवंभ्रूविक्षेपधनुरुत्सवंसभ्रूभंगावलोकनमित्यर्थः । आरचय्यकृत्वाभजतांसेवमानानांतत्रत्यस्त्रीपुरुषाणांआधिंमनःपीडांधुनोतु । एतत् यद्यमयाकार्यंतज्ज्ञापयेत्यस्यदुष्टवधःशिष्टपरिपालनंचेतिकार्यमित्युत्तरम् ॥ ३१ ॥

मधुरेति । भवतारकसंसारोत्तारककृष्णभवतामधुनःपुष्परसस्यराकेशस्यपूर्णिमाचंद्रस्यमहसाकांत्या । पूर्णेराकानिशाकरइत्यमरः । महस्यचित्तोल्लासस्यसाधिकासामधुरापुरीस्वैःस्वकीयैःसहसार्धंसहसाशीघ्रंआप्याप्राप्यामधुरांप्रत्यागच्छेत्यर्थः ॥ ३२ ॥ सइति । सकृष्णःततःअक्रूरवचनश्रवणानंतरंसततध्यानेननिरंतरंकृष्णध्यानेनशुद्धाःपवित्राःवृद्धजनाःतैराश्रितांमधुरांपुरींमधुरांस्वप्रवेशेनमनोहरांकर्तुंगमनाययात्रार्थैउपचक्रमेउद्युक्तवान् ॥ ३३ ॥ हरिमिति । हरिंकृष्णंमधुपुरींयांतंगच्छंतंविलोक्यनिरीक्ष्यव्रजयोषितःनिवर्तयितुंधियाविविधालापैर्नानाविधप्रलापैःविलेपुःपरिदेवनंचक्रुः ॥ ३४ ॥ रम्येति । नवांबुदनीलमूर्तेकृष्णतवरम्याधरोष्ठसुधयारचिताआत्मवृत्तिःस्वजीवनंयाभिस्ताअस्मान्त्यक्तुंनार्हसि । भवतीनांदुरदृष्टप्रतिबंधकवशाद्गच्छामीत्यतआहुः । हेअंगप्रि

मधुरा मधुराकेशमहसा महसाधिका ॥ सहसा सह साऽऽप्या स्वैर्भवता भवतारक ॥ ३२ ॥ स ततः सततध्यानशुद्धवृद्धजनाश्रिताम् ॥ मधुरां मधुरां कर्त्तुं गमनायोपचक्रमे ॥ ३३ ॥ हरिं मधुपुरीं यांतं विलोक्य व्रजयोषितः ॥ विलेपुर्विविधालापैर्विनिवर्त्तयितुं धिया ॥ ३४ ॥ रम्याधरोष्ठसुधया रचितात्मवृत्तीर्न त्यक्तुमर्हसि नवांबुदनीलमूर्त्ते ॥ त्वत्संगभंगकरणोद्यतपापमंग शक्नोति हि क्षपयितुं तव लोचनांतः ॥ ३५ ॥ यियासुं त्वां समालोक्य नः प्राणोऽपि यियासति ॥ युवयोरविनाभावमक्षैरीक्षामहेऽधुना ॥ ३६ ॥

यत्वत्संगस्यतवांगसंगस्यभंगकरणेविच्छेदकरणेउद्यतंउद्युक्तंपापंदुष्टंतवलोचनांतःअपांगःक्षपयितुंशक्नोतिहि । त्वत्कृपाकटाक्षवीक्षितेषुपापावस्थितिर्नघटतइत्यर्थः । कंसवधाख्यकायार्थंगच्छामीत्यतोवाऽऽहुः । हेअंगवत्सःवत्संगभंगकरणोद्यतंपापंपापिष्ठंकंसंतवलोचनांतएवक्षपयितुंहंतुंशक्नोतिहि । कुपितत्वत्कटाक्षवीक्षणेनब्रह्मांडमपिभस्मीभवतिकिंकंसइतिभावः । हिशब्दोभ्रूभंगमात्रेणहिसंदिग्धक्षोशिनिप्रसिद्धिंसूचयति ॥ ३५ ॥ यियासुमिति । हेकृष्णमधुरांप्रतियियासुंयातुमिच्छंतंत्वांसमालोक्यदृष्ट्वानोऽस्माकंप्राणःप्राणवायुःयियासतिदेहात्गंतुमिच्छति । यातेःसन् । युवयोरविनाभावं । देहेपियत्रपवनोत्रहरिर्यतोसावित्याद्यागमश्रुतंसाहचर्यनियमंअधुनाक्षैरिंद्रियैःईक्षामहे । प्रत्यक्षतएवपश्यामः ॥ ३६ ॥

किम्विति । अस्माभिः किमु कीदृशं दुरितं पापं अकारि कृतं येन विवेकहीनो विधिः दैवं अस्मदीयं मृदुलकलेवरं कोमलशरीरं कंसेन प्रकटितकार्मुकसंभ्रमे शराणां पदं लक्ष्यं । वेध्यं लक्ष्यं शरव्यं च निमित्तं च पदं विदुरिति हलायुधः । आदौ प्रथमं अकृत कृतवान् । कंसकृतकार्मुकोत्सवार्थं कृष्णगमने अस्माकं शरविद्धवत् क्लेशो जायत इति भावः । पुष्पिताग्रावृत्तं । अयुजि नयुगरेफतो यकारो युजि च नजौ जरगश्च पुष्पिताग्रा ॥ ३७ ॥ अहो इति । दयातिदूर कृपाविदूर हे विधे त्वद्वचसा आज्ञारूपेण वाक्येन अतितृप्ताः अतिहृष्टाः । कुतः यद् द्रूहस्य कृष्णस्य आलिंगने लुब्धं लोभयुक्तं चित्तं यासां ताः दीनाः कृपणाः नः । अद्याधुना तदीक्षणेनापि कृष्णदर्शनेनापि विहीनाः रहिताः कथं करोषि । एतादृशं वचनं न कार्यमिति भावः । अक्रूरे चतुर्मुखावेशोऽस्तीति प्रसिद्धेः एतत्कृतं तत्कृतमित्ययमाक्रोशः ॥ ३८ ॥ अयमिति ।

किमु दुरितमकारि येन कंसप्रकटितकार्मुकसंभ्रमे शराणाम् ॥ विधिरकृत पदं विवेकहीनो मृदुलकलेवरमस्मदीयमादौ ॥ ३७ ॥ अहो विधे त्वद्वचसाऽतितृप्ता यद्द्रूहालिंगनलुब्धचित्ताः ॥ तदीक्षणेनाऽपि कथं विहीना दयातिदूराऽद्य करोषि दीनाः ॥ ३८ ॥ अयमपि च विरुद्धनामधेयो नयति विलापमुपेक्ष्य कामिनीनाम् ॥ प्रियसरसविलासमग्र्यवेषं कमलदृशं कमनीयचारुहासम् ॥ ३९ ॥ भृत्योऽयं किमु संतनोतु स परं प्रत्यर्थिभूतः सतां कंसस्तद्धनुरुत्सवोऽस्तु निहतो भग्नं च भूयाद्धनुः ॥ योऽस्मत्प्राणसमं वियोजयति हा स्मेराननं श्रीपतिं तं प्राणेन वियोजयत्वतिमदं देवोऽस्मदीयो विभुः ॥ ४० ॥

विरुद्धनामधेयः परमप्रियकृष्णवियोगकरणेन विरुद्धं अर्थाननुकूलं नामधेयं अक्रूर इति नाम यस्य सः अयमपि च कंसदूतः कामिनीनां विलापं उपेक्ष्य प्रियाः सरसविलासाः यस्य तं अग्र्यवेषं श्रेष्ठाकारं कमलदृशं अरविंदनेत्रं कमनीयचारुहासं कृष्णं नयति ॥ ३९ ॥ भृत्य इति । भृत्यः अयमक्रूरः किमु संतनोतु किं करोतु । वैष्णवस्यास्य ब्रह्मशापकरणे इच्छाभावादियमुक्तिः । परंतु स कंसः सतां प्रत्यर्थिभूतः शत्रुभूतः तद्धनुरुत्सवो निहतोऽस्तु धनुरपि भग्नं च भूयात् । यः कंसः अस्मत्प्राणसमं स्मेराननं स्मितमुखं श्रीपतिं वियोजयति हा कष्टम् । अतिमदं अत्यंताहंकारिणं तं कंसं विभुः समर्थः अस्मदीयो देवः प्राणेन वियोजयतु वियोगं प्रापयतु अनेन शापव्याजेन

भाव्यर्थनिरूपणंगच्छतःश्रीकृष्णस्याशीर्वचनंवाकृतंभवति ॥ ४० ॥ जिगमिषसीति । हेमुरारेइतःगोष्ठात्यदिराजधानींमधुरापुरींजिगमिषसिगंतुमिच्छसि तर्हिश्रुतिततिःवेदसमूहोजितोयेनतस्यसंबुद्धिःवेदांतवेदिनामप्यगोचरेत्यर्थः । अनेनास्मदादीनांकथंवश्यइतिसूचितम् । याहिगच्छ यातेर्लोट् । तत्रमधुरायांशुभाश्रीःसंपत्तेतेवास्तु। बलात्कारेणगच्छंतंप्रतितत्रराज्यंकुर्विंतितदाक्रोशोऽयं । हेसौम्यसुखंददातीतिसुखदःतस्यपूर्वोक्तयाहीतिपदस्यउपसर्गःतंशीघ्रंसंधेहि । याहीतिपदेसुखदोपसर्गस्यसंधिंकुर्वित्यर्थः । प्रेत्याद्युपसर्गाणांगमनोपोद्बलकत्वेनअस्माकमसुखदत्वात्पुनरागमनार्थकंआइत्युपसर्गंसंधेहीत्यर्थः । शीघ्रमायाहीत्युक्तंभवति । गच्छतिकांतेशीघ्रमायाहीतिवक्तुमानवशात्असमर्थानांनिगूढोक्तिरियं । हेघटकअघटितघटकश्रीकृष्णनोचेत्सुखदमुपसर्गंनसंददासिचेत्नोऽ

जिगमिषसि मुरारे राजधानीं यदीतः श्रुतिततिजित याहि श्रीः शुभा तत्र तेऽस्तु ॥ सुखद तदुपसर्गं सौम्य संधेहि शीघ्रं घटय घटक नो चेन्नस्तवैवोपसर्गम् ॥ ४१ ॥ प्रियं निनीषोर्ननु यस्य धाता पिपर्त्ति कांक्षां निजसौख्यदाता ॥ स एष गर्भीकृतपद्मजन्मा जिघृक्षति श्रीशपदांबुजन्म ॥ ४२ ॥ इति विरहजभीत्या वेपमानाः कृशांगीर्गलितवलयहाराश्चित्रलेख्यानुसाराः ॥ मुरभिदमृतकल्पैः प्रीणयन्प्रेमवाक्यैः सकरुणमसकृत्ता वीक्षमाणः प्रतस्थे ॥ ४३ ॥

स्माकंतवैवउपसमीपेसर्गंसृष्टिंघटयसंपादय । अनेनानागमनेमरणंसूच्यते । तंवाउपसर्गंइमंवाउपसर्गंदेहीतिवाग्वैखरीचदर्शिता । अनेनस्वासांवैय्याकरणमर्यादाभिज्ञत्वंदर्शितम् ॥ ४१ ॥ प्रियमिति । प्रियंकृष्णंनिनीषोर्नेतुमिच्छोःयस्याक्रूरस्यकांक्षामाकांक्षांनिजसौख्यदाताधाताब्रह्मापिपर्तिपूर्णाति । पॄपालनपूरणयोरितिधातुः । अतएवगर्भीकृतःअंतरावेशितःपद्मजन्माकमलोद्भवोयेनसःब्रह्मणाआविष्टोऽक्रूरइतितत्त्वस्यअक्रूरकृतकार्यानुकूलत्वरूपकारणांतरकथनेनविभावयंति । अतएवविभावनालंकारः । सएषोऽक्रूरःश्रीशस्यकृष्णस्यपदांबुजन्मपादारविंदंजिघृक्षतिग्रहीतुमिच्छति । कमलावशेनापिब्रह्मावशंद्रढयंति ॥ ४२ ॥ इतीति । इतिइत्थंविरहजभीत्यावेपमानाःकंपमानाःअतएवकृशांगी गलितवलयहाराःचित्रलेख्यामनुसरंतीतिचित्रलेख्यानुसाराः

निर्व्यापाराइत्यर्थः । ताःगोपीःअमृतकल्पैःप्रेमवाक्यैःप्रियवचनैःप्रीणयन्हर्षयन्सकरुणंयथातथाअसकृत्पुनःपुनःवीक्षमाणःमुरजित्कृष्णःप्रतस्थे ॥ ४३ ॥ पादस्पर्शेति । पादस्पर्शःकरग्रहःअन्योन्यहस्तग्रहणं । प्रियतमस्यअंगस्यमध्याद्यवयवस्याश्लेषः । केशग्रहःकचग्रहणं । प्रेक्षापरस्परवीक्षणं । अधःकरणंउपरिस्थितिःबंधविशेषः । मिथोमुष्टिःपरस्परमुष्टीमुष्टिएतदादिभिर्विलासैर्जुष्टेरतेसुरतेगोपीनांकुचाख्यकुंभस्यकुंजरमूर्धाग्रस्यमर्दनंकरोतीतिसतथोक्तःतेनयेनकृष्णेन । कुंभःकुंजरमूर्धायेकौंभकर्णौघटेविटइतिरत्नमाला । मल्लेंद्रविद्यामल्लनियुद्धविद्याअर्जिताअभ्यस्ता । पादस्पर्शादिमिथोमुष्टिपर्यंतविभ्रमाणांसुरतमल्लनियुद्धयोःसाम्यादितिभावः । इभार्दनंवैखरीचगजमर्दनप्रौढिश्चार्जितेतिपूर्वेणसंबंधः । अनेनस्त्रीभिःसमंविलासीभूयस्थितेनापिकृष्णेनमधुरायांमल्ले

पादस्पर्शकरग्रहप्रियतमांगाश्लेषकेशग्रहप्रेक्षाधःकरणोपरिस्थितिमिथोमुष्ट्यादिजुष्टे रते ॥ गोपीनां कुचकुंभमर्दनकृता मल्लेंद्रविद्याऽऽर्जिता येनेभार्दनवैखरी च स कथं तास्त्यक्तुमीष्टे प्रभुः ॥ ४४ ॥ स वल्लवीनां प्रणयाख्यदाम्ना निबध्यमानोऽपि रिपून् जिघांसुः ॥ जगाम शौरिर्न विजेतुकामो निवार्यमाणोऽपि निवर्तते स्म ॥ ४५ ॥ रथेन दूरे रमणं व्रजंतं व्रजस्त्रियस्तं परितोऽनुजग्मुः ॥ दृगश्वभाजा दृढभक्तिदाम्ना मनोरथेनाऽमलबुद्धियंत्रा ॥ ४६ ॥

द्रादिमर्दनात्तस्यरेतःपाताभावःसहजविद्याकौशल्यंचद्योत्यते । प्रभुःश्रीकृष्णःताःविद्याद्वयगुरुस्थानीयाःगोपीःकथंत्यक्तुमीष्टेसमर्थोभवति । स्वकृतविलासपात्रीभूतत्वात्कृष्णस्यपौनःपुन्येनगोपीषुदयेतिभावः ॥ ४४ ॥ सइति । सशौरिःश्रीकृष्णःवल्लवीनांगोपीनांप्रणयाख्यदाम्नानिबध्यमानोपिरिपून्कंसादीन् जिघांसुःहंतुमिच्छुःसन्जगाम । तथाहि । विजेतुकामोजयार्थीभटःनिवार्यमाणोपिननिवर्तते । रज्ज्वादिनानिबद्धाअपिजयार्थिनोभटाःबलाद्गच्छंतीतिलोकसिद्धं । अतिप्रेमास्पदीभूतागोपीःकार्यांतरगौरवात्त्यक्त्वागतइत्यभिप्रायः ॥ ४५ ॥ रथेनेति । रथेनदूरेव्रजंतंरमणंकृष्णंपरितःव्रजस्त्रियःदृगश्वभाजानेत्राख्याश्वभाजादृढाभक्तिरेवदामरश्मिर्यस्यसतथोक्तःतेन । रथाश्वयोःसंघटकोहिरथरश्मिःनिकटेदर्शनेअरुचिःस्यात्अतस्तत्परिहारायस्नेहःपाशत्वेननिरूपितः।

अमलबुद्धियंत्रानिर्मलबुद्धिसूतेन । यंताहस्तिपसूतयोरितिरत्नमाला । मनोरथेनानुजग्मुः । यावद्दृष्टिपातंचक्षुषापश्यंत्यः ततोमनसाध्यायंत्यःस्नेहकातराःस्थिताइतिभावः ॥ ४६ ॥ नयन्निति । ईशंनंदकिशोरंनंदबालकंकृष्णंनयन्असौश्वफल्कसूनुःअक्रूरः । श्वफल्कइत्यक्रूरपिता । यमुनांबुमध्येसेवाफलरूपंसारथ्यकरणलक्षणसेवाफलात्मकंअन्यैरदृश्यंअस्यैवकृष्णस्यैवविचित्ररूपंअलौकिकरूपंददर्श ॥४७॥ पुण्यक्षेत्रेति । पुण्यक्षेत्रेनिवासोयेषांतेषांसुविमलज्ञानेअत्यंतविमलज्ञानेअनुरक्तात्मनांस्निग्धमनसांपारंपर्येसमागतंवृद्धपरंपरयासमागतमपिप्रभुंराजानंकृष्णपक्षाप्रियंकृष्णसहायाप्रियंदूरेणोत्सृजतांसुशांतमनसांतीर्थाटनंकुर्वतांपुरुषाणांवेद्यंविज्ञेयंहृद्यंमनोहरंहरेःकृष्णस्यरूपंश्वफल्कात्मजःअंबुनियमुनाजलेअपश्यत् । नन्वेतादृशानांवेद्यंअक्रूरेणकथंदृष्टमित्यतोक्रूरस्यापिमधुरा

नयन्नसौ नंदकिशोरमीशं श्वफल्कसूनुर्यमुनांबुमध्ये ॥ ददर्श सेवाफलरूपमन्यैरदृश्यमस्यैव विचित्ररूपम् ॥ ४७ ॥ पुण्यक्षेत्रनिवासिनां सुविमलज्ञानानुरक्तात्मनां पारंपर्यसमागतं प्रभुमपि श्रीकृष्णपक्षाप्रियम् ॥ दूरेणोत्सृजतां सुशांतमनसां तीर्थाटनं कुर्वतां वेद्यं हृद्यमपश्यदंबुनि हरे रूपं श्वफल्कात्मजः ॥४८॥ भक्तो नाम स एव यः करगते कृष्णेऽपि वेदोदितं तत्कर्माऽऽचरदेतदेव दुरितप्रध्वंसि कर्म क्षितौ ॥ तीर्थं चापि तदेव जात्वपि तयोः संसेवया श्राव्यया दृश्यं रूपमदर्शयन्मुररिपुर्दास्यैकवश्यः प्रभुः ॥४९॥

क्षेत्रवासित्वात्कृष्णोत्तमाभिज्ञत्वात्कंसाख्यप्रभुपरित्यागात्स्वयमक्रूरत्वात्यमुनातीर्थप्रत्यागमनाच्चोक्तगुणवत्त्वादितिभावः ॥ ४८ ॥ भक्तइति । सोक्रूरोभक्तोनामभक्तएव । योअक्रूरःकृष्णेपरब्रह्मणिकरगतेहस्तगतेसत्यपिवेदोदितमहरहःसंध्यामुपासीतेतिवेदोक्तंमाध्याह्निकसंध्यावंदनरूपंतत्कर्मकृष्णपूजात्मकंकर्मआचरत् । तत्कर्मेत्यनेननित्यनैमित्तिककर्मणांविष्णुपूजात्मकत्वमभिप्रैति । अतीतानागतज्ञानीत्रैलोक्योद्धरणक्षमः । एतादृशोपिनाचारंश्रौतंस्मार्तंपरित्यजेदितिवचनात् । क्षितौभूम्यांदुरितप्रध्वंसिअघमर्षणंकर्मएतदेवाक्रूरकृतमेवक्षितौतीर्थंचापितदेवयमुनाजलमध्यस्थब्रह्महृदयाख्यमेवजात्वपिसकृदपिश्राव्ययाश्रवणार्हयातयोःकर्मतीर्थयोःसंसेवयादास्यैकवश्यःकेवलकैंकर्येणवशीकर्तुंयोग्यः। कृष्णरथरश्मिग्रहणेनैवाक्रूरस्यमहाफलसिद्धेःदास्यैकवश्यइ

त्युक्तम् । प्रभुर्मुररिपुः कृष्णः अदृश्यंयोगिभिरदर्शनीयंरूपमदर्शयत् ॥ ४९ ॥ सइति । सोऽक्रूरःसहस्राणिअंशवोयेषांतेसहस्रांशवःसूर्याःतेषांमरीचयइव मरीचयःस्वांगकांतयःताभिर्व्याप्तंदिक्तटंयेनतं । कमलायाःकराब्जंपद्मंतेनार्घ्यःप्रार्थनीयःचरणएवारुणभास्करोयस्यतंकृष्णमैक्षतेत्युत्तरेणान्वयः ॥ ५० ॥ वज्रेति । वज्रांकुशपताकाब्जरेखाभिःलक्ष्यंदर्शनीयंपादतलंतेनोज्ज्वलंतंभिन्नप्रवालवत्छिन्नविद्रुमखंडवत्विलसंत्योऽगुल्यःदलानीवतैर्मंडितमलंकृतम् ॥ ५१ ॥ पुष्कलेति । पुष्कलेंदुनापूर्णचंद्रेणसमाःश्रीमंतोनिष्कलंकानिर्मलाःनखास्तेषामावलिर्यस्यतंउत्तुंगरत्नखचितेनूत्ननूपुरेनवीनमंजीरेताभ्यांशोभि

स सहस्रसहस्रांशुमरीचिव्याप्तदिक्तटम् ॥ कमलाकरपद्मार्घ्यंचरणारुणभास्करम् ॥ ५० ॥ वज्रांकुश
पताकाब्जलक्ष्यपादतलोज्ज्वलम् ॥ भिन्नप्रवालविलसदंगुलीदलमंडितम् ॥ ५१ ॥ पुष्कलेंदुसमश्रीमन्नि
ष्कलंकनखावलिम् ॥ उत्तुंगरत्नखचितनूत्ननूपुरशोभितम् ॥ ५२ ॥ लक्ष्मीकराब्जसंसक्तवृत्तजंघं वृषाक
पिम् ॥ रत्नदर्पणसंकाशशस्तजानुद्वयं विभुम् ॥ ५३ ॥ मृदुवर्तुलसंभास्वद्रंभास्तंभोरुमव्ययम् ॥ करिपो
तलसत्कुंभसमरम्यकटिद्वयम् ॥ ५४ ॥ उद्यदर्कशतोद्रिक्तहृद्यकौशेयवाससम् ॥ विचित्ररत्नसंशोभि हे
मकांचीगुणद्युतिम् ॥ ५५ ॥ अनेकभुवनाधारतनूदरवलित्रयम् ॥ विरिंचभृंगशोभाब्जस्फुरन्नाभिसरोवरम् ॥ ५६ ॥

तम् ॥ ५२ ॥ लक्ष्मीति । लक्ष्म्याःकराब्जेनसंसक्तेसंबद्धेवृत्तेवर्तुलेजंघेयस्यतंरत्नदर्पणस्यसंकाशंसदृशंशस्तंप्रशस्तंजानुद्वयंयस्यतंविभुंवृषाकपिंकृष्णम् ॥ ५३ ॥ मृद्विति । मृदुकोमलंवर्तुलंसंभास्वत्रंभास्तंभवत्कदलीस्तंभवत्ऊरूयस्यतंकरिपोतलसत्कुंभस्यबालगजलसन्मूर्धाग्रस्यसमंरम्यंकटिद्वयं यस्यतंअव्ययंनाशरहितंकृष्णम् ॥ ५४ ॥ उद्यदिति । उद्यदर्कशतात्बालसूर्यशतात्उद्रिक्तमतिशयितंहृद्यंकौशेयवासःपट्टवस्त्रंयस्यतंविचित्ररत्नैःनानारत्नैः संशोभिहैमःसौवर्णःकांचीगुणःकांचीदामतस्यद्युतिर्यस्यतम् ॥ ५५ ॥ अनेकेति । अनेकेषांभुवनानांलोकानामाधारंतनूदरंकृशोदरंतस्मिन्वलित्रयंयस्यतं

विरिंचभृंगेणविरिंचाख्यभ्रमरेणशोभायस्यतत् अब्जंकमलंतेनस्फुरत्तुलसत्नाभ्याख्यसरोवरंयस्यतम् ॥ ५६ ॥ वलीति । वलिपल्लवस्यत्रिवल्ल्याख्यकिस
लयस्यसत्कांत्यासमीचीनतेजसाज्वलितंप्रकाशितंउदरबंधनंउदरस्थाभरणविशेषोयस्यतंकृशमध्यंतनुमध्यंविशालोरःस्थलेविस्तृतोरःस्थलेचर्चितंअनुलिप्तंचं
दनंयस्यतम् ॥ ५७ ॥ लक्ष्मीति । लक्ष्मीधराभ्यांश्रीभूभ्यांआश्लिष्टमालिंगितंपुष्टंपार्श्वयुग्मंयस्यतंअंकस्थितरमायाउत्संगस्थरमायाः वक्षस्थितकुं
कुमस्यअंकेनचिह्नेनउपलक्षितंव्यावर्तितंपरात्परंउत्तमादुत्तमंकृष्णम् ॥ ५८ ॥ श्रीवत्सेति । श्रीर्वसत्यस्मिन्निति श्रीवत्संभृगोःपादतललांछनंवक्षसियस्यतं
श्रीमद्वनमालयाविभूषितंस्फुरदिंदुसमःउद्यदिंदुसमःअमंदोवरःश्रेष्ठःकौस्तुभएवमंडनंभूषणम् ॥ ५९ ॥ विलसदिति । विलसद्रत्नकटकानिअंगदानि

वलिपल्लवसत्कांत्या ज्वलितोदरबंधनम् ॥ कृशमध्यं विशालोरःस्थलचर्चितचंदनम् ॥ ५७ ॥ लक्ष्मी
धराश्लिष्टपुष्टपार्श्वयुग्मं परात्परम् ॥ अंकस्थितरमावक्षःकुंकुमांकोपलक्षितम् ॥ ५८ ॥ श्रीवत्सवक्षसं
श्रीमद्वनमालाविभूषितम् ॥ स्फुरदिंदुसमामंदवरकौस्तुभमंडनम् ॥ ५९ ॥ विलसद्रत्नकटककंकणैरंगुली
यकैः ॥ शंखचक्रगदापद्मैश्चांकितश्रीकरांबुजम् ॥ ६० ॥ त्रिरेखकंबुसंकाशस्फुरन्निष्कशिरोधरम् ॥ अ
गण्यलावण्यपूर्णप्रसन्नमुखसारसम् ॥ ६१ ॥ अतिरक्तमृदुस्निग्धपक्वबिंबनिभाधरम् ॥ कुंदकुड्मल
संशोभिदंतपङ्क्तिं दयानिधिम् ॥ ६२ ॥

कंकणानिकरभूषणानितैःअंगुलीयकैःमुद्रिकाभिश्चशंखचक्रगदापद्मैश्चांकितानिश्रीमंतिकरांबुजानियस्यतम् ॥ ६० ॥ त्रिरेखेति । तिस्रोरेखायस्यसचा
सौकंबुःशंखःतस्यसंकाशःसदृशःस्फुरन्निष्कंकंठाभरणविशेषोयस्यसःशिरोधरोग्रीवायस्यतंअगण्यलावण्यंअपरिमितसौंदर्यंतेनपूर्णंप्रसन्नंमुखसारसंमुखकम
लंयस्यतम् ॥ ६१ ॥ अतिरक्तेति । अतिरक्तंचततमृदुचततस्निग्धंमनोहरंचततपक्वबिंबंचतस्यनिभःसदृशःअधरोयस्यतंकुंदकुड्मलवत्संशोभिनोदंताः
तेषांपङ्क्तिर्यस्यतंदयानिधिंदयाश्रयम ॥ ६२ ॥

द्वाराभावात् हेकृष्णसत्यताकंसकेतुंसध्वजंरम्यंरमणीयंकर्मदिगम्यंसन्यासिभिरपिप्राप्यं। भिक्षुःपरिव्राट्कर्मंदीत्यमरः । भवजलधौसंसारसमुद्रेभवंतोजायमा नाःखेदाःतेषांविच्छेदोविनाशःतस्यहेतुंकारणंत्वत्पादपोतंतवपादाख्यनावंअनिशंप्रदिशदेहि ॥ ७५ ॥ प्रायइति। हेकृष्णव्रजस्त्रीजनदत्तशापःप्रायःमामस्पृशत्। येनकारणेनलावण्यवारांनिधिनासौंदर्यसमुद्रेणपूर्णापरिपूर्णामूर्तिःशरीरंयस्यसःसर्वांगसुंदरइत्यर्थः। भवान्वियुक्तंवियुनक्ति। पूर्वंमयातासांत्वद्वियोगकरणपापा त्इदानींममापित्वद्वियोगोजायतइतिभावः। तथाहि। कःपुरुषःपुण्यंविनाश्रेयोभाग्यमुपार्जयेत् ॥ ७६ ॥ पुण्येति । हेमुकुंदहेकृष्णपुण्यानांश्रेण्याःसमूह स्यातिदूरंपुण्यहीनमपीत्यर्थः। मांसतांसज्जनानांदूषणेषुविषयेषुमूकंकुरु। यथामूकोनवदत्येवतथावागिंद्रियवताऽपिमयासतांदोषःकदापिनवाच्यइतिभावः।

प्रायो व्रजस्त्रीजनदत्तशापो मामस्पृशद्येन भवान्वियुक्तं ॥ लावण्यवारांनिधिपूर्णमूर्तिः श्रेयो विना पुण्यमुपा र्जयेत्कः ॥ ७६ ॥ पुण्यश्रेण्यतिदूरमप्यनुदिनं मूकं सतां दूषणेष्वंधं मीनदृगीक्षणेषु बधिरं त्वद्भिन्नगोष्ठीषु मा म् ॥ पंगुं पापकरप्रयाणकरणे पाणिं च तत्कर्मसु क्लीबं ग्राम्यरतौ मुकुंद कुरु मां मूढं तदीयस्मृतौ ॥ ७७ ॥ कामस्तेंऽघ्रियुगार्चनेऽमलधियां लोभः सुपुण्यार्जने मात्सर्यं चरितानुकीर्तनसुधापानान्मदः शत्रुषु ॥ क्रोधोऽभ क्तजनेषु राग उदयाच्छ्रीविठ्ठलाऽन्यत्र नो यच्छत्रुर्न हि शत्रुरुच्चनिलयस्याऽन्यस्य शत्रुर्भवेत् ॥ ७८ ॥

एवमुत्तरत्रापिद्रष्टव्यम्। मीनदृगीक्षणेषुसरागंमीनाक्षीणांस्त्रीणांदर्शनेषुअंधंकुरु । त्वद्भिन्नगोष्ठीषुत्वदन्यकथासुबधिरंश्रवणेंद्रियरहितंकुरु। पापकरप्रयाण करणेपापजनकपरदारादिगृहयात्रायांपंगुंपादरहितंकुरु। पूर्ववदेवभावः। तत्कर्मसुपापकरकर्मसुअपाणिंहस्तरहितंकुरु । ग्राम्यरतौनिषिद्धसुरतेक्लीबंनपुंसकं कुरु। तदीयस्मृतौतेषांपूर्वोक्तानांनिषिद्धविषयाणांसंबंधिनीस्मृतिस्तस्यांमूढंपूर्वोत्तरविचारानभिज्ञंकुरु। महापुण्यफलानामप्येतेषांमूकत्वांधत्वबधिरत्वादीनां आपाततःपापफलत्वंदृष्ट्वापुण्याभावेपिदिशेतिव्याजोक्तिः ॥ ७७ ॥ इदानींकामादिदोषाणामपिसयुक्तिकंगुणत्वंवर्णनायाऽऽह। कामइति। हेश्रीविठ्ठलतेतवांघ्रि युगार्चनेपादयुगलपूजनेममकामइच्छाउदयात्उदयतु । यथाकामीपुरुषःवनितादिविषयेष्वासक्तोभवतितथाहमपिहर्यर्चनएवाऽऽसक्तोभूयासमितिकामपद

प्रयोक्तृभावः । तेअमलधियांनिर्मलसर्वोत्तमत्वबुद्धौलोभःपुनःपुनरार्जयामीत्याशातिशयःरक्षोत्साहःपरित्यागासहिष्णुताचउदयादितिसर्वत्रसंबंधः । यथालो भीयत्नेनधनमार्जयतिनानोपायैःरक्षतिकदापिनविसृजतिचतथाविष्णोःसर्वोत्तमत्वबुद्धिंगुरुमुखादार्जयामिश्रुतिस्मृतियुक्तिभिःसर्वदाहृदिस्थिरीकरोमिमरणेपि नपरित्यजामीतिभावः । सुपुण्यार्जनेहरिपूजात्वेनक्रियमाणशोभनपुण्यार्जनेमात्सर्यंपुण्यार्जकपुरुषांतरादप्यधिकोभवामीतिस्पर्धा । यथामत्सरग्रस्तःधनवं तमन्यंदृष्ट्वाततोप्यधिकधनंमयार्जनीयमितिप्रयत्नंकुर्यात्तथामहापुण्येविषयेममापिप्रयत्नःस्यादितिभावः । तवचरितानामनुकीर्तनमेवसुधातस्याःपानात्नि रंतरचरितसंकीर्त्तनसंभ्रमादितियावत् । मदःतदतिरिक्तसकलविषयेषुविस्मरणं । यथामदांधःनर्तनादितत्कार्यव्यतिरिक्तेषुकार्येष्वनुद्योगीस्यात्तथाममापिहरि कथाकथनसंभ्रमसमयेकार्यांतरस्यानुद्योगःस्यादितिभावः । तवशत्रुषुविरोधिषुक्रोधःसंहारेच्छा । यथाक्रुद्धःस्वशत्रुंसदासंहर्तुमिच्छेत्तथाममापितवविरोधि मतंतदवलंबिनोदुर्जनांश्चयुक्तिभिःशक्तिभिश्चसदापराभावयामीतिसन्नाहःस्यादितिभावः । तवभक्तजनेषुरागःस्नेहः । यथास्वबंधुषुस्नेहोभवेत्ततोऽप्यतिशयि

रुद्र त्वं हि मनोभिमान्यसि ततस्त्वच्छत्रुमित्रं मनो मा कुर्वच्युतचिंतनार्चनरतं कुर्वीश हे भास्कर ॥
चक्षुर्मान्यसि तच्च विठ्ठलवपुःसंदर्शनैकाध्वरं कृत्वा मा कुरु कैरवाक्ष्यनुचरं यत्ताः सपत्न्याश्रयाः ॥ ७९ ॥

तत्स्नेहःवैष्णवेषुममस्यादितिभावः । अन्यत्रउक्तषट्कस्थलादन्यत्रकामोनोदयादित्याकारेणसंबंधः । ननुशत्रुत्वेशास्त्रसिद्धकामादिषुकथमेकैकांशांगीकारइत्यत उक्तंयदिति । यद्यस्माल्लोकेउच्चःसर्वाधिकोराजादिःनिलयआधारोयस्यतस्यराजातिस्निग्धपुरुषस्येत्यर्थः । शत्रुःशत्रुरपिशत्रुःशात्रवंकुर्वन्नहि । अन्यस्यराजा धाररहितस्यशत्रुःशातनादिकर्मकुर्वन्भवेद्धि । तस्मादुक्तषड्विषयेषुकामादिषट्कमुदयादितिपूर्ववत्संबंधः । महाराजांगीकारवतःपुरुषस्यशत्रवोपिराजभीत्यापादा क्रांताभवंतियथेष्टधनदानादुपकुर्वंतिच । तदनंगीकारदशायांमारयंत्येवनोपकुर्वंति । तथाहर्यर्चनेहरिसर्वोत्तमत्वबुद्धौहरिविषयकपुण्यार्जनेहरिकथाकथनेह रिद्वेषिषुद्वेषेहरिभक्तेचस्नेहेहर्याख्यमहाराजसद्भावादुक्तकामादयःसर्वेममानुकूलाएवसंतःमोक्षादिपुरुषार्थानपिदद्युः । इतोन्यत्रकामादिकरणेहर्याख्यमहा राजानुग्रहाभावात्मामंधेतमसिपातयित्वाहन्युरेव । अतउक्तैकैकांशेष्वेवतदंगीकारोनसर्वत्रेतिभावः ॥ ७८ ॥ मनश्चक्षुरभिमानिदेवयोःरुद्रसूर्ययोरेवउपकारं

घटयनूस्वापेक्षितफलादौतावदापादयति । रुद्रेति । हेरुद्रयतस्त्वंमनोभिमान्यसीति । हीत्यनेनश्रौतस्मार्तप्रसिद्धिंसूचयति । ततःमनःत्वदभिमन्यमानंमनःतव शत्रोःकामस्यमित्रंकामानुचरमितियावत् । माकुरु । स्वाभिमन्यमानभटस्यस्ववैरिवशेदानंतवनोचितमितिभावः । हेईशअच्युतस्यतवपितामहस्यनारायण स्यार्चिंतनार्चनयोःरतंकुरु । स्वभटेनस्वपितामहकैंकर्यकरणस्यश्लाघ्यत्वादितिभावः । हेभास्करत्वंचक्षुषःमानीअभिमानीअसितच्चक्षुषश्चविट्ठलस्यवपुषः केवलसंदर्शनएवअध्वरोव्यापारोयस्यतत्विट्ठलाख्यनारायणस्यत्वन्मंडलमध्यगतत्वेनतत्सेवाकरणस्यन्याय्यत्वादितिभावः । कैरवाक्षीणांनारीणामनुचरंमाकु रु । यद्यस्मात्ताःकैरवक्ष्यःसपत्नानांतववैरिभूतकुमुदानांआश्रयाःउपमानोपमानयोरैक्यत्वाभिप्रायेणोक्तिरियं । नववैरिभूतकुमुदंस्वचक्षुषिनिक्षिप्यरक्षंती त्यर्थस्यकैरवाक्षिपदेनध्वनितत्वात्साक्षाद्वैरित्वैर्याधारभूतस्यापिवैरपात्रत्वादितिभावः । तदितिपूर्वेणान्वयः ॥ ७९ ॥ संन्यासिनांनारीसुखंतांबूलचर्वणसुखं चनास्तीतिकेनचिद्विनोदेक्तेस्वयोग्यनारीतांबूलसंपादनायोक्तमुत्तरंपद्यद्वयम् । विरक्त्यादेःसर्वापेक्षितत्वाच्छ्लोकद्वयोक्ताभ्यर्थनमक्रूरस्यापियुक्तमेवेतिज्ञे

स्वामिन्विट्ठल सज्जनश्वशुरतः प्राप्तां दिगंतांबरामुत्क्रांतावपि योगिनीं मननसज्ज्ञानादिभिर्भूषिताम् ॥ मोक्षाप त्यवतीं विरक्तिरमणीं संश्लिष्यतोऽहर्निशं कालो गच्छतु नाऽन्यथा कुरु तदा कामो यदालंबते ॥ ८० ॥

यम् । स्वामिन्निति । हेस्वामिन्विट्ठलसज्जनाख्यश्वशुरात्प्राप्तांकन्याम् । जनयितारोहिश्वशुराइत्युच्यते । सज्जनसमागमेनचविरक्तिरुत्पद्यते । तेचसंतः । अतःसत्कुलप्रसूतास्वविरक्तिरमणीतिभावः । दिगंतोदिशामंतएवांबरंवस्त्रंयस्याःसातां । नारीणामभिमानरक्षकंहिवस्त्रंदिगंतसंचाराभावेविरक्तेरपिहास्यत्वाद्दिगं तस्यांबरत्वमितिभावः । आश्लेषसमयेदिगंबरत्वस्यैवन्याय्यत्वाच्चेदमुक्तम् । उत्क्रांतौमरणेपियोगिनींसंबंधवर्तीमरणसमयेपिविरक्तिभक्त्यादिगुणानांसहैवाग मनादितिभावः । इदंचलौकिकनारीतोप्यतिशयकथनायोक्तं । मननंयुक्तिभिरनुचिंतनंसत्निर्दुष्टंज्ञानंतेआदीयेषांपूजानमस्कारादीनांतैर्विभूषितांशुष्कविरक्ते नप्रयोजकत्वाज्ज्ञानादिभूषणमितिभावः । मोक्षएवापत्यंपुमपत्यंयस्याःसातथोक्ता मोक्षस्यपुल्लिंगशब्दवाच्यत्वाद्विरक्तिसाध्यत्वाच्च अप्रजांदशमेवर्षेस्त्रीप्रजां ॥११॥ द्वादशेत्यजेदितिवचनेनवंध्यायाःस्त्रीप्रजायाश्चासंग्राह्यत्वाच्चेदमुक्तमितिभावःविरक्तिरमणींविरक्त्याख्यनारींतदामिषंपरित्यज्यससुखंसमाविंदतेतिवचनेनविरक्तेः सुखहेतुत्वात्स्त्रीलिंगांतशब्दवाच्यत्वाच्चरमणीत्वमितिभावः । वस्त्रान्नपानाद्यर्थेनेनदुःखदात्रीभ्योलौकिकनारीभ्यःअतिशयसूचनायरमणीपदम् । अहर्निशं

संश्लिष्यतः आलिंगयतः ममइदंचानिषिद्धतिथिषुरात्रावेवालिंगनयोग्याभ्यः लौकिकनारीभ्यः महातिशयसूचनार्थः । कालोगच्छतुविरक्तिःकदापिमांनमुंचत्विति भावः । अन्यथाविरक्तिरमणीमनालिंग्यस्थितिंनकुरु । यद्यस्मात्तदाविरक्तिरमणीविश्लेषदशायांकामःमनःस्वास्थ्यादिकामःअन्यत्रतुमनःक्लेशहेतुर्मन्मथएवकामःआलंबतेआश्रयतितदितिपूर्वेणान्वयः । स्वतोपिमहतांपुत्रीस्वातंत्र्यंदेशाधिपतिनैवनिवारणीयमित्यतःस्वामिन्नितिविशेषणम् ॥ ८० ॥ यस्मिन्निति । यस्मिन्विट्ठलाख्यतांबूलेविट्ठलनाम्नःयुगलंविरकारःठकारश्चेतिवर्णद्वयंसतीनिर्दोषेपर्णनागवल्लीपत्रंचूर्णंचेतिद्वयम् । तांबूलेपिपर्णानांबहुलतयाविशिष्टत्वात्निर्वर्णःपर्णंठकारस्यशून्यार्थकत्वाच्चूर्णत्वमित्यर्थःपरःवर्णद्वयोपरिविद्यमानःलकाराख्योवर्णःपूगफलंनामैकदेशेननामग्रहणमितिन्यायात्क्रमुकफलम् । गुणौघानांविट्ठलगुणसमूहानांगणनाकीर्तिरूपत्वेनशुभ्रत्वात्महत्उत्तमंकर्पूरखंडम् । प्रभूणांतांबूलेकर्पूरखंडस्यापेक्षितत्वात्शुष्कनामोच्चारणस्यबहुफलदायकत्वाभावाच्चगुणध्यानंकर्पूरखंडमित्यर्थः । भिक्षुभिःश्लाघ्यंअनंगस्यकामस्यवैरिसंसर्पिविषयेपुक्षणेक्षणेसंबध्नन्रागःअभिलापःरक्तिमेतिध्वनिः । तांबूलातिशयसूचनायविशेषणत्रयंविषयरागापहारित्वेपिहरिविषयकरागोत्तेजकत्वात्नसर्वथातांबूलसाम्याभावः । किंत्वलौकिकतांबूलमेवेतिज्ञेयम् । अतएवाऽऽस्मिकंअद्भुतंद्रव्यदानादिकंविनाअकस्मादेवप्राप्तंच । इदमपिलौकिकतांबूलादतिशयसूचनार्थम् । तदिदंविट्ठलनामाख्यतांबूलंजक्षत्भक्षत् । जक्षभक्षहसनयोरितिधातुः । स्वरसनाग्रेनिक्षिप्यपुनःपुनरावर्तयन्नित्यर्थःसंसृतिरोगंसंसाराख्यरोगंकथमेष्यतिनकथंचिदपीत्यर्थः । मुखेनावर्तनंरोगापहननंचोभयोरपितांबूलयोःसमम् । आकस्मिकत्वात्सकलरोगमूलीभूतसंसाराख्यरोगमेवापहंतीतिभावः ॥ ८१ ॥ स्वांतमिति । हेकृष्णयच्चित्तंतेअंघ्रिकमलेचंचरीकतिभृंगवदाचरति ।

यस्मिन्विट्ठलनामवर्णयुगलं सत्पर्णचूर्णं परो वर्णः पूगफलं गुणौघगणनाकर्पूरखंडं महत् ॥ भिक्षुश्लाघ्यमनंगवैरि तदिदं संसर्पिरागापहं जक्षत्संसृतिरोगमेष्यति कथं तांबूलमाकस्मिकम् ॥ ८१ ॥ स्वांतं तदेव यत्तेंऽघ्रिकमले चंचरीकति ॥ स्वांतकारीनरन्मन्ये भ्रमद्भुजगसंन्निभम् ॥ ८२ ॥

तदेवस्वांतंचित्तंइतरतदुर्विषयेप्वासक्तंअतएवधमद्भुजगसन्निभंभक्षणाशया इतस्ततःचलत्सर्पसदृशंचित्तंस्वांतकारिस्वस्यांतंनाशंकरोतीतितथोक्तंमन्येनिरु पायेनाखंडवृत्यातस्यस्वांतपदनाच्यताअपितुस्वस्यांतोयस्मादितिस्वांतपदवाच्यंतदितिभावः ॥ ८२ ॥ इतीति । इतिब्रुवंतमक्रूरंमधुरोक्तिभिःआश्वास्यवि ससर्ज । सोपिअक्रूरोपिकृष्णस्याज्ञांविधित्सुःकर्तुमिच्छुःसन्गृहान्स्वगृहमगात् । गृहाःपुंसिचभूम्न्येवेत्यमरः । कृष्णाज्ञाभंगभियैवअगात्नतुस्वगृहस्नेहा

इति ब्रुवंतमक्रूरमाश्वास्य मधुरोक्तिभिः ॥ विससर्ज प्रभोराज्ञां विधित्सुः सोप्यगाद्गृहान् ॥ ८३ ॥ रो

म्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायिनि ॥

संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातः सुरमंडलीषु दशमः सर्गो मुदां सत्कृतः ॥

॥ ८४ ॥ इति श्रीवादिराजपूज्यचरणविरचिते रुक्मिणीशविजये दशमः सर्गः ॥ १० ॥

दितिभावः ॥ ८३ ॥ रोम्णामिति । व्याख्यातमेतत् ॥ ८४ ॥ इति श्रीवादिराजपूज्यचरणविरचितरुक्मिणीशविजयटीकायांनारायणाचार्यकृतायांगुरु भावप्रकाशिकायांदशमःसर्गःसमाप्तः ॥ १० ॥



श्रीपांडुरंगायनमः ॥ ऋज्वींचकारयःप्रेम्णाकुब्जामब्जालयाप्रियः ॥ मधुरांकंसविधुरांतंवंदेयदुनंदनम् ॥ १ ॥ प्रविश्येति ॥ हरिःश्रीकृष्णः व्रजतःगृहं प्रतिगच्छतः । तस्यअक्रूरस्यहृदयाख्यपुरींप्रविश्यश्रीकृष्णंहृदिस्मरन्नेवाक्रूरोगतइतिभावः । इनोदयेसूर्योदयेमधुरांमनोहरांमधुरापुरींनिर्विविशेप्रविष्टवान् । निर्विविशेआत्मनेपदम् ॥ १ ॥ द्वारिद्वारीति । प्रतिद्वारंस्वभक्तैःनागरिकनारीनरादिभिःआहृताःउपहृताःविविधबलयःतांबूलनारिकेलादिपूजोपहारायस्यसतथोक्तः । अन्यत्रचक्षुरादिद्वारेषुसूर्यादिदेवैरुपहृततत्तदिंद्रियजन्यसुखरूपबलिःउद्यानेउपवनेयावाप्यःतासुप्रोत्फुल्लांभोजानिकुंदप्रकराःकुंदसमूहाःतैःसुरभिःतेनवायुनामंदमारुतेनअधिवर्त्मप्रतिमार्गंसेव्यमानःउरुगुणःईशःश्रीकृष्णः । अन्यत्रवायुनाप्राणापानादिरूपेणप्राणापानादिवायुनावासेव्यमानःपुष्पपी

प्रविश्य व्रजतस्तस्य हृदयाख्यपुरीं हरिः ॥ इनोदये निर्विविशे मधुरां मधुरापुरीम् ॥ १ ॥ द्वारि द्वारि स्वभक्ताहृतविविधबलिर्वायुनोद्यानवापीप्रोत्फुल्लांभोजकुंदप्रकरसुरभिणा सेव्यमानोऽधिवर्त्म ॥ सिक्तां सन्मार्गनाडीमविशदुरुगुणः पुष्पपीयूषवृष्ट्या पापव्रातं दिधक्षुः प्रथितनिजपुरो ब्रह्मनाडीमिवेशः ॥ २ ॥ रजकं रजसा ग्रस्तं दर्शयन्निव सोऽध्वनि ॥ वसनं पीतवसनः समयाचत सर्ववित् ॥ ३ ॥

यूषवृष्ट्यापुष्परसामृतवृष्ट्यासिक्तां [। अन्यत्रमूर्ध्निस्थितवरुणमंडलात्निःसृतामृतवृष्ट्यासिक्तांप्लावितांसन्मार्गनाडींराजमार्गप्रनाडींप्रथितनिजपुरः । हृदयंब्रह्मपुरमितिश्रुतिसिद्धस्वभक्तशरीराख्यपत्तनस्थब्रह्मनाडीमिवहृन्मध्यस्थसुषुम्नानाडींराजमार्गनाडींप्रथितनिजपुरःहृदयंब्रह्मपुरमिव पापव्रातंचाणूरकंसादिपापसमूहंअन्यत्रवामकुक्षिस्थपापपुरुषावयवभूतब्रह्महत्यादिपापसमूहंदिधक्षुःदग्धुमिच्छुःसन्नाविशत्प्रविवेश ॥ २ ॥ रजकमिति । रजकंरजसारजोगुणेनग्रस्तं
आक्रांतंदर्शयन्निवसर्ववित्सर्वज्ञःपीतवसनःपीतांबरःश्रीकृष्णःअध्वनिमार्गेवसनंसमयाचत । स्वयाज्ञाभंगकरणेराजसोयमितिप्रदर्शनायैवयाञ्चा नतुवस्त्राभावात् । अतएवपीतवसनइत्युक्तम् ॥ ३ ॥

ततइति । ततःअनंतरंसुदुरात्मनःअतिदुष्टस्वरूपस्यतस्यदुरालापंदुष्टवचनंनिशम्यशिरोजहारचकर्त । दुरालापेहेतुभूतवदनाश्रयत्वात् । अकृतकिल्बिषंअकृतापराधंकायंशरीरंकिंकरोतु । अपराधानुसारेणशिक्षायाःकार्यत्वादितिभावः । अकृतकिल्बिषमित्यनेनदुर्वचनमात्रंनिमित्तमित्युक्तं । नतुश्रीकृष्णंप्रतिहंतुंहस्तोद्योगःकृतइतिसूचितम् ॥ ४ ॥ पथीति । पथिपथिमार्गेमार्गे । प्रतिमार्गमित्यर्थः । नवसौधानांनूतनराजसदनानांअंतस्तिष्ठंतीतितथोक्ताःताश्चतामुग्धांगनाश्चमनोहरनार्यःताभिःकुसुमनिकरैःपुष्पसमूहैःलाजैश्चकीर्यमाणोअवकीर्यमाणोपिअविदितगुणकर्मासाकल्येनाज्ञातगुणकर्माश्रीकृष्णःत्रिवक्रांत्रिषु जानुमध्यकटिषुवक्रां । त्रिषुकालेष्वपिवक्रामितिध्वनिः । कुब्जामुपेत्यवव्रेअंगीकृतवान् । अविदितेत्यादिनामंददृष्ट्याकामुकवत्प्रतीयमानोपिश्रीकृष्णःपिंगलातनौतत्कृततपःफलप्रदानायैवकुब्जामंगीकृतवानितिसूच्यते। अर्थांतरंन्यस्यति । तथाहि । चतुरपुरुषस्यप्रौढपुरुषस्यकांक्षाइच्छावक्रयोषित्सुकुटिलांगनासुनांगीकार्यायमितिमनःकौटिल्यवतीषुनूनंनिश्चयः ॥ ५ ॥ मुष्टिप्रमाणेति । सकृष्णःमुष्टिप्रमाणतनुमध्यवर्तींमुष्टिनादधत्सूक्ष्ममध्यांएकत्रकृशोदरत्वात् । स्वकर्णविश्रांतगुणांस्वकर्णविश्रांताःगुणाःयस्याःसातांअन्यत्रयोक्तुःकर्णविश्रांतःगुणःमौर्वीयस्याःसातांरुचिरांमनोहरांत्रिवक्रांत्रिष्वंगेषुवक्रांशार्ङ्गस्यत्रिषुसंधिषुवक्रत्वात् । कृष्णमेवद्रष्टुंलज्जावशात्विष्वक्समंतात्प्रयुक्तनयनांतःअपांगएवशरोययातांसैरंध्रींनिरीक्ष्यसकृष्णःउद्धवस्यधनुरुत्सवस्यकथाविषयं । महउद्धवउत्सवइत्यमरः । अन्यत्रउद्धवस्ययादवस्यदत्तपोषणातूउद्धवकथाविषयत्वंकोदंडंधनुःमेनेनिरूपितवान् ॥ ६ ॥

ततस्तस्य दुरालापं निशम्य सुदुरात्मनः ॥ शिरो जहार किं कायं करोत्वकृतकिल्बिषम् ॥ ४ ॥ पथि पथि नवसौधांतस्थमुग्धांगनाभिः कुसुमनिकरलाजैः कीर्यमाणोऽपि कृष्णः ॥ अविदितगुणकर्मोपेत्य वव्रे त्रिवक्रां चतुरपुरुषकांक्षा वक्रयोषित्सु नूनम् ॥ ५ ॥ मुष्टिप्रमाणतनुमध्यवर्तीं स्वकर्णविश्रांतनिर्मलगुणां रुचिरां त्रिवक्राम् ॥ विष्वक्प्रयुक्तनयनांतशरां निरीक्ष्य कोदंडमुद्धवकथाविषयं स मेने ॥ ६ ॥

मधुरवचनेति । मधुरवचनमात्रेणपुलकितरुचिरांगीचंचलापांगएवभृंगःयस्याःसासतीअंगरागंविलेपनंददौ तस्येतिशेषः । खलकुलवनदावःदुर्जनकुलदहनः । वासुदेवःश्रीकृष्णःअनुचितमभिधानंत्रिवक्रेतिनामप्रियोक्तिश्रवणमात्रेणार्जवप्रापणात्एकत्राप्यवक्रायाःत्रिवक्रत्वमनुचितमितिभावः । त्याजयन्हापयन्तां त्रिवक्रांऋजुगात्रींअवक्रांगींततान ॥ ७ ॥ प्रपदेति । प्रपदेपादाग्रे । पादाग्रंप्रपदंपादमित्यमरः । निहितंनिक्षिप्तंपादांभोजाख्यंफुल्लंविकसितंप्रसूनंपुष्पंयेनसःतद्वक्रोन्नमनसमयेपदयोःस्थिरीकरणायतत्पादाग्रेन्यस्तस्वपादइत्यर्थः । कुपितायाःकोपपरिहारायपादेषुसमर्पणाख्यध्वनिसंपादनात्पादयोरंभोजत्वेनवर्णनं । श्रीकृष्णःवदनंमुखमुपागतेनप्राप्तेनद्व्यंगुलोत्तानदोष्णाद्वेअंगुलीसमाहृतेइतिद्व्यंगुली।तद्धितार्थोत्तरपदसमाहारेचेतिद्विगुः। तत्पुरुषस्यांगुलेःसंख्याव्ययादेरिति

मधुरवचनमात्रेणांगरागं ददौ या पुलकितरुचिरांगी चंचलापांगभृंगी॥ अनुचितमभिधानं त्याजयन्वासुदेवः खलकुलवनदावस्तां ततानर्जुगात्रीम् ॥ ७॥ प्रपदनिहितपादांभोजफुल्लप्रसूनो वदनविनिहितेन द्व्यंगुलोत्तानदोष्णा ॥ ऋजुतनुमतनोत्तां मुन्नमय्य त्रिवक्रां चुबुकगतकराणामंचितां क्वाऽस्ति वक्रा ॥ ८ ॥ वक्रामपि च तां तन्वीं ऋज्वीं कृष्णकरोऽकरोत् ॥ अनुकूलयितुं बालां कर एव हि कारणम् ॥ ९ ॥

टच् । यस्येतिचेतिइकारलोपः । द्व्यंगुलमेवोत्तानंऊर्ध्वमुखंयस्यसचासौदोश्चतेनतांत्रिवक्रांउन्नमय्यार्जवंप्रापयित्वाऋजुतनुंऋज्वंगींअतनोत् । यथाविलासीप्रणयकोपेनवक्रायाःप्रियायाःपादेपुष्पंसमर्प्यवदनंसंगृह्यस्तुत्वानुकूलयतितथेतिध्वनिः । अतएवार्थांतरंन्यस्यति । चुबुकेति । तथाहि । चुबुकगतकराणांअंचितांपुष्पादिनामानयतांवक्राविमुखाकास्तिनकापीत्यर्थः ॥ ८ ॥ वक्रामपीति । श्रीकृष्णकरःश्रीकृष्णहस्तःश्रीकृष्णदत्तपुष्पहारादिप्रदानरूपोबलिरितिध्वनिः । बलिहस्तांशवःकराइत्यमरः । वक्रामपिचअननुकूलामितिध्वनिः । तांतन्वींनारींऋज्वीमकरोत् । तथाहि । बालांकुपितांकोपेनवक्रचित्तांप्रियामनुकूलयितुंअभिमुखीकर्तुंकरएवद्रव्यदानमेवकारणंहि । बलिहस्तांशवःकराइतिकरशब्दस्यश्लिष्टत्वात्श्लेषमूलोर्थांतरन्यासः ॥ ९ ॥

गंधेति । कुब्जादयःकुब्जाआदिर्येषांमालाकारादीनांनेतथोक्ताः तस्मैगंधार्पणात्गधाख्योपचारसमर्पणात्रुचिरोमनोज्ञोवेषोनखक्षतनालक्तकलापादिरलंकारः तस्यकृतेःकरणात्मनोज्ञकुंदप्रसूनरचितस्यामलमाल्यदानात्एकैकोपचारसमर्पणादितिभावः । तंमोक्षप्रदत्वेनप्रसिद्धंमहाप्रसादंउत्तमानुग्रहंअलभंत । विभुंश्रीकृष्णंसर्वविधिभिःसमस्तविहितोपचारैःषोडशोपचारैरित्यर्थः । अर्चयंतःपूजयंतःमहाप्रसादंअलभंतेतिकिंवाच्यमित्यर्थः ॥ १० ॥ राजेति । अथरमेशःश्रीकृष्णःराजाध्वनाराजमार्गेणधनुर्निवासंचापपूजागृहंसमधिगम्यकोदंडस्यधनुषःखंडनंचकमेऐच्छत् । तत्कोदंडखंडनंयुक्तंहिउचितंहि । सकलदेवतानांमुख्यदेवःसकलजगन्मुख्यइत्यर्थः । श्रीकृष्णःजडतमस्यधनुषःमूर्खतमस्येतिध्वनिः । बलिंपूजांकथंसहेत । शिवभक्तेनकंसेनधनुषिशिवस्यैवपू

गंधार्पणाद्रुचिरवेषकृतेर्मनोज्ञकुंदप्रसूनरचितामलमाल्यदानात् ॥ कुब्जादयस्तमलभंत महाप्रसादं किं नाम सर्वविधिभिर्विभुमर्चयंतः ॥ १० ॥ राजाध्वना समधिगम्य धनुर्निवासं कोदंडखंडनमथो चकमे रमेशः ॥ युक्तं हि तत्सकलदैवतमुख्यदेवः कृष्णः कथं जडतमस्य बलिं सहेत ॥ ११ ॥ सद्वंशजातोऽपि गुणान्वितोऽपि शिक्षानुरूपोऽपि स तेन चापः ॥ भग्नः शनैर्वक्रहृदो हि पुंसः को वा गुणः कोविदमानयोग्यः ॥ १२ ॥

जनात्कृष्णंविनादेवतांतरपूजनमनिष्टहेतुरित्येकोभावः । उत्तमस्याग्रेअधमपूजनमधमस्यैवविनाशहेतुरित्यपरोभावः॥ ११॥सद्वंशेति । सद्वंशेकीटाद्युपघातवर्जितेवंशेवेणौजातोपि । सत्कुलप्रसूतइतिध्वनिः।गुणेनमौर्व्यान्वितोपियुक्तोपि।विनयादिगुणोपेतइतिध्वनिः।शिक्षायाःआकर्षणादिरूपायाःअनुरूपोऽपिअनुकूलोपि ।गुर्वाज्ञानुवर्तीतिध्वनिः । सचापः । तेनकृष्णेनशनैर्भग्नःद्वैधीभावंप्रापितः । तथाहि । लोकेवक्रहृदःकुटिलचित्तस्यपुंसःअधिज्यधनुषोवक्रमध्यत्वात्तदर्थांतरन्यासस्योत्थानमितिहृदयं । कोविदमानयोग्यःपंडितसत्कारार्होगुणःकोपि नकोपीत्यर्थः ।कुटिलचित्तस्यजात्याविनयादिगुणोनश्लाघनीयःइतिभावः॥ १२॥

करेणेति । असौलीलाबालःश्रीकृष्णःप्राक्प्रथमंखलमिवदुर्जनमिवतत्धनुःकरेणहस्तेन । अन्यत्रहारकटकादिनाउद्धृत्यऊर्ध्वमादायगुणावेदनंमौर्वीसंबंधं । अन्यत्रविनयादिस्वगुणावेदनंव्यतनुतअकरोत् । तदनुतदनंतरंएतावताप्यननुकूलंप्रभुःसमर्थःश्रीकृष्णःपादाघातंपादेनताडनंविरचय्य । जानुविन्यासंकृत्वेतिध्व निः । आशुअनमयत्नम्रमकरोत् । अथोनम्रीकरणानंतरंभग्नंभिन्नमकरोत् । नम्रस्यभग्नकरणमनुचितमित्यतोर्थांतरंन्यस्यति । इहलोकेबलात्बलात्कारेणन म्रीभूतेशुष्कहृदयेस्वस्मिन्स्नेहविधुरचित्ते । धनुःपक्षेशुष्कमध्येआर्द्रवंशेनधनुःकरणायोगादितिभावः । करुणादयाकिं नेत्यर्थः । शिखरिणीवृत्तं । रसैरुद्रैश्छि न्नायमनसभलागःशिखरिणीत्युक्तेः ॥ १३ ॥ भग्नइति । भग्नःचापःप्रतिभयनिनदैःभयंकरचटचटध्वानैः भयंकरंप्रतिभयमित्यमरः । स्वभर्तुःकंसस्यधैर्य

करेणाद्धृत्य प्राग्व्यतनुत गुणावेदनमसौ प्रभुः पादाघातं तदनु विरचय्याऽऽश्वनमयत् ॥ अथो लीला बालः खलमिव धनुर्भग्नमकरोद्बलान्नम्रीभूते किमिह करुणा शुष्कहृदये ॥ १३ ॥ भग्नश्चापः स्वभर्तुः प्र तिभयनिनदैर्धैर्यस्थैर्यं ततान व्यग्रस्वांतान्स्वपालान्दृढतरशकलद्वंद्वघातैर्जघान ॥ भंगेनैवोग्रमल्लप्रकरहृ दि भयं भल्लकल्पं चखान द्वैधीभावं विपक्षे विरचयति बत स्वीय एव स्वशत्रुः ॥ १४ ॥ स्थैर्यंततान । भज्यमानचा

पध्वनिश्रवणेनकंसश्शंकितआसीदितिपुराणप्रसिद्धेः । समर्थोसौशत्रुःनास्माभिरिहस्थेयमित्यादिविप्रवचनैरितिध्वनिः । व्यग्रस्वांतान्उद्विग्नचित्तान्स्वपालान् स्वरक्षकान्दृढतरशकलद्वंद्वघातैःदृढतरस्वखंडद्वयकृतप्रहारैःजघान । एवंनवक्तव्यमितिस्वप्रतिषेधः । स्वहस्तप्रहारेणेतिध्वनिः । भंगेनैवस्वभंगेनैवउग्रमल्लप्र करस्यक्रूरमल्लसमूहस्यहृदिचित्तेभल्लकल्पंशरसमंभयंचखानअंतर्निदधे । अहमेतादृशोपिभग्नःकिंयूयमितिस्वराजकीयभटानांभीषणेनेतिध्वनिः । तथाहि । विपक्षेशत्रौद्वैधीभावंअंतर्भेदंविरचयतिसति । धनुःपक्षेखंडनाख्यद्वैधीभावोद्रष्टव्यः । स्वीयएवस्वकीयएवशत्रुर्भवतिहि । बतखेदे । अद्यापिहिनज्ञैःनृपै र्वित्तदानादिनादुर्गस्थानामंतर्भेदेकारितेसतितएवदुर्गद्वारमुपदिशंतःतत्रतत्रदृश्यंते । अर्थांतरन्यासः । सचोक्तध्वनिनाउज्जीवितः ॥ १४ ॥

विचित्रमद्भुतंतत्कुञ्जोन्नमनादिविविधचरित्रंसिद्धविद्याधराणांमेरोरुपरिस्थितानांकथयितुमिवनिर्मलमेरोःअन्यभा
इतीति । भानुःसूर्यःश्रीपतेःश्रीकृष्णस्यविचित्रमद्भुतंतत्कुञ्जोन्नमनादिविविधचरित्रंसिद्धविद्याधराणांमेरोरुपरिस्थितानांकथयितुमिवनिर्मलमेरोःअन्यभा
गमगमत् । तदासूर्यःअस्तंगतइत्यर्थः । अगणितविभवःमुकुंदोपिश्रीकृष्णोपिज्ञातिजुष्टंनंदादिभिर्व्याप्तंस्वंस्वकीयंनिवासमगमत् ॥ १५ ॥ तमइति । अस्तंग
तरविःकाष्ठासुदिक्षुसमंतात्तमःपुपूरपूरयामास । पुराद्बहिर्गतःमुकुंदोपिभयाख्यंततूतमःपूर्वोत्तरापरिस्फूर्तिहेतुत्वात् । स्वशत्रुषुपुपूर । धनुर्भंगदर्शनेनतस्यांरात्रौ
शत्रुषुभयमुत्पन्नमितिभावः । दीपकमलंकारः ॥ १६ ॥ शत्रावुत्पन्नभयंश्रीकृष्णदूततयावर्णयति दूतवर्णनस्यकाव्यांगत्वात् । औदार्येति । औदार्यमुदार
त्वंधैर्यंशौर्यंशूरत्वंतानिशत्रुनिष्ठानिगर्हयन्तिरस्कुर्वन्स्वनायकगुणकीर्तनंशत्रुगुणतिरस्कारश्चदूतधर्मः । सभयोच्चयःभयसमूहःमधुसूदनदूतवत् । श्रीकृष्णदूतव

इति विविधचरित्रं श्रीपतेस्तद्विचित्रं कथयितुमिव भानुः सिद्धविद्याधराणाम् ॥ अगमदमलमेरोर्भागम
न्यं मुकुंदोऽप्यगणितविभवः स्वं ज्ञातिजुष्टं निवासम् ॥१५॥ तमः समंतात्काष्ठासु पुपूर स गतो रविः ॥
बहिर्गतो मुकुंदोऽपि भयाख्यं तत्स्वशत्रुषु ॥ १६ ॥ औदार्यधैर्यशौर्याणि गर्हयन् स भयोच्चयः ॥ मनो
ममर्द कंसस्य मधुसूदनदूतवत् ॥ १७ ॥ कस्त्वं सोऽहमरे त्वदंतकतटादभ्यागतो वै भटः पृथ्व्यां क्वाऽ
स्ति ममांतकः स भुवनेष्वंतर्बहिर्वर्तते ॥ नामाऽप्यस्य न देवकीसुत इति ख्यातः स तन्नंदनो ध्वस्तो त्व
ज्ञ मृतिर्न तस्य निहतास्तेन त्वदीयाः परम् ॥ १८ ॥

त्कंसस्यमनःममर्द । अभीतानांतेषांवीर्यादिभीर्जातेतिभावः ॥ १७ ॥ कस्त्वमिति । ममधैर्याद्यपहर्तात्वंकइतिकंसवचनं । अरेकंससोहंत्वदंतकस्यश्रीकृष्ण
स्यतटात्समीपादभ्यागतःभटोवैदूतःखलु । श्रीकृष्णनिमित्तेनभयोत्पत्तेरियमुक्तिः । इतिभयाख्यदूतवचनं । त्वदंतकेतिभयाख्यदूतवचनमसहमानः
कंसोवक्ति । पृथिव्यांममांतकःनाशकः क्वकुत्रास्ति नकुत्रापीत्यर्थः । सत्वदंतकःभुवनेषुअंतर्बहिश्चवर्त्तते । श्रीकृष्णस्यव्याप्तत्वादितिभावः । इतिभयदू
तवचनं । अंतकस्यनामापिनश्रूयतइतिकंसवाक् । सदेवकीसुतइतिख्यातइतिभयदूतवचनं । अस्यास्त्वामष्टमोगर्भोहंतायांनयसेबुधइत्यशरीरवाक् । हेअ

ज्ञ तस्याःदेवक्याःनंदनः। जात्यैकवचनमिदं। ध्वस्तःशिलापृष्ठेचूर्णितोहि तस्यत्वदंतकस्यनस्मृतिर्नमृत्युःनित्यत्वात्। परंकेवलं। अन्यासहायेनतेनश्रीकृष्णेनत्व
दीयास्त्वत्संबंधिन्यःपूतनादयःनिहताः। देवकीनंदनस्यश्रीकृष्णस्यहतत्वेत्वत्प्रेषितपूतनादीनांकुतोनाशइतिभावः। भयजननानंतरंभीतस्यभयावस्थायांयद्वचनंतन
त्स्वंदूतवचनत्वेनवर्णितं। धैर्यावस्थायाःयद्वचनंतत्कंसवचनत्वेनवर्णितं। एवमुत्तरत्रापिज्ञातव्यम्॥ १८ ॥ मल्लाइति। शैलसमाःपर्वतसंनिभामल्लाःसंति।
जगतिलोकेप्रख्यातंप्रसिद्धंबलंचास्त्येव। हस्तिसहस्रस्यगजसहस्रस्यसंमितंसमानंबलंसत्वंयस्यतःहस्तीकुवलयापीडाख्योगजश्चतत्तस्मान्ममम्मृत्युःक्कुत्रा
स्ति नकुत्रापीत्यर्थः। इतिपुनःकंसवचनम्। हेराजन्कंसभवतांचित्तेसमुज्जृंभितःउत्पन्नःअहमेवशंकासहस्रार्पकःशत्रुवच्छत्रुरितिशंकासहस्रजनकःसन्मृ

मल्लाः शैलसमा बलं च जगति प्रख्यातमस्त्येव मे हस्ती हस्तसहस्रसंमितबलस्तत्क्वास्ति मृत्युर्मम ॥ रा
जन् मृत्युरिवाहमेव भवतां चित्ते समुज्जृंभितो दृष्टं वस्तु भयंकरं विरचये शंकासहस्रार्पकः ॥ १९ ॥
यस्मिन्नुत्सृजति स्वभक्तनिकरैः साकं हृदोको नृणां प्रागंधा बधिरा विवेकरहिता मूकायिताश्च क्षणा
त् ॥ अंते प्रेतपुरीं प्रयांति जगतामीशस्य तस्याऽग्रतः किं मल्लैः किमु हस्तिनाऽतिबलिना किं वा त्वया
किं भटैः ॥ २० ॥

त्युरिवदृष्टंभवद्दृष्टिपथंप्राप्तंवस्तुभयंकरंविरचये। अतिभीतानांस्तंभादावपिशत्रुभ्रांत्यापतनस्खलनादिदर्शनादियमुक्तिः। मृतादप्यधिकांदुर्दशांभीतःप्राप्नोती
तिभावः ॥ १९ ॥ स्वपराक्रमेणशत्रुबुद्धिंधिक्कृत्यस्वस्वामिसामर्थ्येनापिनिराकुर्वन्भयाख्यदूतोवक्ति। यस्मिन्निति। स्वभक्तनिकरैःचक्षुराद्यभिमानिसूर्या
दिदेवैःसाकंनृणांमनुष्याणांहृदोकःहृदयाख्यस्वमंदिरं। धिष्ण्यमोकोनिवसनमित्यमरः। भवच्छरीरंनभवदधीनंकिमन्यदितिव्यंग्यं। हृदयंब्रह्मपुरमितिश्रुतेः। उ
त्सृजतिसतिप्राक्प्रथमंक्षणात्अंधाःबधिराःश्रोत्रेंद्रियविधुराःविवेकरहिताःज्ञानशून्याःमूकायिताश्चवाग्व्यापारशून्याश्चसंतः। अनेनइंद्रियाभिमानिदेवतानि
र्गमनफलमित्युक्तंभवति। ब्रह्मणात्यक्तदेहस्तुमृतइत्युच्यतेनरइतिश्रुतेः। शुभजीवप्रकाशेनकदाचिच्छुभबुद्धयइतिवचनात्भीतस्यकंसस्यएतादृशविचारोन

संभावितः । जगतामीशस्यकृष्णस्यायतःपुरतःमल्लैःकिंप्रयोजनंहस्तिनागजेनाकिंअतिबलेनत्वयाकिंभटैःकिं । जीवतांभवतांखलुसत्वंयुद्धायोपकरोति । त न्निर्गमनमात्रेणजीवनहानौकिमेतैरितिभावः ॥ २० ॥ किमिति । दुर्मतेभयादतिभ्रांतोसिकिं । इदंविरुद्धभाषणंविरुद्धवचनंमाब्रूहिमावदेतिभयाद्विकुर्वंतः कंसस्यवचनं । हेकंसयत्तेमनःमयानिर्जितंभवति । तत्तस्माद्भ्रांतिर्विपरीतवाक् । अपितेतवैवभीतानांसभाकंपादिनाभ्रमविपरीतवचनदर्शनादितिभावः । इ तिभयदूतवचनं । मत्खड्गाभिहतिंइच्छसिकिमितिपुनःकंसवचनंचंचलात्भीत्याकंपमानात्तवहस्तात्शनैर्गलन्मुष्टेःशैथिल्यात्त्वामेवहनिष्यति । ईश्वरभटंमां हंतुंसमर्थःकोस्तिनकोपिसमर्थइत्यर्थः । अन्यस्माद्भयंकथंचित्परिहर्तुंशक्यंब्रह्मणोपिभयं । तमोपराध्यंपरमायुषइतिवचनात्कृष्णादागतंभयंनकेनापिपरि

किं भ्रांतोऽसि विरुद्धभाषणमिदं मा ब्रूहि भो दुर्मते भ्रांतिस्ते विपरीतवागपि मनो यत्ते मया निर्जित म् ॥ मत्खड्गाभिहतिं किमिच्छसि शनैर्हस्ताद्गलंश्चंचलात्स त्वामेव हनिष्यतीश्वरभटं मां हंतुमीशोऽस्ति कः ॥ २१ ॥ क्लीबः किं कुरुषे त्वमज्ञ भवतः क्लीबोपमादित्सया तद्भावं शिरसा दधामि बहुना किं जल्पितेनाधुना ॥ नित्यं मन्नियतः स वाति पवनःपाकं विधत्तेऽनलःसूर्योऽसौ समुदेति तं हरिमृते सर्वं जगन्मद्वशम् ॥ २२ ॥

हर्तुंशक्यमितिभावः ॥ २१ ॥ क्लीबइति । हेअज्ञभयात्क्लीबःअसमर्थःत्वंकिंकु रुषे । भयशब्दस्यनपुंसकत्वादियमुक्तिः । इतिकंसवचनं । हेकंसभवतस्तवक्लीबोपमादित्सयाक्लीबसाम्यदानेच्छयातद्भावंक्लीबभावंशिरसादधामि । काष्ठभार कवत्तदर्थमेवध्रियतइत्यर्थः । भीतानांनपुंसकप्रायत्वादितिभावः । अधुनाबहुनाजल्पितेनबहुभाषितेनकिं । एकेनैववचनेनमत्सामर्थ्यंदर्शयामीतिभावः । मन्नि यतःसन्नूसपवनोवायुर्वातिचलति । मन्नियतोऽनलोग्निःपाकंविधत्तेमन्नियतोसौसूर्यःसमुदेति । भीषास्माद्वातःपवतेभीषोदेतिसूर्यइतिश्रुतेः । तंहरिंकृतेविनासर्वंज गत्मुक्तामुक्तात्मकंविश्वंमद्वशंमदधीनंहरिरेकएवाकुतोभयः । अन्येयथायोग्यंसभयाइतिभावः ॥ २२ ॥

सत्वमिति । हेकंसचित्तेउज्जृंभितःअहंसत्वंसामर्थ्यंनिष्फलंनिरर्थकंआतनोमि । सेनातिबलोपेतस्यापिभीतेःपलायनदर्शनादितिभावः । मुखंमलिनंस्विन्नंस्वेदयुक्तंगात्रंशरीरंवेपथुनाकंपेनग्रस्तंअक्षियुगलंअधीरंइतस्ततोदर्शनेनचंचलितंचकिमद्यकरोमीतिचिंतयाआकुलंवाचिवचनेदैन्यंदासस्तवेत्यादिविभवेऐश्वर्येविरक्ततांभोगावलेःभोगसमूहस्यत्यागंचभीतानांवनिताराज्यादिकंविहायपलायनदर्शनादितिभावः । लज्जायाःमानस्यगर्वस्ययशसःच्युतिंहानिंविरचये । भीतानामेतद्भवतीतिभावः । इदंभयदूतवचनम् ॥ २३ ॥ रेरेमंदेति । रेरेभोभोमंदमूढदूतबहिःप्रयाहि । मच्चित्तान्निर्गच्छ । स्थैर्यमानस्यकंसस्यवचनं । भोभोजेश

सत्वं निष्फलमातनोमि मलिनं स्विन्नं मुखं वेपथुग्रस्तं गात्रमधीरमक्षियुगलं चित्तं च चिंताकुलम् ॥ दैन्यं वाचि विरक्ततां च विभवे त्यागं च भोगावलेर्लज्जामानयशश्च्युतिं विरचये चित्तेऽहमुज्जृंभितः
॥ २३ ॥ रे रे मंद बहिः प्रयाहि यदि भो भोजेश कृष्णाश्रितो भूयास्तर्हि तथा करोम्यपरथा त्वां नोभयत्रोत्सृजे ॥ धैर्यस्थैर्ययुताच्युतप्रियमनो मह्यं न वै रोचते क्षेमायाभ्युदयाय च प्रतिदिनं तद्वेषिचेतो मम
॥ २४॥ शंभुं संभज पद्मयोनिमथवा चंद्रेंद्रवींद्रादिकान् स्वर्गं गच्छ तमोव्रज प्रविश वा पातालमत्रैव वा ॥ रक्षां भित्तिसहस्रवारिधिमहाशैलज्वलत्पावकैः कृत्वा तिष्ठ तथापि कृष्णविमतं त्यक्ष्यामि न त्वामहम् ॥ २५ ॥

कृष्णंश्रितःआश्रितोभूयास्तर्हितथाकरोमि । बहिर्गच्छामीत्यर्थः । श्रीकृष्णस्याभयप्रदत्वादितिभावः । अपरथाकृष्णाश्रयाभावेउभयत्रसंसारेतमसिचत्वांनोत्सृजे । भयेनभयाभयात्मकतामितिवचनात्तत्कुतइत्यतआह । धैर्यस्थैर्ययुताच्युतस्यप्रियाणांविष्णुभक्तानांमनःमह्यंनरोचतेवै । अभिभूयमानाव्यसनैर्यथाधोक्षजचेतसइतिवचनात् । तस्यश्रीकृष्णस्यद्वेषिचेतःप्रतिदिनंममक्षेमायस्थितरक्षायैअभ्युदयायअभिवृद्धयेचभवति । विष्णुद्वेषिणांप्रतिदिनंभयाधिक्यमितिभावः ॥ २४ ॥ शंभुमिति । हेकंससत्वंशंभुंरुद्रंसंभज । तथापिश्रीकृष्णस्यविमतंविरोधिनंत्वामहंनत्यक्ष्यामीत्येवंसर्वत्रान्वयः । रुद्राश्रितस्यापिबाणस्यभयदर्श

नादितिभावः । अथवापद्मयोनिर्ब्रह्माणं । ब्रह्माश्रितस्यापिहिरण्यकशिपोर्भयदर्शनादितिभावः । चंद्रःइंद्रःवींद्रःगरुडश्चादयोयेषांतेतान् । रुद्रादीनामपिरुद्रादि भ्योभयदर्शनादितिभावः । पातालंप्रविश । पातालप्रविष्टस्यापिहिरण्याक्षस्यभयदर्शनादितिभावः । अत्रैवभूमौवाभित्तीनांप्राकाराणांसहस्रंवारिधिःसमुद्रःम हाशैलःकुलपर्वतःज्वलत्पावकश्चैतैःपरितोरक्षांकृत्वावतिष्ठ । एतादृशस्यनरकासुरस्यमृतिदर्शनादितिभावः ।तथापित्वांनत्यक्ष्यामीतिसंबंधः । विष्णुद्वेषिणोयत्र कुत्रापिगमनेभयंनमुंचतीतिभावः ॥ २५ ॥ युद्धार्थमिति । हेस्तब्धकंसयस्यचित्तेऽहमुज्जृंभितःसयुद्धार्थंयुद्धंकर्तुंकदापिनगच्छति गतोपिओजस्विनांशूराणां पृष्ठतःपश्चाद्भागेतिष्ठति । भीतोयुद्धंकर्तुंपुरोनगच्छतीतिभावः । कथंचित्पुरतोगच्छन्अन्यंशत्रुमवेक्ष्यशस्त्रनिकरंआयुधसमूहंक्षणेनदृष्ट्वाभूम्यांउज्झतिमुंचति ।

युद्धार्थं न कदाऽपि गच्छति गतोऽप्योजस्विनां पृष्ठतस्तिष्ठत्यन्यमवेक्ष्य शस्त्रनिकरं पृथ्व्यां क्षणेनोज्झति ॥ शत्रुं स्तौति तृणांगुलीदलमदन् कंपी पतन्धावति स्तब्धेत्थं बहुलोकनिंदितदशां संप्रापयिष्याम्यहम् ॥ २६ ॥ गाथा तिष्ठतु भूप संप्रति भवान् निद्राति किं निद्रितः स्वप्नं शोभनमेव पश्यति रिपुं किं नानिशं शंकते ॥ धैर्यं किं हृदि संदधात्यनुचरान्धीरान्किमुद्वीक्ष्यते स्वैरं मद्दशमानसस्य भवतः सौख्यं क्व सौख्यार्थिनः ॥ २७ ॥

सायुधत्वेनावस्थानेशत्रुर्मारयिष्यतीतिभीत्येतिभावः । तृणानिचांगुलीदलानिचतृणांगुलीदलंएकवद्भावः । अदन्भक्षन्शत्रुंस्तौतिकथंचिच्छत्रुणामुक्तःकंपी कंपवान्पतन्धावतिपलायनंकरोति । पृष्ठतःपलायमानोपिनसुखंलभतइतिभावः। इत्थमनेनप्रकारेणबहुलोकनिंदितदशांलोकगर्हितावस्थांअहंप्रापयिष्यामी तिभयदूतवचनम् ॥ २६ ॥ गाथेति । हेभूपकंसगाथालोककथातिष्ठतु।त्वय्येवसर्वंमत्कृतविकारंविचारयेत्याह । संप्रतीति । भवान्संप्रतिइदानींमदुज्जृंभण कालइत्यर्थः।निद्रातिकिंनिंद्रांगच्छतिकिं । कथंचननिद्रितःशोभनमेवशुभसूचकमेवस्वप्नंपश्यति।किंकिंकरिष्यामीतिचिंतयासुप्तस्यतादृशःस्वप्नोजायतइतिभा वः । स्वप्नमित्युपलक्षणं । अदर्शनंस्वशिरसःप्रतिरूपेपुसत्यपिइत्यादिभागवतोक्तजाग्रत्स्वप्नदशादृष्टसमस्तारिष्टदर्शनमपियाह्यम् । रिपुमनिशंनशंकतेकिं । हृदि

धैर्यंसंदधातिकिंअनुचरान्त्वद्भृत्यान्धीरान्धैर्यवतःपुरुषान्उद्वीक्ष्यतेकिं । स्वैरंमद्वशमानसस्यमदधीनचित्तस्यभययस्तचित्तस्येत्यर्थः । सौख्यार्थिनोभवतःसौख्यंसुखंक्व । कंसस्यैवभयातिशयादेवमुक्तमितिज्ञातव्यम् ॥२७॥ भयदूतवचनंसमापयति । इत्थमिति । इत्थमनेनप्रकारेणसाध्वसेनभयेन । भीतिर्भीःसाध्वसंभयमित्यमरः । संदिग्धाकोटिद्वयावलंबिनीबुद्धिर्यस्यसःकंसःनिद्रांनाध्यगात्नप्राप्तवान् । लब्धनिद्रोदुःस्वप्नैःमरणसूचकैःस्वप्नैःस्पर्धयाउन्नद्धःउद्रिक्तःसन्व्यबोध्यत प्रबोधंप्रापितवान् ॥ २८ ॥ ततइति । ततोनंतरमर्कःसूर्यःतमिस्रंतिमिरंपरिहर्तुंअभ्रगराजमार्गंआकाशगतचंद्रमार्गंसमाससाद । चंद्रास्तमये तन्मार्गेसूर्यःसमागतइत्यर्थः । स्वकैःस्वहस्तैःअसत्तमिस्रंदुर्जनांधकारंजिहीर्षुःगोपैःसहराजमार्गंमथुरापुरींसमाससाद ॥ २९ ॥ गच्छन्निति । गजवतूरम्याग

इत्थं साध्वससंदिग्धबुद्धिर्निद्रां न सोऽध्यगात् ॥ लब्धनिद्रोऽपि दुःस्वप्नैः स्पर्द्धोन्नद्धो व्यबोधत ॥२८॥ ततस्तमिस्रं परिहर्तुमर्कः समाससादाभ्रगराजमार्गम् ॥ असत्तमिस्रं स्वकरैर्जिहीर्षुर्हरिश्च गोपैः सह राजमार्गम् ॥२९॥ गच्छन्विलोक्य गजरम्यगतिः स रंगद्वारि स्थितेभमथ हस्तिपमित्यवोचत् ॥ मार्गं प्रदेहि करिणा सह दूरमेहि नोचेत्प्रयास्यसि विदूरकृतांतलोकम् ॥ ३० ॥ भो तिष्ठ तिष्ठ वनवासिजनैकमान्य प्रौढिर्बलं कुशलमस्ति न तादृशं ते ॥ यादृग्विदग्धपुरवासिजनेषु शत्रुसंदर्भकेसरिसमेषु जितश्रमेषु ॥३१॥

तिर्गमनंयस्यसतथोक्तः । गच्छन्कृष्णःरंगद्वारिमल्लयुद्धकरणद्वारेस्थितेभंस्थितगजंविलोक्य अथविलोकनानंतरंइतिवक्ष्यमाणप्रकारेणहस्तिपंयंतारमवोचत् उक्तवान् । हेहस्तिपमार्गंअंतःप्रवेष्टुंपंथानंप्रदेहि । करिणासहगजेनसाकंदूरमेहिगच्छ । नोचेत्मार्गंविहायाल्पदूरंनगच्छसिचेत्तर्हिविशेषेणदूरःकृतांतस्ययमस्यलोकस्तंप्रयास्यसिगमिष्यसिनोचेद्धनिष्यामीतिभावः ॥ ३० ॥ अल्पदूरागमनेबहुदूरगमनंस्यादितिकृष्णवाक्प्रौढिमसहमानःअंबष्ठःअधिक्षिपन्नाह । भोतिष्ठेति । भोवनवासिजनैकमान्यकेवलवनवासिजनैकमान्यवनेसंचरतःगोपालस्यतवप्रौढिर्नास्तीतिभावः । श्रीकृष्णतिष्ठतिष्ठ । आक्रोशेनद्विरुक्तिः । तेतवतादृशीप्रौढिःतादृशंबलंसत्वंतादृशंकुशलंकर्मकौशल्यंचनास्ति । शत्रुसंदर्भस्यशत्रुसमूहस्यकेसरिसमेषुसिंहसदृशेषुजितश्रमेषुसदाभ्यासेनजितालस्येषु

विदग्धेषुप्रौढिषुपुरवासिजनेषुयादृक्प्रौढ्यादिकंतादृशमितिपूर्वेणान्वयः ॥ ३१ ॥ एवमधिक्षिप्तःकृष्णःअन्यस्यप्रौढिःकिंवक्तव्या । मदधिक्षेपार्थमुक्तेअस्मिन्वचनेतत्प्रौढिंपश्यतेत्याह । प्रौढिमिति । हेजनाःमंदमतेःअस्यांबष्टस्यप्रौढिंविचारयतपश्यतस्वस्थहस्तिनोगजस्यविध्वंसनेहननेउद्यतकरस्यगजरिपुत्वेन सिंहसमस्यममवनेनिवासःअवस्थानंदूषणंकिं । सिंहस्यवनेस्थितिरेवोचितेतिभूषणमित्यर्थः । विमतेषुशत्रुषुकेसरिसंवासःअवस्थानंभूषणंकिं । नगरेनिवासे सतिस्वेषांग्रामसिंहत्वापत्तेर्दूषणमेवेतिभावः ॥ ३२ ॥ प्रौढिरिति । विभुःसमर्थःश्रीकृष्णःअस्मदीयप्रौढिस्तथास्तुतथातिष्ठतुअस्मदीयंबलंचकौशलंचबलकौशलंएकवद्भावः । पश्येतिउदीर्यउक्त्वातरसाबलेनकरिणंगजंनिहत्यतस्यकरिणःअंघ्रीणांमध्येअधिगम्यप्राप्यविलिल्येनिलीनोऽभवत् । तदाकृष्णकरताड

प्रौढिं विचारयत मंदमतेः स्वहस्तिविध्वंसनोद्यतकरस्य वने निवासः ॥ किं दूषणं विमतकेसरिसंमितानां किं भूषणं प्रतिदिनं नगरे निवासः ॥ ३२ ॥ प्रौढिस्तथास्तु बलकौशलमस्मदीयं पश्येत्युदीर्य तरसा करिणं निहत्य ॥ तस्यांघ्रिमध्यमधिगम्य विभुर्विलिल्ये हस्ती व्यकंपत तदा जगृहे न शौरिम् ॥ ३३ ॥ पुच्छे प्रगृह्य पुरुसत्वममुं पुनश्च कृष्णश्चकर्ष बहुदूरमपारशक्तिः ॥ धावन्विभुर्निजविपातविशंकिनोस्य भूलग्नदंतयुगलं शिथिलीचकार ॥ ३४ ॥

नेसतिहस्तीव्यकंपत । अनेनबलंप्रदर्शितं । शौरिंश्रीकृष्णंनजगृहेनगृहीतवान् । अनेनकौशलंप्रदर्शितंभवति ॥ ३३ ॥ प्रकारांतरेणबलंकौशलंचप्रदर्शयति । पुच्छइतिअपाराअपरिमिताशक्तिःसामर्थ्यंयस्यसतथोक्तःश्रीकृष्णःपुरुसत्वममुंगजंपुच्छेप्रगृह्यबहुदूरंचकर्ष।अनेनापिबलंप्रदर्शितम् । धावन्गजाग्रेधावनंकुर्वन् विभुःकृष्णःनिजस्यस्वस्यविपातंअल्पपातेपिविशेषेणपातंविशंकतइतिसतथोक्तः । तस्यास्यगजस्यलाघवेनकिंचित्पतितत्वात्क्षणएवोत्थितस्यस्वस्यविपातमाशंकमानस्येत्यर्थः । भूलग्नदंतयुगलंश्रीकृष्णताडनार्थंस्वसत्वेनभुविनिक्षिप्तदंतयुगलंशिथिलीचकार । दंतमूलयोःशैथिल्यंसंपादयामास । अनेनकौशलं प्रदर्शितम् ॥ ३४ ॥

कृष्णमिति । कृष्णंभुविपतितंविशंक्यसंहतेकृष्णसत्वताडनार्थंभुविक्षिप्तेआत्मदंतेअनुषक्तासंबद्धाबह्वीधूलिर्यस्यसतथोक्तः । इभःगजःसिद्धाजाताआत्मनोगज स्यबुद्धिःतस्याःसिद्धिःफलंयस्यसइवतादृशमिथ्याज्ञानिनोवदनेधूलिपातस्यफलत्वादितिभावः। अंबरस्थसिद्धेश्वराणांस्तुतिगिराश्रीकृष्णविषयगिरापथिमार्गेव र्ण्यमानःश्रीकृष्णविषयकमिथ्याज्ञानेनैवगजमुखेधूलिपातोजातइत्यभिवर्ण्यमानःइभोगजःविरेजे ॥३५॥ इत्थमिति । अंबुजाक्षःश्रीकृष्णःइत्थमुक्तप्रकारेण बलकौशलंप्रदर्श्यदर्शयित्वा । करिणंकुवलयापीडंपद्भ्यांपादाभ्यांतरसाप्रपीड्यममर्दमर्दयामासापादघातेनाहिंसितवानित्यर्थः । उत्खातउन्मूलितःतस्यइभस्यध वलदंतःकरेयस्यसतथोक्तःसःकृष्णःलीलयैवक्षणेनतत्स्वामिनंहस्तिपंतदनुगांस्तत्परिचारकांश्चममर्दकरस्थदंतेनैवाहिंसितवानित्यर्थः ॥ ३६ ॥ पादेति । तस्यकृ

कृष्णं विशंक्य पतितं भुवि संहतात्मदंतानुषक्तबहुधूलिरिभो विरेजे ॥ सिद्धात्मबुद्ध्युचितसिद्धिरिवांबर स्थसिद्धेश्वरस्तुतिगिरा पथि वर्ण्यमानः ॥ ३५ ॥ इत्थं प्रदर्श्य बलकौशलमंबुजाक्षः पद्भ्यां प्रपीड्य तर सा करिणं ममर्द ॥ उत्खाततद्धवलदंतकरः क्षणेन तत्स्वामिनं तदनुगांश्च सलीलयैव ॥ ३६ ॥ पादप्र हारविवशः किल वारणोसौ कुर्वन्पपात भुवि नाम गुणानुकूलम् ॥ तस्यांघ्रिसंगिसहजांकुशरम्यरेखा शंकीव कंपितमहीधरभूप्रदेशः॥ ३७ ॥ अंसस्थदंतपरिशोभितरक्तबिंदुसंसक्तनिर्मलतनुर्हरिराबभासे ॥ रक्षोविदारणविलासधृतांत्रमालावक्षस्थलाद्भुतनृसिंहइव द्विपारिः ॥ ३८ ॥

ष्णस्यअंघ्रौसंगतानांसहजांकुशरम्यरेखानांस्वाभाविकांकुशमनोहररम्यरेखानांशंकतइतितथोक्तः । अंकुशरेखातोभीतइवेत्यर्थः । पादप्रहारेणश्रीकृष्णचरण ताडनेनविवशःअसौवारणोगजः। कंपिताःस्वपातेनचालिताःमहीधराःपर्वताःभूप्रदेशःभूभागोयेनसतथोक्तःअतएवस्वनामकुवलयापीडइतिअभिधां। गुणानुकू लगुणंकोःपृथिव्याःवलयंमंडलंआसम्यक्पीडयतीतिलब्धगुणानुकूलंकुर्वन्भुविपपात ॥ ३७ ॥ अंसस्थेति । अंसस्थस्यस्वकंधरस्थस्यदंतस्यउत्खातिमूल प्रदेशस्यपरिसमंतात्शोभितंरक्तंतस्यबिंदुभिःसंसिक्तानिर्मलातनुर्यस्यसतथोक्तःद्विपारिःगजरिपुः कृष्णःरक्षसःहिरण्यकशिपोःविदारणाख्यविलासेनधृतांत्रमा लायेनतद्वक्षस्थलंयस्यसतथोक्तः । अद्भुतनृसिंहइवाबभासे ॥ ३८ ॥

लोकद्वयेति । द्विषतांद्वेषिणांलोकद्वयेइहपरत्रभोक्तव्यस्यसुखसमूहस्यप्रत्यूहःविघ्नोयाभ्यांताविवविघ्नेश्वराविवेत्यर्थः । विघ्नोंतरायःप्रत्यूहइत्यमरः । एकैकोदंतोययोस्तौ । उद्धृतगजदंतमध्येएकस्यदंतस्यबलभद्रेणधारणात्अपरस्यकृष्णेनधारणात्अश्रांतौश्रमरहितौविभूसमर्थौबलरामश्रीकृष्णौरंगमल्लयुद्धस्थलंविविशतुःप्रविष्टवंतौ । अप्येकदंतहेरंबलंबोदरगजाननाइतिविनायकस्याप्येकदंतत्वात्तथाभूताविवद्वौविनायकाविवस्थितावितिभावः ॥ ३९ ॥ ततइति । ततोरंगप्रवेशानंतरंश्रीकृष्णरामयोःमल्लाभ्यांचाणूरमुष्टिकाभ्यांसहख्यातयोःसिंहयोस्तयोर्मत्ताभ्यांगजाभ्यामिवयुद्धंप्रवव्रतेप्रवृत्तम् ॥ ४० ॥ स्वभक्तिरिति । श्रीकृष्णःस्वभक्तिःसंसारमिवचाणूरमभ्यगात् । युद्धंकर्तुमभिमुखेनागमत् । रोहिण्याःसुतोबलरामोतज्ज्ञानंश्रीकृष्णमाहात्म्यज्ञानंपापौघमिवमुष्टिकमभ्यगात् । मयिभक्तिर्लोकानाममृतत्वायकल्पते । ज्ञानाग्निःसर्वकर्माणिभस्मसात्कुरुतेऽर्जुनेत्याद्युक्तमाहात्म्यं । एतादृशस्यश्रीकृष्णस्यनेमौप्रतिभटाविति‌चख्यापयितुमेवंदृष्टांतोक्तिः ॥ ४१ ॥ अपीति । विविधंतदीयंचाणूरमुष्टिकसंबंधिअभ्यासकौशल्यमपिअव्यग्राअनुद्विग्नामतिर्ययोःसर्वज्ञयोरित्यर्थः । फणिपतिर्बलरामःश्रीयदुपतिःश्रीकृष्णःतयोरग्रतःपुरतःगतफलंनिष्फलमासीत् । तथाहि । अनवस्थाअतिप्रयत्नेनाभ्यस्तविद्यासहजतेजोबुद्धिभाजांस्वाभाविकसामर्थ्यज्ञानेभजंतइतितथोक्ताःतेषामग्रेफलतिकिंअभ्यस्तविद्यायाःविस्मरणसंभवात् । परिमितत्वाच्च । स्वाभाविकविद्यायाअपरिमितत्वाद्विस्मरणासंभवाच्चेतिभावः ॥ ४२ ॥

लोकद्वयसुखव्यूह प्रत्यूहौ द्विषतामिव ॥ एकैकदंतावश्रांतौ रंगं विविशितुर्विभू ॥ ३९ ॥ ततः प्रववृते
युद्धं मल्लाभ्यां रामकृष्णयोः ॥ गजाभ्यामिव मत्ताभ्यां ख्यातयोः सिंहयोस्तयोः ॥ ४० ॥ स्वभक्तिरिव
संसारं कृष्णश्चाणूरमभ्यगात् ॥ तज्ज्ञानमिव पापौघं मुष्टिकं रोहिणीसुतः ॥ ४१ ॥ अपि विविधतदी
याभ्यासकौशल्यमासीत्फणिपतियदुपत्योरग्रतो व्यग्रमत्योः ॥ गतफलमतियत्नाभ्यस्तविद्यानवस्था फ
लति सहजतेजोबुद्धिभाजां किमग्रे ॥ ४२ ॥

अंगेति । श्रीकृष्णःसमरेयुद्धेअंगालिंगनेशरीराश्लेषेतत्परस्यआसक्तस्य । मल्लाअभ्यासेनांगमाश्लिष्यपातयंति। आलिंगनंसत्कारश्च । अतएवसत्कृतिमितिअर्थांतरंन्यस्यति । चरणस्पर्शेपादग्रहणेउद्यतस्योद्युक्तस्य । मल्लाअपिपादंगृहीत्वापातयंति । पादस्पर्शस्तुनमस्काररूपसत्कारश्च । अलमत्यर्थंनम्रस्य । मल्लास्तुस्वांगंपराग्राह्यंकर्तुंअवनताश्चरंति । नम्रीभावोपिसत्कारइत्यमरः । स्वंस्वात्मानंपरितःउपेयिषोपि । मल्लाःप्रतिमल्लग्रहणावसरसाधनायमंडलाकारेणचरंतिपरितःसंचरणंप्रदक्षिणरूपसत्कारश्चभवति । चाणूरनाम्नोमल्लस्यवशेनाभूत् । संकर्षणश्चमुष्टिकवशेनाभूत् । दुष्टैर्वंचनयापरघातकैराचरितांअतएवमृत्युप्रदांसत्कृतिंआलिंगनभोजनसत्कारंअत्रलोकेमतिमान्बुद्धिमान्विश्वसेत्किंनविश्वसेदित्यर्थः ॥ ४३ ॥ अशनिसमेति । अशनिसमःवज्रप्रहारसमःकठोरस्यमल्लस्य

अंगालिंगनतत्परस्य चरणस्पर्शोद्यतस्याप्यलं नम्रस्य स्वमुपेयुषोपि परितश्चाणूरनाम्नो वशे॥ कृष्णोभून्न च मुष्टिकस्य समरे संकर्षणः सत्कृतिं दुष्टैराचरितां किमत्र मतिमान्मृत्युप्रदां विश्वसेत् ॥ ४३ ॥ अशनिसमकठोरमल्लघातो मृदुनि हरेरफलः कलेवरेभूत् ॥ मृदुसरसकवेः पुरः किमीड्या कठिनपदप्रियकाव्यकार शीला ॥ ४४ ॥ तल्लभ्यां जयकामिनीमिव लषन्पादौ गृहीत्वा रिपोस्तत्कालार्हमिव भ्रमं प्रतिदिशंस्तं भ्रामयित्वा मुहुः ॥ तन्मूर्धानमताडयत्क्षितितले दुष्टेभपंचाननस्तस्याभ्याससमेधितां कठिनतां पश्यन्निवांगे द्विषः ॥ ४५ ॥

घातःहस्तघातःमृदुनिमार्दवोपेतेहरेःश्रीकृष्णस्यकलेवरेकायेअफलःनिष्फलोभूत् । तथाहि । मृदुसरसकवेःमृदोरकठिनपदप्रयोक्तुःकवेःपुरःपुरतःकठिनपदप्रियकाव्यकारशीलाईड्याकिंस्तुत्याकिं । अतएवनीरसतरुरिहविलसतिपुरतइतिमृदुकविकाराग्रेशुष्कोवृक्षस्तिष्ठत्यग्रइतिकठोरकवीनांसंतोनमानयंतिनिदर्शनालंकारः ॥ ४४ ॥ तल्लभ्यामिति । दुष्टेभपंचाननःदुर्जनगजसिंहःप्रभुःश्रीकृष्णःतस्यचाणूरस्यपादौगृहीत्वापादग्रहणादिपूर्वकंकन्यायाग्राह्यत्वादितिभावः । कन्यार्थिनोहिपादग्रहणादिनास्नेहंसंघट्टयंति । तत्कालार्हंअसुरवधकालार्हंकन्यानयनकालार्हंचभ्रमंपरितोभ्रमणंविपरीतज्ञानंच । मरणकालेदैत्याःविपरीत

मतयोभवंतीतिप्रसिद्धिः । चित्तवैकल्यंचप्रतिदिशन्निवतंरिपुंमुहुःभ्रामयित्वाअभ्यासेनसमेधितांअभिवर्द्धितांतस्यद्विषःचाणूरस्यांगेकठिनतांकाठिन्यंपश्यन्निवक्षितितलेतस्यमूर्धानमताडयत्इत्युपहासोक्तिः ॥ ४५ ॥ बालेति । सःपृथ्व्यांचूर्णितोमल्लस्यमूर्धाअन्यलोकगमनायउद्यतस्यभीतोत्तंसस्यभीतश्रेष्ठस्यमहाभीतस्येत्यर्थः । कंसस्यपरिपंथिसुशांत्यैविघ्नपरिहारायबालमल्लस्यकृष्णस्यकरेणचूर्णितंभास्वन्नारिकेलफलंतस्यतुलनांसाम्यंजगाम । यथाराज्ञोयात्रादौविघ्नपरिहारायतदाश्रितमल्लानारिकेलफलानिचूर्णयंतितथेत्यर्थः । एतन्मरणानंतरंकंसःशीघ्रंमरिष्यतीतिभावः ॥ ४६ ॥ पदोरिति । मल्लवरंमल्लश्रेष्ठंपदोःपादयोःप्रगृह्यधरण्यांप्रसभंबलात्निपात्यचूर्णयन्प्रौढपतिःसःश्रीकृष्णःसहोदराणांदेवकीशिशूनांउन्मूलनकर्मकंसकृतचूर्णितकर्मतस्ययोग्याउचिताप्रतिक्रि

भालमल्लकरचूर्णितभास्वन्नारिकेलतुलनां स जगाम ॥ अन्यलोकगमनोद्यतभीतोत्तंसकंसपरिपंथिसुशांत्यै ॥ ४६ ॥ पदोः प्रगृह्य प्रसभं निपात्य संचूर्णयन्मल्लवरं धरण्याम् ॥ सहोदरोन्मूलनकर्मयोग्यप्रतिक्रियां प्रौढपतिः प्रचक्रे ॥ ४७॥ बलस्य तलघातेन नष्टं मुष्टिकमीक्षितुम् ॥ ह्रियेव चूर्णितं रेजे चाणूरस्य शिरःपुरा ॥४८॥ नमे मुष्टिप्रहारस्य लक्ष्योयमिति लक्षयन् ॥ बलारिं तलघातेन स जघानाथ मुष्टिकम् ॥४९॥ कृष्णं मन्नगराद्बहिष्कुरुत तत्पक्षैः समं मद्भटा नंदं मारयताशु मर्दयत तं हीनोग्रसेनं भुवि ॥ कंसेनेत्थमुदीरिते खिलखलश्रेणीवनोग्रानलस्तस्याज्ञाधरवज्जगाम सुजनस्तोमांतकस्यांतकम् ॥ ५० ॥

याप्रत्युपकारःतांचक्रे । येसाधूनिरपराधान्वृथाबाधंतेतेषांहरिरेवबाधकोभवतीतिभावः॥४७॥ बलस्येति । बलस्यबलरामस्यतलघातेनहस्ततलताडनेननष्टंमृतंमुष्टिकंईक्षितुंद्रष्टुंह्रियेवलज्जयेवस्वसमानबलस्यमल्लस्यसलीलंतलघातमात्रेणवधंद्रष्टुंलज्जयेवेत्यर्थः । पुरापूर्वंचूर्णितंचाणूरस्यशिरःरेजे ॥ ४८ ॥ नेति । रामोबलभद्रःमन्मुष्टिप्रहारस्यममपुष्टिप्रहारस्यअयंमुष्टिकःलक्ष्योनभवति । अतिप्रबलमुष्टेर्दुर्बलोयंनविषयइत्यर्थः । इतिलक्षयन्अपार्थनामकंनिरर्थनामकंमुष्टितलेनकरतलेनजघान । मुष्टिःकेशिरसियस्येतिव्युत्पत्त्यातन्नामाऽन्वर्थकंनामभवेदित्यतोनमुष्टिनाजघानतलेनजघानचूर्णितवान् ॥ ४९ ॥ कृष्णमिति । हेमद्भटाःश्रीकृष्णंमन्नगरात्मदीयमधुरापुरात्तत्पक्षैःश्रीकृष्णपक्षीयैःगोपैःसमंसहबहिःकुरुत आशुनंदंनंदगोपंमारयत । तंहीनश्वासावुग्रसेनश्चतंभुविमर्दयत ।

कंसेनेत्थंउदीरितेसतिअखिलखलश्रेण्येववनंतस्योग्रानलःतीक्ष्णदहनःश्रीकृष्णःतस्यकंसस्यआज्ञाधरवत्उक्तकारीवमरणमधुरात्यक्त्वागच्छतःकंसस्यसामधुरामन्नगरशब्देननाभिप्रेताअपितुस्वनाशेनसहविनाश्यस्वशरीरमेवमन्नगरपदेनाभिप्रेतं । अस्माच्चनगरात्स्वीयैस्तत्वाभिमानिदेवैःसहश्रीकृष्णस्यबहिर्निस्सरणं तन्मरणमेवयतःअतःतत्कृतेकंसससमीपंगच्छन्कृष्णस्तदाज्ञाधरइवभवति । एवंनंदंमारयतेत्यत्रकंसभटानांप्रथममेवमृतत्वात्भटाइतिस्वभटान्प्रतिआदेशासंभवात्भटानामानंदंभटानंदमित्येवार्थोलभ्यते । तन्मारकत्वादपि श्रीकृष्णःआज्ञाधरइव । हीनोग्रसेनंमर्दयतेत्यत्रापिकंसोग्रसेनयोरपिविनाशेऽराजकत्वापत्तेः । हीनश्चासावुग्रसेनश्चेतिनार्थः । किंतुहीनदैत्यरूपतयाउग्रासेनापूतनादिरूपायस्येतिव्युत्पत्त्याकंसएवलभ्यतेतन्मर्दनार्थंश्रीकृष्णआज्ञाधरइववसुजनस्तोमांतकस्यसज्जनसमूहहिंसकस्यांतिकंसमीपंजगाम । इममेवभावंकृष्णोबहिराजगामेत्युत्तरपद्येस्फुटीकरिष्यति ॥ ५० ॥ तदेति । तदाकृष्णागम

तदा मदांधाः परिवव्रुरेनं चमूभिरन्ये चतुरंगिणीभिः ॥ यथा पतंगा ज्वलनं ज्वलंतं तमःसमूहस्तरणिं यथा वा ॥ ५१ ॥ रणे पदाभ्यां चरतो मुरारे रथं ससूतं स सहस्रनेत्रः ॥ समादिशत्स्वाभ्युदयप्रदस्य परस्य सेवां भुवि कर्तुकामः ॥ ५२ ॥ अथो रथाग्र्योऽवततार नाराद्वतः शशीवातिविचित्ररत्नः ॥ मुकुंदसंदर्शनधूतपापं मुनिं खलान्नेतुमिवोर्ध्वलोकम् ॥ ५३ ॥

नसमयेमदेनगर्वेणांधाःपूर्वोक्तरानभिज्ञाःअन्येउर्वरिताःकेचित्कंसभटाःचत्वारिहस्त्यश्वरथपदात्याख्यानिअंगानियासुसंतीतिचतुरंगिण्यःताभिश्चमूभिःसेनाभिरेनंकृष्णंपरिवव्रुःपरितोभिजग्मुः । तत्कथमिव पतंगाइवशलभाइवज्वलंतंज्वलनंअग्निंयथा । तमःसमूहस्तरणिंयथातथेत्यर्थः । अनेनकंससेनायाएवपराभवो नतुश्रीकृष्णस्येतिसूचितम् ॥ ५१ ॥ रणइति । सहस्रनेत्रःइंद्रःरणेयुद्धेपदाभ्यांचरतःसंचरतःस्वाभ्युदयप्रदस्यमुरारेःश्रीकृष्णस्यभुविसेवांकर्तुकामःसन्ससूतं सारथिसहितंरथंसमादिशत् ॥ ५२ ॥ अथोइति । अतिविचित्राणिरत्नानियस्यसतथोक्तः । नाराद्वतःनक्षत्राद्वतःशशीचंद्रइवस्थितःरथाग्र्यःरथश्रेष्ठःमुकुंदस्य कृष्णस्यसंदर्शनेनधूतपापंनिर्धूतदुरितंकंसाविष्टभृगुमुनिं । कंसाविष्टोभृगुःस्वयमितिवचनात् । खलात्दुष्टकंसात्ऊर्ध्वलोकंनेतुमिवावततारआजगाम ॥ ५३ ॥

सहस्रनेत्रइति । सइंद्रःसहस्रनेत्रःअनिमिषाणांनिमेषरहितानांप्रभुःशतंक्रतवोयस्यसशतक्रतुःवज्रधरश्चलोकेभवति । यःसुपावनींअतिशयेनपवित्रां । अनेनशतक्रतुत्वमुपपादितम् । शतधारस्यवज्रस्यधुरंवहतीतितांशतधारधुर्यांसेवकानांवज्रपुंजभूतामित्यर्थः । अनेनवज्रधरत्वमुपपादितंभवति । हरेःश्रीकृष्णस्यसपर्यांपूजांक्षणशःक्षणेक्षणेसहस्रसंख्याकदैत्यानांवधकालइत्यर्थः ।अनेनसहस्रकार्याणांयुगपत्प्रतीक्षणात्सहस्रनेत्रत्वमनिमिषप्रभुत्वमुपपादितम्॥ ५४॥रथमिति । देवदेवःश्रीकृष्णःरथंइंद्रदत्तरथंसमारुह्यहस्त्यश्वरथपदातिभिःपीनांपूर्णांसपत्नसेनांजघान । किंचपरितःस्थितानांआत्मीयानांस्वभक्तानांमनोरथस्थःसन्दु

सहस्रनेत्रोऽनिमिषप्रभुः सह शतक्रतुर्वज्रधरो हि लोके॥ सुपावनीं यः शतधारधुर्यां हरेः सपर्यां क्षणशः
करोति ॥ ५४ ॥ रथं समारुह्य सपत्नसेनां जघान हस्त्यश्वपदातिपीनाम् ॥ परिस्थितात्मीयमनोरथस्थो
दुरिष्टसेनामपि देव देवः ॥ ५५॥ शरैः करोर्वंघ्रिशिरोधरादींश्चकर्त शस्त्रास्त्रविदां रिपूणाम् ॥ स्वयं मुदोन्मी
लितलोचनांतशरैस्तदाऽताड्यत कामिनीनाम् ॥ ५६ ॥ चिरं पुरा वैष्णवसेवनेन मुकुंदसामीप्यफलं
प्रपन्नः ॥ स मातलिस्तस्य विचित्रवीर्यमभून्निरीक्ष्योभयथाऽपि सूतः ॥ ५७ ॥

रिष्टसेनांतत्पापसेनामपिजघान । तदाश्रीकृष्णद्रष्टृणांसज्जनानांसमस्तपापक्षयोजातइतिभावः॥ ५५॥शरैरिति । सकृष्णःशस्त्रास्त्रंआमंत्रितायुधंतद्विदांरिपूणांकरोर्वंघ्रिशिरोधरादीन् । शिरोधरःकंठः।शरैश्चकर्तचिच्छेद । तदास्वयंश्रीकृष्णःकामिनीनांमुदासंतोषेणउन्मीलिताःविकसिताःलोचनांताःकटाक्षाःतैरताड्यत । कामिनीभिःसस्नेहमीक्षितइतिभावः॥५६॥ चिरमिति । पुराचिरंबहुकालंवैष्णवस्येंद्रस्यसेवनेनमुकुंदस्यश्रीकृष्णस्यसामीप्यंसमीपगमनलक्षणंफलंप्रपन्नःप्राप्तःसमातलिरिंद्रस्यसूतःतस्यकृष्णस्यविचित्रवीर्यंयुद्धेहस्तलाघवाद्भुतपराक्रमंनिरीक्ष्यउभयथापिरथेनगुणस्तोतृतयाऽभूत् । सूतौसारथिबंदिनावितिभास्करः ॥ ५७ ॥

धात्रीमिति । गाढतमसेअंधतमसायतंकंसंक्रमात्क्रमेणसंप्रेषयिष्यन्श्रीकृष्णःप्राक्परिपोषणायधात्रींपूतनांविलासायचपतगंबकंवातंतृणावर्तंचराजानःपक्षि मंदमारुतेनक्रीडंतेतान्हस्तगतान्वत्सोवत्सासुरःअनःशकटासुरःवृषःवृषभासुरःधेनुकोरासभासुरश्चतेआदयोयेषांतेदितिजाःदैत्यास्तस्यकंसस्यभारवोढानिवभार वाहकानिवमातुलकृतेकंसस्यकृतेआरोहणवस्त्रक्षालनांगमर्दनार्थं। अश्वेभौकेशिकुवलयापीडौरजकमल्लांश्चसंप्रेष्यतत्सेनांकंससेनांसंप्रेषयतिस्म। श्रीकृष्णनिह ताःकंससंबंधिनःसर्वेप्यंधंतमःप्रापाइतिभावः ॥५८॥ विस्तीर्णैरिति । सारंगभूमिःयुद्धरंगभूमिः । मृधेयुद्धेविस्तीर्णैःपृथिव्यांविकीर्णैःवराःश्रेष्ठाःहाराःचामराणि सितच्छत्राणिश्वेतातपत्राणितान्यादीनियेषांतानितैर्वित्तैःद्रव्यैःसिताक्कचित्स्रस्तमुक्तग्रंथिःकचःकेशभारःअसिःखड्गःनीलमणयःइंद्रनीलमणिरत्नानितैर्नीलाक्क

धात्रीं प्राक्परिपोषणाय पतगं वातं विलासाय तान्वत्सानोवृषधेनुकादिदितिजांस्तद्भारवोढानिव ॥ अ
श्वेभौ रजकं च मातुलकृते संप्रेष्य मल्लांश्च तत्सेनां प्रेषयति स्म गाढतमसे संप्रेषयिष्यन्क्रमात् ॥ ५८ ॥
विस्तीर्णैर्वरहारचामरसितच्छत्रादिवित्तैः सिता नीला स्रस्तकचासिनीलमणिभिः सा रंगभूमिर्मृधे॥ रक्ता
रक्तचयेन हैमकवचाकल्पैश्च पीता सती नामाऽस्रक्सरिदोघमग्नकुणपा चक्रेऽनुकूलं तदा ॥ ५९ ॥ को
पाटोपवशेन रक्तनयनं तं खड्गचर्मोल्लसत्पाणिं पापमिवोत्पतंतममतं मूर्ध्नि प्रगृह्य प्रभुः ॥ पृथ्वीमेत्य
निपात्य विस्तृतकचं त्रस्तं चकर्षाऽच्युतः प्रेमप्राविलसाधुसंघनयनैः सानंदमालोकितः ॥६०॥

चित्रक्तचयेनाऽसृक्समूहेनक्कचिद्रक्ताहैमकवचाकल्पैःसुवर्णवर्माभरणैःक्कचित्पीतासतीआत्मनःस्वस्यानामरंगभूमिरितिनामअनुकूलंचक्रे। हरिद्रादिनानावर्ण वस्तुभिःरंजिताभूमिरित्युच्यते।ननुकुणपादीनाममंगलानांसत्वात्कथंरंगभूमित्वमित्यतआह।अस्रक्सरितांरक्तनदीनांआद्यप्रवाहेमग्नाःकुणपाःयस्यांसातथोक्ताब हुरक्तप्रवाहभारवशात्कुणपानांमग्नत्वेनेतिभावः ॥५९॥ कोपेति ॥ प्रभुःअच्युतःचतुर्विधनाशरहितः। श्रीकृष्णःकोपस्य क्रोधस्याटोपःसंभ्रमःतद्वशेनरक्तनयनं खड्गचर्मभ्यांउल्लसंतौपाणीयस्यतंउत्पतंतंकंसंपापमिवपापपुरुषमिवरक्तश्मश्रुविलोचनंखड्गचर्मधरंकृष्णमितिवचनात्पापपुरुषस्याप्येवंतदर्शत्वान्मूर्ध्निप्रगृह्यपृ

र्थिवींमेत्यनिपात्यविस्तृतकचंविस्तीर्णकेशंत्रस्तंभीतंकंसं प्रेम्णास्नेहेनप्राविलानिआर्द्राणिसाधुसंघनयनानितैःसानंदंयथातथाआलोकितःसन्चकर्षइतस्ततःक
र्षणंकृतवान् ॥ ६० ॥ कृष्णइति ॥ अथोऽनंतरंचक्षुःश्रोत्रमुखाक्षिपालनपरैःचक्षुःश्रोत्रादींद्रियपालनपरैःस्वीयैःस्वभक्तैःसुरैःसमेतःश्रीकृष्णःकंसस्यदेहाभिमा
ननगरात्बहिराजगाम ।इष्टान्जनान्नष्टान्मृतान्निरीक्ष्यविमतंशत्रुंश्रीकृष्णंअतिपुष्टंदृष्ट्वाभटानंदोपिक्षयमेयिवान्प्राप्तवान् । हीनाउग्रसेनायस्यसखलःकंस
श्चहतः । भावस्तुप्रागेवविवृतः ॥ ६१ ॥ कंसइति । अंतर्मतःगर्वाख्यःपर्वतश्रेष्ठोयेनसतथोक्तःनागायुतबलोहमित्यहंकारवानित्यर्थः । कंसःपोतस्यशिशोःश्री
कृष्णस्यघातेनहस्तघातेनाहतःसन्वक्त्रंदर्शयितुंसुलज्जितइवउग्रंक्रूरमंधंतमःपरस्परदर्शनशून्यंतमःप्रापययौ । द्विषाद्वेषिणाकंसेनयुक्तंमांहरिःकरुणयाऽग्रहीत्प्र

कृष्णोथो बहिराजगाम नगरात्कंसस्य देहाभिधाच्चक्षुःश्रोत्रमुखाक्षिपालनपरैः स्वीयैः समेतः सुरैः ॥
नष्टानिष्टजनान्निरीक्ष्य विमतं दृष्ट्वातिपुष्टं भटानंदोपि क्षयमेयिवान्सच खलो हीनोग्रसेनो हतः ॥
॥ ६१ ॥ कंसोंतर्मतगर्वपर्वतवरः पोतस्य घाताहतो वक्त्रं दर्शयितुं सुलज्जित इव प्रापोग्रमंधं तमः ॥
अन्यः श्रीरमणस्य धाम सुमहस्तोमं जगाम द्विषा युक्तं मां हरिरग्रहीत्करुणयेत्याश्राव्यभाव्योत्सवः
॥ ६२ ॥ संचूर्णितांगान्कतिचिच्च हत्वा छिन्नांगसंधीन् पतमानकंसम् ॥ जघान कायं परिरभ्य
दोर्भ्यां पत्न्या रुदंत्या इव दर्शयिष्यन् ॥ ६३ ॥

हीतवानितिआश्राव्यःसर्वजनश्रवणयोग्यःभाव्यःशोभनःउत्सवोयस्यांसोन्यःकंसाविष्टोभृगुःमहसांशोभनकांतीनां कांत्युत्सवौतुमहसीइत्यमरः। स्तोमःसमूहो
यस्मिन्तत्श्रीरमणस्यलक्ष्मीपतेर्धामजगामयथामहोत्सवेवीथ्यांस्वात्मानंदोर्भ्यांबाहुभ्यांपरिरभ्यआलिंगनंकृत्वारुदंत्यःअधःपतनवेगेनैवतथेतिभावः ॥ ६२ ॥
संचूर्णेति । सकृष्णःकतिचित्चाणूरादीन्संचूर्णितांगान्सम्यक्चूर्णितशरीरान्कतिचिच्चकांश्चिच्छिन्नांगसंधीन्शकलीकृतहस्तपादाद्यवयवान्हत्वाकंसंगतासुं
चकारेतिभावः ॥ ६३ ॥

यमिवंदेति । यमिवंदमनश्चंद्रइवचंद्रस्तन्मनस्तापशांतिकृदित्यर्थः । श्रीकृष्णस्यश्रमाभावेहेतुरिदंविशेषणं । श्रीकृष्णःलोकदृष्ट्याश्रमंपरिहरन्निवांजसाविमली
कर्तुंस्वपादस्पर्शनादिनानिर्मलीकर्तुंयमुनाकूलमगमत्प्राप ॥ ६४ ॥ रोम्णामिति । उक्तोऽर्थः ॥ ६५ ॥ इतिश्रीवादिराजतीर्थचरणविरचितस्यरुक्मिणी





यमिवंदमनश्चंद्रः श्रमं परिहरन्निव ॥ यमुनाकूलमगमद्विमलीकर्तुमंजसा ॥ ६४ ॥ रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्र विमल श्लाघ्यार्थसंदायिनि ॥ संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातः सुरमंडलीषु महितः सर्गोऽयमेकादशः ॥ ६५ ॥ इति श्रीमद्वादिराजोदिते रुक्मिणीशविजये एकादशः सर्गः ॥ ११ ॥

शविजयटीकायांनारायणाचार्यविरचितायांगुरुभावप्रकाशिकायांपदरत्नावल्यामेकादशःसर्गः ॥ ११ ॥ ॥ श्री ॥ ॥ श्री ॥ ॥ श्री ॥



॥ अथ श्रीरुक्मिणीशविजये द्वादशसर्ग प्रारंभः ॥

श्रीमध्वगुरुभ्योनमः ॥ श्रीहयवदनोजयति ॥ ॐ हत्वापूतनिकांविधूयशकटंजित्वार्जुनौदानवान्सप्तारुज्यविनाश्यकालियविषंनिष्पीड्यशिष्टेतरम् ॥ भित्त्वाके शिनमुन्मर्दविषतरुंचोद्धृत्यगोवर्द्धनंयःकंसंसगजेंद्रमल्लमवधीत्तस्मैनमोविष्णवे ॥ १ ॥ योविद्याधिपतिंविद्यामगाद्विश्वगुरुर्गुरोः । पूर्णैश्वर्यसुसंपन्नंतंशौरिंसमुपा स्महे ॥ २ ॥ ततइति । ततोनंतरंप्रणतेषुवत्सलःस्निग्धःमधुराधिपतिःश्रीकृष्णःमुदाप्रीत्यासदसिउग्रसेनमाहूययदूनामधिपंचक्रे ॥ १ ॥ श्रीकृष्णदत्तंसाम्राज्यमरो चमानःउग्रसेनःश्रीकृष्णंप्रत्याह हेप्रभोश्रीकृष्णमेममराज्यंतवशास्त्रमेवत्वन्महिमप्रतिपादकवेदांतशास्त्रमेव यथाराज्याधिपतिःजगत्पूज्यएवंवेदांताभ्यासीसर्वज नपूज्यइतिभावः।सेनाचमूःनियमाःवैष्णवव्रतानि नियमोव्रतमस्त्रियामित्यमरः। यथासेनयाराज्यसिद्धिःतथानियमेनशुद्धांतःकरणस्यशास्त्रसंपत्तिरितिभावः। अं गनानारीतितिक्षाद्वंद्वसहिष्णुता । यथानार्यामभिरतस्यसुखं तथासहनशीलस्यसदासुखमेवेतिभावः । धनंद्रविणंनित्यंसर्वदा । भक्तिश्चविरक्तिश्चदैन्यस्यश

ततः सदस्युग्रसेनमाहूय मधुरापतिः ॥ यदूनामधिपं चक्रे मुदा प्रणतवत्सलः ॥ १ ॥ राज्यं मे तव शा
स्त्रमेव नियमाः सेना तितिक्षांगना नित्यं भक्तिविरक्तिदैन्यशमनज्ञानादिलाभो धनम् ॥ मच्छ्रोत्रांति
कसंगते तव यशोधारे स्फुरच्चामरे छत्रं मूर्ध्नि कृतं भवातपहरं हस्तारविंदं तव ॥ २ ॥ त्वत्क्षेत्रं मम
दुर्गमार्यकरुणा वर्म त्वदंघ्रिध्वजासक्तः सौम्य मनोरथो मम रथश्छंदांस्यमंदा हयाः ॥ प्राणः सारथि
रायुधं त्वदभिधा जेयः कलिस्तद्भटाः षट् तेषां नगरी च संसृतिरथो जेया विमुक्तिः पुरी ॥ ३ ॥

मनशांतिर्येनतद्दैन्यशमनंदीनताशामकंयत्तत्त्वज्ञानंतानिआदयोयेषांतथोक्ताः । तेषांसद्गुणानांलाभःप्राप्तिरेव । यथाधनवतांनदारिद्र्यादिक्लेशःतथाविरक्त्यादि मतांनकुतश्चित्क्लेशइतिभावः । स्फुरतीचतेचामरेचस्फुरच्चामरे । ममयेश्रोत्रेतयोरंतिकंसमीपंतस्मिन्संगतेसंबद्धेतव यशसांधारेयशोधारे । यथाचामरंराज्य चिह्नंएवंवेदविचारराज्यचिह्नंगुरुमुखात्कृष्णमाहात्म्यश्रवणमेव । तनुनैर्गुण्यश्रवणमितिभावः । पार्श्वद्वयेकर्णांतिकेदोधूयमानचामरयोःसाम्योपपादनायश्रो त्रांतिकसंगतइत्युक्तं । छत्रंश्वेतच्छत्रंममूर्ध्निकृतंशिरसिनिहितंभवस्ययआतपःसंतापःतस्यहरतीतिहरंनिवर्तकंतवहस्तारविंदमेव स्पष्टोत्रभावः ॥ २ ॥ त्वदि ति । हेश्रीकृष्णममदुर्गंत्वत्क्षेत्रमेव यथादुर्गाश्रितस्यनशत्रुकृतविघ्नस्तथाविष्णुक्षेत्रमाश्रित्यसद्विद्यामभ्यसतोनविघ्नाइतिभावः । वर्मकवचंआर्याणांगुरूणांकरु

णा । यथाकवचीनशत्रुशरैस्त्राड्यतेतथागुरुकृपावान्कामाद्युपद्रवैर्नाभिभूयतइतिभावः । हेसौम्यश्रीकृष्णममरथः । तवअंघ्रिस्त्वदंघ्रिस्तस्मिन्योध्वजःरेखा रूपस्तस्मिन्नासक्तःध्यातृध्येयभावेनसंबद्धःमनएवरथःमनोरथः । रथोपिध्वजवानित्यतोंघ्रिध्वजासक्तइत्युक्तं । यथारथवान्सर्वत्राकुंठितगतिस्तथाहरिचर णवानपीतिभावः । अमंदाशीघ्रगामिनोहयाःछंदांसिचत्वारोवेदाः यथाहयाःरथंसन्मार्गेप्रवर्त्तयंतितथावेदाःमनोरथमितिभावः । सारथिःसूतःप्राणोमुख्यप्राणः यथासारथिःहयधुरंधरस्तथाप्राणोपिवेदोपोद्वलकइतिभावः। आयुधंप्रहरणंत्वदभिधातवाख्याआनंदमयादीनिपुण्यनामानि तवअभिधेत्यनेनआनंदमयादिना म्नांनलक्षणयाब्रह्मणिप्रवृत्तिरितिसूचितं । यथाआयुधेनशत्रुर्हन्यतेतथानिरंतरगुणस्मरणरूपतैलधारायितैरेतैर्नामभिःसंसृतिरपनीयतइतिभावः । जेतुंयो ग्योजेयोजेतव्यःकलिरेकस्तद्भटाःषट्कामक्रोधादयःजेयाःतेषांकलिकामादीनांनगरीसंसृतिःसंसारः संसारएवकल्पादीनांसोल्लासप्रवृत्तेस्तेषांनगरीत्युक्तं ।

**यथा त्वं सततं पूर्णः साम्राज्यं नेच्छसि प्रभो ॥ तथा त्वत्सेवया पूर्णा वयमित्यब्रवीद्धरिम् ॥ ४ ॥ ये त्वां शास्त्रवि चारविस्तृतधियः श्रेयस्करं श्रीकरं सेवंते पुलकांकितांगमुदितप्रेमाश्रुधाराधराः ॥ तेषां नैहिकसंपदस्ति विदुषामि त्यज्ञगीतां पृथां नाथोन्मूलयितुं करोमि गदितं न स्यान्मदो मे यदि ॥ ५ ॥ उग्रसेनं यदुपतिं चक्रे चक्रधरः किल ॥ यदुमात्राधिपत्यत्वे तस्य विश्वेश्वरस्य किम् ॥ ६ ॥**

जेयाअथोअनंतरंविमुक्तिःमोक्षाख्यपुरीलभ्या । पूर्वोक्तसेना दिबलेनप्राप्या ॥ ३ ॥ यथेति । हेअब्जलोचनप्रभोश्रीकृष्ण । त्वंयथा सततंसदापूर्णः स्वभावतएवपूर्णः । साम्राज्यंनेच्छसि । तथात्वत्सेवयापूर्णाःवयमपि साम्राज्यंअधिराज्यत्वंनेच्छामः इतिहरिंकृष्णं अब्रवीत् ॥ ४ ॥ यइति । शास्त्रस्ययोविचारोविमर्शस्तस्मिन्विस्तृताधीर्येषांतेतथोक्ताः । उदितानिउत्पन्नानि यानिप्रेमाश्रूणिआनंदबाष्पजलानितेषांधारातांधरंतीतितथोक्ताःयेपुरुषाः । पुलकैरोमांचैरंकितंचिह्नितंपुलकांकितंतादृशमंगंयथाभवतितथाश्रेयस्करंमोक्षप्रदं श्रीकरंऐहिकसंपत्प्रदंत्वांसेवंते । हेनाथश्रीकृष्णतेषांविदुषांज्ञानिनांऐहिकीचसासंपच्चसानास्तीत्यज्ञगीतांमिथ्याज्ञानिभिराघोषितांपृथांप्रसिद्धांउन्मूलयितुंनाश यितुंगदितंसाम्राज्यंकुर्वितितववचनंमेममदःराज्याधिपत्यनिमित्तधनमदःयदिनस्यात्तर्हिकरोमि ॥ ५ ॥ उग्रसेनमिति । चक्रधरःश्रीकृष्णःउग्रसेनंयदुपतिं ।

यदूनांराजानंचक्रेकिल । स्वयमेवराज्यंकुतोनबुभुजइत्यतआह । विश्वेश्वरस्येति । विश्वेश्वरस्यसकलभुवनाधीश्वरस्यतस्यश्रीकृष्णस्यकेवलंयदवःप्रजुग्रामांत
स्याधिपत्यंत्वामित्वंतेनकिंकिंफलंनकिमपीत्यर्थः । नहिसार्वभौमःएकग्रामाधिपत्यंवांछतीतिभावः ॥ ६ ॥ प्रकारांतरेणोग्रसेनस्यराज्यदानंघटयति । दद्विति ।
कंसंविध्वंसयतीतिकंसविध्वंसीसःश्रीकृष्णःतन्महींकंसस्यराज्यंतत्पित्रेकंसस्यपित्रेउग्रसेनायददौदत्तवान् । तत्पित्रइत्यनेनसतिपितरितद्वद्राज्यपरिपालन
रूपंकंसवधकारणंचसूचितं । तथाहि । असौश्रीकृष्णःपरस्यार्थःकेवलंपरार्थःपरार्थकंकेवलंपरप्रयोजनमेवफलंस्वकृतसृष्ट्यादेःप्रयोजनंयस्यसतथोक्तःसाक्षा
त्केवलंपुराणपुरुषोहिआदिपुरुषोहि । महाप्रयत्नसाध्यजगत्सृष्ट्यादिकमपियस्यपरार्थंतस्येदंनस्वार्थमितिकिंवाच्यमितिभावः ॥ ७ ॥ त्वदुक्तेति । हरिःश्रीकृष्णः
वयंसर्वेबलरामादयःत्वदुक्तंत्वयोक्तंवाक्यंतत्कुर्वंतीतितथोक्ताःतवाज्ञाधराइत्यर्थः । इतियदब्रवीत्तत्केवलं भक्तःभक्तमात्रंतेनोक्तंवाक्यंतस्यकर्तुः सकलभ

स कृष्णः कंसविध्वंसी तत्पित्रे तन्महीं ददौ ॥ परार्थैकफलः साक्षात्पुराणपुरुषो ह्यसौ ॥७॥ त्वदुक्तकारि
णः सर्वे वयमित्यब्रवीद्धरिः ॥ भक्तमात्रोक्तकर्तुस्तत्किमपूर्वं कृपांबुधेः ॥८॥ सेनामध्यगता राजन्वयमि
त्याह माधवः ॥ विश्वमध्यगतस्यास्य सेनांतः किं नु दूषणम् ॥ ९ ॥ वक्रं सर्वमवक्रयत्वनुदिनं कुब्जा
तनूज्जृंभको मल्लानां लयकृद्धुनोतु स रिपून् कंसस्य हिंसाकरः ॥ बधूर्बंधकरान्वियाजयतु मे रम्यां धु
रं माधुरस्संदधाद्धरिरंतरंगविभवं रंगस्थलीरंजकः ॥ १० ॥

क्तोक्तकारिणइत्यर्थः । कृपांबुधेःश्रीकृष्णस्यअपूर्वंनूतनंकिंवात्सल्येनप्रवृत्तेस्तदपिनेहेत्यायेतिभावः ॥ ८ ॥ सेनेति । मायाःलक्ष्म्याःधवोभर्त्तामाधवः ।
मधोर्गोत्रापत्यंमाधवइतिवाश्रीकृष्णःहेराजन्उग्रसेनवयंतवसेनयोर्मध्यंतत्रगताःवयंतवयोधाइतिभावः इतिउग्रसेनंप्रत्याह । विश्वस्यअणुरेणुतृणकाष्ठादेरपिय
न्मध्यंतद्गतःप्रविष्टस्तस्यअस्यश्रीकृष्णस्यसेनांतःसेनाभ्यंतरे । अवस्थित्याकिंदूषणंतत्तदाकारेणसकलजगदंतःप्रविष्टस्यनायमतिदोषइतिभावः ॥ ९ ॥ कवि
रुक्तकथांअनुवदन्स्वाभीष्टंप्रार्थयते । वक्रमिति । कुब्जातत्वाःसैरंध्रीशरीरस्यउज्जृंभकःउन्नमनकर्त्ताकुब्जीभावेनवक्रस्यशरीरस्यावक्रतापादकइत्यर्थः ।
अतएववक्रंदुर्विषयानुरक्ततयासद्विषयेषुकुटिलंसर्वंचक्षुरादींद्रियजातंअवक्रयतुसद्विषयेषुअजिह्मंकरोतु । मल्लानांलयकृत्विनाशनकृत्सःश्रीकृष्णःरिपून्

असमतुल्यतिपक्षिणः धुनोतुसंहरतु । कंसस्यमातुलतयाबंधुभूतस्यपितुर्बंधनकरस्यहिंसाकरःसंहारकारीश्रीकृष्णःबंधकरान्ममताख्यपाशसंपादकतयानंधन हेतून्बंधून्सुहृदःवियोजयतुविघटयतु । मधुरायाःपतिःमाथुरःशब्दतोर्थतश्चमधुरायाःपुर्याःपतिःश्रीकृष्णःमेमह्यंरम्यांमधुरांधुरंव्याख्यानादिव्यापारआरंभं दद्यात्ददातु । रंगस्थल्याःमल्लरंगस्थलस्यरंजकःभूषयिताहरिःमेअंतरंगस्यअंतःकरणस्यविभवःनैर्मल्यादिविभवस्तंसंदद्यात् । शब्दसाम्याद्धेतुरलंकारोद्रष्टव्यः ॥ १० ॥ मधुरेति । मधुरामनोहरा । मधुरा मधुरापुरी । येनश्रीकृष्णेनसमासदशायाभूः तयाउज्झितारहिताअसदशीत्यर्थः । समभूत् । महतांज्ञानिनांअहतः अविनष्टःअर्थःपुरुषार्थःअसदशोमोक्षइत्यर्थः । तद्ददातीतितथोक्तः । स्मरतातंमन्मथजनकंतंश्रीकृष्णंस्मरतचिंतयत ॥ ११ ॥ कृष्णेति । यस्यांपुर्यांजलंउदकं । कृष्णस्ययःउदारविहारःउत्कृष्टक्रीडातेनखंडितंमलंयस्यतत्तथोक्तंसत् । मंगलंपरमपावनमास्ते यस्याःपुर्याःस्थलीस्थलं द्वावप्यन्यालिंगौस्थलंस्थलीत्यमरः ।

**मधुरा मधुरा येन समभूत्समभूज्झिता ॥ स्मरत स्मरतातं तं महतामहतार्थदम् ॥ ११ ॥ कृष्णोदारविहारखंडितमलं यस्यां जलं मंगलं तत्पादांबुजलक्ष्मलक्ष्यविभवा धन्यस्थली यत्स्थली ॥ यद्गेहाणि कृतस्पृहाणि रमया नित्यं स्वभर्तुः स्थितेर्दद्यात्सा मधुरापुरी शुभकरी श्रेयांसि भूयांसि नः ॥ १२ ॥ जगत्पित्राथ पितरौ मृदुभाषणपूर्वकम् ॥ न तौ नतौ पुत्रबुद्धिं चक्रतुश्चक्रिणीश्वरे ॥ १३ ॥ विमुच्य निगडादीशः स्मितवक्त्रः प्रियं वदन् ॥ कृतस्नेहोथ निगडं मायामयमयोजयत् ॥ १४ ॥**

तस्यश्रीकृष्णस्ययेपादांबुजेतयोर्यानिलक्ष्माणिवज्रांकुशादिलांछनानितैर्लक्ष्योदर्शनीयोविभवःसंपद्वैरपिश्लाघनीयत्वरूपायस्याःसातथासतीधन्याचसास्थलीचधन्यस्थलीपुण्यकरस्थलीत्यर्थः । जाता यस्यांगेहानिमंदिराणिनित्यंसदा । स्वस्याःभर्त्ताश्रीकृष्णः तस्यस्थितेःरमयालक्ष्म्याकृतस्पृहायेषुतानिकृतस्पृहाणिनिवासार्थंवांछितानिजातानि । साशुभकरीमधुरापुरीनोस्माकंभूयांसिबहूनिश्रेयांसिसुखानिदद्यात् ॥ १२ ॥ जगदिति । अथकंसवधानंतरं । जगत्पित्राश्रीकृष्णेनमृदुभाषणंप्रियवचनंतत्पूर्वकंयथाभवतितथाननौनमस्कृतौतौदेवकीवसुदेवौईश्वरेसर्वजगत्स्वामिनि चक्रमस्यास्तीतिचक्रीतस्मिन्श्रीकृष्णेपुत्रबुद्धिंपुत्रोयमितिबुद्धिंनचक्रतुः । अवतारसमयेचतुर्भुजमूलमूर्त्तेरेवदृष्टत्वेनतत्संस्कारस्यैवजागरूकत्वात् । नतावपिपरदेवताबुद्ध्यालिंगनादिनचक्रतुरितिभावः ॥ १३ ॥ विमुच्येति । ईशःश्रीकृष्णः

पिताचमाताचपितरौदेवकीवसुदेवौ । निगडात्पादबंधात् निगडःपादबंधःस्यादितिहलः । विमुच्यस्मितंमंदहासोपेतंवक्रंयस्यसथोक्तः । हासोजनोन्मादकरी चमायेतिवचनात् । माययोद्धलकमंदहसितमुखइत्यर्थः । प्रियंअंबताततेतिप्रियवचनंतत् वदन्सन् कृतस्नेहोयेनसतथासन्अथतस्मिन्नेवक्षणेमायैवमायामयः तंपुत्रोयमितिव्यामोहात्मकमित्यर्थः । निगडंशृंखलाबंधंअयोजयत्योजयामास ॥ १४ ॥ अथेति । अथअनंतरं । धर्मस्यपंथाःधर्मपथःपित्रादिषुप्रियं वक्तव्यमितिधर्ममार्गःतस्याध्यक्षःस्वामीजगतःएकश्चासौराट्चएकराट्एकनाथःश्रीकृष्णःधर्मस्थापनार्थैवप्रियमुक्तंनतुनीचतयेतिभावः । जगदेजगाद । कि मित्यतआह । वार्तयेति । योहंवांद्वयोःयुवयोःहितंपोषणादिकंतत् । नचकारनाकरवम् । सोहंवार्तयाकेवलंवार्तामात्रेणभवतोःपुत्रभाववत्पुत्रःपुत्रेणक

अथ धर्मपथाध्यक्षो जगदे जगदेकराट्॥ वार्तयाहं भवत्पुत्रो यश्चकार न वां हितम् ॥ १५॥ सर्वं तात कृतं त्वया यदुदितं प्रीत्यास्मदीयान्वये तेनेदं तिलकीबभूव हि कुलं कीर्तिश्च मे विस्तृता॥ येनानेकखलान्निहत्य बलिनं कंसं च वंशद्रुहं बंधग्रंथिरयं व्ययोजि दयया किं किं कृतं न त्वया ॥ १६ ॥ अंबा तं परिरभ्य फुल्लकरसन्माल्येन तस्यां चनं नेत्रानंदजलेन सिंचनमुरोजोद्यत्पयोधारया ॥ नैवेद्यं च निवेद्य वीक्षणलसन्नीराजनं शोभनं भाविस्वीयवि मुक्तिकल्पलतिकाबीजं निजं निर्ममे ॥ १७ ॥

र्तव्यंकिमपिनकृतमित्यापाततःलोकाःपुत्रइतिवदंति । वस्तुतोनाहंभवत्पुत्रइतिहृदयम् ॥ १५ ॥ एवमुक्तोवसुदेवःप्रतिवक्ति । सर्वमिति । हेतातपुत्रश्रीकृष्णत्वयासर्वंपुत्रेणकर्तव्यंसमस्तंकृतं । यद्यस्मात्कारणात्त्वया अस्माकंसंबंधीअस्मदीयःअ न्वयःकुलंतस्मिन्प्रीत्याउदितंउत्पन्नंतेनकारणेनइदंकुलंअतिलकंतिलकंसंपद्यतेतथाबभूवेतितिलकीबभूव सर्वलोकभूषणंबभूवहि । यादवःकृष्णइतिकुलस्यकृ ष्णनाम्नासर्वैःसहपठ्यमानत्वादितिभावः । मेकीर्तिश्चविस्तृताबभूव । वासुदेवइतिसादरंसर्वैरभ्यस्यमानत्वादितिभावः । येनत्वयाअनेकेयेखलाःदुष्टाःपूतनाद यस्तान् । वंशद्रुहंबलिनंबलिष्ठंकंसंचनिहत्यदययाअयंबंधग्रंथिःशृंखलाबंधग्रंथिःव्ययोजिविमोचितः । स्वावतारप्रयोजनतयाकृतमपिपूतनादिहननंआत्मवि मोचनार्थंकृतमित्यनुसंधात्रावसुदेवेनसज्जनस्वभावोदर्शितः । त्वयाएतावत्कृतवताकिंकिंनकृतंसर्वमपिकृतमित्यर्थः ॥ १६ ॥ अंबेति । अंबामातादेवकीतंश्रीकृ

ष्णंपरिरभ्याश्लिष्यफुल्लौपुलकितौयौकरौतावेवसन्माल्यंसमीचीनपुष्पमालातेननस्यश्रीकृष्णस्यअंचनंपूजनंतत्। नेत्रयोरानंदजलंआनंदोत्पन्नजलंतेनासिंचनं स्नानंतत्। उरसिजातावुरोजौस्तनौताभ्यांउद्यत्स्रवत्पयःक्षीरंतस्यधारयानैवेद्यंभोजनंतत्। शोभनंमनोहरंवीक्षणमवलोकनंतदेवसत्प्रकाशमानंयन्नीराजनं तच्चनिवेद्यसमर्प्यश्रीकृष्णंदोर्भ्यामालिंग्यसानंदंमुखंपश्यंतीस्तनंक्षीरंपाययामासेतिभावः। इदमेवपूजात्वेनवर्णयताकविनासाक्षात्परब्रह्ममातृत्वभावेनापिकृत मेतन्महाफलसाधनमितिसूचितं। एतदेवस्पष्टयति। भावीति। भाविनीभविष्यंतीयास्वस्याःसंबंधिनीस्वीयाविमुक्तिर्मोक्षःसैवकल्पलतिकाकल्पलतातस्याः बीजंकारणं। इदंकर्मनिजंस्वसंबंधिनिर्ममेचक्रे ॥ १७ ॥ व्रजइति। यौश्रीकृष्णरामौव्रजंगोकुलंतस्मिन्। अंगनाभिःगोपीभिःसमंसार्द्धंगृहस्थानांगृहस्थाश्र मिणांउचिताःयोग्याःयारम्यलीलाःरम्याःमनोहराःलीलाःरतिपुत्रोत्पत्त्यादिविलासाःताःप्रचक्रतुः। अथअनंतरं। शूरसूनुःवसुदेवःविधिनाभागधेयेनउपनीतौ

व्रजे गृहस्थोचितरम्यलीलाः प्रचक्रतुर्यौ सममंगनाभिः॥ अथोपनीतौ विधिनोपनीतौ सुतौ वितेने किल शूरसूनुः ॥ १८ ॥ मुनय उपाययुर्महेक्षणोत्का धृतनियमाः किल सर्वतः समेताः॥ जनिमिव परिहर्तुमुत्तरत्र ह्युपनयनादि निदानमाप्तकामाः॥ १९ ॥ वाद्यानि नेदुर्मुनयश्च मंत्रानुच्चारयंतः सह बंदिवृंदैः॥ वृंदारकाणां स्तुतयश्च रम्यगंधर्व गीतैः सह देवलोके ॥ २० ॥

त्वसमीपंप्रापितौतौसुतौश्री कृष्णरामौउपनीतौउपनयनाख्यसंस्कारवंतौवितेनेकिलचकारकिल किलेत्यव्ययरसःनटनमात्रमेतदितिसूचनार्थः ॥ १८ ॥ मुनयइति। महस्यकृष्णोपनयनो त्सवस्यईक्षणंदर्शनंतस्मिन्उत्काःउत्सुकाःधृतःनियमोव्रतंयैस्तेतथोक्ताः। आप्तःपूर्णःकामोयेषांतेतथामुनयःऋषयःउत्तरत्रएतज्जन्मोत्तरकालेउपनयनंस्वेषां उपनयनंतदादिर्यस्यसंस्कारस्यसतथोक्तःतस्यनिदानंमूलकारणंतत्जनिमुत्पत्तिंपरिहर्तुमिवसमेताःमिलिताःसंतःसर्वतःउपाययुःकिल। श्रीकृष्णोपनयनदर्शने सत्यपुनर्भवएवभवतीतिभावः। धृतनियमाइत्यनेनमहाव्रतधरैरपिविष्णूत्सवादिदर्शनादिवैष्णवधर्माअनुष्ठेयाइतिसूचितम् ॥ १९ ॥ वाद्यानीति। वाद्यानिभेरीमृदं गादीनिमंत्रान्वेदानुच्चारयंतःमुनयःबंदिनांपाठकानांवृंदानिसमूहाःतैःसहनेदुः देवलोकेवृंदारकाणांदेवानांस्तुतयश्चरम्याणियानिगंधर्वगीतानितैःसहनेदुः ॥ २० ॥

नार्यइति । रागयुताःअनुरागयुताःसमस्ताःनार्यःनयननामुत्सवोयेनसनथातं । नेत्रानंदकरमित्यर्थः । मुकुंदंश्रीकृष्णंरक्ताश्चतेअक्षताश्चतैःअस्यश्रीकृष्णस्ययत्परिरंभणंआलिंगनंतस्मिन्उत्काःउत्सुकाःसत्यःअवाकिरन् । कुब्जादुरंतामपारांचिंतांब्रह्मचारिणासहममकथंरमणंस्यादितिचिंतामाप । ध्रुवंनिश्चयः उपरिकरिष्यमाणकुब्जारत्यपादानंनटनमेवेतिभावः ॥ २१ ॥ अंबायाइति । अंबायाःमातुःदेवक्याःपितुर्वसुदेवस्यअर्चतांपूजयतांसतामपिअपिसमुच्चये । संतिसमीचीनानियानिप्रेमाणितान्येवदामानितान्येवोपमायस्यतत्तथोक्तं । अंबादित्रिवर्गकृतप्रेम्णामपितथात्मकत्वात् । श्रीकृष्णरामविषयकत्वेनतत्संबंधित्वाच्चोपवीतसाम्यमितिभावः । तयोःश्रीकृष्णरामयोःगलःकंठःतस्मिन्संबद्धंसंलग्नंविशदंस्वच्छंत्रिभिःगुणितंआवर्तितंत्रिगुणितंतंतुत्रयात्मकमित्यर्थः ।

नार्यः समस्ता नयनोत्सवं तं रक्ताक्षतैः रागयुता मुकुंदम् ॥ अवाकिरंस्तत्परिरंभणोत्काः कुब्जा दुरंतां ध्रुवमाप चिंताम् ॥ २१ ॥ अंबायाः पितुरर्चतामपि सतां सत्प्रेमदामोपमं संबद्धं विशदं गले त्रिगुणितं यज्ञोपवीतं तयोः ॥ रेजे तस्य लसद्गुणैर्बहुगुणैरंतर्गरिष्ठं त्रयं स्तोतृस्तव्यतया तदाश्रययुतं स्वच्छं श्रुतीनामिव ॥ २२ ॥ लोकं विडंबयितुमेवमिहोपनीतः सत्यां करिष्यति हरिर्मदपत्यवांछाम् ॥ इत्थं प्रहृष्टहृदिवाग्निरसौ विशंके जज्वाल यज्विवरमंत्रहुतैर्हविर्भिः ॥ २३ ॥

यज्ञोपवीतंरेजे । कथमिवतस्यश्रीकृष्णस्यबहवोगुणाःयेषांतेबहुगुणास्तैः । प्रत्येकमसंख्यातैरित्यर्थः । विलसंतोयेगुणाःज्ञानानंदादयस्तैःउपवीतस्थैकैकतंतोरपिप्रत्येकंत्रिगुणात्मकत्वात्बहुगुणत्वंअंतर्गरिष्ठंदृढनैर्गुण्यसाधककुतर्कैरनपोह्यमित्यर्थः । स्तोताचस्तव्यश्चतयोर्भावस्तत्तातया । तावेवाश्रयौताभ्यांयुतंस्तोतृतयाश्रेष्ठात्मकबलरामाश्रितंस्तुतिविषयतयाश्रीकृष्णाश्रितमेवउभयाश्रितमित्यर्थः स्वच्छंअपौरुषेयत्वेनकर्तृदोषनिमित्तदोषरहितं । श्रुतीनांवेदानांत्रयमिवरेजेइतिसंबंधः । सकलवेदपारंगतस्यसकलवेदप्रतिपाद्यस्यश्रीकृष्णस्येदानींकृतोपवीतधारणंनटनमेवेतिभावः ॥ २२ ॥ लोकमिति । इहभूमौलोकंजनंविडंबयितुमनुकर्तुमेवमुपनीतःहरिःश्रीकृष्णःममयानिअपत्यानिश्रीकृष्णाख्यपतिकांक्षयाकन्यात्वंतपसागतानिअग्निकुमाराःखलुतपसाश्रीकृष्णपत्नितांषोड

शसहस्रस्त्रीत्वंप्राप्ताइतिपौराणिकीप्रसिद्धिः । तेषांवांछामनोरथस्तांसत्यांयथावस्थितार्थविषयिणींकरिष्यति । लोकविडंबनायोपनीतोलोकविडंबनायोद्वाहम
पिकरिष्यनूमदपत्यकृततपःफलदानायताएवपरिणेष्यति । इत्थमनेकप्रकारेणप्रहृष्टंसंतुष्टंहृत् चित्तंयस्यसतथोक्तः । सइवविशंकःविघ्नशंकारहितःअयंउपनय
नमंटपस्थोग्निःयज्विनांयाज्ञिकानांवराःश्रेष्ठाःतेषांयेमंत्राःतैर्हुतानितैर्हविर्भिःसाधनैःजज्वालज्वलितवान् ॥ २३ ॥ आचार्यइति । आचार्योगर्गाचार्यः
सकलविदेसर्वज्ञायपुराणश्चासौपुमांश्चतस्मैआदिपुरुषायेत्यर्थः । श्रीकृष्णस्यानुपदेशत्वेहेतुगर्भमिदंविशेषणद्वयं । श्रीकृष्णायगायत्रींगायत्र्याख्यंमनुंमंत्रंअ
दिशत् उपदिदेश । अत्रोत्प्रेक्षते । तद्व्याजादिति । सएवउपदेशएवव्याजोमिषस्तस्मात् । असौगर्गःतवगुणानांवरेण्यत्वभर्गत्वादिगुणानांचिंतकोध्यानकर्त्तातस्मै ।
अनेनधीमहीत्यंतस्यपादद्वयस्यार्थसूचनंकृतं । मह्यमिति । आत्मनिबहुवचनानामितिप्रयोगेपिएकत्वापरिहारात् । धीमहीत्युत्तमपुरुषप्रयोगस्यफलितक

आचार्यः सकलविदे पुराणपुंसे गायत्रीं मनुमदिशं ममेत्थमूहः ॥ तद्व्याजात्तव गुणचिंतकाय मह्यं स
द्बुद्धिं दिश दययेत्यसौ ययाचे ॥ २४ ॥ इतः परं श्रौतपथास्थितोयं न याति गोपालकबाललीलाम् ॥
इतीव शौरिःसह दक्षिणाभिर्ददौ मुदा गाः सुभगा मुनिभ्यः ॥ २५ ॥ यज्ञोपवीतोज्ज्वलकंठदेशः कृष्णा
जिनश्रीर्मुनिसंघमान्यः ॥ प्राणप्रणेता धृततर्कमुद्रो ध्यायन्मनुं व्यास इवान्वशिक्षत् ॥ २६ ॥

थनं । दययासद्बुद्धिंदिशदेहि । अनेनयःज्ञानरूपीपरमात्मानःअस्माकंधियःबुद्धीःप्रचोदयात् प्रेरयेदितिधियोयोनइत्यादितृतीयपादस्यार्थःसूचितः । प्रचो
दयादित्यस्यलोडंतस्यप्रार्थनार्थत्वात् । इतिययाचे । इत्थंममऊहःप्रतर्कः ॥ २४ ॥ इतःपरमिति । श्रुत्याप्रतिपादितःश्रौतःसचासौपंथाश्चश्रौतपथःतस्मिन्
स्थितःगुरुकुलवासादिश्रुत्युक्तमार्गनिष्ठइत्यर्थः । अयंश्रीकृष्णःइतःपरमितःप्रभृतिगाःपालयंतीतिगोपालकाःतेचतेबालकाश्चतेषांलीलांनयाति । इतीवइ
तिमत्वेवरक्षकरहितगोभिःकिमस्माकमितिबुद्ध्येवेत्यर्थः । शौरिःवसुदेवःदक्षिणाभिःसहसुभगाःमनोहराःगाःमुदाहर्षेणमुनिभ्यःददौ । कृष्णावतारसमयेसंकल्पि
तगोप्रदानंकृतवानित्यर्थः ॥ २५ ॥ यज्ञोपवीतेति । यज्ञोपवीतेनउज्ज्वलःकंठदेशःकंठप्रदेशोयस्यसतथोक्तः । कृष्णाजिनस्यश्रीःकांतिःयस्यसतथोक्तः । कृ

ष्णाजिनधारीत्यर्थः । मुनिसंघाः ऋषिसमूहाः तैर्मान्याः प्राणस्यप्रणेताप्राणायामकर्तेत्यर्थः । व्यासपक्षेप्राणस्यमुख्यप्राणरूपस्यमध्वाचार्यस्यप्रणेताव्याख्याता । अन्यद्व्यासपक्षेस्पष्टं । धृतातर्कमुद्राज्ञानस्यमुद्रायेनसतथोक्तः । श्रीकृष्णः ध्यायन् ध्यानंकुर्वन् व्यासइववेदव्यासइवमनुंगायत्र्याख्यंमंत्रंअन्वशिक्षत् । अभ्यस्तवान् जजापेत्यर्थः ॥ २६ ॥ दिनइति । दिनेदिनेप्रतिदिनंअग्नौसमिधः इध्ममेधः समित्स्त्रियामित्यमरः । जुहावअग्निकार्यंकृतवानित्यर्थः । तथादिनेदिनेश्रुतीनांवेदानांजननींमातरंगायत्रीं । वेदमातातुगायत्रीतिवचनात् । जजाप । तथाहि । स्वस्ययः कुक्षिरुदरंतस्यपूर्तिः पूरणंतस्यांरतिरिच्छाकस्यनहि नास्तिहि । सर्वस्याप्यस्तीत्यर्थः । अग्नौक्रियमाणहोमस्यभोक्ताम्यंतर्गतः श्रीकृष्णः स्वयमेवेतिभावः । निजः स्वकीयोनुभावोमाहात्म्यंतस्यस्मरणंध्यानंतदेवोत्सवस्तस्मिन् । स्वस्तुतावित्यर्थः । रतिः कस्यनास्ति । अनेनगायत्रीश्रीकृष्णमाहात्म्यप्रतिपादिकेतिव्यज्यते ॥ २७ ॥ तमिति । आर्याः सज्जनाः ऋषयः तंश्रीकृष्णंब्रह्म

दिने दिनेऽग्नौ समिधो जुहाव तथा श्रुतीनां जननीं जजाप ॥ स्वकुक्षिपूर्त्तौ न रतिर्हि कस्य निजानुभावं स्मरणोत्सवे वा ॥ २७ ॥ तं ब्रह्मचर्यव्रतधुर्यमार्याः संदृश्य हृष्टाः परमाब्धिपुत्री ॥ वक्षस्थलस्था त्रपयाकुलासीदभ्यर्थ्यमानौ च दिनेशवह्नी ॥ २८ ॥ गुरोर्गृहं सर्वविदग्रगण्यौ उपेयतुस्तौ समिधं समर्प्य ॥ भवान्भवारण्यमिदं चिदग्नावतः परं निर्दहतादितीव ॥ २९ ॥

चर्यंसमस्तेंद्रियनिग्रहस्तदेवव्रतंतस्यधुर्योधुरंधरस्तं । संदृश्यसम्यक्दृष्ट्वाहृष्टाः संतुष्टाअभूवन् । परंकेवलंवक्षसः स्थलंतस्मिन्तिष्ठतीतितथोक्ता । अब्धिपुत्रीक्षीरसमुद्रकन्यालक्ष्मीः त्रपयालज्जयाआकुलाव्याकुलापूर्णेत्यर्थः । आसीत् । ब्रह्मचर्यव्रतनिष्ठपुरुषवक्षसितरुणीस्थितिः लज्जाकरीतिभावः । किंचअभ्यर्थ्यमानौ । हृद्रोगंममसूर्यहरिमाणंचनाशयेत्यादिमंत्रेण । आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहनेत्यादिमंत्रेणचकृष्णेनप्रार्थ्यमानौदिनेशः सूर्यः सचवह्निः अग्निः सचतौचत्रपयाआकुलावास्तां । दासानुदासयोस्तयोः स्वामिनाश्रीकृष्णेनक्रियमाणप्रार्थनाकथंनलज्जाकरीतिभावः ॥ २८ ॥ गुरोरिति । सर्वविदग्रगण्यौसर्वज्ञश्रेष्ठौतौश्रीकृष्णरामौअस्मद्गुरुर्भवान् इदंभवएवसंसारएवारण्यंवनंतत् । अतः परंअस्मदागमनानंतरंचिदेवज्ञानमेवाग्निस्तस्मिन्निर्दहतात् निर्दहतु । इतीव केवलवह्नेर्दाहकत्वासं

भवात्समिद्भिरेताभिर्द्वाहंकुर्वितीवसमिधंसमर्प्यगुरुनिकटेनिक्षिप्यगुरोःसांदीपनाख्यस्यगुरोःगृहंगेहंततउपेयतुःप्रापतुः । इतीवसमिधंसमर्प्येत्यनेनसमित्समर्पणादिनागुरुत्वेनत्वद्वर्णनंनावयोर्ज्ञानायकिंतुतवैवज्ञानाभिवृद्ध्यइतिसूचितं । विद्याभ्यासव्याजेनतस्यगुरोर्मोक्षमेवदातुंगतावितिभावः॥२९॥ अथोइति । यद्यस्मात्कारणात्ततोपिचतुःषष्टिदिनेभ्योपिअल्पानिचतानिदिनानिचचतुःपंचदिवसैःआसांवेदादिचतुःषष्टिकलानांसकृदेकवारंसमुच्चारणमपिगुरोरशक्यंअथोतस्मात्कारणात्सःश्रीकृष्णःचतुर्भ्यःअधिकाषष्टिःचतुःषष्टिःचतुषष्टिश्चतानिदिनानिचतैः तावत्यः चतुःषष्टिसंख्याकाःयाःकलाःवेदादिकलाविद्यास्ताःप्रजग्राहगृहीतवान् । धीमान्बलश्चबलरामश्चप्रजग्राह । गुर्वशक्त्यैवतावंतिदिनानिलग्नानिनशिष्ययोरनयोरशक्त्येतिभावः ॥ ३० ॥ गुरुमिति । ततःविद्याभ्या

अथो चतुःषष्टिदिनैस्स तावत्कलाः प्रजग्राह बलश्च धीमान् ॥ गुरोस्ततोऽप्यल्पदिनैर्यदासां सकृत्समुच्चारणमप्यशक्यम् ॥ ३० ॥ गुरुं ततोऽपृच्छदुपायनं दिशन्सुतं ययाचे विमलीकृतान्वयः ॥ मुहुर्मुरारेः सदयावलोकनैस्तमप्यवद्यात्परिपालयन्निव ॥ ३१ ॥ सुतं विजानन्नपि मृत्युनीतं स शंखदैत्यं विनिहंतुकामः ॥ समुद्रमासाद्य निहत्य रक्षो लसद्यशःसंमितमाप शंखम् ॥ ३२ ॥ स पंचजनदेहस्थान् प्राणान्निष्कास्य पंच च ॥ अपंचजनमातेने साकं तेन पयोनिधिम् ॥ ३३ ॥

सानंतरंउपायनंगुरुदक्षिणांतत्दिशन्श्रीकृष्णःगुरुमपृच्छत् । किंदेयमितिविचारितवान् । मुरारेःश्रीकृष्णस्यमुहुःदययासहितानिसदयानियानिअवलोकनानिकटाक्षपातास्तैःविमलीकृतःपवित्रीकृतःअन्वयःवंशोयस्यसतथोक्तः । गुरुःतंपुराम्रतंस्वबालकमपिमुरारेःश्रीकृष्णस्यसदयावलोकनैःअवद्यंदोषस्तस्मात्परिपालयन्निवपवित्रीकुर्वन्निवसुतंययाचे । आनीयदिशेतिप्रार्थितवान् ॥ ३१ ॥ सुतमिति । सःश्रीकृष्णःसुतंगुरुसुतंमृत्युनीतंमृत्युनासंहृतंविजानन्नपिशंखश्चासौदैत्यश्चतं । शंखाकारपंचजनाख्यदैत्यमित्यर्थः । विनिहंतुंकामोयस्यसतथासन्समुद्रमासाद्यरक्षःशंखदैत्यंनिहत्य सद्यशःशोभमानकीर्तिस्तेनसंमितःसदृशस्तं । शंखंपांचजन्यशंखंआप ॥ ३२ ॥ सइति । सःश्रीकृष्णःपंचजनस्यपंचजनाख्यासुरस्यदेहस्तस्मिन्तिष्ठतीतितथोक्तास्तान् । पंचपंचसंख्याकांश्च

प्राणान्प्राणापानव्यानोदानसमानाख्यान्वायून्निष्कास्यतद्देहतोबहिष्कृत्यतेनदैत्येनसाकंपयोनिधिंसमुद्रं । अपंचजनंआतेनेचकार । नविद्यतेपंचजनाख्योदै
त्योयस्मिन्सइतिनविद्यंतेपंचजनाःपंचसंख्याकाःजनाःप्राणादयोयस्मिन्सइतिव्युत्पत्त्याउभयोःसमुद्रपंचजनाख्यदैत्ययोरप्यपंचजनत्वंद्रष्टव्यम् ॥ ३३ ॥
यमालयमिति । सःप्रभुःश्रीकृष्णःयमस्यालयोगृहंतंप्राप्यगत्वाउद्धृतंपंचजनदेहादुद्धृतंरिपोर्योदर्पोहंकारःतंहातीतितथोक्तस्तं । कंबुंपांचजन्यशंखंगुरोःममगु
रोःसांदीपनेःसुतंदेहिनचेत्नददासिचेत्त्वापीयंदशावैरिणंहत्वातदंगादस्थ्युद्धरणरूपाभवेत् । मदाज्ञानकरोषिचेत्त्वामपिहनिष्यामीत्यर्थः । इतियमायनिदर्श
यन्निवस्वकरस्थशंखाख्यदृष्टांतेनबोधयन्निवप्रदध्मौनादयामास । ध्माशब्दाग्निसंयोगयोःलिट् ॥ ३४ ॥ अमुष्येति । हेईशकृष्णलक्ष्मीशस्यतवगुरुःसांदी

यमालयं प्राप्य स कंबुमुद्धृतं प्रभुः प्रदध्मौ रिपुदर्पहारिणम् ॥ गुरोः सुतं देहि न चेदियं दशा भवेत्तवापीति
निदर्शयन्निव ॥ ३४ ॥ अमुष्य लक्ष्मीशगुरोः सुतस्य ध्रुवं विमुक्तिः करसंस्थिताऽभूत् ॥ त्वदागमात्प्रागपि
तं जिहासुं विभुस्त्वमाज्ञापयसीश किं माम् ॥ ३५ ॥ इतीव तत्त्यागविशंकमानसो यमः समभ्यर्च्य सुतं
समादिशत् ॥ अलभ्य तद्दर्शनजातसंभ्रमः प्रहृष्टरोमा प्रणमन्पुनः पुनः ॥ ३६ ॥ सुतं समानीय ततोऽतकांतिका
त्प्रदाय शौरिर्गुरवे स्वकां पुरीम् ॥ उपेत्य पित्रोरपि दक्षिणामिव प्रदर्शयामास निजं स विग्रहम् ॥ ३७ ॥

पनिःतस्यसुतस्यअमुष्यबालस्यविमुक्तिःमोक्षःकरंहस्तंसंगताकरसंगताकरस्थाअभूत् । ध्रुवं । त्वद्गुरुपुत्रत्वादितिभावः । अतएवत्वदागमात्प्रागपिपूर्वमपि
तंतवगुरुपुत्रंजिहासुंहातुमिच्छुंविमानमारोप्यमोक्षंप्रतिप्रस्थापयितुकाममित्यर्थः । मांप्रभुस्त्वंकिंकिमर्थमाज्ञापयसि । गुरुपुत्रंदिशेतिकिमर्थंवदसि ॥ ३५ ॥ इ
तीवेति । यमःइतीवइतिमत्वेवतस्यगुरुपुत्रस्ययस्त्यागःप्रत्यर्पणंतस्मिन्विगताशंकायस्मात्तद्विशंकंतादृशंमानसंचित्तंयस्यसः । अलभ्यंतद्दर्शनंश्रीकृष्णस्यदर्शनं
तेनजातःसंभ्रमोयस्यसतथोक्तः । प्रहृष्टानिरोमाणियस्यसःतथोक्तः । पुनःपुनःप्रणमन्यमःसमभ्यर्च्यश्रीकृष्णमितिशेषः । सुतंगुरुपुत्रंसमादिशत्ददौ ॥ ३६ ॥
सुतमिति । शौरिःश्रीकृष्णःततःअंतकस्ययमस्यअंतिकंसमीपंतस्मात्सुतंगुरुसुतंसमानीयगुरवेप्रदायदत्वास्वकांपुरींमथुरामुपेत्यपित्रोरपिदेवकीवसुदेवयोरपिदक्षि

णामिवनिजःस्वकीयस्तं । विग्रहंदेहंप्रदर्शयामास । यथाम्रतपुत्रदर्शनेनगुरोःप्रीतिःएवमेतावत्कालमदृष्टस्वविग्रहदर्शनेनपित्रोरपिप्रीतिरभूदितिभावः ॥ ३७ ॥ राजधानीति । भोजाःवृष्णयःतेचअंधकाःयादवविशेषाःतेचतैराश्रितासाराजधानीराजानोधीयंतेआश्रयंतेस्यामितिराजधानीमधुराजयतिउत्कृष्टतयावर्त्तते । ननुनगरीमात्रस्यराजाश्रयत्वेनराजधानीत्वात् कथमुत्कर्षोऽस्याइत्यतआह । राजराजेति । राज्ञांराजाराजराजःकुबेरःतस्यपदंस्थानंतस्यत्रातारक्षकःराजराजस्यापिवैश्रवणस्यापिराजेत्यर्थः । रमापतिःश्रीकृष्णःयत्रयस्यांपुरिराजाअधिपतिःअतःसाजयतीतिसंबंधः ॥ ३८ ॥ उग्रसेनइति । यद्ध्वजिन्यांयस्यध्वजिन्यांवाहिन्यां । ध्वजिनीवाहिनीचमूरित्यमरः । द्विषांशत्रूणांउग्राःभयंकराःरामादयःबलरामादयःअग्रेसरंतीत्यग्रेसराःपुरःसराः । स्वर्गिभिर्देवैःगीतंवैभवंऐश्वर्यंयस्यसतथोक्तःसः उग्रासेनायस्येत्यन्वर्थंनाम । उग्रसेनःविजयते ॥ ३९ ॥ इदानींकाव्यांगत्वेनवर्णनीयमंत्रिमंत्रणप्रकारंवर्णयति । हृदयज्ञाइति ।

**राजधानी जयति सा भोजवृष्ण्यंधकाश्रिता ॥ राजराजपदत्राता राजा यत्र रमापतिः ॥ ३८ ॥ उग्रसेनो विजयते स्वर्गिभिर्गीतवैभवः ॥ अग्रेसरा यद्ध्वजिन्यामुग्रा रामादयो द्विषाम् ॥ ३९ ॥ हृदयज्ञा राजनीतेः सभायां शार्ङ्गधन्वनः ॥ मंत्रिणो मंत्रतंत्रज्ञा मंत्रयंतीत्थमन्वहम् ॥ ४० ॥ रणे यदाज्ञाशरशंकिचित्ता भटाः परावृत्य न लक्षयंति ॥ जयांगनां वा दिविजांगनां वा स्पृशंति राजा विजयी स एव ॥ ४१ ॥**

राज्ञांनीतिःनीतिशास्त्रंतस्यहृदयज्ञाःरहस्यज्ञाः । मंत्रःषाड्गुण्यचिंतनंसचतंत्रंचसामाद्युपायःतच्चतेजानंतीतितथोक्ताः । मंत्रिणःप्रधानपुरुषाः । शार्ङ्गंधनुर्यस्यसतथातस्यश्रीकृष्णस्यसभायांइत्थंवक्ष्यमाणरीत्याअन्वहंप्रतिदिनंमंत्रयंतिआलोचयंति ॥ ४० ॥ रणइति । रणे यस्यराज्ञःआज्ञैवशरःतंशंकतइतितथोक्तंतादृशंचित्तंयेषांतेतथोक्ताः । युद्धात्परावृत्यगमनेशिरश्छेदंकरिष्यतीतिभीताइत्यर्थः । भटाःपरावृत्यनलक्षयंतिपृष्ठतोनपश्यंतीत्यर्थः । जयएवांगनातांदिविजातादिविजायाअंगनातांदेवलोकस्त्रियंवेत्यर्थः । स्पृशंतिकरेगृह्णंति । शत्रुंविजयंतेवाप्राप्स्यसिस्वर्गमितिवचनात् । युद्धेआभिमुख्येनमरणात् वीराःस्वर्गंगच्छंतीवेतिभावः । सएवराजाविजयीविजयशीलवान् । राज्ञःप्रभुशक्तिरावश्यकीतिभावः ॥ ४१ ॥

चारेणेति । यःराजाचारेणगूढपुरुषेण । अपसर्पश्चरश्चारःप्रणिधिर्गूढपूरुषइतिहलः । रिपोर्विचारंमंत्रंवेत्ति । यःसदारणस्ययुद्धस्यउपस्करणंसाधनंअश्वर थादिकंतत्युनक्तियोजयतिसंपादयतीत्यर्थः । योराजाअन्यैःशत्रुभिःपरिघःप्राकारःआदिर्यस्यसतथातेनअगम्याअप्राप्याभूमिःस्वस्थानंयस्यसतथोक्तः । सएवतादृशएवराजाविजयीअन्योनच नविजयीत्यर्थः । विजिगीषुणापरवृत्तांतज्ञेनस्वशक्त्युपचययवताभाव्यमितिभावः ॥ ४२ ॥ मंत्रोपायौराज्ञामावश्यका वित्याहुः । स्वसंसदीति । यःस्वसंसदिस्वसभायांप्रौढजनेषुपुरातनवृत्तांतज्ञेषुमंत्रिषुअमात्येषुवराःश्रेष्ठाःतेषुनीत्यागमोनीतिशास्त्रंतस्ययत्तत्त्वंरहस्यंतद्विदंतीतितथो क्तास्तेषुचविचार्यकार्याकार्यंविचारयित्वाउपायाःदानाद्युपायाः तैर्द्विषतांमिथोविभेदंपरस्परबुद्धिवैषम्यंतंकुर्यात् । सभूपःसुखभाक्सुखवान् ॥ ४३ ॥ मंत्रोत्साहौराज्ञामवश्यापेक्षिताविस्याहुः । उत्साहेति । हेराजेंद्रउग्रसेन । उत्साहेनदिग्विजययात्रादावुद्योगेनसंगतासंबद्धा । नीतिर्मंत्रशक्तिः । नरवरोचितौ

चारेण यो वेत्ति रिपोर्विचारं सदा रणोपस्करणं युनक्ति ॥ अगम्यभूमिः परिघादिनान्यैः स एव राजा विजयी न चान्यः ॥ ४२ ॥ स्वसंसदि प्रौढजनेषु मंत्रिवरेषु नीत्यागमतत्त्वविस्तु ॥ विचार्य कुर्याद्द्विषतामुपायैर्मिथो विभेदं सुख भाक् स भूपः ॥ ४३ ॥ उत्साहसंगता नीतिः सूते नरवरोचितौ ॥ कीर्तिप्रतापौ राजेंद्र तत्रालस्यं प्रतीपकृत् ॥ ४४ ॥ सामाद्युपायावसरज्ञानशून्यस्य शूरता ॥ आम्नायार्थापरिस्फूर्त्तैः सामर्थ्यमिव वादिनः ॥ ४५ ॥

राजयोग्यौकीर्तिप्रतापौसूतेप्रसूते । ऋतुकालेपुरुषसंगतस्त्रीवत् उत्साहसंगतैवनीतिःफलतीतिभावः । उत्साहशब्दस्यपुल्लिंगत्वात्नीतिशब्दस्यस्त्रीलिंगत्वा त्तयोःस्त्रीपुरुषसाम्यांएवंकीर्तिशब्दस्यस्त्रीलिंगत्वात्प्रतापशब्दस्यपुल्लिंगत्वात्चतयोःकुमारीकुमारसाम्यं प्रायःस्त्रीणांकन्यपत्यापेक्षितत्वात्पुंसःपुमपत्यापेक्षितत्वा न्नीत्याःकीर्तिरुत्साहात्प्रतापइतिविवेकोद्रष्टव्यः । तत्रनीतावालस्यंअलसताअनुत्साहइत्यर्थः । प्रतीपकृत् विपरीतकारीक्लीबंसंगतानारीवालस्ययुक्तानीतिःनफ लतीतिवाचाइदंकर्त्तव्यमिदंनकर्त्तव्यमितिनीतिपारंकरोतीतिदृश्यप्रयत्नंतुनकुरुतेचेत्कार्यसिद्धिर्नभवतीतिभावः । आलस्यशब्दस्यनपुंसकलिंगत्वात्क्ली बत्वंद्रष्टव्यम् ॥ ४४ ॥ सामादीति । सामआदिर्येषांतेसामादयःतादृशायेउपायाःदानदंडादयस्तेषामवसरःप्रयोगकालःतस्यज्ञानंतेनशून्यस्तस्यराज्ञःशूरता

शौर्यंआम्नायानाम्ऋगादिचतुर्वेदानांयोर्थस्तस्यापरिस्फूर्त्तिःअस्मिन्विषयेऋग्वाक्यंप्रयोक्तव्यमस्मिन्यजुर्वेदवाक्यंमितिस्फूर्त्तिरहितस्यवादिनःसामर्थ्यमिव । यथाअयंवादीअप्राप्यकालत्वादिनानिगृह्यतेतथायमपिराजाशत्रुभिर्निगृह्यतइतिभावः ॥ ४५ ॥ यइति । ज्ञानीनभवतीत्यज्ञानीअविवेकीत्यर्थः । योराजा संधिःसंधानंमुख्योयस्याःविग्रहयानासनद्वैधीभावसंश्रयलक्षणषड्गुणात्मिकायाःसासंधिमुख्यासाचासौअमलनीतिश्चतस्याःकालःतं । संध्यादिषड्गुणप्रयोगकालमित्यर्थः । संधिर्नाविग्रहोयानमासनंद्वैधमाश्रयःषड्गुणाइत्यमरः । अविज्ञायान्यस्यकालेन्यंप्रयुज्यरणंयुद्धंतत् विधत्ते सःसंसत्सुविद्वत्सभासुषट्येनिग्रहाःसंवादानुक्तीविरोधासंगतीन्यूनाधिक्येचेतिनिग्रहस्थानानितेषांसमयउद्भावनावसरःतस्यानभिज्ञोपरिज्ञातावादीव । अकीर्तिमपकीर्तियाति । एकस्मिन्निग्रहस्थानेप्राप्तेतदनुद्भाव्यनिग्रहस्थानांतरमुद्भावयन्निरनुयोज्यार(?)योगेनसंवादीयथाप्रतिवादिनानिगृह्यते । एवंस्वसामर्थ्यदशायांप्राप्तंसंधिमकृत्वायःनिग्रहादिकं

यः संधिमुख्यामलनीतिकालमज्ञान्यविज्ञाय रणं विधत्ते ॥ षण्निग्रहाणां समयानभिज्ञो वादीव संसत्सु स यात्यकीर्तिम् ॥ ४६ ॥ नानाप्रकारैर्दशदिक्षु शत्रून्यो नैव जेतुं यतते क्षितीशः ॥ वतावशीभूतदशेंद्रियौघो व्रतीव नासौ सुखभाक्कदापि ॥ ४७ ॥ यत्सैन्यकुंताः स्वसपत्नचिंतां शार्दूलदंता इव साधयंति ॥ स्वराष्ट्रसंतोषमपि स्वतंतौ तदीयदंष्ट्रा इव सोवनीशः ॥ ४८ ॥

कुरुतेसोपिशत्रुणापराजीयतइतिभावः ॥ ४६ ॥ नानेति । यःक्षितीशःनानाप्रकाराःसामाद्युपायास्तैःदशचताःदिशश्चतासुस्थितानूशत्रूनूजेतुंनैवयतते असौराजा अवशीभूतःअजितःदशदशसंख्याकानियानिइंद्रियाणिघ्राणरसचक्षुस्त्वक्श्रोत्रवाक्पादपायुपाण्युपस्थनामकानितेषामोघःसमूहोयेनसतथोक्तः । व्रतीवसंन्यासीवकदाचित्सुखभाक्नभवति । वत । यथारसनादिज्ञानेंद्रियाणांउपस्थादिकर्मेंद्रियाणांचजयाभावेअभक्ष्यभक्षणागम्यागमनादिदुष्कर्मप्राप्त्या इहअपयशसापरत्रनरकयातनयाचयथाव्रतीदुःखभागेव तथेतिभावः ॥ ४७ ॥ यदिति । यस्यराज्ञःकुंताःसेनास्थभटानांकुंताख्यायुधानिशार्दूलस्यव्याघ्रस्यदंताइवसपत्नानांस्वशत्रूणांचिंतांमनोव्यथांसाधयंति एतादृशवीरभटोपेतोराजाकिमस्मान्करिष्यतीतिव्याकुलान्कुर्वंतीत्यर्थः । स्वतंतुःस्वसंतानंत

स्मिन्तदीयाःशार्दूलसंबंधिन्योयादंष्ट्रास्ताइवस्वराष्ट्रंस्वराज्यंतस्यसंतोषमपिसाधयंतिजनयंति । तथाक्रूराअपिशार्दूलदंष्ट्राःस्वशिशुविषयेसुखकराः व्याघ्री हरेद्यथापुत्रंदंष्ट्राभ्यांनतुपीडयेदितिवचनात् । एवंशत्रुभयंकरेराज्ञिसतिकुतोऽस्माकंभयमितिस्वराष्ट्रंसंतोषमपिकुर्वंतीतिभावः । सएवएतादृशएवावनीशोराजा नान्यःप्रजाक्षोभकृत् । शत्रुभित्तइत्यर्थः ॥४८॥ राजन्निति । हेराजन्उग्रसेननतेतवबाणःशरःत्वयामुक्तोदिशिदिशिनेतवअरीन्निहंतिनाशयति । मयापरित्यक्त स्यमत्कार्यसाधकत्वंकथंयुक्तमित्यतआह । गुणेति । गुणोमौर्वीसोऽस्यास्तीतिगुणीचापस्तेनसंगःसंबंधस्तस्य पुरुषपक्षेगुणिपुरुषसहवासलक्षणसंसर्गस्येत्यर्थः । ऋजोरवक्रस्यभावःआर्जवंतस्यशरस्यावक्रत्वादितिभावः । पुरुषपक्षेअवक्रचेतसइत्यर्थः । वंश्यस्यवंशरूपस्यवंशविशेषजातत्वादितिभावः । पुरुषपक्षे कुलीनस्येत्यर्थः । तत्परित्यक्तस्यापिस्वामिकार्यकरत्वंफलंहिसज्जनसंसर्गशुद्धमनस्कत्वकुलीनत्वादिगुणयुक्तःपुरुषःस्वस्वामिनापरित्यक्तोपिस्वामिकार्यंसाध

राजन्मुक्तोऽपि ते बाणो निहंति दिशि दिश्यरीन् ॥ गुणिसंगस्यार्जवस्य वंश्यस्य च फलं हि तत् ॥ ४९ ॥
पांथान् समंताद्दिवसे दिनेशप्रख्यो रजन्यां रजनीशकल्पः॥ यस्तस्करेभ्योऽवति दुष्कराज्ञः स एष कीर्त्यै
ति दिशामुपांतम् ॥ ५० ॥ न्यायं संगृह्य नृपतिरन्यायं यस्तु संत्यजेत् ॥ पदे पदे तमन्यायः संनम्या
भ्यर्थयिष्यते ॥ ५१ ॥

यतीत्यत्रदृष्टांतइतितादृशपुरुषाः रा ज्ञासंपादनीयाइतिभावः ॥ ४९ ॥ पांथानिति । कर्तुमशक्यादुष्कराआज्ञाशासनंयस्यदुष्कराज्ञः । योराजादिवसेदिवादिनेशस्यसूर्यस्यप्रख्यःसमानःसन्सम तात्सर्वतःपांथान्पथिकान्तस्करेभ्यश्चोरेभ्यःअवतिरक्षति । यथारात्रौसंचरतांचोराणांउदितःसूर्यःनिवर्तकः तथातस्करभयंपरिहृत्यरक्षतीत्यर्थः । रजन्यांरात्र्यां रजनीशस्यचंद्रस्यकल्पःसदृशःसन्तस्करेभ्योऽवति । यथातमसिसंचराश्चोराश्चंद्रोदयेबिभ्यंतितथाचंडशासनाद्राज्ञोरात्रावपिचोराःबिभ्यंतीतिभावः । सए वराजासूर्याचंद्रमसौस्वप्रभयेवकीर्त्यास्वयशसामुपांतंसमीपंततएतिगच्छति । एवंरक्षिताःपांथादिशिदिशितंकीर्तयंतीतिभाव ॥ ५० ॥ न्यायमिति । योनृप तिःन्यायःव्यवहारपदेषूचितःन्यायःतंसंगृह्णान्यायंसंत्यजेत् अन्यायःअन्येभ्यःपरिपालितन्यायेभ्यःपौरजानपदेभ्यःआयःद्रव्यंयदिराज्ञात्यक्तःसएवान्यायः

इतिध्वनिः । तंनृपतिंपदेपदेसंनम्यनत्वाअभ्यर्थयिष्यते । मांगृह्णीष्वेतिप्रार्थयिष्यते । कृतोपकारास्तेप्रार्थनापूर्वकंधनंदिशंतीतिभावः । यथाराज्ञापरित्यक्तः पुरुषःमांपरिपालयेतिनत्वार्थयते । एवंपरित्यक्तःसोन्यायःतमर्थयतिआयातचमत्कारः ॥ ५१ ॥ दिनइति । दिनंदिवातस्मिन्दिनेशस्यसूर्यस्यप्रख्यःसदृशःरात्रौरात्रीशस्यसन्निभःसमानःयोराजाप्रजाः कुत्सिताःपंथानोकापथाःतेभ्यःअगम्यागमादिश्रुतिनिषिद्धमार्गेभ्यइत्यर्थः । रुंधेनिवारयति । यथासूर्याचंद्रमसौप्रकाशेनदुर्मार्गेप्रतिबंधकौतथादंडनीत्याराजादुर्मार्गेरुणद्धीत्यर्थः । स विशःप्रजास्तासांराजाइनश्वस्वामीव । एवंचंद्रसूर्यसाम्यात्चंद्रसूर्यवाचकौराजेनशब्दौअस्याप्युचितावितिभावः ॥ ५२ ॥ प्रायेणेति । प्रायेणप्रायशःधनमस्यास्तीतिधनवान् क्लेशोस्यास्तीतिक्लेशवान्रक्षणपोषणादिनायाससवानपीत्यर्थः । जायते । तथाहि । फलान्यस्मिन्संतीतिफलवानेवतरुर्वृक्षः कंटकाःआवृत्तिरूपतयाफलरक्षार्थंवृक्षस्यपरितोनिक्षिप्तकंटकाःतैःउपरुध्यतेपीड्यते ॥ ५३ ॥

दिने दिनेशप्रख्यो यो रात्रौ रात्रीशसन्निभः ॥ कापथेभ्यः प्रजा रुंधे स राजा च विशामिनः ॥ ५२ ॥ प्रायेण धनवानेव जायते क्लेशवानपि ॥ फलवानेव हि तरुः कंटकैरुपरुध्यते ॥ ५३ ॥ काले काले धनं नूनमर्थिभ्यो वितरेद्धि यः ॥ विमुच्यते स दुःखेभ्यः कंटकेभ्य इव द्रुमः ॥ ५४ ॥ वित्तैः कीर्तिं शरैः शौर्यं प्रत्यहं यः समार्जयेत् ॥ स एव धनवान्सम्राडन्यं मन्ये त्वकिंचनम् ॥ ५५ ॥ अर्थिभ्योऽर्थमनादिश्य यः क्षं निक्षिपति क्षितौ ॥ मृत्स्नां स्वयोग्यामादाय वित्तं भूम्यै प्रदत्तवान् ॥ ५६ ॥

कालेकालइति । यःराजाकालेकालेअर्थिभ्यःयाचकेभ्यःधनंद्रव्यंतत्वितरेद्धिदद्याद्धिसराजादुःखेभ्यःविमुच्यतेनूनंनिश्चयः । कथमिवकंटकेभ्यःपरितोनिक्षिप्तकंटकेभ्यःद्रुमःउपात्तफलोवृक्षइवराज्ञादानरूपेणभवितव्यमन्यथापूर्वपद्योक्तार्थप्रसक्तेरितिभावः ॥ ५४ ॥ वित्तैरिति । योवित्तानिन्यायोपार्जितवित्तानितैःकीर्तिंदानदेवतासंतर्पणादिनायशः शराःबाणाःतैःशौर्यंशत्रुसंहारादिनाप्रतापस्तत्अहरहःप्रत्यहंप्रतिदिवसमित्यर्थः । समार्जयेत्संपादयेत् । सएवसम्राट्सार्वभौमःनृपःधनवान् । अन्यमशूरमदत्तधनंनृपंनविद्यतेकिंचनकिंचिदपिधनमसौअकिंचनस्तंदरिद्रमित्यर्थः । मन्ये । कीर्तिप्रतापावेवराज्ञोधनंनवणिजामिवधनमितिभावः ॥ ५५ ॥ अर्थिभ्यइति । यःअर्थिभ्यःयाचकेभ्यःअर्थंधनंअनादिश्यादत्त्वातमर्थंक्षितौनिक्षिपति । भूमौगर्तंकृत्वासंस्थापयति । सःगर्तकर

णसमयएवस्वयोग्यांमृत्स्नांमृत्तिकामादायगृहीत्वा। गर्तकर्त्तापुमान्स्वाभिमुख्येनगर्तात्मृदमुत्क्षिपतीतिलोकसिद्धम् । वित्तंभूम्यैवसुंधरायैदत्तवान्। एतादृ शलुब्धस्यमुखेधूलीपातोभवतीतिभावः॥ ५६ ॥ ऐहिकसाम्राज्योचितांनीतिमुक्त्वाऐहिकपारत्रिकसाम्राज्योचितांनीतिंवर्णयति सर्वेशइति। यस्यराज्ञोभु विसर्वेशेश्रीकृष्णेनविद्यतेमलंमिथ्याज्ञानादिदोषोयस्याःसाऽमला निर्मलाभक्तिर्नैवनास्त्येवएतस्यश्रीकृष्णस्यआज्ञाएतदाज्ञासाआत्मास्वरूपंयस्यसतथोक्तस्त स्मिन्धर्मेवारतिर्नास्तितंश्रीकृष्णमाश्रितस्तदाश्रितःसचासौजनश्चतस्मिन्सन्नुत्तमोयोमानोबहुमानस्तस्यलेशःसोपिवानास्ति। दुष्टेषुप्रीतिःस्नेहःतस्यांरतस्यनि ष्ठुरागीर्वाक्यंयस्यसतस्यदुष्टोयोमंत्रःपिशुनोक्तःदुरालोचनंतस्मिन्दत्ताश्रुतिःकर्णौयस्यराज्ञःसाम्राज्यंसार्वभौमपदंनिजःस्वीयोयोवंशःकुलंतस्यपांसनंमलिनी

सर्वेशे भुवि यस्य भक्तिरमला नैवैतदाज्ञात्मके धर्मे वा न रतिस्तदाश्रितजने सन्मानलेशोपि वा ॥
दुष्टप्रीतिरतस्य निष्ठुरगिरो दुर्मंत्रदत्तश्रुतेः साम्राज्यं निजवंशपांसनकृतेः कंसस्य संसारवत् ॥ ५७ ॥
विष्णुभक्तिरतं भूपं नोज्झत्येव तदंगना ॥ तद्द्वेषिणि न सा स्थातुमुत्सहेत पतिव्रता ॥ ५८ ॥
धर्मद्वितीयं नृपतिं धर्मोऽन्यो नैव पीडयेत् ॥ अन्यथा प्रतिमल्लोसौ सान्वयं संहरिष्यति ॥ ५९ ॥

भावस्तस्यकृतिःकरणंयेनसःकरणहेत्वोरित्यर्थः कंसस्यसंसारेणतुल्यंवर्त्ततइतिसंसारवत् कंससाम्राज्यवत्तुकुशलकृदित्यर्थः। एतेदुर्गुणाःकंसेस्पष्टाएवेत्यतएवंवर्त मानोभूपःकंसतुल्यइतिभावः ॥ ५७ ॥ विष्णुभक्तौरतमासक्तंभूपंभूपतिंतस्यश्रीविष्णोरंगनालक्ष्मीर्नोज्झत्येव नजहात्येव । तस्मिन्श्रीविष्णौद्वेषोस्यास्तीति द्वेषीतस्मिन्पतिव्रतासालक्ष्मीःस्थातुंनोत्सहेत। पतिव्रतानारीस्वभर्तुर्द्वेषिनिकटेनतिष्ठतीतिलोकप्रसिद्धमितिभावः। अनेनसर्वेशेभुवियस्यभक्तिरमलेतिपूर्वपद्यो क्तविष्णुभक्तेरावश्यकत्वमुपपादितम् ॥५८॥ धर्मेति। धर्मःवैष्णवधर्मःद्वितीयःसहायोयस्यसतथातंनृपतिंअन्यःधर्मःयमःनपीडयेदेवमहामल्लेस्वसमीपवर्तिनिस तियथामल्लांतरान्नभयंतथासकलपापपरिहारकवैष्णवधर्मेपितस्यनयमाख्यधर्माद्भयमितिभावः। अन्यथावैष्णवधर्मसहायाभावेप्रतिमल्लःस्वभीषकवैष्णवधर्मा

ख्यप्रतिभटरहितःअसौयमःसान्वयंसकुलंनृपतिंसंहरिष्यति । अनेनप्राक्तनपद्योक्तधर्मरतेरावश्यकत्वमुपपादितम् ॥ ५९ ॥ विष्णोरिति । यस्तुराजा विष्णोरर्भकानांशिशूनांसंकाशाःसमानास्तान्वैष्णवान्विष्णुभक्तान्निंदतितत्रापितस्मिन्नपिराज्ञिविष्णुद्वेषिवत्तद्भक्तद्वेषिण्यपिराज्ञिसाश्रीःलक्ष्मीःपुत्रेद्वेषःसोस्यास्तीतिन स्मिन्मातृवत्विष्णवर्भकसमानांतेषांविष्णुपत्न्यालक्ष्म्याअपिपुत्रसमत्वादितिभावः । अनेनपूर्वोक्तःवैष्णवसमानःसमर्थितोभवति ॥ ६० ॥ दुष्टेति । दुष्टेषुप्री तिःस्नेहस्तस्यांरतंभूपं क्रमःकालक्रमःतस्माद्दोषोपिस्पृक्ष्यति संसर्गजादोषगुणाभवंतीतिवचनात्स्पर्शंकरिष्यति । स्पृशआमर्शनेलृट् । सोपिक्रमेणदोषीभविष्य तीतिभावः । गुणेषुविनयादिगुणेषुलब्धालोलुपाश्रीःमहालक्ष्मीःदोषिणंनाश्रयेत् । इतिमेममभतिः । अनेनप्रागुक्तदुर्जनसमागमाख्यदोषस्यहेयत्वमुपपादितंभव ति ॥ ६१ ॥ कठोरेति । इंदिरालक्ष्मीःकठोरापरुषागीर्वाक्यंयस्यसतथातंपरुषभाषिणमित्यर्थः । नृपमुत्सृज्यअपरंमृदुभाषिणंवृणोति । तत्कथमित्यतआह ।

विष्णोरर्भकसंकाशान्वैष्णवान्यस्तु निंदति ॥ तत्रापि न स्थिरा श्रीः स्यात्पुत्रद्वेषिणि मातृवत् ॥ ६० ॥
दुष्प्रीतिरतं भूपं दोषोपि स्पृक्ष्यति क्रमात् ॥ दोषिणं गुणलब्धा श्रीर्नाश्रयेदिति मे मतिः ॥ ६१ ॥
कठोरगिरमुत्सृज्य वृणोत्यपरमिंदिरा ॥ घनं पुरोग्रस्तनिताद्विहायेव तडिद्दिशः ॥ ६२ ॥ सन्मंत्रशीर्णो दु
र्मंत्रः प्रयोक्तारं क्षिणोति हि ॥ यथा नृसिंहसूर्याग्रे भैरवः कैरवद्युतिः ॥ ६३ ॥

तडिदिति।तडित्विद्युत्उग्रंकठोरंयत्स्तनितंमेघनिर्घोषस्तस्मात्पुरापूर्वमेवघनोमेघःतं विहायदिशइवदिगंतराणीवमेघनिर्घोषसूचकतयापूर्वंविद्युत्स्फुरणंभवतीति प्रसिद्धेस्तस्याश्चकांतिरूपतयाश्रीसाम्यं। अनेनपूर्वोक्तनिष्ठुरवचनस्यहेयत्वमुपपादितम् ॥ ६२ ॥ सन्मंत्रेति । सत्समीचीनोयोमंत्रःआलोचनंतेनशीर्णःक्षीणश क्तिःदुर्मंत्रःदुष्टालोचनंस्वस्यप्रयोक्तारंपिशुनंक्षिणोतिहिनाशयतिहि । आपातरमणीयंदुरालोचनंशृण्वन्नपिराजाततोनर्थप्राप्त्यादुर्मंत्रप्रयोक्तारंपिशुनमेवदंडय तीत्यर्थः। तत्रनिदर्शनमाह। यथेति । नृसिंहएवनृसिंहमंत्रएवसूर्यस्तस्यअग्रेपुरोभागस्तस्मिन्कैरवस्यकुमुदस्यद्युतिरिवद्युतिर्यस्यसतथोक्तः । कुमुदसदृशःसूर्या ग्रेकुमुदमिवप्रणाशत्वमित्यर्थः । भैरवःभैरवमंत्रोयथास्वप्रयोक्तारमेवनाशयतितथेत्यर्थः । महामंत्रज्ञेषुप्रयुक्ताकृत्याविघातिनीतिकाशिराजपुत्रसुदक्षिणादौप्र

सिद्धम् । अनेनपूर्वोक्तदुर्मंत्रश्रवणस्यानर्थहेतुत्वमुक्तंभवति ॥ ६३ ॥ प्रजाइति । यंराजानंप्रजाःनप्रशंसंतिस्तुवंति । अतिथिभिश्चयःनस्तुतः विषयेषुआस क्ताकुमतिर्दुर्बुद्धिर्यस्यसतथातस्यभूपतेःसुखंनभवति ॥ ६४ ॥ प्रजापालनातिथिपूजनदुर्विषयासक्त्यादिगुणान्क्रमेणोपपादयति । प्रजानामित्यादिना । यो लुब्धोराजाप्रजानांपीडनंकृत्वाधनमार्जयेत्सराजास्वसुतानेवविक्रीयवसुद्रव्यंसंचिनुतेवैस्वपोष्यप्रजानामर्थतःशब्दतश्च प्रजास्यात्संततौजनइत्यभिधानात्स्व सुतोपमत्वादितिभावः ॥ ६५ ॥ प्रजानांरंजनंधर्मतःपरिपालनेनसंतोषःतस्यकर्ताकर्तानृपःप्रजापरंपरांसंततिपरंपरांपुत्रपौत्राभिवृद्धिमित्यर्थः । एतिप्राप्नोति पीडितातुसाप्रजासमानंनामप्रजेतिनामयस्याःसा सनाम्नीतांप्रजांसंततिंतत्कुलेतस्यप्रजासंपीडनकर्तुःनृपस्यकुलंगोत्रंतस्मिन्नोत्पादयति । यथानिष्कासितोया

प्रजा यं न प्रशंसंति स्तुतो नातिथिभिश्च यः ॥ विषयासक्तकुमतेर्न सुखं तस्य भूपतेः ॥ ६४ ॥ प्रजानां पीडनं कृत्वा यो लुब्धो धनमार्जयेत् ॥ विक्रीय स्वसुतानेव स वै संचिनुते वसु ॥ ६५ ॥ प्रजापरंपरा मेति प्रजारंजनकृन्नृपः ॥ पीडिता तु सनाम्नी तां नोत्पादयति तत्कुले ॥ ६६ ॥ अपूजितोऽतिथिः स्वीयम तिथित्वमपार्थकम् ॥ समर्पयति तत्तिथ्यामपूज्यत्वमिवार्पयन् ॥ ६७ ॥ विषयेषूपभुक्तेषु तृतीयोंऽशोऽस्य जीर्यते ॥ शिष्टं तु विषसारूप्यात्कष्टाय परिकल्प्यते ॥ ६८ ॥

चकःस्वनिष्कासनप्रदर्शनेनयाचकांतरंनिवर्तयति । तथापीडिताप्रजाप्रजांतरमपिनिवर्तयतीतिभावः ॥ ६६ ॥ अपूजितइति । अपूजितःअतिथिः । अपगतःअ र्थःवाच्यार्थोयस्यतदपार्थकंव्यर्थंस्वीयमतिथित्वं नविद्यतेतिथिःयस्यसोतिथिस्तस्यभावस्तत्त्वंतत् । अतिथिपुरुषेविद्यमानतिथिराहित्यलक्षणातिथित्वमि त्यर्थः । तस्ययेनपुंसातिथिःनपूजितःतस्य तिथ्यांजात्येकवचनं । प्रतिपदादितिथिष्वित्यर्थः । अपूज्यत्वंतत्तत्तिथ्युचितपितृदेवपूजाराहित्यत्वंअर्पयन्निवा त्रागतो अतिथित्वाश्रयभूतात्मवदतिथित्वाश्रयास्तिथयोप्यपूज्याभवंत्वितिमन्वानइवार्पयति संगमयति ॥ नतिथयेतिथयःव्यर्थतिथयइति । अपूजितातिथेःअमर्त्यस्य तिथीनामतिथिदद्यादितिभावः ॥ ६७ ॥ विषयेष्विति । विषयाःस्वर्गादिविषयाःतेषुउपभुक्तेषुसत्सुअस्यउपभुक्तस्यविषयस्यतृतीयोंशःतृतीयभागःअस्य

विषयभोक्तुःपुरुषस्यजीर्यतिजीर्णंभवति । महत्सेवादिजनितपुण्येननरकसाधनंनभवतीत्यर्थः । शिष्टंतुअवशिष्टभागद्वयंतुविषयस्ययत्सारूप्यंदुर्जरत्वरूप विषयसाम्यंतस्मात्‌विषयेत्यत्रतृतीयांशेयकारेजीर्णेगतेसतिअवशिष्टवर्णद्वयस्यविषवाचकत्वात्‌विषसारूप्यमितिभावः । कष्टंनरकरूपानर्थस्तस्मैपरिकल्प्यते ॥ ६८ ॥ मंत्रवर्णनंसमापयति । इतीति । इतिआदिर्यस्याःसाइत्यादिरुक्तप्रकारेत्यर्थः । अमात्यवर्गोक्तनीतिःअमात्यानांवर्गःसमूहस्तेनउक्तानीतिस्त

इत्याद्यमात्यवर्गोक्तनीत्या पृथ्वीं स पालयन् ॥ भक्तिं मुकुंदे बिभ्राणस्तत्याज विषयस्पृहाम् ॥ ६९ ॥
रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायि
नि ॥ संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातः सुरमंडलीषु महितः सर्गो मुदां द्वादशः
॥ ७० ॥ इति श्रीरुक्मिणीशविजये महाकाव्ये द्वादशः सर्गः ॥ १२ ॥

यापृथ्वींपालयन्मुकुंदेश्रीकृष्णेभक्तिंबिभ्राणःसःउग्रसेनःविषयस्पृहांतत्याजत्यक्तवान् ॥ ६९ ॥ रोम्णामितिउक्तोर्थः ॥ ७० ॥ इतिश्रीरुक्मिणीशविजयटीकायांगुरुभावप्रकाशिकायांद्वादशःसर्गः ॥ १२ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥



॥ इति श्रीरुक्मिणीशविजये द्वादशसर्गः समाप्तः ॥

॥ अथ श्रीरुक्मिणीशविजये त्रयोदशसर्गप्रारंभः ॥

श्रीगुरवेनमः ॥ यद्दूतोद्धवनिर्धूततापगोप्योमदंदधुः ॥ तस्मैनमश्चिदानंदसिंधवेलोकबंधवे ॥ १ ॥ निजेति । अथानंतरंव्रजेश्वरःश्रीकृष्णःस्वस्यरम्यामिमांस्थितिंब्रह्मचर्यावस्थांनिशम्यनिजःस्वकीयःआगमःआगमनंतस्मिन्याआशातयाधृतंजीवितंजीवनंयासांताःतथातासांव्रजांगनानांनंदगोकुलस्थस्त्रीणांस्वस्यसूनुस्तस्यभावस्तत्त्वातस्यांयाआशातस्याःवसुदेवोपनीतेश्रीकृष्णेस्वपुत्रोयमित्याशायाःअपगमःअपगमनंतस्मात्पित्रोर्यशोदानंदयोश्चहृदिखेदशंकीसन्आत्मनःयोवियोगोविरहःसएववह्निःतस्यसकाशात्संतप्तंस्ववर्गंनंदादिबंधुसमूहंतंसुखकरःअर्थःअभिधेयोयेषांतेसुखार्थाःयेसंदेशाःतएवसुधाप्रवाहास्तैःउज्जीवयितुंस्वंस्वकीयंउद्धवंव्रजंगोकुलंतंतत्गच्छइत्यादिशत्आज्ञापयामासेतिश्लोकद्वयस्यएकएवान्वयः ॥१॥२॥ सचेति। प्रियस्यश्रीकृष्णस्ययोगस्यसहवासस्याभावोयोगोविर

निजागमाशाधृतजीवनानां व्रजांगनानां हृदि खेदशंकी ॥ इमां स्थितिं स्वस्य निशम्य रम्यां स्वसूनुताशापगमाच्च पित्रोः ॥ १ ॥ व्रजं व्रजेत्यादिशदुद्धवं स्वं व्रजेश्वरोऽथात्मवियोगवह्नेः ॥ प्रतप्तमुज्जीवयितुं स्ववर्गं सुखार्थसंदेशसुधाप्रवाहैः ॥ २ ॥ स च प्रियायोगसमुत्थसाध्वसं तदीयसंदेशवरैर्विदूरयन् ॥ प्रपन्नवात्सल्यमदो मधुद्विषः स्मरन्नुन्नं वर्त्मनि विस्मरन्ययौ ॥ ३ ॥ निशामुखे गोविनिकुञ्जमीशितुर्व्रजं विशन्सोऽथ ददर्श मंडितम् ॥ परिस्फुरद्वेणुविनोदवेदितस्वभर्तृलीलारसगोपबालकैः ॥ ४ ॥

हस्तेनसमुत्थमुत्थितंयतसाध्वसंत्वीयंभयंतत् । तदीयाःश्रीकृष्णसंबंधिनोयेसंदेशवराः(आकीशवद्यौँदोनयया)सहविरहोनघटतइतिगोपीःप्रतिप्रेष्यमाणश्रीकृष्णाज्ञारूपवचनश्रेष्ठाःतैःविदूरयन्मधुद्विषःश्रीकृष्णस्यअदस्ततमपन्नवात्सल्यंभक्तवात्सल्यंस्मरन्वर्त्ममार्गस्तस्मिन्श्रमःयात्रानिमित्तखेदःतंविस्मरन्सःउद्धवःययौगोकुलसमीपंगतवान् ॥ ३ ॥ निशामुखेति । अथउद्धवःनिशामुखंप्रदोषकालस्तस्मिन्ईशितुःश्रीकृष्णस्यव्रजंगोकुलंविशन्प्रविशन् । परिस्फुरद्वेणुर्विलसद्वेणुःतेनयोविनोदःक्रियमाणसंगीतविनोदःस्तेनवेदितोज्ञापितःस्वभर्तृलीलारसःस्वेषांभर्त्तास्वामीकृष्णःतस्ययाबाललीलातस्यारसोविलासःयैस्तेतथोक्तास्तेचतेगोपानांबालकास्तैर्गोपालबालकैर्मंडितंअलंकृतंतंतत्गोविनिकुंजंगोसमूहःतत्ददर्श ॥ ४ ॥

उत्क्षिप्तेति । तदाप्रवेशकालेअध्वनिमार्गेउत्क्षिप्तमुन्नतंपुच्छंलांगूलंयस्यसतथातंउदितःउत्पन्नोयःअल्परवःस्वशफारवःतेनअभिरामोमनोहरस्तंस्वस्ययद्धावनं तस्यविलासोलीलातदेवविलासइतिवातेनविकंपितानिअंगानिचरणादीनियस्यसतथोक्तस्तं । वत्संशकृत्करिंवीक्ष्य अनुधावनेपराआसक्ताअनुधावनंकुर्वती त्यर्थः । गौः कृष्णःस्वस्यवर्गःसमूहःतंस्वगोप्यबंधुजनमित्यर्थः । अन्वेतुअहमिवानुगच्छतु । इतिउद्धवायवक्तिनूनम् ॥ ५ ॥ गोधूलीति । गवांधूलयःरजांसिताभिः धूसराणिधूसरवर्णानियानिमनोज्ञशरीराणिमनोहरशरीराणितेषांकांतिःयेषांतेतथातान् संगतानिकरेषुसंस्थितानिवेणवःशृंगाणिचवेणुशृंगाणिवेणुशृंगनिर्मितवा द्यानियेषांतेतथातान् गोपान्निरीक्ष्य कृष्णस्यशिशोःसंबंधीशैशवःयोविलासःलीलातांअनुस्मरन्सःउद्धवःमोदादुत्थमंबुमोदांबुआनंदाश्रुतेनपूर्णेनयनेयस्यसतथो

उत्क्षिप्तपुच्छमुदिताल्परवाभिरामं वत्सं स्वधावनविलासविकंपितांगम् ॥ वीक्ष्यानुधावनपराऽध्वनि गौः स्ववर्गमन्वेतु कृष्ण इति वक्ति नदोद्धवाय ॥५॥ गोधूलिधूसरमनोज्ञशरीरकांतीन् गोपान्निरीक्ष्य करसंगतवेणुशृंगान् ॥ कृष्णस्य शैशवविलासमनुस्मरन्स मोदांबुपूर्णनयनः पुलकांकितोऽभूत् ॥ ६ ॥ ताः कृष्णमुक्तवरभूषणवस्त्रमाल्यभृत्यं निरीक्ष्य निजनाथधियेव गावः ॥ उन्नम्रकंधरमुदीरितकर्णयुग्मं पश्यंत्य उद्धवमनोभ्युदयं वितेनुः ॥ ७ ॥ दिदेश यं प्रीतमनाः स्ववर्गे निजं व्रजं प्रत्यरविंदनेत्रः ॥ विवेश सोऽप्युद्धवमेव दूरान्निवेशयन्दृष्टृविलोचनेषु ॥ ८ ॥

क्तः । पुलकैरोमांचैःअंकितःअंचितश्चाऽभूत् ॥ ६ ॥ ताइति । कृष्णेनभुक्तानिअनुभुक्तानिवरभूषणवस्त्रमाल्यानिउत्तमभूषणवस्त्रपुष्पमालाःयस्यसतथोक्तस्तं । भृत्यंश्रीकृष्णभृत्यंउद्धवंनिरीक्ष्यनिजःस्वकीयोनाथःस्वामी श्रीकृष्णःसइतिधियाबुद्ध्या उन्नम्राऊर्ध्वीभूताकंधराग्रीवायथाभवतितथा । उदीरितमूर्ध्वीकृतंकर्णयुग्मंयथाभवतितथा उदीरितकर्णयुग्मंपश्यंत्यःताःगावःउद्धवमनसःयःअभ्युदयःसंतोषातिशयःतंवितेनुश्चक्रुः ॥ ७ ॥ दिदेशेति । स्वेषांस्वभक्तानांवर्गःसमूहःतस्मिन्प्रीतंमनोयस्यसतथोक्तःअरविंदनेत्रःश्रीकृष्णःयंउद्धवं निजंआत्मीयंततव्रजंगोकुलंप्रतिदिदेश । सोपिकृष्णेनाज्ञप्तःउद्धवोपिदूरंदूरस्थलंतस्मात्द्रष्टृणांस्वद्रष्टृणांगोपादीनांयानिविलोचनानितेषुउद्धवःउत्सवःतमेव

निवेशयन् । विवेशव्रजंप्रविष्टवान् । उद्धवद्दष्टृणांनेत्रोत्सवोजातइतिभावः ॥ ८ ॥ गृहेगृहइति । सःउद्धवःगृहंगेहंतस्मिन्गृहेगृहेप्रतिगृहमित्यर्थः । कृष्णकथैवा मृतंतेनआततंव्याप्तंतदर्चनंश्रीकृष्णपूजातस्मैश्रीकृष्णपूजार्थंआहृतःआनीतोयोधूपस्तेनवासितंसुरभीकृतंततत् । तस्मैश्रीकृष्णायार्पितानिसमर्पितानितैः स्रजश्च अंबराणिचअलंकृतिःआभरणानिताश्चचंदनानिचतानिआदयोयेषांतानितैर्विभूषिताःअलंकृताःस्त्रीपुरुषायस्मिंस्तत्तथाततगोकुलंआपइत्यंतंकुलकम् ॥ ९ ॥ शुकैरिति । हरेःश्रीकृष्णस्यनामगृणद्भिःउच्चरद्भिःशुकाःकीरास्तैःतस्यश्रीकृष्णस्ययोवेणुस्तस्ययोरवःतस्यानुवादिनःअनुवदनशीलास्तैःतद्वेणुरवध्वनद्भिरित्यर्थः। पिकैःकोकिलैःमुकुंदस्यपदांबुजंतद्वत्शोभिशोभायमानंयन्नीरजंनीरात्जलात्जातंनीरजंकमलं । तस्मिन्स्थिराःयेद्विरेफाःभ्रमरास्तैःविष्णुपादाब्जसान्यादेव

गृहे गृहे कृष्णकथामृताततं तदर्चनायाहृतधूपवासितम् ॥ स्रगंबरालंकृतिचंदनादिभिर्विभूषितस्त्रीपुरुषं तदर्पितैः ॥ ९ ॥ शुकैर्हरेर्नाम गृणद्भिरावृतं पिकैश्च तद्वेणुरवानुवादिभिः ॥ मुकुंदपादांबुजशोभिनीरज स्थिरद्विरेफैर्हरिकिंकरप्रभैः ॥ १० ॥ सदा मुकुंदागमनाभिकांक्षया सुपूर्णकुंभैः शुभतोरणैर्ध्वजैः ॥ अलं कृतद्वारचयं फलोच्चयैर्विचित्ररंगावलिभिश्च रंजितम् ॥ ११ ॥ मुकुंदवीक्षाफलकाम्ययाऽन्वहं त्रिकाल चीर्णद्विजदेवतार्चनैः ॥ तदीयलीलामृतपूर्णसत्कथाधृतासुभिः संकुलमाप गोकुलम् ॥ १२ ॥

स्थिराःनतुमकरंदाशयेतिभावः । अतएवहरिकिंकराणांहरिभक्तानांप्रभेवप्रभायेषांतेतथातैःएतैःशुकादिभिरावृतंगोकुलंआपेत्यन्वयः ॥ १० ॥ सदेति । सः उद्धवःमुकुंदस्यश्रीकृष्णस्ययदागमनंतस्यापिशंकातयासुपूर्णाःयेकुंभाःकलशास्तैःशुभानिमंगलकिसलयबद्धमालावत्वेनशोभनानियानितोरणानितैःध्वजाःप ताकास्तैःफलोच्चयाःफलसमूहास्तैःअलंकृतःद्वारचयःद्वारसमूहोयस्मिंस्तत्तथोक्तम् । विचित्राःनानावर्णाःयाःरंगावलयःरंगसमूहास्ताभिश्चरंजितमलंकृतंगो कुलमापेत्यन्वयः ॥ ११ ॥ मुकुंदेति । सःउद्धवःअहरहःअन्वहंप्रतिदिनमित्यर्थः । मुकुंदस्यश्रीकृष्णस्यवीक्षैवदर्शनमेवफलंतस्यकाम्ययाइच्छयात्रयःप्रातः कालादयोयेकालाःतेषुचीर्णंकृतंद्विजदेवतार्चनंद्विजदेवतानांपूजनंयैस्तेतथोक्ताःतैःतदीयंश्रीकृष्णसंबंधियल्लीलामृतंतेनपूर्णायासत्कथातयाधृताःअसवःप्राणाः

यौस्तैतथोक्तैः । जनैःसंकुलंपरिपूर्णंतत्गोकुलंआप ॥ १२ ॥ ततइति । ततःगोकुलप्रवेशानंतरंउद्धवःनंदस्यनंदगोपस्यसदनंगृहंतत्सहसाशीघ्रंविवेश । ततः अन्येषांगोपानांचेतस्स्वपिअपरोन्यस्तंउद्धवमुत्सवंन्ययुंक्तनियोजितवान् । अस्मद्गृहमस्मद्गृहमायास्यतीतिसर्वेषांचित्ताह्लादोजातइत्यर्थः ॥ १३ ॥ तमिति । सः नंदगोपःस्वस्यनंदनःपुत्रःश्रीकृष्णःतस्ययेअंघ्र्यंबुजेपादपद्मेतयोर्लब्धभृंगइवतंउद्धवंअर्चयामास । तथाहि । लक्ष्मीशस्यश्रीकृष्णस्ययेपदेपादौतयोःएकभक्ताः मुख्यभक्ताःकृष्णैकांतभक्ताइत्यर्थः । पुरुषाःतदन्यत्श्रीकृष्णाद्भिन्नंजगत् । तस्यसंबंधीतदीयःतदीयइतिबुद्धिःतयातद्भृत्यइतिबुद्ध्येत्यर्थः । अर्चयंतिहि । नतुत दासत्वेनस्वातंत्र्येणवापूजयंतीतिभावः ॥ १४ ॥ कृपामिति । हरेःश्रीकृष्णस्य आत्मनितस्मिन्नंदेवर्त्यमानांउद्धवेनवर्त्यमानांकृपांदयांनिशम्यउद्धवाच्छ्रुत्वानंद

ततो विवेश नंदस्य सदनं सहसोद्धवः ॥ अन्येषामपि चेतस्सु न्ययुंक्ताऽपरमुद्धवम् ॥ १३ ॥ तमर्चया मास स नंदगोपः स्वनंदनांघ्र्यंबुजलब्धभृंगम् ॥ तथा हि लक्ष्मीशपदैकभक्तास्तदन्यदर्चंति तदीयबुद्ध्या ॥ १४ ॥ कृपां हरेरात्मनि वर्त्यमानां निशम्यम् नंदः सह जाययाऽभूत् ॥ प्रहृष्टरोमा प्रतिरुद्धकंठः प्रह र्षवार्यंकितलोलनेत्रः ॥ १५ ॥ विजृंभिते यस्य मुखे सतीयमपश्यदात्मानमिदं जगच्च ॥ वियोगवार्तामसु नोत्सृजध्वं परं परब्रह्मधिया भजध्वम् ॥ १६ ॥ स नंदमानंदनिधिं विधाय जगाम गोपीजनमंदिरा णि ॥ सुदुष्करोग्रव्रतकर्शितांगमुनींद्रवृंदाश्रमसंमितानि ॥ १७ ॥

जाययाभार्यययायशोदयासहप्रहृष्टानिरोमाणियस्यसतथोक्तः । प्रतिरुद्धःगद्गदीकृतःकंठोयस्यसतथोक्तः । प्रहर्षेणआनंदेनजनितंवारिप्रहर्षवारितेनअंकितेसंबद्धे लोचनेनेत्रेयस्यसतथोक्तःबभूव ॥ १५ ॥ विजृंभितइति । विजृंभितंशिशुलीलयाविजृंभणावस्थांप्राप्तंतस्मिन् यस्यश्रीकृष्णस्यमुखेवदने । इयंसतीतवपत्नी यशोदाआत्मानंइदंजगच्चअपश्यत् । अमुनाएतादृशेनश्रीकृष्णेनसहवियोगवार्तांविरहस्यवार्तांउत्सृजध्वं त्यध्वजं । परंकेवलं परंपरिपूर्णंयत्ब्रह्मतदितिधिया बुद्ध्याभजध्वम् ॥ १६ ॥ सइति । सउद्धवःनंदंनंदगोपंआनंदस्यसुखस्यनिधिराश्रयस्तं । विधाय । दुष्कराणिदुर्गाणियानिव्रतानितैःकर्शितानिकृशीकृतानिअंगा

नियेषांतेतथोक्तास्तादृशायेमुनींद्रास्तेषांयद्वृंदंसमूहस्तस्ययानिआश्रमाणितेषांसंमितानिसमानानिगो । प्यश्चतेजनाश्चतेषांमंदिराणिगृहाणिजगाम ॥ १७ ॥ काचिदिति । काचिद्गोपीमुकुंदेनसहैवशय्यांपर्यंकंप्राप्तुंअधःशयनंस्थंडिलशयनंतदेवव्रतंतस्मिन्तिष्ठतीतितथोक्ता । बतखेदे । धन्याअन्यागोपीतेनश्री कृष्णेनजुष्टंसेवितंयत्तांबूलंतदेवफलंतस्मैश्रीकृष्णचर्विततांबूलप्राप्तिलक्षणफलायेत्यर्थः । तांबूलंवीटिकातस्मिन्रुचिंप्रीतिंतत्याजकिल । श्रीकृष्णवियोगज विषयद्वेषावस्थयाकृतस्याप्यधःशयनस्यतांबूलपरित्यागस्यचमुनिव्रतसाधारण्यात्मुनिवृंदाश्रमसंमितानीतिप्रागुक्तं । एवमुत्तरत्रापिद्रष्टव्यम् ॥१८॥ तद्भुक्ते ति । तेनश्रीकृष्णेनभुक्तंतस्मात्शेषमवशिष्टंयदोदनंअन्नंतस्मिन्लुब्धंलोलंचित्तंयस्याःसातथोक्ता । एकागोपीनित्यंसर्वदाअनशनमेवोपवासएवव्रतंत

काचिन्मुकुंदेन सहैव शय्यां प्राप्तुं बताधःशयनव्रतस्था ॥ तज्जुष्टतांबूलफलाय धन्या तत्याज तांबूलरुचिं किलान्या ॥१८॥ तद्भुक्तशेषौदनलुब्धचित्ता नित्यं किलैकाऽनशनव्रतस्था ॥ स्वप्नेऽपि तत्संगममाप्तुकामा स्वस्थाऽपि शेते किल काऽपि दीना ॥ १९ ॥ कांतं हरिं तत्प्रभवं कुमारं तज्जुष्टगेहं गृहमूहमाना ॥ पत्युर्न पूजां न च पुत्ररक्षां कृत्यं न गृह्यं वितनोति तन्वी ॥ २० ॥ रतावसाने मुरजित्करेण निबद्धुमेकोज्झित केशबंधा ॥ तदैव तत्संहितभूषणेच्छा न भूषणं काऽपि बिभर्ति बाला ॥ २१ ॥

स्मिन्तिष्ठतीतितथोक्ताकिल । दीनाकापिगोपी । स्वप्नःस्वप्नावस्थातस्मिन्नपितत्संगमःश्रीकृष्णेनसंगमस्तं आप्तुंकामःइच्छायस्याःसातथोक्तासैवस्वस्था पिनिद्रारहितापिशेतेकिल । गृहकार्यंत्यक्त्वासर्वदाशयनंभर्तुर्विरहिणीनांस्वभावः ॥ १९ ॥ कांतमिति । कांतंपतिंश्रीकृष्णंऊहमानातर्कयंतीसती तस्मात्प्रभवउत्पत्तिर्यस्यसतत्प्रभवस्तं श्रीकृष्णादुत्पन्नमेवकुमारंपुत्रं ऊहमानातर्कयंतीसती तेनश्रीकृष्णेनजुष्टंउषितंयद्गेहंगृहंतदेवगृहंस्वगेहंऊहमानातर्कयंतीस ती । कापितन्वीवंचितापत्युःस्वभर्तुःपूजांपरिचर्यां पुत्ररक्षांगृहस्यसंबंधिगृह्यंततकृत्यंसंमार्जनादिकार्यंचनवितनोति नकरोति ॥ २० ॥ रतेति । रतस्यर तिक्रीडायाःअवसानमंतस्तस्मिन् । मुरजित्करःश्रीकृष्णकरःतेननिबद्धुंकबरीबंधंकर्तुंएकानारीउज्झितःकेशबंधोयस्याःसातथोक्तासतीआस्ते । तदैवरत्यवसान

एवतत्संहितानिश्रीकृष्णेनसंहितानियानिभूषणानितानिच्छतीतितथोक्ता । काऽपिबालानारीभूषणंनबिभर्त्तिनधारयति ॥ २१ ॥ प्रदक्षिणीकृत्येति । अन्याःगोप्यःदिनेदिनेस्वस्याःयद्धामगृहंतस्मिन्स्थितंवृंदावनंतुलसीवृंदावनं स्वधामवृंदावनं तत्प्रदक्षिणीकृत्य विकस्वराःविकासमानाःये क्ष्मायांभुविरुहंतीतिक्ष्मारुहाःभूरुहाःवृक्षास्तेषांपुंजःसमूहःतेनमंजुमनोहरंयन्मुकुंदवृंदावनंश्रीकृष्णस्यवृंदावनंतस्मिन्रासाख्यलीलाक्रीडारासलीलानांअर्थयंतेप्रार्थयंते । तस्यापिवृंदावनत्वात्रासलीलायाश्चप्रदक्षिणाकारत्वात्साम्येनफलत्वोक्तिः ॥ २२ ॥ निजैरिति । कापिगोपी प्रियेणश्रीकृष्णेनसार्द्धंरम्यगोष्ठींरम्यवार्तामकुर्वती चच सासंभाषणेनवागिंद्रियेणेतिवा । किंकिंफलमितिदीनाकृपणासतीनिजैर्बंधुभिर्जनन्यामात्राजनकेनपित्राचसाकंकिंचनकिमपिनभाषते ॥२३॥ मंदानिलेति ।

प्रदक्षिणीकृत्य दिने दिनेऽन्याः स्वधामवृंदावनमर्थयंते ॥ विकस्वरक्ष्मारुहपुंजमंजुमुकुंदवृंदावनरासली
लाम् ॥ २२ ॥ निजैर्जनन्या जनकेन साकं न भाषते किंचन कापि गोपी ॥ प्रियेण साकं बत रम्यगो
ष्ठीमकुर्वती किंच्चन सेति दीना ॥ २३ ॥ मंदानिलं चंदनरम्यगंधमिंदीवराक्षी सहते न काचित् ॥ विश्ले
षवह्निर्दहतो निजांगं वृद्धिं विदध्यादिति चिंतयेव ॥ २४ ॥ आलापमाल्याः प्रियमप्यपार्थमालोच्य बा
ला नहि शुश्रुवेऽन्या ॥ सेयं मुकुंदागमनं वदंती जातेदृशीत्युत्थिततीव्रतापा ॥ २५ ॥

काचिदिंदीवरवदुत्पलवदक्षिणीयस्याःसातथोक्तागोपीनिजंस्वकीयंयदंगंतत् दहतः विश्लेषएववह्निस्तस्यवृद्धिंविदध्यादितिचिंतयेव चंदनस्ययोरम्यगंधःमनोहरगंधोयस्यसतथोक्तस्तं । अनेनचंदनस्यशैत्यात्सुरभित्वाच्चशैत्यसौरभ्याख्यगुणद्वयमुक्तंभवति । मंदानिलंमंदमारुतंस्पष्टोत्रमांद्याख्यगुणः । नसहते ॥ २४ ॥ आलापमिति । अन्याबालानारीएतावत्कालंमुकुंदस्यश्रीकृष्णस्यागमनंतत् । त्वद्गृहंप्रतिश्रीकृष्णःआयास्यतीतिश्रीकृष्णागमनंवदंतीसेयंसखीइदानींईदृशी तदतिरिक्तलोकगोष्ठीकथका जाताइतिअनेनाभिप्रायेणउत्थितःतीव्रस्तापोयस्याःसातथासती । आल्याःसख्याःप्रीयमप्यालापंभाषणंअपगतःअर्थःप्रयोजनंयस्यतथातं । आलोच्यनशुश्रुवेहि नश्रुतवतीहि ॥ २५ ॥

कर्पूरेति । अन्यागोपी । कृष्णस्ययदंगंतस्यसंगःसोस्यास्तीतितथोक्तंतत्श्रीकृष्णोपभुक्तमित्यर्थः । अतएववरःउत्तमःयोवैष्णववर्गःविष्णुभक्तसमूहस्तस्ययोग्यंतत्मलयेमलयपर्वतेजातंमलयजंश्रीगंधकाष्ठंतस्ययदमलचूर्णंतत् । अलमत्यर्थंदोर्भ्यांहस्ताभ्यांश्रीकृष्णंपरिरभ्यआलिंग्यधर्तुंस्वांगेधारणंकर्तुं । यं धियेव । कर्पूरंचकुंकुमंचलसन्मृगनाभिश्चतैःशोभतइतितथोक्तं । मलयजामलचूर्णंश्रीगंधचूर्णंनेच्छति ॥ २६ ॥ कीरेति । श्रीकृष्णस्यउक्तिर्वचनंसाचतन्मुखंचमृदुस्वरश्चकुंतलाश्चअंगरसौरभ्यंशरीरपरिमलःतच्चतानितेषुसंगतासंबद्धातदीयसमवृत्तिर्मनःसंबंधिनीसमस्तवृत्तिर्यस्यास्तथोक्ता । कापिगोपी कीरःशुकःसचइंदुश्चकोकिलश्चमधुव्रतोभ्रमरःसचमान्यःगंधोयेषांतानिमान्यगंधानितादृशानियानिपुष्पाणितानिचहृदःमनसःनविषयीकरोति नरोचयतइ

कर्पूरकुंकुमलसन्मृगनाभिशोभि नेच्छत्यहो मलयजामलचूर्णमन्या ॥ कृष्णांगसंगि तदलं परिरभ्य दोर्भ्यां धर्तुं धियेव वरवैष्णववर्गयोग्यम् ॥ २६ ॥ कीरेंदुकोकिलमधुव्रतमान्यगंधपुष्पाणि काऽपि न हृदो विषयीकरोति ॥ कृष्णोक्तितन्मुखमृदुस्वरकुंतलांगसौरभ्यसंगततदीयसमस्तवृत्तिः ॥ २७ ॥ कृष्णांघ्रिभृंगं तं वीक्ष्य लज्जाक्लेशवशं गताः ॥ श्लिष्टोक्त्योचुस्तथा भृंगं लक्षीकृत्याऽन्यमग्रतः ॥२८ ॥ मधुप चरसि कस्मादस्मदग्रे त्वमन्यद्विरदवरदमूर्धारोहयोग्योऽस्ति नूनम् ॥ विषमविरहवह्नौ निर्दहत्यंगनांगं किमिह पतितुमिच्छस्यज्ञ दूरे प्रयाहि ॥ २९ ॥

त्यर्थः । कीरेंदुकोकिलादीनांश्रीकृष्णोक्तितन्मुखमृदुस्वरादीनांचसाम्यात्कीरादिकंवियुक्तभर्तृश्रीकृष्णप्रियोक्तादिस्मारकतयाविरहक्लेशबोधकत्वान्नसहतइतिभावः । विषयद्वेषंश्रीकृष्णसंबंधिफलोत्सुकतयाचक्रुरित्युक्त्यासर्वत्रोत्प्रेक्षाद्रष्टव्या ॥ २७ ॥ कृष्णेति । गोप्यः कृष्णस्ययेअंघ्रीतयोर्भृंगइवभृंगस्तं । तं उद्धवंवीक्ष्यलज्जाचक्लेशश्चतयोर्वशंअधीनंगताःप्राप्ताःसाक्षात्तद्वचनेलज्जा निष्ठुरोक्तौतुक्लेशःकारणमितिद्रष्टव्यम् । उद्धवंतथाअग्रतःस्थितंअन्यंभृंगंचलक्षीकृत्यश्लिष्टोक्त्याद्व्यर्थकवचनेनोचुः ॥ २८ ॥ मधुपेति । हेमधुप मधुकुलोत्पन्नत्वान्मधुपातीतिमधुपस्तस्यसंबुद्धिःउद्धवअस्माकमयंपुरोभागस्तस्मिन्क

स्मात्किमर्थंचरसि । प्रयोजनाभावान्नास्मदग्रेचरेत्यर्थः । अग्र्यःश्रेष्ठोयोद्विरदोगजस्तस्यवरदःसंतोषदोयोमूर्धातस्यारोहआरोहणंतस्मिन्योग्यःअसिनूनंत्व त्वामीश्रीकृष्णोमहाप्रभुज्ञातःइदानींत्वंगजमारुह्यसंचारंकुर्वित्यर्थः। अंगनानांस्त्रीणांअंगशरीरंतत्दहतिदाहंकुर्वति। इहअनुभूयमानेविषमोदुःसहोयोविरहःवि योगःसएववह्निःतस्मिन्पतितुमिच्छसिकिं । हेअज्ञअविवेकिन्दूरंदूरप्रदेशस्तस्मिन्प्रयाहिगच्छ । अस्मन्निकटावस्थित्यात्वमपिश्रीकृष्णविरहदुःखंनानुभवेति भावः। भृंगपक्षेतुहेमधुपमधुपुष्परसंपिबतीतितथोक्तःतस्यसंबुद्धिः। भ्रमरत्वंअस्मदग्रेकस्माच्चरसि। विषयद्वेषेणस्वर्गादिपरित्यागादस्मन्निकटेमकरंदाभावादिति भावः । त्वंद्विरदस्यगजस्यमदगंधाख्यवरदःयोमूर्धातस्यारोहस्तस्मिन्योग्योसि । तस्मिन्संचरितुंयोग्योसिनूनं । अंगनांगंदहतिइहविषमविरहवह्नौपतितुमिच्छ सिकिं । हेअज्ञदूरेप्रयाहि । विरहाग्नेरुत्कटत्वेनास्मद्देहसंबंधेसतिदाहोभवेदितिमोहावस्थोपात्वलीतोभावः ॥ २९ ॥ सदसीति । विधुश्चंद्रःसचरविःसूर्यःस चतयोर्विधाप्रकारोयस्यसतथोक्तः। उद्धवस्यबृहस्पत्यवतारत्वेनादित्यादिग्रहनवकेपठितत्वादित्यर्थः । तस्यसंबुद्धिःहेविधुरविविधउद्धवत्वंसुमनसांदेवानांसदसि

**सदसि सुमनसां त्वं प्रौढिमादर्शयालं विधुरविविधयोषित्तापमापादयेः किम् ॥ ग्रहगतिरियमार्या य त्पुरस्तादयं नो वसति वसतिपुत्रामित्रवार्तोज्झितानाम् ॥ ३० ॥**

सभायांप्रौढिश्चातुर्यंतांअलमत्यंतंआदर्शयउद्धवस्यसुरगुरुत्वादितिभावः । योषितामस्माकंपुनःश्रीकृष्णप्रसंगकथनेनश्रीकृष्णस्मारकतयातापःसंतापःतं । किं किमर्थमापादयेःसंपादयसि । हेआर्याःउत्तमानार्यःअयमुद्धवःवसतिःगृहंसाचपुत्राश्चअमित्राःशत्रवस्तेचतेषांयावार्तातयाउज्झितारहिताःतासांनोस्माकंपुर स्तात्पुरतःवसतीतियत्गच्छेत्युक्तेपिवसतीतियत्इयंग्रहगतिःअस्माकंग्रहचारःदुरदृष्टमित्याक्रोशः । इयमितिस्त्रीलिंगनिर्देशःशैत्यंहियत्साप्रकृतिर्जलस्येतिवत् विशेष्यप्राधान्यविवक्षया । भ्रमरपक्षेतुहेमधुपत्वंसुमनसांकुसुमानांसदसिप्रौढिंझंकारादिकंआदर्शयदर्शयस्व । विधुराःविरहिण्योयाःविविधयोषितःअने कस्त्रियःतासांतापंकिंकिमर्थंआपादयेः भ्रमरस्योद्दीपनविभवत्वादितिभावः । वसतिपुत्रामित्रवार्तोज्झितानांनोस्माकंपुरस्तादयंभ्रमरःवसतीतियत् निवारितो पिनगच्छतीतियदित्यर्थः । इयंग्रहगतिःदुर्ग्रहस्थितिरित्याक्रोशः ॥ ३० ॥

वरुणदिशीति । हेसखिकामिनीनामस्माकंकामःश्रीकृष्णविषयककामस्तंददातीतिकामदःश्रीकृष्णविषयककामांधकइत्यर्थः । अयंबृहस्पतिरूपःउद्धवः वरुणस्ययादिक्तस्यांगतोपिपश्चिमदिश्यस्तंगतोपीत्यर्थः । बलस्यभेत्तासंहर्तातस्यइंद्रस्य बलारातिःशचीपतिरित्यमरः । दिशिपूर्वस्यांदिशीत्यर्थः । स्वैरंस्वेच्छयाउद्यातिउदेति । बतखेदे । गुरुरिवदेवजातीयानामस्माकंगुरुर्बृहस्पतिरिवहरिपदेश्रीकृष्णस्यपादौतयोःकृतावृत्तिरंतःकरणवृत्तिर्येनसतथोक्तः श्रीकृष्णभक्त इत्यर्थः । धीरःएषःउद्धवःकर्णोपांतंकर्णसमीपंतत्अभ्येत्यगीतंश्रीकृष्णसंदेशरूपंगानंश्रावयति । भ्रमरपक्षेतुकामिनीनांकामदःकामोद्दीपकःसोयंभ्रमरःवरुणदिशिगतोपिबलभेत्तुःइंद्रस्यदिशिउद्यातिपश्चिमतोगतइतिचित्तस्वास्थ्यस्थितोपिपूर्वतःपुनरायातिबतेत्याक्रोशः । इतस्ततःसंभ्रमणंभ्रमरस्यस्वभावः । हेसखिहरिपदेविष्णुपदेआकाशेकृतावृत्तिर्वर्तनंसंचारोयेनसतथोक्तः धीरोभयरहितःएषःभ्रमरःगुरुरिवउपदेष्टेवकर्णोपांतमभ्येत्यगीतंझंकाररूपंगानंश्रावयति क

वरुणदिशि गतोपि स्वैरमुद्याति सोऽयं बत दिशि बलभेत्तुः कामदं कामिनीनाम् ॥ गुरुरिव सखि कर्णोपांतमभ्येत्य गीतं हरिपदकृतवृत्तिः श्रावयत्येष धीरः ॥ ३१ ॥ गगनचर किमस्मत्सन्निधौ तेऽस्ति कृत्यं हरिपदमुपयाया दूरमस्मद्व्रजस्य ॥ समरुचिमलकाल्या वक्रया नंदसूनोः कथय कथमिह त्वां संभजामस्त्यजामः ॥ ३२ ॥

र्णधृततुलसीगंधलोभेनकर्णोपांतेझंकारंकरोतीतिभावः ॥ ३१ ॥ गगनेति । गगनेनक्षत्रमार्गेचरतीतिगगनचरस्तस्यसंबुद्धिःगगनचरबृहस्पतिरूपउद्धवअस्मत्संनिधिःअस्मन्निकटंतस्मिन्तेतवकृत्यंकार्यंकिमस्तिकृष्णकृपाविधुराणामस्माकंसन्निधौतवकिमपिप्रयोजनंनभवतीतिभावः । अस्मद्व्रजंअस्माकंगोकुलंतस्यदूरंदूरेमधुरायांस्थितंहरिपदंश्रीकृष्णपादस्तत् । उपयायाःप्रयाहि । शब्दतत्त्वाभिमानितयादक्षिणतत्पादांगुष्ठस्थितस्त्वंतत्रैवयाहीतिभावः । वक्रयाकुटिलयाअलकाल्याचूर्णकुंतलानांपरंपरयानंदसूनोःश्रीकृष्णस्यसमासदृशारुचिःकांतिर्यस्यसतथातंत्वामिहअस्यामवस्थायांकथंसंभजामःकथंवात्यजामः । कथयवद । त्वन्निष्ठश्रीकृष्णसदृशदर्शनलोभेनत्यागायोगात्श्रीकृष्णभिन्नतयाततःआलिंगनादिफलाभावेनभजनायोगादितिभावः । भृंगपक्षेगगनचरआकाशचरभृंगअस्मत्संनिधौश्रीकृष्णविमुक्तानांनिकटेतेतवकृत्यंअस्मच्चिताह्लादिकंकार्यमस्तिकिं । अस्मद्व्रजस्यास्मद्गोकुलस्यदूरंहरिपदमाकाशंउपयायाः । नंदसू

नोःवक्रयाअलकाल्यासमरुचिंसमकांतिंतद्वन्नीलंवर्तुलंचेत्यर्थः । इहवियोगावस्थायांकथंसंभजामः । कथंवात्यजामः । अस्मत्प्रियश्रीकृष्णकुटिलालकौ पम्यात्त्वांनत्यक्तुंशक्ताः । श्रीकृष्णविरहकालेमन्मथोद्दीपकत्वान्नांगीकर्तुंचशक्ताइत्यर्थः ॥ ३२ ॥ वनेति । हेउद्धव । असौभवत्संबंधीत्वदीयःत्वत्स्वामी त्यर्थः । माधवःश्रीकृष्णः । वनेस्थितानिभवनानिगृहाणिवनभवनानिगोष्ठानितानिगताःप्राप्ताःतेषुस्थिताइत्यर्थः । तासांअस्माकंकतिपयानिकानिचित्या निदिनानितेषांमध्यंतस्मिन् । अल्पदिवसाभ्यंतरइत्यर्थः । दर्शयित्वापुनरिदानींईक्षांदर्शनंनदिशतिनप्रयच्छति । हंतखेदे । हेचपलचंचलनक्षत्रमार्गेसदासंचरण शीलबृहस्पतिरूपउद्धवतस्यश्रीकृष्णस्यअनुवर्तीअनुचरःत्वमपितादृक्तादृशःकदाचिद्योम्निदृश्यमानेप्यस्तंगतोनदृश्यसइतिभावः । तत्तस्मात्कारणात्अस्मा सुमैत्र्यास्नेहेनकिंअस्थिरस्यास्मन्मैत्र्याप्रयोजनंनास्तीत्यर्थः । भृंगपक्षेतु । हेमधुप । असौत्वदीयोमाधवोवसंतः विष्णौवसंतेवैशाखेमाधवइतिरत्नमाला । व

वनभवनगतानां दर्शयित्वा स्वरूपं कतिपयदिनमध्ये माधवोऽसौ त्वदीयः ॥ न दिशति पुनरीक्षां हंत त
स्यानुवर्त्ती त्वमपि चपल तादृक् किं तदस्मासु मैत्र्या ॥ ३३ ॥ अयि सखि चरतोऽस्य स्वैरमस्मत्पुर
स्तान्मरुदपि सहकारी साधयत्यग्र्यशक्तिम् ॥ अभिमुखमनुपार्श्वं विष्वगूर्ध्वं तथाधश्चरणचतुरशीलः
शिक्षयेदेष वीरान् ॥ ३४ ॥

नमेवभवनंगृहंतद्गतास्तेषां । वनेसंचरतामित्यर्थः । कतिपयदिनमध्येचैत्रवैशाखाख्यमासद्वयमध्येस्वरूपंस्वाविर्भावंदर्शयित्वाविचित्रकुसुमसंपत्तिमलयमारुता दिनादर्शयित्वापुनःकत्वंतेईक्षांनदिशति । हेचपलचंचलतस्यास्थिरस्यवसंतस्यानुवर्ती । वसंतइवोद्भासवानित्यर्थः । त्वमपितादृगस्थिरःवर्षाकालाभ्याशे सोद्भासभृंगसंचाराभावादितिभावः । तत्तस्मात्अस्मन्मैत्र्याकिं । वसंतसखस्मरोन्मथितचित्तासुमैत्रीविरुद्धेतिभावः ॥ ३३ ॥ अयीति । अयिसखिहेस खि । अस्माकंपुरस्तात् अस्मत्पुरस्तात् । अस्मदग्रेस्वैरंस्वेच्छयाचरतोस्योद्धवस्यमरुत्मुख्यप्राणोपिसहकारीसहायःसन्एनमाविश्यश्रीकृष्णपरिचर्यादि कमनुकूलयन्नित्यर्थः । अग्र्यशक्तिमभ्यधिकसामर्थ्यंसाधयतिसंपादयति । मुख्यप्राणावेशमहिम्नाआधिक्येनश्रीकृष्णसख्यादिकमुद्धवस्याभूदितिभावः ।

एषःवीरपुरुषाकारवान् उद्धवःमुखमभिअभिमुखंआभिमुख्येनेत्यर्थः । पार्श्वयोरनुअनुपार्श्वंपार्श्वद्वयइत्यर्थः । विष्वङ्मंडलाकारतयाऊर्ध्वंलंघनेनअधः केनचित् उत्क्षिप्तस्थानपूर्वमेवाधस्ताच्चचरणेसंचरणेचतुरंकुशलंशीलंयस्यसतथोक्तः। सवीरान्पराक्रमिणोर्जुनादीन्शिक्षयेत् । शिक्षविद्योपादाने । द्रोणाचार्यरूपेणार्जुनादीनांक्षत्रियकुमाराणांविचित्रशस्त्रास्त्राभ्यासशिक्षकोप्येषएवेतिभावः । भृंगपक्षे । अयिसखिअस्मत्पुरस्तात्स्वैरंचरतोस्यभृंगस्यमरुदपिमंदवायुरपिअग्र्यशक्तिमतिशयेनास्मन्मोहकत्वशक्तिंसाधयति । अभिमुखमित्यादिना । भ्रमरस्यअभिमुखंअनुपार्श्वंविष्वक्मंडलाकारेणऊर्ध्वंअधश्चसंचरणस्वभावत्वेनवीराणामस्त्राभ्यासशिक्षकत्वमुत्प्रेक्षितमितिद्रष्टव्यम् ॥३४॥ सुरपतिरिति । प्रियःनिनदःध्वनिर्यस्यसप्रियनिनदस्तत्संबुद्धिःप्रियनिनदप्रियंवदेत्यर्थः । अमलनिर्मलउद्धवसुरपतिरपिइंद्रोपिएतत्तवैतद्गानंनिशम्यमहिष्याःशच्याःसमंसमानंत्वां रतिमनुगुरवोदक्षशच्यौचेतिवचनात् । विलोक्यअवश्यंमानयिष्यति । शि

सुरपतिरपि नूनं गानमेतन्निशम्य प्रियनिनद महिष्या मानयिष्यत्यवश्यम् ॥ सममल विलोक्य त्वद्दशः शिष्यवत्स्यात्किमिह फलमिदानीं गायतोऽप्यस्मदग्रे ॥ ३५ ॥ असि मधुकर विद्यो माधवे पक्षपाती कुजरविजयिचापेतस्य जीवायितोऽसि ॥ विरचय विवशं तं नः समीपे वसंतं विविधरसविलासश्रेणिविश्राणनज्ञम् ॥ ३६ ॥

ष्यवत्त्वद्दशःस्यात् शिष्यवदेवनतुशिष्यः बृहस्पतेरपिइंद्रस्याधिकत्वादितितात्पर्यद्योतनायशिष्यवदित्युक्तं । इदानीमस्मदग्रेगायतोपितवकिंफलंइंद्रमानितस्यास्मत्तःकिंफलंभवतीतिभावः । अथवावयमपियदाअप्सरसोभूत्वास्वर्गेस्थिताःतदातवसन्मानःकृतःस्निग्धेंद्रस्यास्मदनुकूलत्वात्कृष्णस्याभर्तृतयास्नेहस्यासंपादितत्वेनविरहभयाभावाच्चइदानींभूभर्तृतासंपादितकृष्णविरहेणदुःखितगोपीभ्यःतवकिमपिप्रयोजनंनभवतीतिभावः । भृंगपक्षेहेप्रियनिनदअमलभृंगसुरपतिरपिएतद्गानंझंकारलक्षणंगानंनिशम्य अस्मिन्पक्षेमहिष्येतिपदच्छेदः महिष्याशच्यासमंसार्धंविलासदशायामित्यर्थः । त्वांविलोक्यमानयिष्यति । आलंबनभूतयोरिंद्रशच्योर्भृंगस्यतवोद्दीपनविभावत्वादितिभावः । शिष्यवत्त्वद्दशःस्यात् यथात्वंभृंग्यासहचरसितथाशच्यासमंविहरिष्यतीतिभावः । अस्मदग्रे इदानींगायतोपितवकिंफलं । विषयद्वेषेणकर्णकवयोःपुष्पालंकाराभावात्मकरंदपानमपिअलभ्यमितिभावः ॥ ३५ ॥ असीति । मधुनःसुखस्यकरः

कारकः मधुकरस्तस्यसंबुद्धिःहेमधुकर कमानलंमधुलवैरितिवचनेमधुशब्दस्यसुखप्रयोगात् । मधुकुलवृद्धिकरेतिवा । उद्धवत्वंमाधवेश्रीकृष्णेपक्षपातोस्या स्तीतिपक्षपातीअभिमानविशेषवानित्यर्थः । असिइतिविद्मःजानीमः । कुतइत्यतआह्नः । कुजरवीति । कुजरविजयिचापेतस्य । कौभूमौजातःकुजःसस्त्रा सौरविश्वकुजरविर्भूमावुत्पन्नःसूर्यरूपीकर्णइत्यर्थः । तंजयतीतिकुजरविजयीसचासौचापश्चगांडीवमित्यर्थः तेनइतःसहितःतस्यगांडीवाख्यचापवतोर्जुनस्ये त्यर्थः । जीववदाचरतीतिजीवायितःप्राणसममित्यर्थः । असिभवसि । द्रोणरूपेणास्त्रविद्यारहस्यप्रदानेनातिप्रियोसीत्यर्थः । श्रीकृष्णसखार्जुनप्रियत्वात्त्वं श्रीकृष्णपक्षपातीतिभावः । विवशंभक्ताधीनंविविधानानाप्रकारारसाःशृंगारादयोरसाःयेषुतेतथोक्ताःतेचतेविलासाःक्रीडाश्चतेषांश्रेणिःपरंपरातस्याःविश्राण नंप्रदानंजानातीतितथोक्तस्तंश्रीकृष्णंनःसमीपेवसंतंविरचयकुरु । भृंगपक्षेतु । हेमधुकरमाधवेवसंततौ । पक्षाभ्यांपातःसोस्यास्तीतिपक्षपाती । असि । वसं ततौवेवबहुसंचारवानित्यर्थः । इतिविद्मः । कुतःतस्यवसंतस्यसंबंधिनी वसंतस्यकुसुमाकरत्वादितिभावः । कुत्सिताजरायेषुतेकुजराःजरांकुत्सयंतोयुवानइत्य

वितन्यमानस्वप्रेष्ठवियोगार्तिरथोद्धवः ॥ प्रियोक्तिभिः प्रीणयित्वा प्रययौ कृष्णसन्निधिम् ॥ ३७ ॥ कंसे बलैः सह मृते सति याऽवशिष्टा वंशं स्वमातुरपि तादृशमास्तिनाम्नी ॥ कृत्वोचितं विदधतीव निजाभि धानं पित्रे न्यवेदयदथाच्युतकृत्यमार्ता ॥ ३८ ॥

र्थः । तान्विजयतइतितथोक्तः । यःचापःकंदर्पधनुःपुष्पमित्यर्थः । तस्मिन्मौर्वीज्यासिंजिनीगुणाजीवेत्यभिधानात् । जीववन्मौर्वीवदाचरतीतिजीवायि तःमौर्वीवदाचरमाणोवा । धनु.पौष्पंमौर्वीमधुकरमयीत्युक्तेः विविधरसविलासश्रेणीविश्रापनज्ञंविविधरसानांनानापुष्परसानांमिथुनीभूतस्त्रीपुरुषपशुपक्ष्या देश्चित्तसमुन्नतीनांशेषंपूर्ववत् । विविशंशुकपिकादिपक्षिवशंतेषामनुकूलमित्यर्थः । तंवसंतंकृतुंनःसमीपेविरचयतंकृष्णंनःसमीपेवसंतंकुर्वितिप्रागुद्धवंप्रति प्रार्थितत्वात्सउद्धवःश्रीकृष्णमानेष्यतीत्याशयावसंतकालाभ्यर्थनमितिभावः ॥ ३६ ॥ वितन्यमानेति । अथअनंतरंउद्धवःवितन्यमानाःविस्तार्यमाणाः स्वप्रेष्ठवियोगार्तयःस्वप्रेष्ठस्यस्वप्रियतमस्यश्रीकृष्णस्यवियोगार्तयःवियोगजनितक्लेशाःयाभिस्ताःतथोक्तास्ताःगोपीः प्रियोक्तिभिः प्रीणयित्वासंतोषयित्वाकृ ष्णस्यसन्निधिःसमीपंतंप्रययौ ॥ ३७ ॥ कंसइति । अथकंसे बलानिसैन्यानितैःसहमृतेसतिमरणंप्राप्तेसति । अवशिष्टाअस्तीतिनामयस्याःअस्तिनाम्नी

याकंसपत्नीआर्तासास्वस्याःमातातस्याःवंशःकुलंतमपितादृशमपितत्सदृशंबलैःसहमृतंकृत्वानिजंस्वकीयंयदभिधानंअस्तीतिनामउचितं । विदधतीभर्तृकुलस्थेषुस्वभ्रातृकुलस्थेषुसर्वेषुमृतेषुसत्सुस्वयमेवभूमावस्तीतिव्युत्पत्त्यास्वकीयमस्तीतिनामसार्थकंकुर्वतीवेत्यर्थः । पित्रेस्वपित्रेजरासंधाय अच्युतस्यश्रीकृष्णस्यकृत्यंस्वभर्तृवधरूपंकर्मन्यवेदयत् । विज्ञापितवती । अच्युतेत्यनेनजरासंधागमनेपिश्रीकृष्णस्यनच्युतिरितिसूचितम् ॥ ३८ ॥ सइति । साधितःसंपादितःसैन्यसिंधुःसेनासमुद्रोयेनसतथोक्तः । मदांधामदादिनांधाविवेकरहिताबुद्धिर्यस्यसतथोक्तः । जरासंधःअनेकायेदेशाःतेषुआश्रितःयोभूमिभारःदुर्जनाख्यभूभारःतस्यहरःसंहर्तातस्यश्रीकृष्णस्यसारथ्यस्यसहायस्यकृत्कर्तानानादेशस्थान्दुर्जनान्पुंजीकृत्ययुद्धव्याजेनश्रीकृष्णसमीपंप्रत्यानीयदानेनसहायकृदिवमधुरां जगाम । जरासंधानीतानांसर्वेषांसैन्यानांमधुरायांसंहारोभविष्यतीतिभावः ॥ ३९ ॥ गजैरिति । सजरासंधःअमूंचमूंजामातास्वदुहितृभर्ताकंसस्तस्य

स मागधः साधितसैन्यसिंधुर्मदांधबुद्धिर्मधुरां जगाम ॥ अनेकदेशाश्रितभूमिभारहरस्य सारथ्यकृदच्युतस्य ॥ ३९ ॥ गजै रथौघैर्गगनं स्पृशद्भिर्भटैर्हयैर्भासुरभूषणौघैः ॥ जगाम जामातृपथेन तस्मै चमूममूं प्रेषयितुं धियेव ॥ ४० ॥ कुंतैः कुठारैः कुद्दालैर्बभंजुर्मधुरापुरीम् ॥ आद्यामुपनिषद्विद्यां कुतर्कैरिव वादिनः ॥ ४१ ॥ उपवनमुपवेदप्रायमुन्मूलयंतः सुकृतसुममुदारं द्वारमाराद्बभंजुः ॥ प्रतिभरवरशक्त्याद्यूर्जिताधारयुक्ताः खलमतहृतचित्तादुष्यदुर्मंत्रदृप्ताः ॥ ४२ ॥

पंथाःमार्गःजामातृपथस्तेनतस्मैजामात्रेकंसायप्रेषयितुंधियेवगगनंव्योमततस्पृशद्भिःअत्युच्चैरित्यर्थः गजैःरथौघाःरथसमूहाःतैःभासुराणिज्वलंतियानिभूषणानितेषामोघःसमूहोयेषांतेतथातैःभटैःहयैःअश्वैश्वसहमधुरांजगाम । मृतःकंसोयत्रांधेतमसिगतस्तत्रैयंसेनापिगमिष्यतीतिभावः ॥ ४० ॥ कुंतैरिति । तेजरासंधभटाःकुंतास्तोमराणितैःकुठाराःपरशवःतैःकुद्दालाःभूखननार्थंकृतदारुप्रोतस्थूलायोदंडविशेषाः खनित्राणितैःगोदारणंतुकुद्दालइतिहलः । भगवतःश्रीकृष्णस्यपुरींमधुरांवादिनःदुर्वादिनःकुतर्काःकुत्सिततर्कास्तैःआद्यांअनादिभूतांउपनिषदेवविद्यावेदांतविद्यातामिवबभंजुःभग्नांचक्रुः ॥ ४१ ॥ अतःपरंमधुरापुरींउपनिषद्विद्यौपम्येननिरूप्यकृष्णसेनांजरासंधसेनांचतत्त्ववादिमायावादिसाम्येनवर्णयन्तद्युद्धंचतयोर्वादसमतयासमर्थयतेउपवनमिति । प्रतिभयानि

भयंकराणि घोरंप्रतिभयंभीममितिहलः।यानिवराणिउत्तमानिशक्त्याद्यायुधानिशक्तिःशक्त्याख्यायुधविशेषःआदिर्येषांतानिशक्त्यादीनितानिचतानिआयुधा निचतान्येवऊर्जिताधारःउत्तमाश्रयस्तेनयुक्ताः। वादिपक्षेप्रतिभयोभयंकरोवरोयाभ्यस्ताःप्रतिभयवराःवादेवाग्बंधनादिवरदाइत्यर्थः। तादृशायाःशक्त्यादयो बकुलामुख्यादयोदुर्देवताःताएवोर्जिताधारःप्रतिवादिजयेउत्कृष्टाश्रयःतेनयुक्ताःशक्तिपूजयासंपादितकुबुद्धिप्रभृतयइत्यर्थः। खलस्यजरासंधस्यमतमनुमति स्तेनहृतंअपहृतंचित्तंयेषांतेतथोक्ताः।वादिपक्षे। खलस्यसंकरस्ययन्मतंसिद्धांतःतेनहृतमपहृतंचित्तंयेषांतेतथोक्ताः। दुष्योयोदुर्मंत्रःदुरालोचनंतेनदृप्ताः उन्मत्ताः।वादिपक्षेदुष्यदुर्मंत्रंउच्छिष्टगणपत्यादिदुर्देवतामंत्रस्तेनदृप्ताःजरासंधभटाःउपवेदप्रायंउपवेदेनसमंततउपवनमारामंउन्मूलयंतःसंतःमधुरायाःउपनिष त्साम्योक्तत्वात्तत्समीपस्थोपवनानामुपवेदप्रायत्वादितिभावः सुकृतसमंपुण्येनसमंतद्वारंगोपुरं। कर्मणाज्ञानमातनोतीतिश्रुतेः।सुकृतस्यज्ञानहेतूपनिषत्सुप्रवेशहे तुत्वाद्द्वारत्वं।आरात्समीपेबभंजुर्ममर्दुः॥४२॥ बाध्यामिति। समयःएवंकुर्मइतिसंकेतःसएषामस्तीतिसमयिनः। वादिपक्षेसमयःसिद्धांतःसएषामस्तीतिसमयिनः

बाध्यां तां सह निश्चलार्थनिकरैः क्रुद्धा खला निर्गुणागारामंतरहो विधातुममता यत्नं वितेनुः किल ॥ कृष्णेनापि समुज्झितां समयिनो युक्त्यात्मपक्षेऽञ्जसा कृत्वैक्यं समयोजयन् गतभया दुर्भाग्यपुंजैरपि ॥४३॥ गतं[illegible]येषांतेगतभयाः

भयरहिताइत्यर्थः।क्रुद्धाःखलाःदुष्टाःअमताःवैरिणःयुक्त्यासामदानाद्युपायेनआत्मनःपक्षःस्वसैन्यंतस्मिन्अंजसासम्यक्ऐक्यंऐकमत्यंकु[illegible]कृत्वेत्यने नस्वकटकेविद्यमानानांबलादानीतसज्जीवानांदंडभीत्यैवैकमत्यमितिध्वनयति। वादिपक्षेयुक्त्याविमताआत्मानःपरमात्मानःतत्त्वतोनभिद्यंतेआ[illegible]त्वात्परमात्म वदित्याद्युक्त्याआत्मनःजीवपरमात्मरूपचेतनस्यपक्षःआत्मपक्षस्तस्मिन्अंजसाऐक्यमद्वैतंकृत्वा अत्रापिकृत्वेत्यनेनाविद्यमानमेवैक्यंकल्पितवंतःइतिध्वनय ति। तांपुरींमधुरांनिश्चलाःसम्यक्संबंधतयाचलायेअर्थनिकराःकलशध्वजपट्टतोरणाद्यर्थसमूहास्तैःसहबाध्यांविनाश्यांवितेनुःकिलः। ब[illegible]हिःस्थित्वैवार्द्धचं द्राकारशरैःक्षेपणीयाश्मादिभिश्चप्राकारशिखरादिकंपातितवंतइत्यर्थः। वादिपक्षेनिश्चलाःप्रमाणांतराबाध्याःयेअर्थनिकराउपनिषत्प्रतिपा[illegible]र्थनिकराःतैःसह तामुपनिषद्विद्यांबाध्यांअर्थतःशब्दतश्चमिथ्याभूतामित्यर्थः। वितेनुः। अंतःपट्टनाभ्यंतरेनविद्यंतेगुणाःभित्त्यादिषुखचितपद्मरागादिरत्नपातने[illegible]भासरूपगुणाः

एषांतानिनिर्गुणानितादृशानिअगाराणिगृहाणियस्याःसातथोक्तातांविधातुंयत्नंवितेनुः । वादिपक्षेनिर्गुणस्यगुणरहितस्यब्रह्मणोअगारःआवासोयस्यांसातथातां निर्गुणप्रतिपादिकामित्यर्थः । विधातुंयत्नंवितेनुःकिलाअहोनिर्गुणस्यप्रवृत्तिनिमित्तधर्मसापेक्षशब्दप्रतिपाद्यत्वमसंभावितमित्यतःअहोइत्युक्तं। कृष्णेनसमुज्झितामपिविधातुंयत्नंवितेनुःवादिपक्षेसद्ब्रह्मरूपेश्रीकृष्णेतात्पर्यरहितामित्यर्थः।विधातुंयत्नंवितेनुरितिपूर्वेणसंबंधः भाषितुमनर्हाणिदुर्भाष्याणिमधुरापुरींच्छिदिभिंदिद्धेत्यादिदुर्वाक्यानितेषांपुंजाःसमूहाःतैरपिसमयोजयन्प्रयोजितवंतः । वादिपक्षेदुर्भाष्यपुंजैःद्वात्रिंशद्दुर्भाष्यपुंजैःसमयोजयन्द्वात्रिंशदुपनिषदांआपातरमणीयपूर्वोत्तरविरुद्धार्थकद्वात्रिंशद्दुर्भाष्याण्यपिचक्रुरित्यर्थः।यद्वाएकविंशतिकुभाष्यैःसमयोजयन्नित्यर्थः ॥४३॥ कृष्णोपीति । प्रभुःसमर्थःईशःस्वामीश्रीकृष्णोपिसुवर्णैःखचितामलंकृतांस्वस्यचमूंसेनांचतुर्द्धाकृत्वाचतुर्दिक्षुचतुर्व्यूहंकृत्वातत्रएकैकसमूहेअग्र्यान्श्रेष्ठान्सेनानायकानित्यर्थः । चतुरःचतुःसंख्याकान्नि

कृष्णोऽपि स्वचमूं सुवर्णखचितां कृत्वा चतुर्धा प्रभुस्तत्राग्र्यांश्चतुरो निधाय नगरीरक्षार्थमीशोऽदिशत् ॥
भास्वत्सूत्रचमूमिवोपनिषदां रक्षार्थमत्यूर्जितामध्यायैः सहितां चतुर्भिरमलैस्तन्मानपादोज्ज्वलैः ॥४४॥

धायनगर्याःमधुरायारक्षापरितोपरिरक्षणंतस्यैइतितदर्थंअदिशत्आज्ञप्तवान्।तत्कथमिव तेषामध्यायानांमानंसंख्यापरिमितिर्येषां तेतन्मानाःयेपादाःतैरुज्ज्वलाःशोभमानाःतैःप्रत्येकंपादचतुष्टयोपेतैरित्यर्थः।अमलैर्निर्दोषैःचतुर्भिरध्यायैःसहितांअत्यूर्जितांअत्यंतोत्कृष्टांशोभनवर्णात्मकत्वेनसुवर्णखचितत्वमत्राप्यनुसंधेयंभास्वंतियानिसूत्राणिअध्यायचतुष्टयात्मकब्रह्मसूत्राणितान्येवचमूःसेनातांउपनिषदोवेदांतास्तासांरक्षायैइतिरक्षार्थं।कृष्णोश्रीवेदव्यासइवअदिशादितिसंबंधः । श्रीकृष्णःस्वसेनांचतुर्द्धाव्यूहीकृत्यतत्रैकैकत्रचतुरग्रेसरान् कृत्वाप्रेषितवानितिभागवतेप्रसिद्धम् । कृष्णसेनायाश्चतुर्दिक्षुचतुर्द्धाविभागवत्सूत्रसेनायाःअपिचतुरध्यायात्मनाप्राग्विभागएकैकस्मिन्व्यूहेचतुश्चतुःसंख्याकसेनानायकवत्एकैकस्मिन्अध्यायेचतुश्चतुःपादात्मनाअपरोविभागःमधुरापुरीरक्षार्थंयदुसेनाउपनिषत्पुरीरक्षार्थंसूत्रसेनासुवर्णालंकारखचितत्वमेकत्रशोभमानवर्णाख्यालंकारखचितत्वंअन्यत्रेतिविवेकोद्रष्टव्यः । अतएवश्लिष्टगर्भितेयमुपमा ॥ ४४ ॥

पक्षींद्रेति । पक्षिणामिंद्रोगरुडस्तस्यआयतनंध्वजाग्रस्थानंयस्मिन्सःतथोक्तःपरस्यसर्वोत्तमस्यश्रीकृष्णस्यवसतिःनिवासःवृष्णीनांयादवानांप्रमोदोयस्मात्सतथोक्तःविख्यातंप्रसिद्धमश्वचतुष्टयंयस्यसतथोक्तःविभ्राजमानःध्वजोयस्मिन्सतथोक्तःरथःअभ्यगात्किलवैकुंठलोकायुद्धसमयेआगतःकिल किलेत्यैतिह्ये। निगमैःऋगादिचतुर्वेदैःसंबद्धःचतुर्वेदविचारसमर्थइत्यर्थः खगेंद्रावृतःगरुडेनमनोभिमानिनाआवृतः यदामनःपंचरात्रादिसच्छास्त्रविचाराभिनिविष्टंतदागरुडोभिमानीतिपुराणप्रसिद्धेः। विष्णोर्द्धाममंदिरंतत्संनिधियोग्यमित्यर्थः। तस्यश्रीकृष्णस्ययोंघ्रिःपादतलमित्यर्थःतस्मिन्यःकेतुःरेखारूपोध्वजःतस्यनिलयआश्रयः सदातद्ध्यानरतइत्यर्थःसूत्रौघःब्रह्मसूत्रसमूहःतस्यपुष्टिरर्थपुष्टिस्तस्यप्रदःप्रदातामध्वस्यश्रीमध्वाचार्यस्यमनोरथइवभाष्यकरणेउद्युक्तोमनोरथइवअभ्यगादिति

पक्षींद्रायतनः परस्य वसतिर्वृष्णिप्रमोदोऽभ्यगाद्विख्याताश्वचतुष्टयः किल रथो विभ्राजमानध्वजः॥ मध्वस्येव मनोरथो निगमसंबद्धः खगेंद्रावृतो विष्णोर्धाम तदंघ्रिकेतुनिलयः सूत्रौघपुष्टिप्रदः ॥ ४५॥ कौमोदकी वादनि विष्मध्ववाचां समा प्रादुरभूद्धरण्याम्॥ कंबुर्गुरोर्मंजुनिनादकंठकांतिः समस्तागमगानकर्तुः ॥ ४६ ॥ व्यक्ताभेद्यसहस्रवक्त्ररुचिरं नित्यं मुरारेः प्रियं मुक्तिद्वारमहीशमुख्यविबुधैर्गीतं तमिस्रापहम् ॥ दैत्यध्वंसि सुदर्शनं दिनकरोद्रिक्तं दिगंताततं पृथ्व्यां मध्वसुदर्शनप्रतिकृति प्रादृश्यत प्रोज्ज्वलम् ॥ ४७ ॥ संबंधः। इयमपिसाग्रोपमा ॥ ४५ ॥

कौमोदकीति। तदायुद्धसमयेवादायनिविष्टःश्रीमध्वाचार्यःतस्यवाचःवाक्यानितासांसमासमाना । वादेश्रीमध्वाचार्यस्यएकैकंवचनंगदाप्रहारसदृशमितिभावः । कौमोदकीगदाधरण्यांप्रादुरभूत् । समस्तायेआगमाःवेदादयःतेषांगानंव्याख्यानंतस्यकर्त्तातस्य अतएवगुरोःश्रीमध्वाचार्यस्यमंजुःमनोहरोनिनादोध्वनिःयस्यसमंजुनिनादःसचासौकंठश्चतस्यकांतिर्यस्यसतथोक्तःकंबुःपांचजन्यः शंखःस्यात्कंबुरस्त्रियामित्यमरः। प्रादुरभूत्प्रादुर्बभूव ॥४६॥ व्यक्तेति। व्यक्तानिस्पष्टानिअभेद्यानियानिसहस्रवक्त्राणिसहस्रसंख्याकानिवक्त्राणिवक्त्रस्थानीयान्यंरणीत्यर्थः तैःरुचिरंमनोहरं। शास्त्रपक्षेबह्वावृत्त्यायोजनादेकैकंवाक्यंसहस्रमुखमित्यर्थः। मुरारेःश्रीकृष्णस्यनित्यंसर्वदाप्रियंमुक्तिद्वारंलोकस्यद्वारमर्चिमत्पवित्रमितिश्रुतेः। अनंतासनगमनसमयेअंधेतमसिद्वारकरणात्मुक्तिद्वारंसुदर्श

नं शास्त्रेपिसममेतत् । अहीनामीशोऽधीशः शेषः सः मुख्यः श्रेष्ठो येषांतेतथोक्तास्तेचतेविबुधाश्चतैर्गीतंस्तुतं । शास्त्रपक्षेअभ्यासेनावार्त्तितंतमिस्रमपहंतीतितमिस्राप हं शास्त्रपक्षेअज्ञाननिवारणं दैत्यान्ध्वंसयतीतिदैत्यध्वंसिदैत्यसंहारकं । शास्त्रपक्षेशास्त्राणांदुर्मार्गप्रवर्तकानांध्वंसि।दिनकरात्उद्रिक्तंश्रेष्ठंअतएवप्रोज्ज्वलंप्रकाश मानंदिशामंताःदिगंतास्तेषुआततंव्याप्तंसकलदिग्व्याप्तं । शास्त्रेपिसममेतत् । मध्वस्यश्रीमध्वाचार्यस्ययत्सुदर्शनंशोभमानशास्त्रंतदेवप्रतिकृतिरुपमायस्यसतथो क्तंसुदर्शनंचक्रंपृथिव्यांप्रादृश्यत । श्लिष्टोयंयमयोःसंकरः ॥४७॥ कृष्णेति । कृष्णस्यश्रैष्ठ्यंबलकौशल्याधिक्यंतस्यसमर्थनंसाधनंतस्मिन्प्रमाणपक्षेहेतुविष्णु सर्वोत्तमत्वसमर्थनेअतिचतुरैःतस्मात्श्रीकृष्णात्भिन्नोविपरीतोयोलोकोजनःतस्मिन्तद्वैरिजनइत्यर्थः । भिदांविदारणं प्रमाणपक्षेतद्भिन्नलोकेतदरितिक्तजने भिदांअन्योन्याभावंसाधयितुंनित्यंसर्वदाक्षमैःसमर्थैःमतिमताबुद्धिमतापिअच्छेद्यःछेत्तुमशक्यःहृद्योमनोहरआत्मास्वरूपंयेषांतेतथोक्तास्तैः । प्रमाणपक्षेपिसम

कृष्णश्रैष्ठ्यसमर्थनेऽतिचतुरैस्तद्भिन्नलोके भिदां नित्यं साधयितुं क्षमैर्मतिमताऽप्यच्छेद्यहृद्यात्मभिः ॥ विख्यातैः शरसंचयैः सुरुचिरं प्राप्तं निषंगद्वयं भास्वन्मानसहस्रभाष्यसदनुव्याख्यानकल्पं तदा ॥ ४८ ॥ सद्वंशजातं सुगुणं मुकुंदहस्तांबुजाधारमभेद्यमन्यैः ॥ शार्ङ्गं सतां वृंदमिवाऽविरासीन्मानोपमानेषुभिरन्यजिष्णु ॥ ४९ ॥

मेतत् । विख्यातैःशरसंचयैःशरसमूहैःरुचिरं । भास्वंतिमानसहस्राणिप्रमाणसहस्राणिययोस्तेतथोक्तेतेचते भाष्यंचसदुत्तमंअनुव्याख्यानंचभाष्यानुव्याख्याने तयोःकल्पंसदृशं । निषंगद्वयंतदातस्मिन्काले प्राप्तम् ॥४८॥ सद्वंशेति । सन्समीचीनोवंशःतस्मिन्जातमुत्पन्नं यद्यपिशार्ङ्गंशृंगजन्यंतथापिधनुर्जातित्वात्समीची नवंशवद्वर्तुलाकारेणनिमित्तत्वात्शृंगाच्छरोजायतइतिवचनात्कार्यकारणयोरभेदाद्वासद्वंशजातमित्युक्तं । सहृदपक्षेसमीचीनकुलोत्पन्नंगुणोमौर्वीयस्यतत्सुगु णं । सहृदपक्षेवैराग्यादिगुणोपेतमुकुंदहस्तएवांबुजंतदेवाधारोयस्यतत्तथोक्तं । एतदुभयत्रसमं । अन्यैःशत्रुभिरभेद्यंइदमुभयत्रसमानं । मानानांप्रमाणानांउप मासादृश्यंयेषांतेतथोक्ताः । तेचतेइषवश्चतैःअन्यान्जयतीतिअन्यजिष्णुविपक्षजयशीलं समानमेतदुभयत्र शार्ङ्गंशार्ङ्गाख्यंधनुःसतांसज्जनानांवृंदमिवसमूहइ वआविरासीत् ॥ ४९ ॥

द्विड्वर्गेति । असौश्रीकृष्णःभक्तानामोघःसमूहस्तस्यनंदयतीतिनंदकःसंतोषकरस्तं । द्विषांवर्गःसमूहःतस्ययदैन्यंतस्यकरःजनकःयःनंदकसंज्ञितासिः नंदकइतिसंज्ञितःसंजातसंज्ञःअसिःखड्गःतं । उररीचकार अंगीकृतवान् । कथमिव । युधिवादयुद्धेउद्धतःयःशत्रुवर्गःदुर्वादिसंघःतस्यविध्वंसनंनिरा करणंयेनसतथोक्तःतं स्वजनहर्षःस्वजनसंतोषःतस्यकरोतीतिकरःजनकस्तं । सद्वादिनांश्रीमदाचार्यपक्षीयवादिनांसमयमिवप्रतिज्ञामिवउररीचकारेति संबंधः ॥ ५० ॥ श्रुत्यंत्येति । श्रुतेःकर्णस्यांतःसमीपंतस्मिन्विश्रांताःअवस्थिताःआकर्णांतंपूरिताइत्यर्थःयेःशरौघाःशरसमूहास्तेषांयुक्तिर्योजनं तयामुराहरेःश्रीकृष्णस्यपक्षधराःसहायिनःभटाः अत्यूर्जितःअतिवृद्धःयःपूर्वश्चासौपक्षश्चपूर्वपक्षःपूर्वद्वारिस्थितशत्रुपक्षइत्यर्थः । तंसिद्धःसंपन्नःअंतोनाशः यस्यतथोक्तस्तंविधायअंतमवसानंतस्मिन् । उत्तरश्चासौपक्षश्चउत्तरपक्षस्तं । उत्तरद्वारिस्थितशत्रुपक्षइत्यर्थः । क्रमेणजघ्नुः । हरिभक्तार्थेश्रु

**द्विड्वर्गदैन्यकरनंदकसंज्ञितासिं भक्तौघनंदकमसावुररीचकार ॥ सद्वादिनां समयमुद्धतशत्रुवर्गविध्वंस नं स्वजनहर्षकरं युधीव ॥ ५० ॥ श्रुत्यंतविश्रांतशरौघयुक्तिभिर्मुराहरेः पक्षधरा विधाय ॥ सिद्धांतम त्यूर्जितपूर्वपक्षं जघ्नुः क्रमेणोत्तरपक्षमंते ॥ ५१ ॥ आप्यायिताः किल मुरांतकमुख्यवातसंजातशंखम धुरश्रुतिरम्यशब्दैः ॥ शत्रून्निहत्य समरे परितः पुरीं तां चक्रुर्मुकुंदगुणवर्णनशोभमानाम् ॥ ५२ ॥**

त्यंतेषुवेदांतेषुविश्रांताःस्थिताःयाःशरौघयुक्तयःशरौघवत्क्रूरयुक्तयस्ताभिःसाध्यभूताभिःमुराहरेःपक्षधरावैष्णवाःअत्यूर्जितःअतिप्रबलःपूर्वपक्षःभेदश्चेद्विश्वं सत्यंचेत्यादिमायिशास्त्रेशंकितपूर्वपक्षःतमेवसिद्धांतंविधायजगत्सत्यत्वादिकमेवस्वसिद्धांतंविधायद्वासुपर्णेत्यादितल्लिखितवाक्यान्येवप्रबलीकृत्यअंतेअंततः क्रमेणउत्तरपक्षंमायिभिःसिद्धांतिताद्वैतादिपक्षमेवजघ्नुः । तत्रप्रमाणीकृतनेहनानेतिवाक्यानांपूर्वोत्तरविरोधंप्रदर्श्यपराकृतवंतः ॥ ५१ ॥ आप्या यिताइति । मुरांतकस्यश्रीकृष्णस्यमुखाज्जातोमुख्यःसचासौवायुश्चतेनसंजाताःवायुनापूर्यमाणेसतिजाताइत्यर्थः । येशंखमधुरश्रुतिरम्यशब्दाःशंख स्यमधुराःयेमनोहराःयेश्रुतिरम्याःश्रोत्रसुखकराःशब्दाःध्वनयस्तैःश्रीकृष्णध्मातपांचजन्यध्वनिभिरित्यर्थः । आप्यायिताःपरिहृतश्रमाःश्रीकृष्णभटाःसमरंयु

द्धंतस्मिन्शत्रुंनिहत्यपरितःसमंतात्तांपुरींमधुरांमुकुंदस्यश्रीकृष्णस्ययद्गुणवर्णनंशौर्यादिगुणकीर्तनंतेनशोभमानांचक्रुः । जरासंधपराजयेसतिसर्वेपौराःश्रीकृ
ष्णंतुष्टुवुरित्यर्थः । अर्थांतरे । मुरांतकस्यसंबंधीमुख्यवातोमुख्यप्राणःतस्मात्संजातःतदवताररूपःश्रीमध्वाचार्यःतस्यशंखवत्शंखध्वनिवत्मधुराःश्रुति
रम्याःवेदवचनेनरम्याःश्लाघ्याःयेशब्दाःव्याख्यानादिषुप्रयुज्यमानवाक्यानितैःआप्यायिताःयुक्तिपुष्टिंप्रापिताःतच्छिष्याःसमरेवादयुद्धेमायिनोनिहत्यनिर्जि
त्यतांपुरींउपनिषत्परितःसर्वत्रमुकुंदगुणवर्णनशोभमानांचक्रुः । सकलामुपनिषदंश्रीकृष्णगुणप्रतिपादिकांचक्रुरित्यर्थः ॥ ५२ ॥ कृष्णेति । कृष्णस्यांग
मवयवस्तस्यसंगःसोस्यास्तीतिकृष्णांगसंगितच्चतदुज्ज्वलशार्ङ्गंचतस्मात् जन्मबहिर्निर्गमनंयस्यसतथोक्तः । मध्वजयेतुकृष्णांगसंग्युज्ज्वलशार्ङ्गात्कृष्णा
लिंगितशार्ङ्गाभिमानिदुर्गात्मिकलक्ष्म्याजन्मयस्यसतथोक्तः । मुख्यप्राणात्मकमध्वस्यलक्ष्मीपुत्रत्वादितिभावः । सत्पक्षःसमीचीनगरुत्तस्यपातश्चलनंतेनगृ

कृष्णांगसंग्युज्ज्वलशार्ङ्गजन्मा सपक्षपातेन गृहीतवेगः ॥ एकोपि नानावदनैः समंताद्युध्यन्नसौ मध्व इ
वास्ति बाणः ॥ ५३ ॥ अयःस्थिराप्त्यारिभटैरसह्यसुवर्णशोभी शुभवंशजन्मा ॥ दिगष्टकव्यामतनुः
समंताज्जिगाय मायाविनिकायमाजौ ॥ ५४ ॥

हीतःवेगःशीघ्रगमनंयस्यसतथोक्तः । मध्वपक्षेसत्सुपक्षपातेनगृहीतःवेगःशास्त्रकरणत्वरायेनसःतथोक्तःएकोपिनानाभूतानिवदनानिमुखानिनानावदनानितैः ।
एकोपिमुक्तःशरःअस्त्रमहिम्नाशतधासहस्रधाभूत्वाशत्रून्हंतीतिपुराणप्रसिद्धेःनानावदनैरित्युक्तं समंताद्युध्यन्शत्रुवधंकुर्वन् मध्वपक्षएकोपिनानावदनैःचतुर्मु
खत्वादनेकमुखैःसमंतात्दिक्चतुष्टयेयुद्धान्वादंकुर्वन्असौबाणःमध्वइवास्ति । पंचात्मकोमारुतएवबाणइतिवचनात्आचार्यस्यबाणसाम्यम् ॥ ५३ ॥
अयःस्थिरेति।अयसःबाणाग्रवर्तीकृष्णायसास्थिराप्तिःदृढसंबंधःतयाअरेःजरासंधस्यभटाःयोधास्तैःअसह्यःसोढुमशक्यःबाणस्यनिशितत्वादितिभावः।आचा
र्यपक्षेअयेशुभप्रदेदैवेहरौ अयःशुभावहोविधिरित्यमरः। स्थिरादृढायाआप्तिःविश्वासःभक्तिरितियावत्तयाअरिभटैःसंकरादिवादिभिःअसह्यःसुवर्णेनशोभतइ
तितथोक्तःसुवर्णनिर्मितपुंखेनशोभमानइत्यर्थः। आचार्यपक्षेतुसुवर्णैःशोभनैरक्षरैःशोभतइतिशोभी स्तुतौवर्णंतुवाक्षरइत्यमरः । शोभीशुभःप्रवणकृत्त्वादिदो

षशून्यःवंशोवेणुःतस्माज्जन्मयस्यसतथोक्तः   अन्यत्रशुभकुलोत्पन्नःदिशामष्टकंतस्मिन्व्याप्तासंबद्धातनुर्यस्यसतथोक्तः । शरःएकोपिअस्त्रमहिम्नाबहूभूयवैरिभटान्हंतीत्यर्थः । अन्यत्रदिगष्टकेव्याप्तातनुर्यस्यसतथोक्तः । एवंविधःपूर्वोक्तोबाणःआजिर्युद्धंतस्यांसमंतात्सर्वत्र मायाएषामस्तीतिमायाविनोराक्षसाजरासंधभटाःतेषांनिकायःपुंजःतंजिगाय । आचार्योपिआजौवादयुद्धेसमंतात्सर्वत्रमायाविनांमायावादिनांनिकायंसमूहंजितवान्॥ ५४ ॥ चारित्रेणबाणस्याचार्यसाम्यमुक्त्वानाम्नाप्याचार्यसाम्यंप्रतिपादयन्नाह। नत्युद्यतानामिति । सःबाणःआजिर्युद्धंतस्यांनत्युद्यतानांश्रीकृष्णबाणंदृष्ट्वाअस्मान्हनिष्यतीतिभीत्यानमस्कारोद्युक्तानां । नययुक्तानिवाक्यानितानिभजंतीतितथोक्तास्तेषां वयंश्रीकृष्णभक्ताःजरासंधनिर्बंधवशादागतानहंतव्याइतिविनययुक्तवचसामित्यर्थः । न्यस्तानिआयुधानिशस्त्राणियैस्तेतथातेषां । निकुरंबंसमूहस्तत् । हित्वात्यक्त्वाउद्यतानेवसर्वेणयुद्धायाभिमुख्यंगतानेवजयन् । अनेनशूरेणरणे

नत्युद्यतानां नयवाक्यभाजां न्यस्तायुधानां निकुरंबमाजौ ॥ हित्वोद्यतानेव जयन् स पूर्णमत्याह्वयार्हाचरणं बिभर्ति ॥५५॥ हृन्मध्यालयतः स निर्गततनुः पृथ्वीभुजामच्युतप्रेक्षावाप्तमहोदयः पवनवद्विख्यातवेगः क्षितौ ॥ सद्धाम्नोदितकृष्णविक्रमचयं विख्यापयन्स्वर्गिणां सुप्रीतिं जनयन्मुरांतकचमूं पुष्णन्नजैषीद्विषः ॥ ५६ ॥

एतादृशानहंतव्याइतियुद्धधर्मोपिप्रदर्शितः । पूर्णमतिरितिपूर्णप्रज्ञइतिआह्वयोनामयस्यसतथोक्तः । अस्यअर्हंउचितंयदाचरणमनुष्ठानंतत् बिभर्ति । बाणस्यपूर्णमत्यभावेअनेकशत्रुसमूहेनत्युद्यतादीन्विहाययुद्धोद्यतानांजयःकथंस्यादितिभावः । आचार्यपक्षेतुपूर्णप्रज्ञाख्यासुप्रसिद्धा ॥ ५५ ॥ प्रकारांतरेणकतिपयपद्यैःबाणस्याचार्यसाम्यंउक्त्वानाम्नाप्याचार्यसाम्यंप्रतिपादयन्नाह । हृन्मध्येत्यादिना । पृथ्वींभुंजंतिपालयंतीतिपृथ्वीभुजस्तेषांमहीभुजां । हृन्मध्यमेवालयोगृहंतस्मादितिततःनिर्गताबहिर्गतातनुःस्वरूपंयस्यसतथोक्तःश्रीकृष्णस्यहस्तलाघववशात्पृथ्वीभुजांहृदयमध्यंभित्त्वापृष्ठतोबहिर्गतइत्यर्थः । आचार्योपिमध्यालयतःमध्यगेहाख्यब्रह्मनःबहिर्गतःयातः अच्युतस्यश्रीकृष्णस्यप्रेक्षालक्ष्यशराग्रयोःसमतयानिरीक्षणंतयाअवाप्तःप्राप्तःमहोदयःअजिह्मगामित्व

रूपाभ्युदयोयस्यसतथोक्तः । अन्यत्रअच्युतस्यप्रेक्षाज्ञानंयस्यसः अच्युतप्रेक्षः अच्युतस्यप्रेक्षाख्ययतीश्वरः तस्मादवाप्तः महोदयः संन्यासलक्षणाभ्युदयोयस्य सतथोक्तः पवनवत् वायुवत् विख्यातः वेगोयस्यसतथोक्तः आचार्योपिपायुरूपत्वात् बदरिकाश्रमगमनेपवनवेगवान् वानरेंद्रइववायुजवोसौभीमसेनइवभीमइतिम ध्वविजये । क्षितौभूमौसच्छास्त्राणिभारतादीनितेषुऋगादिवेदेषुउदिताः येकृष्णपराक्रमाः तेषांचयः समूहस्तंविख्यापयन् विशेषेणप्रकाशयन् शत्रुसमूहेषुबाणस्या तिक्रूरतरसंचारेणश्रीकृष्णपराक्रमः प्रकटितोभवतीत्यर्थः । आचार्यपक्षेसच्छास्त्रेषुऋगादिवेदेषुउदिताः विष्णोर्नुकंवीर्याणिप्रवोचमित्यादिनाउक्ताः येकृष्णवि क्रमाः श्रीविष्णुविक्रमास्तेषांचयः तं । विख्यापयन् स्वव्याख्यानेनप्रकटयन् स्वर्गिणांदेवानांसुप्रीतिंहर्षंजनयन् एतदुभयत्रसमं । मुरांतकस्यश्रीकृष्णस्यचमूंसेनां शत्रुशरघातपरिहारेणपुष्णन् । अर्थांतरेवैष्णवान् सः बाणः द्विषः वैरिणः अजैषीत् । अर्थांतरेद्विषोमायिनः अजैषीत् ॥५६॥ शस्त्रैरिति । सबाणः अरिधृतानिशत्रुभि र्धृतानितैः शस्त्रैः खड्गादिभिः अस्त्रगणाः मंत्ररूपास्त्रसमूहाः तैः शरैः इषुभिः कृष्णे घतोवेधः तंविभेदोविदारणंतं । छिदांद्वैधीभावंस्वस्यागमः संचारः तस्यकौशलानिचम

शस्त्रैरस्त्रगणैः शरैररिधृतैर्वेधं विभेदं छिदां कृष्णे स्वागमकौशलैः परिहरन् स्वानंदमात्राकृतिम् ॥ निर्बाधां प्रतिपादयन् अवयवान्नित्यांश्च विज्ञापयन् युध्यग्राह्यमतींद्रियं व्यतनुताऽगण्यप्रतापं प्रभुम् ॥५७॥

त्काराः तैः परिहरन् श्रीकृष्णस्यच्छेदभे दादिकंयथानैवभवतितथासंपादयन् । शत्रुभिः स्वशरैः श्रीकृष्णस्यांगविच्छेदनायबहुशः यत्नेकृतेपिकृष्णशरकौशलैर्वैरिशरीराणामेवखंडितत्वादितिभावः । आ चार्यपक्षेतु । स्वागमाः स्वेनोदाहृतागमाः विद्वन्मुग्धवच्चैवकेशवोवेदनार्तवत् । प्रदर्शयतिमोहायनैवविष्णुस्तथाभवेत् । अच्छेद्योयमभेद्योयमित्यादिस्वशास्त्रा णितेषांकौशलानिनिरवकाशत्वादिकौशलानितैः कृष्णेवेधादिकंदोषंपरिहरन् सुष्ठुआनंदः केवलंआनंदः स्वानंदमात्रंतदेवाकृतिः शरीरंतांदुःखासंभिन्नानंदमूर्तिमि 
त्यर्थः । निर्गताबाधायस्याः सातां बाधरहितामित्यर्थः । शत्रुभिः स्वशरैः कृष्णस्यानंदविच्छेदनायबहुशः प्रयत्नेकृतेपिआनंदविच्छेदाभावादितिभावः । प्रतिपा दयन् अर्थांतरेआपादनखात् सर्वएवानंदइतिश्रुतेः केवलानंदमयविग्रहं अप्राकृतशरीरमित्यर्थः । निर्बाधांप्रमाणाबाधितांप्रतिपादयन् अवयवान् करचरणादींश्च नित्यानविनाश्यान् विज्ञापयन् विख्यापयन् कृष्णशराः शत्रुमुक्तशरान् कृष्णस्यरोमच्छेदमपिकर्तुंनमुंचतीतिभावः । अन्यत्रावयवान् नित्यांश्चसहस्राक्षः सहस्रपात् ।

उत्तमत्वस्येशानइत्यादिवेदवचनैर्विज्ञापयन्। अगण्यःअसंख्येयःप्रतापःपराक्रमोयस्यसतथातंप्रभुंश्रीकृष्णंयुधियुद्धेगृहीतुमशक्योग्राह्यस्तं। इंद्रियेभ्यःअतिक्रांतःअतींद्रियस्तंद्रष्टुमशक्यमित्यर्थः।व्यतनुतचकार।अर्थांतरेअग्राह्यंसाकल्येनज्ञातुमशक्यंअतींद्रियमिंद्रियागोचरंनेंद्रियाणिनानुमानमितिश्रुतेः। व्यतनुतेति। अत्रापिस्वागमकौशलैरित्यनुसंधेयः॥ ५७॥ हृष्टामिति। सःविशिखःबाणः पृषत्कबाणविशिखाइत्यमरः। आचार्यपक्षे। परमहंसत्वाद्विगताशिखायस्यसविशिखःमध्वाचार्यःकृष्णस्यचमूंसेनांहृष्टांशत्रुपराजयेनसंतुष्टांवितन्वन्कुर्वन् अन्यत्रश्रीकृष्णस्यश्रीविष्णोश्चमूंसेनांवैष्णवसमूहमित्यर्थः। हृष्टांवितन्वन्दुष्टान्शत्रून्विनष्टान्विधायव्योमचरैःयुद्धंद्रष्टुमागतैःगगनचरैःसुरैःतुष्टःसंतुष्टःसन्जितारेःमुरारेःश्रीकृष्णस्यउत्तमतांसर्वोत्तमत्वंस्पष्टीचकार प्रकटीचकार जरासंधसेनामध्येदेवगंधर्वावतारात्मकभूपानांविद्यमानत्वात्तेषांसर्वेषांमध्येश्रीकृष्णस्यजयेनसर्वोत्तमत्वंस्पष्टीभवतीतिभावः ॥ ५८॥ पौराणिकमिति। अ

हृष्टां स कृष्णस्य चमूं वितन्वन् दुष्टान्विनष्टान्विशिखो विधाय॥ तुष्टः सुरैर्व्योमचरैर्मुरारेः स्पष्टीचकारोत्तमतां जितारेः॥ ५८॥ पौराणिकं वाक्यमिवोग्रसेनमग्रे जरासूनुरसौ जहास॥ जीवेशयोर्भेदमिवात्मयुक्त्या भेदं स चासाधयदस्य चापे॥५९॥ गुणोज्झितं श्रीरमणं विधातुं शरोऽरिवर्गं यतमानमाशु॥ गुणैर्विहीनं विरचय्य कृष्णमनंतसच्चित्यगुणं स तेने॥ ६०॥

सौजरासूनुःजरानाम्न्याःराक्षस्याःसूनुःपुत्रःजरासंधःअग्रंपुरोभागस्तस्मिन्स्थितंउग्रसेनंमायावादीतत्त्ववादिनोपन्यस्तं । सुपर्णावेतौसयुजौसखायौयदृच्छयाकृतनीडौचवृक्षे। एकस्तयोःखादतिपिप्पलान्नमन्योनिरन्नोपिबलेनभूयात्। इतिमत्वाच्युतंमूढःसपदासमताडयदितिपुराणेभवंपौराणिकंवाक्यमिवजहास। त्वंजीर्णवस्त्रसदृशइत्यादिपरिहासवचनैरपहासंकृतवान्। सचोग्रसेनःतत्त्ववादीमुचुकुंदेजीवेपरमात्मबुद्धिंकृतवतःकालयवनस्यमूढइतिमिथ्याज्ञानित्वकथनरूपनिंदार्थवादरूपयुक्त्यासुपर्णावेताविंत्यादेर्निरवकाशत्वकथनरूपात्मयुक्त्याचजीवेशयोःभेदमिवास्यजरासंधस्यचापेभेदंद्वैधीभावस्तं असाधयत्। जरासंधस्यचापमच्छिनदित्यर्थः । अनेनयुद्धवर्णनंभेदवादश्चसमर्थितोभवति॥ ५९॥ गुणोज्झितमिति। सःकृष्णमुक्तशरः। श्रीरमणंश्रियोभर्तारंश्रीकृष्णंगु

णोज्झितंगुणेनमौर्व्या मौर्वीज्यासिंजिनीगुणइत्यमरः । उज्झितंरहितंविधातुंकर्तुंकृष्णधनुषोमौर्वीछेत्तुमित्यर्थः । यतमानंनाराचप्रयोगादिनाप्रयतमानंअरि वर्गःशत्रुसमूहस्तं । आशुशीघ्रंगुणैर्मौर्वीभिःविहीनंरहितंविरचय्यकृत्वाशरप्रयोगात्पूर्वमेवशत्रूणांमौर्वीछेदंकृत्वेत्यर्थः । कृष्णंअनंतःनाशरहितःसंचिंत्यःसज्जन चिंत्यःगुणोमौर्वीयस्यसतथातं । तेनेकृतवान् । अर्थांतरेसःमध्वाचार्यःश्रीरमणंलक्ष्मीपतिंगुणोज्झितंआनंदादिगुणरहितंविधातुंस्वमनीषोत्प्रेक्षितदुस्तर्कैर्निर्गुणंप्र तिपादयितुंयतमानंअरिवर्गंमायावादिसमूहं । गुणहीनंब्रह्ममीमांसाभ्यासादिसद्गुणैर्विहीनंविरचय्यश्रीकृष्णंअनंताःअपरिमिताःनित्यावासच्चिंत्यागुणाःसज्जन धेयज्ञानानंदादिगुणायस्यसतथातं । वितेनेसाधितवान् । अनेनयुद्धरीतिःसद्गुणवादश्चसमर्थितोभवति ॥ ६० ॥ इदानींप्रकृतयुद्धभूमिवर्णनव्याजेनवेदस्य प्रामाण्यंसमर्थयमानआह । अंधानामिति । सःश्रीकृष्णमुक्तःशरःअंधानामपिदुष्टांगानामपिकृष्णसद्गुणमणिंश्रीकृष्णस्यसद्गुणाएवशौर्यधैर्यपराक्रमादिसद्गु णाएवमणिःरत्नंतं । दर्शयित्वैवगुणानांप्रकाशरूपत्वात्मणिसाम्यं । अविपालगोपालमुखैरपियुद्धेश्रीकृष्णशौर्यादिदर्शनात् । अंधानांमणिदर्शनंवर्णितमितिज्ञा

अंधानामपि कृष्णसद्गुणमणिं संदर्शयित्वा जगद्वंद्यां कीर्तिवधूं परानलसमां संधाय लोकत्रये॥ सांद्रे रक्त जले च रत्नदृषदां वृंदं स संप्लावयञ्छंदोऽन्वर्थमलं समर्थ्य सुधियां संदेहमाश्वच्छिनत् ॥६१॥ तव्यं । अनेनांधोमणिम विंददित्यादिवेदवाक्यस्यानुपपन्नार्थतयाप्रामाण्यशंकानिरस्ता । जगद्वंद्यांविश्वस्मिन्स्तुत्यांकीर्तिरेववधूस्तां कृष्णकीर्तियोषितंलोकत्रयंभुवनानांत्रयंतस्मिन्परा नलसमांपरेषांशत्रूणांअनलसमामग्निसमांजगद्वंद्यांश्रीकृष्णकीर्तिंसंचिंत्यशत्रवोदह्यंतइतिभावः । संधायस्थापयित्वा अनेनयोषितमग्निंध्यायेदितिवाक्यस्यानु पपन्नार्थतयाप्रामाण्यशंकानिरस्ता । सांद्रेरक्तजलेरत्नरूपादृषदःशिलास्तासांरत्नदृषदांवृंदंसमूहःतत् । संप्लावयन्युद्धभूमिस्थनिबिडरक्तजलेछिन्नांगभूपाभर णानांप्लवनादितिभावः । अनेनग्रावाणःप्लवंतइतिवाक्यस्यानुपपन्नार्थतयाप्रामाण्यशंकानिरस्ता । छंदःअंधोमणिमविंददित्यादिवेदंअनुगतःअर्थोयस्यत दन्वर्थं । उपपन्नार्थंतत् । समर्थ्यसुधियांशोभनज्ञानवतांसंदेहःवेदप्रामाण्यविषयकसंदेहःतंआशुशीघ्रेणअच्छिनत् । अचार्योपिबौद्धैरनुपपन्नार्थत्वेनवेदस्या

युद्धवर्णनव्याजेनभेदपंचकंसमर्थयमानआह । शस्त्रास्त्रप्रकरेष्विति।भेदपंचकंतु जीवेशयोर्भिदाचैवजीवभेदःपरस्परम्।जडेशयोर्भिदाचैवजडजीवभिदातथा।।ज डानांचमिथोभेदःसत्योयंभेदपंचकइतिवचनात् अवगंतव्यः । सशरःयुद्युद्धंतस्यांयुधिशस्त्राणिचअस्त्राणिचतेषांप्रकराःसमूहास्तेषुशत्रूणांशस्त्रास्त्रसमूहेष्वित्य र्थः । शार्ङ्गंधरतीतिशार्ङ्गधरः । तस्मादितितनःश्रीकृष्णात् भेदो विदारणंतंसाधयन् आचार्यपक्षेतुभेदमन्योन्याभावंसाधयन् । अनेनजडेश्वरभेदःप्रदर्शितः । द्विपाश्व द्विपद्वर्गेषु द्विपागजाश्वाश्वाश्वद्वौपादौयेषांते द्विपदःपदातयः ते चतेषांवर्गाःसमूहाःतेषुआत्तंगृहीतंशरासनंधनुर्येनसतथोक्तस्तस्मात्मुरभिदःश्रीकृष्णात् । भेदंविदा रणंसाधयन् अनेन जोवेश्वरभेदःप्रदर्शितः । आत्तशरासनात् मुरभिदःनिर्भिन्नानिगात्राणियेषांतेतथोक्तास्तेषुत्याजितशरीरेष्वित्यर्थः । द्विपाश्वादिषुचभेदंदेहवि योगलक्षणभेदंसाधयन् । अनेननष्टदेहेभ्यःवीरस्वर्गस्थःनष्टजीवानांभेदःप्रदर्शितः । मृत्योर्यमस्यलोकं । इतेषुप्राप्तेषुद्विपाश्वद्विपदादिषुस्वश्वासौजनश्चस्वज

शस्त्रास्त्रप्रकरेषु शार्ङ्गधरतो भेदं द्विपाश्वद्विपद्वर्गेष्वात्तशरासनान्मुरभिदो निर्भिन्नगात्रेषु च ॥ मृत्योर्लोकमितेषु तं स्वजनतः कायान्मिथः खंडिते हस्तादौ युधि साधयन् स विदधे व्यक्तं भिदां पंचकम् ॥ ६२ ॥ अरिप्रयुक्तैर्निशितैः शरौघैर्हरिप्रियास्तद्ध्वजिनीं निजघ्नुः ॥ स्वपक्षमास्थाप्य परोक्तवाक्यैर्विपक्षपक्षानिव मध्वशिष्याः ॥ ६३ ॥

नःतस्मादितिततःस्वबंधुवर्गात्तंभेदंसाधयन्स्वजनंपरित्यज्यमृत्युलोकंगतत्वादितिभावः । अनेनजीवानांपरस्परभेदःप्रदर्शितः । कायःशरीरंतस्मात् मिथःखंडि तेहस्तादौतंभेदंद्वैधीभावंसाधयन् अनेनशरीरादवयवानांद्वैधीभावाखंडनान्मिथोवयवानांद्वैधीभावात्द्वेधाअन्योन्याभावरूपजडभेदःप्रदर्शितः।भिदानांभेदानांपं चकंउक्तप्रकारेणभेदपंचकंव्यक्तंस्पष्टंयथाभवतितथाविदधेकृतवान् । युद्धेकृष्णःस्वशरेणशत्रूणांशस्त्रास्त्रादिकंचिच्छेदद्विपाश्वादिकंहतवान् । गात्राणिशिरां सिहस्तपादादीन्अच्छिनदित्यर्थः ॥ ६२ ॥ अरिप्रयुक्तैरिति । हरिप्रियाःश्रीकृष्णभटायुधिअरिप्रयुक्तैःशत्रुभुमुक्तैःनिशितैःशरौघैःउपलक्षणंचैतत् । शक्तिग दातोमरायुधैश्चतद्ध्वजिनींसेनां । ध्वजिनीवाहिनीसेनेत्यमरः । निजघ्नुः । कथमिव मध्वशिष्याःमध्वाचार्यस्यशिष्याःपरेणमायावादिनाउक्तानियानिवाक्यानि नेहनानास्तीत्यादिवाक्यानितैःस्वस्ययःजगत्सत्यत्वाद्यात्मपक्षःतंआस्थाप्यसंस्थाप्यइहब्रह्मणिनानानानाविश्वभेदःनास्तिचेत्स्वकारणेस्तीत्यःयास्यतितत्तुज

गतोमिथ्यात्वमित्युक्त्वापरोक्तवचनैरेवविपक्षपक्षानिवमायावादिपक्षानिवप्रौढस्तत्त्ववादिनःपरोक्तवाक्यैरेवपरानूदूषयंतीतिभावः ॥ ६३ ॥ युद्धेशत्रूणामवस्था वर्णनव्याजेनविश्वसत्यत्वंप्रतिपादयितुमाह । प्राणयोगेति । मुरारेःश्रीकृष्णस्यभटाःयुधिब्रह्मसाक्षात्कृतेःब्रह्मणःश्रीकृष्णस्यसाक्षात्कृतेःदर्शनात्लब्धंप्राप्तंयत् प्राणानामयोगोवियोगःसचप्रपतनंचआघातःताडनंसचआर्तिःदुःखंसाचवित्तव्ययोहारकेयूरादिद्रव्यनाशःसचस्वेदश्चआस्रस्यअश्रुणःउदयउत्पत्तिरास्रोदयः सचवक्रनैल्यंभयंचदुष्कीर्तिश्चएताःआदयोयस्यतत्तथोक्तंतत्अखिलंसमस्तंविश्वंजगत्शत्रुचयाःशत्रुसमूहाःतेषुसत्यंयथार्थंप्रचक्रुः नेदंव्यावहारिकं । ब्रह्मज्ञानाबाध्यत्वात् । अन्यथाब्रह्मणोपिव्यावहारिकत्वप्रसंगइतिभावः । एवंचक्रुः कृष्णभटाःस्वसैन्येनानाप्रकारेणजयंपरसैन्येनानाप्रकारेणपराजयंचसा

प्राणायोगपलायनप्रपतनाघातार्तिवित्तव्ययस्वेदास्रोदयवक्रनैल्यभयदुष्कीर्त्यादि विश्वं युधि ॥ सत्यं शत्रुचयेषु चक्रुरखिलं यद्ब्रह्मसाक्षात्कृतेर्लब्धं तद्विपरीतमात्मसु ततः सिद्धं मुरारेर्भटाः ॥ ६४ ॥ रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायिनि ॥ संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातोऽयमभूत्त्रयोदशमितः सर्गो मुदां सर्गिषु ॥ ६५ ॥

इति श्रीरुक्मिणीशविजये वादिराजपूज्यचरणविरचिते त्रयोदशः सर्गः ॥ १३ ॥

धितवंतः । तंचजयंसस्नेहश्रीकृष्णमूर्तिदर्शनेनसिद्धत्वात् स्वसैन्येस्थिरीचक्रुः । पराजयंचसस्नेहश्रीकृष्णमूर्तिदर्शनेनसिद्धत्वात् परसैन्येस्थिरीचक्रुः । मध्वशिष्यास्तुपरब्रह्मस्वरूपश्रीकृष्णसाक्षात्कारवतांसर्वज्ञमुनीनामपिदृश्यमानत्वात्भावाभावरूपप्रपंचस्यपारमार्थिकसत्यतांसाधितवंतः । नचकृष्णोतद्ब्रह्मेतिवाच्यं । बृहबृंहिवृद्धावितिधातुभूतवृद्धिरूपगुणवतिशैशवदशायांप्रपंचोदरेपार्थसारथ्यकरणदशायामपिनांतनमध्यंनपुनस्तवादिंपश्यामिविश्वेश्वरविश्वरूपेत्युक्तकृष्णएवसंभवात् । अथकस्माडुच्यतेब्रह्मेति । बृंहंतोह्यस्मिन्गुणाइतिश्रुतेः । धातुव्याख्यानरूपस्मृतेश्चैकार्थ्यायबहुगुणवृद्धत्वरूपपरब्रह्मशब्दार्थभूतब्रह्मत्वस्यापिमध्यनंतेगुणकर्माभिधानानिसंतिमेहसहस्रशइत्यादिवाक्यार्थरूपकृष्णएवसंभवादित्युक्तंभवति ॥ ६४ ॥ रोम्णांहर्षणमितिव्याख्यातमेतत् ॥ ६५ ॥

इतिश्रीरुक्मिणीशविजयटीकायांनारायणभट्टविरचितायांत्रयोदशःसर्गः ॥ १३ ॥

॥ अथ श्रीरुक्मिणीशविजये चतुर्दशसर्गप्रारंभः ॥

श्रीवादिराजगुरवेनमः ॥ नमोस्तुवादिराजायगुरवेदीनबंधवे ॥ योमांवराकंकृपयामृत्युग्रस्तममूमुचत् ॥ १ ॥ जरासंधमहासेनावरुणालयवाडवः ॥ मुरारिःक रुणाराशिःपरमःप्रीयतांमम ॥ २ ॥ निर्माय्द्वारकांकालयवनंमुचुकुंदतः ॥ भस्मीचकारयोभैष्मीप्राणनाथःसमेगतिः ॥ ३ ॥ छत्रमिति । कृष्णभृत्याःयुधि शत्रूणांछत्रमातपत्रंतत्ध्वजंकेतनं केतनंध्वजमस्त्रियामित्यमरःचामराणिचचर्माणिच चर्मशब्देनपरायुधाघातपरिहारायवर्तुलाकारेणचर्मकृतावरणविशेषः कर्णाटकभाषायांहरिगे तौलवभाषायांअच्चणे महाराष्ट्रेढालइतिवदंति। अच्चनंचर्मचोच्यतइत्यनुशासनं। वर्माणितनुत्राणि तनुत्रंवर्मदंशनमित्यमरः। हस्तिनोग जास्तेचअश्वाश्वपत्तयःपदातयःतेचएतेआदयोयस्यरथादेःतत्तथोक्तंततसमस्तवित्तंसकलवस्तु खंडेनसहितंसखंडंकृत्वाछित्त्वेत्यर्थः नविद्यतेखंडोयस्यसोखं डःसचासौअर्थश्चतंअच्छिन्नपदार्थमित्यर्थः । अविद्यमानंचक्रुर्हि । तत्त्ववादिनःब्रह्मणःसत्यत्वादिवैशिष्यरूपसखंडत्वसंपादनेनमायावाद्यभिमताखंडत्वम

छत्रं ध्वजं चामरचर्मवर्महस्त्यश्वपत्त्यादि समस्तवित्तम् ॥ कृत्वा सखंडं युधि कृष्णभृत्याश्चक्रुर्ह्यखंडार्थ मविद्यमानम् ॥ १ ॥ संग्रामकौशल्यचिदुज्झितानां भंगं समालिंग्य सुमूर्छितानाम् ॥ सिद्धामविद्यां विद धुर्विपक्षे विज्ञाप्य भावाकृतिमेव युद्धे ॥ २ ॥

विद्यमानंचक्रुरितिभावः।

तत्त्ववादिनस्तुइतरासाध्ययुद्धचमत्कारवतिकृष्णेसर्वथाअज्ञानस्यैवाभावात्। नभावरूपाज्ञानस्यावसरः। इतरेषुतुयोग्येषुजीवेषुमायाजवनिकाच्छन्नत्वेनकुड्या वृतघटस्यैवइदानींभगवदपरोक्षज्ञानादेरभावएवमायापगमेपिसामस्त्येनज्ञानाभावएव। अयोग्येषुतुसर्वथाभगवन्माहात्म्यज्ञानाभावरूपाज्ञानस्यनकाप्यवकाश इतिसाधितवंतः ॥ १ ॥ युद्धवर्णनव्याजेनभावरूपाविद्यानिरसनंध्वनयन्नाह । संग्रामेति । कृष्णभृत्याःयुद्धेविपक्षःशत्रुपक्षःतस्मिन्संग्रामकौशल्यंयुद्धकौश ल्यंतस्यचितज्ञानंतयाउज्झितानांरहितानांतदायुद्धकौशल्यज्ञानंकिंचिदपिनासीदितिततज्ञानाभावएवरिपुषुप्राप्नोतीतिभावः।ईषज्ज्ञानानुकूलंह्यज्ञानंभावरूपा ज्ञानमितिमायिनोवदंति। जरासंधसैन्येषुस्वज्ञानस्यचसर्वथाअभावात्स्वपरज्ञानंकिमपिनासीदितितदभावएवप्राप्नोतीतिभावः। भंगःपराभवस्तंदृढशस्त्राघातमि त्यर्थः। समालिंग्यप्राप्यसुमूर्छितानांदृढमूर्छाविशेषात्स्वपरज्ञानंकिमपिनासीदितितदभावएवप्राप्नोतीतिभावः।एवंशत्रूणांसिद्धांजातांअविद्यामविज्ञानंविज्ञाप्य

भावाकृतिमेवउक्तप्रकारेणज्ञानाभावाकृतिमेवविदधुःचक्रुः ॥ २ ॥ युद्धवर्णनव्याजेनानिर्वचनीयत्वपक्षंप्रतिपादयति । पलायनमिति । येनृपाःपलायनंयु द्धांगणादन्यत्रपलायनंविदधुः । कृष्णभृत्याःतान् सत्कोटिषुसतांविद्यमानानांजीवतामित्यर्थः । कोटयःपक्षाःतासुनिधायनिक्षिप्ययेपलायिताःतैरेवजीवित मित्यर्थः । अन्यानूपलायनमकृत्वायुद्धाभिमुखेनस्थितानूअसत्कोटिषुअसतामविद्यमानानांमृतानामित्यर्थः । कोटिषुसन्निवेश्यसच्चअसच्चसदसतीताभ्यांवि भिन्नंविलक्षणंशून्यमविद्यमानंप्रचक्रुः जरासंधकटकेसर्वेप्रायशोमृताःउर्वरिताःपलायिताइत्यर्थः अन्यत्रतुब्रह्मजगतीसत्कोटिषुसन्निवेश्यअन्यानूशुक्तिरजत शशशृंगादीनूअसत्कोटिषुसन्निवेश्यसदसद्भिभिन्नंमायावाद्यभिमतसदसद्विलक्षणंशून्यंअविद्यमानंचक्रुः ॥ २ ॥ जीवभेदेजीवपरमात्मभेदेचतात्पर्यप्रदर्शनायपुन रपितानाह । तइति । धानुष्केषुधन्विषुचूडामणयःश्रेष्ठाः धन्वीधनुष्मानूधानुष्कइत्यमरः । तेश्रीकृष्णभटाःब्रह्मणःश्रीमच्छार्ङ्गधरातूश्रीकृष्णातूविभिन्नानूवि

पलायनं ये विदधुर्नृपांस्तान् विधाय सत्कोटिषु कृष्णभृत्याः ॥ अन्यानसत्कोटिषु सन्निवेश्य शून्यं प्र चक्रुः सदसद्भिभिन्नम् ॥ ३ ॥ ते ब्रह्मणः शार्ङ्गधराद्विभिन्नानाहूय हेयानपि गर्विणस्तान् ॥ स्वेभ्योऽपि भि न्नान्विरचय्य युद्धे धानुष्कचूडामणयो निजघ्नुः ॥ ४ ॥ सुरर्षिसिद्धस्तुतिभिः समंतात्समुत्थिताभिः समदू षयंस्ते ॥ अनन्ययोग्याभिरवाच्यभावं मुकुंदमुख्यार्थपराभिरस्य ॥ ५ ॥

न्छिन्नानूअतएवहेयानपित्याज्यानपिगर्वःअहंकारःएषामस्तीतिगर्विणःतानूशत्रूनूयुद्धेआहूयस्वेभ्योपिभिन्नानूस्वहस्तमुक्तशरीरच्छिन्नानित्यर्थः । विरचय्यकृ त्वानिजघ्नुः । अन्यत्रब्रह्मणोलाभातूप्रतिपाद्यजीवेभ्योपिभिन्नानूप्रत्यपीपदन्नितिभावः ॥ ४ ॥ अवाच्यत्वखंडनंहृदिनिधायाह । सुरर्षिसिद्धेति । तेकृष्णभृत्याः अन्येषुश्रीकृष्णव्यतिरिक्तेषुयोग्याःनभवंतीतिअनन्ययोग्याःताभिःअतएवमुकुंदएवमुख्यार्थोवाच्योर्थः । तत्पराभिस्तन्निरताभिःसमंतातूश्रीकृष्णस्यासाधा रणजयेसतिसर्वदिक्षुसमुत्थिताभिःसुराश्चऋषयश्चसिद्धाश्चतेषांस्तुतिभिःजितजरासंधकटकत्यक्तभग्नजरासंधेत्यादिश्रीकृष्णपुण्यनामस्तुतिभिः । एतेषांनाम्नां कृष्णैकनिष्ठतास्पष्टैव अस्यश्रीकृष्णस्यअवाच्यभावमवाच्यत्वंलक्ष्यत्वमित्यर्थः । समदूषयनूसम्यक्दूषितवंतः । लक्षणायांगंगायांघोषइत्यादौप्रवाहादिरिववा

च्यार्थोन्योभवेत्। त्यक्तभग्नजरासंधेत्यादिनाम्नामन्यत्रायोगात्कृष्णस्याप्यवाच्यत्वेशब्दस्यनिरर्थकत्वापातेनशब्दत्वैवनस्यात्अतोभगवानेववाच्यइतिभावः
॥ ५ ॥ प्रद्युम्नंसृष्ट्वाएकलव्यंतेनव्यजयदित्युक्तंप्रद्युम्नःकइत्यतआह । भस्मीभूतमिति गिरौकैलासेशेतइतिगिरिशःयंकामं बाह्याचसादृष्टिश्चललाटस्थलो
चनेनभस्मीभूतमिवपुनश्चित्तजत्वेनकामस्यावस्थानादिवेत्युक्तं। आरचय्यकृत्वा अय्यतर्कपक्षेतुयंअय्यतर्कंविष्णुसर्वोत्तत्वसाधकसम्यग्युक्तिंबाह्यदृष्ट्यात्वंच
रुद्रमहाबाहोमोहशास्त्राणिकारय। अतथ्यानिवितथ्यानिदर्शयस्वमहाभुज। प्रकाशंकुरुचात्मानमप्रकाशंचमांकुरु। मांचगोपाययन्नस्यात्सृष्टिरेषोत्तराधरेतिह
र्याज्ञाशृंखलाबंधत्वेनापाततएवनतुमनःपूर्वकमित्यर्थः। भस्मीभूतमिवस्वकृतपाशुपताद्यागमैःखंडितमिवनिराकुर्वतापिशिवेनविष्णुसर्वोत्तमसाधकयुक्तीनांस्व
चित्तेनुसंधीयमानत्वेनसर्वथानिराकरणेतात्पर्याभावादिवेत्युक्तं। आरचय्य । चित्तांतःस्थितंचित्तजंसंतंअनेकाननंषण्मुखात्मकंगिरिसुतायाःहिमगिरिपुत्र्याः
पार्वत्याःयोगर्भःतस्मिन्। पुनःआर्पयद्धिअर्पितवान्हि। कामस्यषण्मुखावतारत्वंयंस्कंदइत्याचक्षतइत्यादिश्रुतिपुराणादिषुस्पष्टमेव। अन्यत्रचित्तांतःस्थितंमन

भस्मीभूतमिवारचय्य गिरिशो यं बाह्यदृष्ट्या पुनश्चित्तांतःस्थितमार्पयद्गिरिसुतागर्भे त्वनेकाननम्॥
तं पंचावयवेषुमंगरुचिरं सृष्ट्वाऽय्यतर्कोपमं छंदोबाह्यकुतर्ककल्पमजयत्तेनैकलव्यं विभुः ॥ ६ ॥

साअनुसंधीयमानंअनेकाननंआत्माश्रयान्योन्याश्रयचक्रकाश्रयानवस्थानिष्टापादनरूपेणपंचमुखमनुमानपक्षेतुअन्वयव्यतिरेकादिरूपेणानेकमुखं। पुनःगि
रिसुतागर्भेपार्वतीहृदिआर्पयद्धिहसिपार्वतींप्रत्युपदिष्टवान् । गर्भइतिवदताइदंभद्रेत्वयागोप्यंपाल्यंस्वार्थैकसिद्धयइतिवचनात्अंतरेवधारयनबहिःप्रकाशयेत्युप
देशोपिसूचितः। विभुःश्रीकृष्णःपंचावयवाःलताद्यवयवाःपुष्पाणीत्यर्थःतएवइषवोबाणायस्यसतथातंअंगैःकरचरणादिभिःरुचिरंमनोहरं तर्कपक्षेतुपंचावयवाः
प्रतिज्ञाहेतूदाहरणोपनयनिगमान्येवइषवोयस्यसतथोक्तस्तंप्रतियुक्तिनिराकरणपटुतरत्वद्योतनायउक्तंअय्यतर्कोपमं। अंगैर्व्याप्तितर्काप्रतिहतिविपर्ययपर्यवसा
नानिष्टाननुकूलत्वरूपतर्कांगैःरुचिरंमनोहरं अनुमानपक्षेतुव्याप्तिसमुचितदेशत्वाख्यांगोपेतंव्याप्त्यादीनामक्लिष्टत्वद्योतनायरुचिरमित्युक्तं। अय्यतर्कःउत्तम
तर्कःतस्यउपमासादृश्यंयस्यसतथातं। उक्तप्रकारेणसत्तर्कसदृशमित्यर्थः। तंप्रद्युम्नरूपिणंकाममंमनसादृष्ट्वातेनप्रद्युम्नेनछंदोभ्यःबाह्योयःकुतर्कःतस्यकल्पःसदृ

शस्तं । अवैदिकदुस्तर्कसदृशमित्यर्थः ।एकलव्यमेकलव्याख्यासुरंतस्यापिनिषादरूपत्वादवैदिकत्वं ।असुरत्वेनदुष्टत्वाद्दुस्तर्कसदृशत्वंद्रष्टव्यं।अजयत् जितवान् ।
श्रीकृष्णःयुद्धेप्रद्युम्नंमनसास्रष्ट्वातेनैकलव्यंघातयामास । प्रद्युम्नोथगदापाणिरेकलव्यंजघानह । ततःक्रुद्धोमहाबाहुःप्रद्युम्नोयादवेश्वरः ।आजघ्नेमुष्टिनातंतुज
रासंधस्यपश्यतइतिहरिवंशादौस्पष्टम् ॥६॥ रणइति । श्रिताः आश्रिताःयेआत्मीयाःस्वभक्ताःतेषांगतिराश्रयः । सर्वापरिपूर्णाशक्तिर्यस्यसतथोक्तः । सर्वासर्वविष
यिणीशक्तिर्यस्येतिसतथेतिवा । सःश्रीकृष्णःरणंयुद्धंतस्मिन् क्षणस्तत्क्षणःतेनैवअंगजंप्रद्युम्नरूपिणंकामंउज्ज्वलानिमनोहराणियानिअंगानिअवयवास्तैःसमं
सहसमुत्पाद्यस्रष्ट्वाभवस्यशिवस्यअनुभावःसामर्थ्यंतेनागतंयत्पितृत्वंतस्यप्रथांकैलासयात्रादिनाशिवप्रसादंसंपाद्यप्रद्युम्नाख्यंपुत्रंलेभइतिप्रसिद्धिंघतिस्मअरवं
डयत् । दोअवखंडनेलट् ॥ ७ ॥ ईशेति । कृष्णभृत्याः ईशस्यअपरोक्षंअपरोक्षज्ञानंतेनसमःएकःकालोयस्यतत्तथातत् । ईशापरोक्षसमकालिकमित्यर्थः ।

रणे क्षणेनांगजमुज्ज्वलांगैः समं समुत्पाद्य स सर्वशक्तिः ॥ भवानुभावागततत्पितृत्वप्रथां श्रितात्मीयग
तिर्घति स्म ॥ ७॥ ईशापरोक्षसमकालमशेषविद्याबाध्यं प्रसाध्य तदिदं सकलं द्विषत्सु ॥ श्रीशार्ङ्गपाणिचर
णे निखिलं समर्प्य स्वोपार्जितं समलभंत महाप्रसादम् ॥ ८ ॥ संप्रेष्य शैवीं प्रथमं गदां यो जराभिधा
नां जननीं जघान ॥ जात्युत्तरेणैव पराजितोऽभूदात्मोदितव्याहतिहेतुनासौ ॥ ९ ॥

श्रीकृष्णमुखदर्शनेजृंभितसामर्थ्यकृतमितियावत् । सकलंसमस्तंतदिदंपूर्वोक्तशस्त्राघातपलायनपराजयादिकंद्विषत्सुशत्रुषुयाआशेषाविद्याःतदीयमायावादशा
स्त्रविद्यादयस्ताभिःअबाध्यंबाधारहितंतत् । ब्रह्मापरोक्षसमानकालिकतयातत्ज्ञानबाध्यंनेतिपारमार्थिकमितिध्वनिः । प्रसाध्यस्वोपार्जितंयुद्धेस्वोपार्जितंततनि
खिलंशत्रुसंबंधिच्छत्रचामरहारकटकादिकंश्रीशार्ङ्गपाणिचरणेश्रीकृष्णश्रीपादेसमर्प्यअद्वैतपक्षनिराकरणोपार्जितंपुण्यमितिध्वनिः ।महाप्रसादःमोक्षसाधनीभू
तप्रसादस्तं । समलभंत प्राप्तवंतः ॥ ८ ॥ परपराभवकथनव्याजेनवादेनिग्रहस्थानागमपिसूचयन्नाह । संप्रेष्येत्यादिना । योजरासंधःप्रथममाजौशैवींशिवदत्तांग
दांसंप्रेष्यश्रीकृष्णवधायक्षिप्त्वाजरेत्यभिधानंनामयस्याःसातांजराख्यांत्वजननींस्वमातरंजघानाहिंसितवान् । असौजरासुतःआत्मनास्वेनउदितंयद्वचनंतस्यव्या

हतिःव्याघातःतस्यहेतुनाजात्युत्तरेणैवपराजितःअभूत्। यथावादेमायावादिजात्युत्तरेणपराजितोभवति। तथापराजितोऽभवत्। स्वव्याहतमुत्तरंजातिलक्षणं अयमपिस्वगदयास्वमातरमेवाहिंसितवानितिजातिरूपनिग्रहस्थानंप्रापैवेतिभावः ॥ ९ ॥ संवादमिति। केपिकेचनयोधाःसमीचीनःयोवादःसंवादस्तंसंवादं। केचिन्माधवमासाद्याविजयस्वेतिचाब्रुवन्निर्तिभागवतोक्तप्रकारेणसमीचीनवचनंबभ्रुःदधुःकिल। समीचीनवचनमुक्तवंतइत्यर्थः। बभ्रुरित्यनेनसंवादवचनस्य दार्ढ्यंसूचितं। युद्धेपरानृप्रतिमधुरवचनस्यापिपराभवरूपत्वादितिभावः। वादपक्षेतुपरोक्तवचनार्थस्यांगीकाररूपसंवादलक्षणनिग्रहस्थानमित्यर्थः। विप्रतिपन्नप्रमेयांगीकारःसंवादइतिसंवादाख्यनिग्रहस्थानस्यलक्षणत्वेनपरोक्तवचनांगीकारस्यसंवादरूपत्वात्। अपरेअन्येभटाःशरैस्ताडिताःसंतःउक्त्यभावोनुक्तिः तांअनुक्तिंअवचनंबभ्रुःशरविद्धहृदयाःवक्तुमप्यसमर्थाअभवन्नितिभावः।अन्यत्रतुतूष्णींभावोऽनुक्तिरित्युक्तलक्षणवत्तूष्णींभावरूपानुक्त्याख्यनिग्रहस्थानमित्यर्थः।क्रुद्धाःपरेकेचनकटकंसेनामुखंतस्मान्निर्यांतःनिर्गच्छंतःबहिःपलायनंकुर्वंतइत्यर्थः। निरुंधतिनबहिर्गच्छेतिनिरोधंकुर्वंति। निजःस्वपक्षीयजनः। तस्मि

**संवादं किल केऽपि बभ्रुरपरेऽनुक्तिं शरैस्ताडिता निर्यांतः कटकान्निरुंधति निजे क्रुद्धा विरोधं परे ॥ ध्वस्ताः**
**केचिदसंगतिं निजजनैः सर्वे जयैर्न्यूनतामाधिक्यं हतिभिः पराजितमभूदित्थं तदद्वैतिवत् ॥ १० ॥**

न्विरोधःकलहस्तंबभ्रुःनिरोधनेनताडयित्वापलायनंचक्रुरित्यर्थः। अन्यत्रप्रतिज्ञादीनांमिथोविरोधलक्षणविरोधाख्यनिग्रहस्थानमित्यर्थः। ध्वस्ताःचूर्णीकृतसर्वांगाः। केचिद्भटाःनिजजनाःस्वबंधुजनास्तैःसंगतेरभावोसंगतिस्तामसंबंधंबभ्रुः। चूर्णीकृतसर्वावयवत्वात्अस्थिमात्रमपिस्वबंधुभिर्नालब्धमितिभावः। वादेआकांक्षाविरहोसंगतिरित्युक्तलक्षणकाकांक्षाविरहरूपासंगतिलक्षणंनिग्रहस्थानमित्यर्थः। सर्वेशत्रवःजयैर्न्यूनतांराहित्यंदधुः। एकस्यापिजयोनास्तीत्यर्थः। अन्यत्रतुअस्यवक्तव्यानांअन्यतमानुपादानंन्यूनमित्युक्तलक्षणकंन्यूनंनामनिग्रहस्थानमित्यर्थः। सर्वेशत्रवःहतिभिःशस्त्रास्त्रघातैराधिक्यंबभ्रुः। श्रीकृष्णभटानांहस्तलाघवात्एकैकस्यांगेबहवोघाताजाताइतिभावः। वादिपक्षेअन्वितोपयुक्ताःपुनरुक्तकृतकार्यप्रयोगोधिकमित्युक्तलक्षणाधिकंनाममनिग्रहस्थानमित्यर्थः। ततूजरासंधबलंअद्वैतिवदैक्यवादिवदित्थमुक्तप्रकारेणपराजितमभूत्। संवादानुक्तीविरोधासंगतीन्यूनाधिक्येचेतिषडेवनिग्रहस्थानानीत्याचार्यपक्षमवलंब्येदमुदितमितिध्येयम् ॥ १० ॥

ब्रह्मणोनिराकारत्वमतंहापयितुंतथायथोपासतेतदेवभवतीतिश्रुतिमनुश्रुत्यनिंदारूपार्थवादमाह । संचूर्णितेति । समरःसंगरःतस्मिन् शरौघाःशरसमूहास्तैःसंचूर्णि
तानिअंगानिअवयवाःयेषांतेतथातैः संछिन्नाःपादोदरकंठहस्ताःपादाश्चउदराणिचकंठाश्चहस्ताश्चयेषांतेतथोक्ताःजरासंधभटाःएवंनरकेपत्यमानाःमायिनश्चअ
सृगब्धौरक्तसमुद्रे । आकारान्निर्गतंनिराकारं । ब्रह्मनिराकारमितियन्मतंतस्यफलं । ईश्वरस्याकारशून्यताभावनोचितंस्वहस्तपादशिरश्छेदादिरूपंफलंतावदश्रं
तइवअनुभवंतइवविरेजुः । उपरितमसिइतोप्यधिकदुःखसंभोक्तव्यत्वात्तावदित्युक्तम् ॥ ११ ॥ स्वांगेति । स्वस्यअंगानिस्वांगानिहस्त्यश्वादिचतुरंगबलानितैरा
च्छादितःशत्रुशौर्यतरणिःशत्रूणांयच्छौर्यंतदेवतरणिर्येनसतथोक्तः । अद्भुतःआशुगैरश्वैःक्षिप्रमितस्ततोनीयमानत्वेनाश्चर्यजनकःयोरथःसएवश्रीमत्समीरोवायु

संचूर्णितांगाः समरे शरौघैः संछिन्नपादोदरकंठहस्ताः ॥ विरेजुरश्नंत इवासृगब्धौ फलं निराकारमत
स्य तावत् ॥ ११ ॥ स्वांगाच्छादितशत्रुशौर्यतरणिः शार्ङ्गद्रुचापोज्ज्वलः श्रीदेवीस्थिरविद्युदद्भुतरथश्रीम
त्समीरेरितः ॥ काव्योद्गीतकथः शरौघकरकावर्षैः स कृष्णांबुदो राजन्याननपाणिपादकमलव्रातानला
वीत्क्षणे ॥ १२ ॥ मुहुः समाकृष्य रणावनौ रिपून् कठोरमृत्पिंडसमान् प्रचूर्णयन् ॥ हलायुधः सन्मुस
लो व्यसाधयद्यशोंकुरान् शौर्यमनोज्ञबीजजान् ॥ १३ ॥

स्तेनेरितःप्रेरितः । मेघोपिवायुनानीतस्तत्रतत्रकर्षतिसतुवायुर्नीरूपःअयंतुभास्वररूपइतिविशिष्टद्योतनायश्रीमानित्युक्तं । अतएवाद्भुतत्वंच । काव्येउद्गीताव
र्णिताःकथायस्यसतथोक्तः । ऋतुवर्णनावसरेमेघोपिकाव्योद्गीतकथः । सकृष्णांबुदःश्रीकृष्णोमेघः । वर्षमेघोपिकृष्णवर्णइतिद्योतनायकृष्णांबुदइत्युक्तं । शरौघ
एवशरसमूहएवकरकावर्षोपलाःतासांवर्षाणितैः । वर्षोपलस्तुकरकेत्यमरः । राजन्यानांक्षत्रियाणांआननपाणिपादकमलव्रातानिआननानिचपाणयश्चपादा
श्चतएवकमलानितेषांव्रातान्वृंदानि क्षणःक्षणकालःतस्मिन् । अलावीत् छेदितवान् । दृढतरवर्षधाराभिःकमलदलच्छेदस्तुप्रसिद्धएव ॥ १२ ॥
इदानींबलरामस्ययुद्धंकृषीवलसाम्येनवर्णयति । मुहुरिति । सत्समीचीनंमुसलंमुसलाख्यायुधंयस्यसतथोक्तः । पिंडीभूतमृच्चूर्णनायकृषीवलस्यापिमुसल

धारित्वंप्रसिद्धमेव। हलंलांगलमायुधंयस्यसतथोक्तः बलरामः। कृषीवलस्यापिभूकर्षणार्थंहलधारित्वंप्रसिद्धमेव। रणावनौयुद्धस्यभूमौरिपून्शत्रून्समाक्ष्यगलेलांगलंनिधायाकर्षणंकृत्वाकठोरःकठिनोयोमृत्पिंडःतस्यसमाःसदृशास्तान्शत्रून्प्रचूर्णयन्मुसलेनचूर्णीकुर्वन्सन्शौर्यमेवमनोज्ञबीजंमनोहरबीजंतस्माज्जाताःशौर्यमनोज्ञबीजजाःतान् शौर्यवतःकीर्तिसंभवात्शौर्यस्यकीर्तिबीजत्वं। यशांस्येवांकुरास्तान्असाधयद्धि। कृषीवलपक्षेतुबीजावापेनांकुरसाधनंप्रसिद्धमेव ॥ १३ ॥ ततइति। ततःक्रुद्धःकरधृतंहस्तेनधृतंधनुर्यस्यसतथोक्तःचैद्यःशिशुपालःमार्गणगणान्बाणसमूहान्विभौश्रीकृष्णेवर्षन्विष्णोःश्रीकृष्णस्यप्रकृष्टाःशिखाःअग्रभागाःयेषांतेप्रशिखायेविशिखाःबाणाःतैःग्लानिःखेदस्तांअगमत्। तदातस्मिन्कालेकोपेनउज्ज्वलितंदीप्तंवदनंयेषांतेतथोक्ताःपापांधाःपापैरंधीभूताःपापिनइत्यर्थः। भूपाःकार्मुकाणिकरेयेषांतेतथासंतःपरमपुरुषंश्रीनारायणंपातकमिवपापमिवपरीयुःश्रीकृष्णंपरितोययुः ॥ १४ ॥ कृष्णोपीति।

ततश्चैद्यः क्रुद्धः करधृतधनुर्मार्गणगणान् विभौ वर्षन्विष्णोः प्रशिखविशिखैर्ग्लानिमगमत्॥ तदा भूपाः कोपोज्ज्वलितवदनाः कार्मुककराः परीयुः पापांधाः परमपुरुषं पातकमिव ॥ १४ ॥ कृष्णोऽपि वक्षसि मुखे द्विषतां ललाटे लग्नैः शरैर्लसितलांछनचित्रपत्रैः ॥ स्वध्यानकीर्तनसदूर्ध्वललामशून्यान् सार्थाभिधानकृत शोणितशोणगात्रान् ॥ १५ ॥ मागधं तं शिशुपालमेत्य मधुजिच्छार्ङ्गच्युतैः सायकैश्चापच्छत्रकिरीटकेतुरहितं चक्रे शिशूनां प्रभुम् ॥ रामश्चूर्णितवाजिसारथिरथं कृत्वा जरासंहितप्रायं मागधमागृहीतमपि तं वाचा मुमोच प्रभोः ॥ १६ ॥ कृष्णोपिद्विषतांशत्रूणांवक्षसिहृदयेमुखेआस्येललाटेनिटिलेतस्मिन्। लग्नैःसंबद्धैःलसितानिमनोहराणिलांछनचित्रपत्राणिलांछनंश्रीकृष्णनामांकितरूपंचिह्नंतच्चचित्रपत्राणिचनानावर्णकंकगृध्रादिपत्राणितानिचयेषांतेतथोक्ताःतैःशरैःकरणैःस्वध्यानंस्वस्यध्यानंतच्चकीर्तनंचसत्समीचीनंयदूर्ध्वललामंऊर्ध्वपुंड्रंतच्चतैःशून्यान्। अवयवत्रयएवशरप्रहारेहेतुगर्भविशेषणंउक्तंवैष्णवचिह्नरहितानामवयवाश्छेदार्हाइतिभावः। शोणितेनशोणंरक्तंगात्रंयेषांतेतथातान्राज्ञः अर्थेनवाच्यार्थत्वेनसहितासार्थाअन्वर्थाअभिधानामयेषांतेतथातान्। अकृतअकार्षीत्। प्रत्यासन्नमरणत्वेनप्रजारंजनरूपार्थासंभवात्रक्तरंजितगात्रत्वेनैवराजानोबभूवुरितिभावः ॥ १५ ॥ मागधंतमिति। मधुंमधुनामकंदैत्यंजितवानितिमधुजित्श्रीकृष्णःमागधंतंमत्तंशिशुपालंएत्यप्राप्यशार्ङ्गच्युताःशार्ङ्गमुक्ताःतैःसायकैःचापंचछत्रंचकिरीटंचकेतुर्ध्वज

श्वैः रहितस्तंकृत्वाशिशूनांप्रभुंआद्यंचक्रे । यथास्तनंधयःशिशुःकिमपिप्रतिकर्तुंनशक्नोतितथानिश्चेष्टंकृत्वाशिशूनांपालःप्रभुःआद्यइत्यर्थसंभवेशिशुपालच
क्रुरित्युपहासः । रामोबलभद्रःचूर्णिताःवाजिसारथिरथाःवाजिनश्चसारथिश्चरथश्चयस्यसतथोक्तस्तंमागधंजरासंधंजरयाजरसासंहितप्रायंजराग्रस्तप्रायमित्य
र्थःकृत्वायथाजरासंधःनप्रतियतेततथाप्रतियत्नशून्यंविधायजराग्रस्तशरीरोपमयाजरासंधनामानंकृत्वेत्युपहासः। तंमागधंआगृहीतमपिसम्यक्युद्धेगृहीतमपि
प्रभोःश्रीकृष्णस्यवाचाइदानींमुंचेतिवचनेनमुमोच ॥ १६ ॥ पुनरिति । दुष्टामतिर्यस्यसदुर्मतिःसमागधस्तुपुनश्चतावतींत्रयोविंशत्यक्षौहिणीसंमितांसेनांसंपाद्य
मधुरापुरीं अविधुराविधुरासंपद्यतेतथाकर्तुंसौभाग्यरहितांकर्तुंपरमन्यद्यत्पारंततूयमुनोत्तरकूलंउपागमत् आजगाम ॥ १७॥ अपीति । सःमागधोजरासंधःपुण्या
यानदीयमुनातस्यास्तीरंतत् । उपव्रज्यापिगीयमानःबंदिभिर्गीयमानःसन्आत्मानंस्वात्मानंअमूमुदत् तोषयामास। सा पुण्यसरित्तीरेपिस्नानविष्णुस्मरणादिपुण्य

पुनश्च तावतीं सेनां संपाद्य स तु दुर्मतिः ॥ मधुरां विधुरीकर्तुं परपारमुपागमत् ॥ १७॥ अपि पुण्यनदीतीरमु
पव्रज्य स मागधः ॥ अमूमुदद्गीयमानो विमूढप्रकृतिर्हि सा ॥ १८ ॥ कुहकस्य कुबुद्धिं तामभिवीक्ष्येव भास्करः॥
कुपितस्तद्विघातार्थं परदेशमपोपदत् ॥ १९ ॥ अथोषःसमये शौरी रथमारुह्य निर्ययौ ॥ सवितेव सह स्वीयैर्नि
शाचरबलांतकः॥ २० ॥ राजनीतिं प्रकथन् राजीवनयनस्त्रिधा ॥ अमेयविभवः स्वीयामयूयुजदनीकिनीम् ॥ २१ ॥

रतिंविहायस्वोदरभरणादिरूपास्थितिःविमूढानांमिथ्याज्ञानिनांप्रकृतिर्हिस्वभावोहि ॥ १८ ॥ कुहकस्येति । भास्करःसूर्यःकुहकस्यकुत्सितस्यजरासंधस्यतांकुबु
द्धिंमधुरांनाशयिष्यामीतिदुर्बुद्धिंअभिवीक्ष्येवदृष्ट्वेवक्रुद्धःसन्तस्यउद्योगस्यविघातोविघ्नःतस्मैइतितदर्थंपुनःस्वोदयपर्यंतंतद्व्यापारविघातार्थमित्यर्थः। परोन्योयो
देशस्तंमेरोरपरप्रदेशंअपीपदत् गतवान् । तदासूर्यास्तमयोजातइत्यर्थः ॥ १९ ॥ अथेति । अथानंतरंनिशाचरबलंराक्षससैन्यंतस्यांतकोनाशकःशौरिःश्रीकृष्णःउ
षएवसमयःकालःतस्मिन्रथःस्यंदनस्तमारुह्यस्वीयैःभटैःसहनिशाचराणांचोरोलूकादीनांबलंतस्यांतकःसवितेवसूर्यइवनिर्ययौ । युद्धार्थंनिर्गतवान् ॥ २० ॥ रा
जनीतिमिति । अमेयःअपरमितःविभवःसामर्थ्यंयस्यसतथोक्तःराजीवनयनःश्रीकृष्णःराजनीतिंअल्पबलेनराज्ञाउपायेनशत्रुर्जेतव्यइतिराजनीतिंप्रकटयन्सन्

नत्वशक्त्या । स्वीयामनीकिनींचमूंत्रिधाअग्रेपार्श्वद्वयेचअयूयुजत् प्रेरितवान् ॥ २१ ॥ रात्रौचौर्यप्रतापेनवंचितोस्मिदुरात्मनेतिभागवतस्थजरासंधवाक्यस्याप्रामाण्यंप्रदर्शयन्श्रीकृष्णप्रयाणमुहूर्तंवर्णयति । सूर्येणेति । उदयश्चासौशैलश्चउदयशैलःउदयाख्यपर्वतःतस्यमूर्द्धातस्मिन्लसताप्रकाशमानेनसूर्येणश्रीपतेःश्रीकृष्णस्यशौर्योन्नतिंप्रकटयन्सूर्यस्यदेवपक्षीयत्वात्क्रूरत्वाच्चश्रीकृष्णशौर्यप्रतिनिधित्वंअंबुजैर्विकसितकमलैःतेनश्रीकृष्णशौर्येणपोष्याःरक्ष्याःयेदेवाःतेषांउदयोभ्युदयःतंप्रकटयन् । मधुकरैःकमलसमीपेकूजद्भिर्भ्रमरैःतद्वंदिनातेषांयादवानांबंदिनःस्तुतिपाठकास्तेषांसंपत्तांप्रकटयन् । ध्वस्तानिनाशितानितैःसंतमसैःअंधकारैःतामसानांजरासंधभटानांदशांमरणरूपावस्थांप्रकटयन् उभयेषामपितामसशब्दवाच्यत्वात्बिंबप्रतिबिंबभावः । नीडेकुलायेक्वणंतस्तैःखगैःपक्षिभिःवेश्मांतःस्वस्वपटकुड्यांतःपरेषांशत्रूणांवैभवंयुद्धसन्नाहस्तत् । प्रकटयन्सःमुहूर्तःश्रीकृष्णप्रयाणमुहूर्तःमुदेसंतोषायस्यात् ॥ २२ ॥ त्रिष्विति । त्रिषुस्थाने

सूर्येणोदयशैलमूर्ध्नि लसता शौर्योन्नतिं श्रीपतेः तत्पोष्योदयमंबुजैर्मधुकरैस्तद्वंदिनां संपदम् ॥ ध्वस्तैः संतमसैश्च तामसदशां नीडे क्वणद्भिः खगैर्वेश्मांतः परवैभवं प्रकटयन् स स्यान्मुहूर्त्तो मुदे ॥२२॥ त्रिषु स्थानेषु विस्तीर्णा मधुसूदनवाहिनी ॥ त्रिपदी वेदमातेव रिपुसेनामहन्क्षणात् ॥ २३ ॥ अमूमुचन् शरव्रातममतेषु हरेर्भटाः ॥ खलेषु त्रिदशाधीशा ज्वलत्तापत्रयं तथा ॥ २४ ॥ प्रमत्ता ध्वजिनी शत्रोर्यमुनातीरगाऽप्यभूत् ॥ असतां पुण्यसरिदप्यरिष्टस्य हि कारणम् ॥ २५ ॥

षुअग्रेपार्श्वयोश्चविस्तीर्णामधुसूदनवाहिनीश्रीकृष्णसेनात्रीणिपदानिपादाःयस्याःसात्रिपदीवेदमातेवगायत्रीवगायत्र्यभिमंत्रिताआपइत्यर्थः । अपऊर्ध्वंक्षिपंतिताआपोवज्रीभूत्वातानिरक्षांसिमंदेहारुणेप्रक्षिपंतीतिश्रुतेः रिपुसेनांशत्रुसेनांक्षणात्क्षणकालादहन्जघान । सवितेवेतिप्राक्कृष्णस्यसूर्यसाम्यकथनात्कृष्णसेनायाःसूर्यसेनास्थानीयगायत्रीसाम्यकथनम् ॥ २३ ॥ अमूमुचन्निति । येहरेर्भटाःअमतेषुशत्रुषुशरव्रातःशरसमूहस्तंअमूमुचन्मोचयामासुःतत्कथमिव त्रिदशाधीशाःदेवश्रेष्ठाःपापपुण्यफलदानेधिकारिणःखलेषुदुर्जनेषुज्वलंतोयेतापाःआध्यात्मिकादयस्तेषांत्रयंज्वलत्तापत्रयंयथातथाअमूमुचन्नितिसंबंधः ॥ २४ ॥ प्रमत्तेति । शत्रोर्जरासंधस्यध्वजिनीसेनायमुनायास्तीरंतद्गच्छतीतियमुनातीरगापिप्रमत्तायुद्धविचाररहिताभूत् । तथाहि पुण्यसरिदपिअसतांदुर्जनानांअरिष्टमनि

ष्टंतस्यकारणंहि ॥२५॥ एकैकस्मिन्दशदशभटेचाश्वेशतंशतम् । रथेरथेचसाहस्रमयुतंचगजेगजइतिभागवतवचनोक्तस्यएकैकत्रानेकशरप्रयोगस्यभावंवर्ण यति । शरैरिति । नविद्यतेपारमवसानंयेषांतेऽपारास्तैःदशशतसहस्रादिरूपैर्बहुभिःशरैःचतुरंगंचत्वारिअंगानिहस्त्यश्वादीनियस्यतत्तथोक्तंतत् । तत्सैन्यंजरासंध सैन्यंततपूरयन्सश्रीकृष्णःममइषवएववारिधिःसमुद्रस्तस्यतवसेनात्रयोविंशत्यक्षौहिणीपरिमितापिनालंनपर्याप्तेतिशंसति कथयति ॥ २६ ॥ शार्ङ्गमिति । रण एवधूर्व्यापारःतस्यांदोष्णाहस्तेनशार्ङ्गंबिभ्रत् पुनर्दोष्णाहस्तेननिषंगइषुधिस्तस्मात्निशितशरचयानाददानःगृह्णन् । पुनर्दोष्णाज्यांसिंजिनींकर्णांतादापर्यंतंआ कर्णांतंमुहुर्विकर्षयन्पुनर्दोष्णाप्रबलरिपुवपुःप्रबलरिपूणांशरीरंतंतत् । मार्गणौघाःशरौघास्तैःपूरयन् । पुनर्दोष्णान्येषांशत्रूणामातंकोभयंयस्मात्सतथोक्तस्तंआ

शरैरपारैस्तत्सैन्यं चतुरंगमपूरयन् ॥ ममेषुवारिधेर्नालं तव सेनेति शंसति ॥ २६ ॥ शार्ङ्गं बिभ्रन्निषंगान्निशितशर चयानाददानो मुहुर्ज्यामाकर्णांतं विकर्षन् प्रबलरिपुवपुः पूरयन्मार्गणौघैः ॥ अन्यातंकं स्वशंखं रणधुरि रणयन्नं घ्रिमूले नतानां तन्वन् दोष्णाऽभयं च प्रथयति मुरजिद्विश्वतःपाणितां स्वाम् ॥ २७ ॥ ये संध्यासमयेऽपि भास्व दुदये निद्रां द्विषोऽचीकरंस्तेभ्योऽदीदिशदच्युतः शुभकृतेः साक्षी सुदीर्घां हि ताम् ॥ यैरीक्षा न कृता रवेः कुम तिभिस्तेषां दृशोऽमीलयद्ये शुद्धांबुनि नो ममज्जुरहितांस्तच्छोणितेऽमज्जयत् ॥ २८ ॥

तंकःसज्वरेरोगेसाध्वसेमुरजिद्धनाविति रत्नमाला । स्वशंखंरणयन् नादयन् पुनर्दोष्णाअंघ्रिमूलंपादमूलंतस्मिन्नतानांनम्राणांअभयंचतन्वन्मुरजित्श्रीकृष्णः स्वांस्वकीयांविश्वतःसर्वतःपाणयोहस्ताःयस्यसतथोक्तः । तस्यभावस्तत्तातांप्रथयतिप्रकटयति ॥ २७ ॥ यइति । येद्विषःभास्वतःसूर्यस्यउदयोयस्मिन्सतथातस्मिन्संध्यासमयेपिनिद्रामचीकरन्अकुर्वन् । शुभाचसाकृतिश्चतस्याःशुभकर्मणःसाक्षीअच्युतःश्रीकृष्णःतेभ्यःशत्रुभ्यःसुदीर्घांतांनिद्रांदीर्घनिद्रांमरणमित्यर्थः । अदीदिशद्दिदत्तवान्हि । मरणमित्यनुक्त्वादीर्घनिद्रामितिवदतानिद्रालूनांनिद्रैवदत्तेत्युचितंप्रदर्शितं एवमुत्तरत्रापिद्रष्टव्यम् । यैःकुमतिभिःदुर्बुद्धिभिःसूर्यस्येक्षादर्शनंनकृतातेषांदृशोलोचनानिअमीलयत्मीलनंकारितवान् । येशुद्धंयदंबुजलंतस्मिन्नोममज्जुःनस्नातवंतःतानहितान्शत्रून्शोणितेरक्तेअमज्जयत् ॥ २८ ॥

पादाब्जइति । युधिजीवानांत्रितयंउत्तमाधममध्यमरूपत्रयंतेन । संचितदशामार्जितावस्थांसंदर्शयंतोवैरिभटाःकतिपयेकेचनआत्म्येशितुःस्वस्वामिनःश्रीकृष्णस्यपादाब्जेस्वमात्मीयंमूर्धानंशिरःअनीनमन्नमयामासुः । केचिन्माधवमासाद्यविजयस्वेतिचाब्रुवन्निति वचनात् । केपिकेचनशार्ङ्गादुन्मुक्ताःयेशराःतैर्विशीर्णाःचूर्णीकृताःतनवःशरीराणियेषांतेतथासंतःआत्मनःस्वान्अमीमरन् मारयामासुः । अन्येकेपिहरिंश्रीकृष्णंजरासुतमपित्यक्त्वाततोयुद्धांगणाद्दुद्रुवुःपलायनंचक्रुः ॥ २९ ॥ यइति । यःवीरशिरोमणिःपराक्रमिषुश्रेष्ठःश्रीकृष्णःमागधस्यस्तुतिपाठकस्यसाधर्म्यंसादृश्यमप्यापन्नान्मागधवत्स्तुतिंकुर्वतइत्यर्थः । नावधीत् नहिंसितवान् । यद्वामागधस्यजरासंधस्यसाधर्म्यंसाम्यंमागधेतिसंज्ञायाःजरासंधेस्तुतिपाठकेचप्रयोगात्आपन्नान् स्तुतिपाठकान् नावधीत्नहिंसितवान् । सः

पादाब्जे स्वमनीनमन् कतिपये मूर्धानमात्मेशितुः शार्ङ्गान्मुक्तशरैर्विशीर्णतनवः केऽप्यात्मनोऽमीमरन् ॥ अन्ये केऽपि हरिं जरासुतमपि त्यक्त्वा ततो दुद्रुवुर्जीवानां त्रितयेन संचितदशां संदर्शयंतो युधि ॥ २९ ॥ यो मागधस्य साधर्म्यमप्यापन्नान् हि नाऽवधीत् ॥ स मागधवधं हीनं मेने वीरशिरोमणिः ॥ ३० ॥ स इत्थमाजौ बहुवारमेनं विजित्य बार्हद्रथमुग्रसेनम् ॥ पुरं हिरण्यामलरत्नचित्रमरिंदमोऽचीकरदब्धिमध्ये ॥ ३१ ॥ निधाय तस्यां मधुरापुरस्थान् निजान् क्षणेनापरिमेयशक्तिः ॥ विदुद्रुवेऽथो यवनं दिधक्षुः स्वभक्तहर्यक्षदरीमरिघ्नः ॥३२॥

श्रीकृष्णःमागधवधोजरासंधवधःतं मागधनामसाम्यात् हीनमयशस्करंमेने ॥ ३० ॥ सइति । अरीन्दमयतीतिअरिंदमःशत्रुसंहारकःश्रीकृष्णःइत्थमुक्तप्रकारेणाजौउग्रासेनायस्यसतथातंएनंबार्हद्रथंबृहद्रथपुत्रंजरासंधंबहुवारंबहुशःविजित्य । हिरण्यानिसुवर्णानिचतानिअमलरत्नानितानिचतैश्चित्रमाश्चर्यंतत् । पुरं नगरंअब्धिमध्यंतस्मिन्अचीकरत्कारयामास।अरिंदमइत्यनेनअल्पसैन्येनराज्ञाबहुभिःशत्रुभिःयुगपद्विरोधेदुर्गाश्रयःकर्तव्यइतिराजनीतिमनुसृत्येदंकृतंनशत्रुभीत्येतिद्योत्यते ॥३१॥ निधायेति । परिमेयापरिमितानभवतीत्यपरिमेयाताद‍ृशीशक्तिर्यस्यसतथोक्तःअरीन्हंतीतिअरिघ्नःशत्रुसंहारकःश्रीकृष्णःतस्यांपुरिद्वारकायांक्षणेनमधुराख्यंपुरंमधुरापुरंतस्मिन्तिष्ठंतीतितथोक्तास्तान् निजान्स्वबंधून् यादवान् निधायअथोअनंतरंयवनंमधुरांरोद्धुमागतंकालयवनंदिधक्षुः

दग्धुमिच्छन्सनृत्स्वभक्तोमुचुकुंदःसएवहर्यक्षोसिंहःतस्यदरींगुहांप्रतिविदुद्रुवे ॥ ३२ ॥ पराङ्मुखइति । कंजदलंकमलदलंतद्वदायतेअक्षिणीयस्यसतथोक्तः । पराङ्मुखंयस्यसतथायवनानभिमुखःसन्खलस्ययवनस्यअग्रंतस्मिन्नितिततःपलायन्असौपरमःसर्वोत्तमःश्रीकृष्णःस्वैःस्वकीयैःनरैःदुरात्मनांदुष्टानांवक्त्रनिरीक्षणंनकार्यंत्वितिशंसतिस्म ॥ ३३ ॥ अधिक्षिप्तइति । तेनयवनेनाध्वनिमार्गेअधिक्षिप्तोपिशूरस्यतवपलायनंनोचितमित्यादिदुरुक्तिभिर्निराकृतोपिअदत्तमुत्तरंप्रत्युत्तरंयेनसतथोक्तःईश्वरःसःश्रीकृष्णःसतां असद्वर्गाःअसज्जनसमूहास्तैःसहअसँल्लापःसंभाषणं सँल्लापोभाषणंमिथइत्यमरः । स्फुटंयथाभवतितथाशिक्षतिस्म ॥ ३४ ॥ निद्रालोरिति । सोसुरःकालयवनःनिद्रालोःनिद्राशीलस्यनिद्रितस्येत्यर्थः । मुचुकुंदएवभूवरमणिःभुविवराःश्रेष्ठाःभूवराःराजानस्तेषुमणिःश्रेष्ठः

पराङ्मुखोऽसौ परमः पलायन् खलाग्रतः कंजदलायताक्षः ॥ दुरात्मनां वक्त्रनिरीक्षणं स्वैर्नरैर्न कार्यं त्विति शंसति स्म ॥ ३३ ॥ अधिक्षिप्तोऽपि तेनाध्वन्यदत्तोत्तर ईश्वरः ॥ असँल्लापमसद्वर्गैः स सतां शिक्षति स्फुटम् ॥ ३४ ॥ निद्रालोर्मुचुकुंदभूवरमणेर्विद्योतमानां गुहामध्यासीनमगम्यमल्पमतिभिः शुद्धं प्रबुद्धं स्वतः ॥ हृद्योम्निस्थितमुग्धजीवनिकराद्दुर्धीरभिन्नं वदन्नद्वैत्येव नृपात्स भेदरहितं बुद्ध्याऽन्वमंस्ताऽसुरः ॥ ३५ ॥ ऐक्यं सिसाधयिषितं यदि तत्किमर्थं रक्षोऽच्युतत्वमति राज्ञि शुको न सेहे ॥ अस्म्यच्युतोऽहमिति दिक्षु विघोषयंतं कस्मात्स पौंड्रकमगर्हयदर्हणीयः ॥ ३६ ॥

तस्यमुचुकुंदाख्यराजश्रेष्ठस्येत्यर्थः । विद्योतमानांशोभमानांगुहां रैवताचलगुहायांमुचुकुंदोनिद्रांकुर्वन्नासीदितिपौराणिकीकथा । अध्यासिनंगुहायांशयानमित्यर्थः अधिशीङ्स्थासांकर्मेत्याधारस्यकर्मत्वं अतःकर्मणिचेतिद्वितीया । अल्पमतिभिःपुरुषैरगम्यंस्वतःस्वभावतःप्रबुद्धंनिद्रारहितं अनेनाभेदंमन्यमानस्यनिद्रितत्वमनिद्रितत्वंचेतिविरुद्धधर्मौबाधकौसूचितौ । शुद्धंनिर्दोषंपरमात्मानंश्रीकृष्णंनृपान्मुचुकुंदात्भेदरहितंबुद्ध्याअन्वमंस्तअमन्यत । कथमिव हृद्व्योम्निस्थितमुग्धजीवनिकारात् हृदःयद्व्योमगुहातस्मिन्स्थिता अलुक्समासोयं । येमुग्धजीवाःतेषांयोनिकरःसमूहस्तस्मात्शुद्धंअज्ञानरहितंब्रह्मअभिन्नंवदन्दुष्टाधीर्यस्यसदुर्धीःदुष्टबुद्धिःद्वैतस्याभावोऽद्वैतमैक्यंतदस्यांगीकार्यत्वेनास्तीतिअद्वैतीऐक्यवादीसएव ॥ ३५ ॥ ऐक्यमिति । यद्यैक्यंशुकाचार्येणसिसाधयिषितंसाधयितुमिष्टंतत्तर्हिशुकःशुकाचार्यःरा

ज्ञिमुचुकुंदेअच्युतत्वस्यमतिर्यस्मिन्तदच्युतत्वमतिततूमुचुकुंदंदृष्ट्वाअयमेवाच्युतइतिमन्यमानमित्यर्थः । रक्षोराक्षसंकालयवनंकिमर्थंकुतोनसेहेनक्षमयांबभू
व । इतिमत्वाच्युतंमूढःस्वपदासमताडयदितिमुचुकुंदेअच्युतत्वबुद्धिंकुर्वतोयवनस्यमूढइतिशुकाचार्येणधिक्कृतत्वादितिभावः । अर्हणीयःपूज्यःसःशुक्रःअहम
च्युतोस्मिकृष्णोस्मीतिदिक्षुविघोषयंतंपौंड्रकंकस्मादगर्हयत् स्तोभितोबालवाक्येनमेनेस्वात्मानमच्युतमित्यादौआनिंदत् प्रसंगादिदमुक्तम् ॥ ३६ ॥ प्रदाह्येतिमुचु
कुंदस्यहृत्हृदयंतस्ययत्सरसिजातंपद्मं अलुक्समासोयं । तस्यभानुःसूर्यःमुचुकुंदहृदयविकासकइत्यर्थः । श्रीकृष्णःभूपतेःमुचुकुंदस्यनयनस्ययोग्निस्तेन का
लयवनेनगुहायांनिद्रितस्यमुचुकुंदस्यकृष्णोयमितिबुद्ध्यापदाताडनेकृतेसतिनिद्राभंगेनसंक्रुध्यमुचुकुंदचक्षुर्जातवह्निनेत्यर्थः । यवनएवकाननंवनंतत्प्रदाह्यपुनः
भूपतेःभवःसंसारइतिआख्यायस्यतच्चतद्गहनमरण्यंचतत् स्वस्यपदेपादौतेएवपद्मेतयोःविशेषेणक्षाज्ञानमित्यर्थःसैवाग्निस्तेनविनाश्यशनैःजलधेर्यन्मध्यंतस्मिन्र

प्रदाह्य नयनाग्निना यवनकाननं भूपतेर्भवाख्यगहनं पुनः स्वपदपद्मवीक्षाग्निना ॥ विनाश्य मुचुकुंदहृत्सरसिजातभा
नुः शनैरियाय पुरमात्मनो जलधिमध्यरत्नायिताम् ॥ ३७ ॥ निजैः सह द्वारवत्यां निवसत्यंबुजेक्षणे ॥ अजया प्रेषितं
पत्रं द्विजः कश्चिदुपाहरत् ॥ ३८ ॥ धन्याऽबला सा विभवे भवेद्या वेद्याय भूम्ने पुरुषाय साम्ना ॥ साम्नायशास्त्रोदितधर्म
पात्रे पात्रेषु दत्तात्मपदाय दत्ता ॥ ३९ ॥ कुर्वंति कामवशगा मयि चित्तमन्ये कुर्वंतिकागतयमानुचरान् रणे तान् ॥ दे
ह्यंगजाकृतिशतोर्जितरम्यरूप देह्यंगजातनिलयांऽघ्रिसरोजसेवाम् ॥ ४० ॥ त्नवदाचरतीतिरत्नायितातांरत्नवच्छोभमानामित्यर्थः ।

आत्मनःपुरंद्वारवतीं पूःस्त्रीपुरीनगर्याविंत्यमरः । इयाययौ । पृथ्वीदत्तं जसौजसयलावसुग्रंथयतीपृथ्वीगुरुरितिलक्षणात् ॥ ३७ ॥ निजैरिति । अंबुजेक्षणे
श्रीकृष्णेनिजैर्बंधुभिःसहद्वारवत्यांपुर्यांनिवसतिसतिकश्चिद्द्विजोब्राह्मणःपुरोहितपुत्रःअजयाजननरहितयारुक्मिण्याप्रेषितंपत्रंआलेखारूपंतत्उपाहरत्आनी
तवान् ॥ ३८ ॥ धन्येति । याअबलाकन्याविभवेसमर्थायभूम्नेपूर्णायसाम्नासामवेदनवेद्याय साम्नायंवेदसहितंयच्छास्त्रंब्रह्ममीमांसादितेनोदितोयोधर्मस्तस्यपा
तारक्षकःतस्मै पात्रेषुयोग्यजीवेषुदत्तमात्मपदंवैकुंठाद्यात्मस्थानंयेनसतथातस्मैपुरुषायपूर्णषड्गुणायश्रीकृष्णायदत्ताभवेत् साकन्याधन्याकृतार्था ॥ ३९ ॥ कु
र्वंतीति । अनंगस्यकामस्यआकृतिशतंआकारशतंतस्मादूर्जितमुत्कृष्टंरम्यरूपंयस्यसतथोक्तःतस्यसंबुद्धिः । अनेनवरोचितसौंदर्यातिशयउक्तोभवति । देहिनांअं

गजातंशरीरसमूहः तदेवनिलयआवासोयस्यसतथोक्तः तस्यसंबुद्धिः नियामकतयासर्वशरीरसन्निहितेत्यर्थः। अनेनस्ववरणविधिनाकुत्सितराजजयशक्तिःसूचिता हेश्रीकृष्णकामस्यवशःअधीनतातंगच्छंतीतितथोक्ताःकामुकाइत्यर्थः । अन्येराजानःमयिचित्तंकुर्वंतितानूराज्ञः रणेयुद्धेअंतिकंसमीपमागताःयमानुचराःयम दूताःयेषांतेतथातान् । कुरुमारयेत्यर्थः । अंघ्रिसरोजसेवांपादकमलसेवांदेहि ॥४०॥ भवेति । भवतापःसंसारतापःतंहरतीतितथोक्तःतादृशःअपांगोयस्यसतथात स्यसंबुद्धिःहेकृष्णभवतात्वयाधीःबुद्धिःअपहृतैव । हेरुक्मिणितवश्रीकृष्णएवभर्ताभवितुंयोग्यस्तमेववरयेत्यादिनारदवचनश्रवणमारभ्यममबुद्धिस्त्वय्येवलग्ने त्यर्थः । चरणयोर्येअंकाःध्वजादयस्तैःकृतःअंकःवक्षस्थलस्थचंदनादिषुचिह्नंयस्याःसातांमांचमामपिरणांगणतःयुद्धभूमेःनय । चरणांककृतांकामित्यनेनश्री रूपायाममप्रागेवलब्धत्वादंगसंगत्वमन्यायोग्यंसूचयति ॥ ४१ ॥ धिक्कृत्येति । भवघ्नप्रभोहेअंगप्रियश्रीकृष्णभवतःयत्सूक्तंसमीचीनवचनंरुक्मिणींवरयामी

भवतापहरापांग भवताऽपहृतैव धीः ॥ चरणांककृतांकां मां च रणांगणतो नय ॥ ४१ ॥ धिक्कृत्याह
मुमेशहंसगमनौ स्वर्गीश्वराग्नी भवत्सूक्तासक्तहृदंग लोकमखिलं देवौघमान्यान्मुनिन् ॥ सच्छास्त्राध्व
नि कोविदानपि बुधान् त्वय्येव यत्सस्पृहा विश्वाधीश्वरतां भवघ्न भवतस्तन्निश्चिनोमि प्रभो ॥ ४२ ॥

तिनारदंप्रत्युक्तवचनंतेनआसक्तंत्वयिलग्नंहृन्मनोयस्याःसातथोक्ताअहंउमेशःपार्वतीशोरुद्रःसचहंसेनगमनंयात्रायस्यसहंसगमनोहंसवाहनोविरिंचःसचतौस्व र्गिणांदेवानामीश्वरःपुरंदरःसचअग्निश्चतौअखिलंसमस्तंलोकंजनंदेवौघोदेवसमूहस्तेनमान्यान्मुनीन्नारदादीन्सच्छास्त्रमेवाध्वामार्गस्तस्मिन्कोविदान्विशारदा न्बुधानपिधिक्कृत्ययद्यस्मात्त्वय्येवसस्पृहासाकांक्षातस्माद्भवतःविश्वाधीश्वरतांसर्वोत्तमतांनिश्चिनोमि त्वांविनाममसर्वत्रारुचेस्तेषामसारत्वंतवसारत्वंचममसा क्षिप्रमाणेननिश्चितमित्यापाततोयंभावः । हृदयंतुभवत्सूक्तमंभृणीसूक्तं । लक्ष्मीसूक्तस्याप्यंततोविष्णुमहिमाप्रतिपादकत्वाद्भवत्सूक्तं । तस्मिन्नासक्तंहृद्य स्याःसातथोक्तातत्वांतरप्रतिपाद्यतयात्वत्संनिहितेत्यर्थः । अहंउमेशहंसगमनौरुद्रचतुर्मुखौ । अहंरुद्रायधनुरातनोमि । अहंसुवेपितरमस्य । यंकामये तंतमुग्रंकृणोमितंब्रह्माणमितिधिक्कृत्यतयोर्मत्तोप्यवरत्वमेतच्छ्रुतिसिद्धमितिभावः । स्वर्गीश्वराग्नीइंद्राग्नी बिभर्म्यहमिंद्राग्नीइत्यत्रधिक्कृत्यतयोःस्वपोष्यत्वेन

स्वतोऽवरत्वंसिद्धमिति भावः। योविपश्चतिय:प्रमिणोतियईशृणोतिसमयाअन्नमत्तीत्यत्रअखिलंलोकंधिकृत्यतमृषिंतंसुमेधामित्यत्रदेवौघमान्यान्मुनीन्नारदा दीन्सच्छास्त्राध्वनिकोविदान्विशारदान्बुधानधिकृत्यममयोनिरप्स्वं १तःसमुद्रेइत्यत्रयत्यस्मात्त्वय्येवसस्पृहवतीत्वामेवमानितवत्युत्तमत्वेनप्रतिपादितव तीत्यर्थः। सर्वाधिलक्ष्मीपतित्वेनविश्वाधीश्वरतांसर्वोत्तमत्वंनिश्चिनोमि अपौरुषेयवेदमूलकत्वेननिर्णयामि। सर्वोत्तमत्वात्त्वमेवमत्स्पृहाविषयःमांनवरयसिचेदे तद्वेदस्यप्रामाण्यंभज्येतेतिभावः ॥४२॥ शंभुरिति। कमलारुक्मिणीमनएवभृंगोभ्रमरस्तंकेवलंकृष्णःकृष्णैकःतस्मिन्लग्नःसंबद्धःतंदर्शयितुंप्रभोश्रीकृष्णशंभुःब्र ह्मामेपुत्रसमः शंभुर्ब्रह्मत्रिलोचनावित्यभिधानात्मेपुत्रसमःपुत्रेणसमानः सःपुररिपुःशिवःमेपौत्रःपुत्रपुत्रः शशीसमानमेकमुदरंयस्यससोदरःभ्राता सिंधुःसमु द्रःमेजनकवदाचरतीतिजनकायितः मधोर्वसंतस्यसखामधुसखःकामःमत्सूनुकल्पःमत्पुत्रेणसदृशः अहंसकलस्यचजगतःअंबामातेतिकृतःउग्रशपथःअनिर्वा

**शंभुः पुत्रसमः स मे पुररिपुः पौत्रः शशी सोदरः सिंधुर्मे जनकायितो मधुसखो मत्सूनुकल्पः प्रभो ॥ अंबाऽहं स कलस्य चेति कमला कृष्णैकलग्नं मनोभृंगं दर्शयितुं कृतोग्रशपथा स्वं रूपमस्पष्टयत् ॥ ४३ ॥ नित्यानंदचिदाकृतिं यदुपते त्वामेव मन्ये पतिं यत्तत्तेऽच्युतनाम विश्वविदितं वीराग्रगाऽनन्यगम् ॥ तच्चिन्मात्रसमीक्षया यदि तदा सर्वेऽपि किं नाच्युताः यद्येतच्चिरकालसंस्थितिकृतं पुत्रे तव स्यात्तदा ॥ ४४ ॥**

च्यप्रमाणरूपवचनंययासातथोक्तासती यथालोकेकाचननारीअनभिमतेपुरुषेतस्यानंगीकारंप्रदर्शयितुंत्वंमेपितेतिशपथंकरोति तथाविष्णोरन्यत्रारुचिंप्रदर्शयितुमुक्तप्रमाणकृतोग्रप्रमाणवचनास तीस्वंस्वकीयंरूपंकेवलंश्रीरेवाहमितिस्वस्वरूपंअस्पष्टयत् स्पष्टीचकार। चतुर्मुखमातृत्वंसमुद्रपुत्रीत्वंचंद्रसहोदरीत्वंलोकमातृत्वादिकंलक्ष्म्याःप्रसिद्धमेव। ल क्ष्म्याअप्राकृतविग्रहत्वेनस्वभावतउत्पत्त्यभावात्सिंधुर्मेजनकायितइत्युक्तंसहजरेतसोविकाराभावाच्चशंभुःपुत्रसमःमधुसखोमत्सूनुकल्पइतिचोक्तम्॥४३॥ नित्येति। अग्रेगच्छतीतिअग्रगःवीराणामग्रगोअग्रेसरःतत्संबुद्धिःहेयदुपतेश्रीकृष्णआनंदश्चचिच्चआनंदचितौतेएवाकृतिःनित्याआनंदचिदाकृतिर्यस्यसतथोक्त स्तंत्वामेवपतिंमन्ये नित्यपतिवरणेनित्यसुवासिनीत्वप्राप्तेरितिभावः। श्रीकृष्णस्याकृतेःनित्यत्वंकुतइत्यतआह। यदिति। यद्यस्मात्कारणात्तेविश्वविदितंलोक

प्रसिद्धंअनन्यगंअन्यत्राप्रयुज्यमानंअच्युतनामअच्युतइतिसंज्ञाअस्ति। तत्तस्मात्कारणान्नित्यानंदचिदात्मकमितिपूर्वेणान्वयः। नन्वन्येनापिच्युतिराहित्यमेवलभ्यतेदेहच्युतिराहित्यंकुतइत्यतःपरिशेषादित्याह ।तदिति। ततूच्युतिराहित्यंनिमित्तीकृत्यप्रवर्तमानमच्युतनामचिन्मात्रसमीक्षयाशरीराधिष्ठातृजीवचितःजीवस्वरूपचितइत्यर्थः। च्युतिराहित्यविवक्षयायदिदेहस्यनित्यत्वाभावेपिदेहाधिष्ठातृजीवचितएवनित्यत्वादियमुक्तिरितिशंकितुराशयः। उत्तरमाह। तदेति। तदाचितएवनित्यत्वादच्युतशब्दवाच्यत्वेसर्वेपिजीवाःअच्युतशब्दवाच्याःकिंनभवेयुः। जीवचितोनित्यत्वस्यसर्वप्राणिसाधारण्यादितिभावः। पक्षांतरमाशंक्यप्रतिक्षिपति। एतदच्युतनामचिरकालसंस्थितिकृतंदेहस्यबहुकालावस्थितिनिमित्तंयदितदातवपुत्रेद्विपरार्द्धायुषिचतुर्मुखअच्युतनामस्यात् इतरेभ्योदेहबहुकालावस्थानस्यतत्रविद्यमानत्वादितिभावः। तस्मात्पक्षांतरस्यानुपपद्यमानत्वातूदेहनित्यताप्रयुक्तंतवाच्युतनामेतिफलितोर्थः ॥ ४४ ॥ सर्वप्रलयेपिसदे

शेषेंऽग शेषे यदशेषमंते बिभ्रत्त्वमभ्रद्युतिरात्मगर्भे ॥ आनंदसांद्राकृतिमच्युतं त्वां श्रीशं तमीशं वरयामि नान्यम् ॥ ४५ ॥ दशावृतीदं किल पद्मजांडमनेकधा यस्य हि रोमकूपे ॥ पराणुवत्तिष्ठति पंचभूतभवः कथं तस्य तवांग देहः ॥ ४६ ॥

हस्यावस्थानातूदेहनित्यत्वमित्याशयेनाह। शेषइति। हेअंगप्रियश्रीकृष्णयद्यस्मादंतःअवसानकालःप्रलयइतियावत्तस्मिन्। अशेषंजगतूआत्मगर्भःस्वोदरंतस्मिन्बिभ्रत्अभ्रस्यमेघस्यद्युतिरिवद्युतिर्यस्यसतथोक्तःत्वंशेषेविमुक्तफणिपतौअथवावशिष्यतेप्रलयेप्यवशिष्यतइतिव्युत्पत्त्यालक्ष्म्याख्यवटपत्रेशेषेशयानोऽसितत्तस्मात्सर्वप्रलयेप्यविनष्टदेहत्वादानंदसांद्राकृतिंआनंद[illegible]ाकृतिर्देहोयस्यसतथोक्तःतंअच्युतंश्रीशंलक्ष्मीपतिंत्वांईशंपतिंवरयामि अन्यंत्वद्व्यतिरिक्तंदेवंनवरयामि ॥ ४५ ॥ पांचभौतिकत्वानुपपत्तेश्चतवशरीरमनादिनित्यमेवेत्याह। दशेति। हेअंगश्रीकृष्णहियस्मातूदशआवृतयःआदौपंचमहाभूतानितदुपरिअहंकारतत्त्वंगुणत्रयंचेतिदशआवरणानियस्यसतथोक्तस्तं। अनेकधादृश्यमानंइदंपद्मजांडंब्रह्मांडअनंतकोटिब्रह्मांडमित्यर्थः। यस्यतवरोम्णःकूपस्तस्मिन्परश्चासौअणुश्चपराणुःतेनतुल्यंवर्ततइतिपराणुवत्तिष्ठतिकिल। किलेत्यनेन आंडकोशोबहिरयंपंचाशत्कोटिविस्तृतः। दशोत्तराधिकैर्यत्रप्रविष्टःपरमाणुवत्। लक्ष्यं

तेंतर्गताश्चान्येकोटिशोब्रह्मधराशयइतिप्रमाणप्रसिद्धिंद्योतयति । तस्मात्तस्यदेहःपंचभूतेभ्यःभवःउत्पत्तिर्यस्यसतथोक्तः । पंचभूतोपादानकमित्यर्थःकथंभवेत् । अहंकारतत्वादर्वाक्परिमितानिपंचभूतानिस्ततोप्यधिकपरिमाणावरणपंचकोपेतानेकब्रह्मांडानामवकाशदत्वान्नातिबहुपरिमाणस्यशरीरैकदेशरूपस्यकरणेप्यसामर्थ्यान्नदेहकरणत्वसामर्थ्यमितिकिमुवक्तव्यं । अतःकारणाभावान्नोत्पन्नोदेहइतिभावः ॥ ४६ ॥ गोपीरिति । हेलोकनाथस्वानांज्ञातीनामापत् तस्याःछिच्छेदनंतस्याःआपादनंसंपादनंयेनसतथोक्तः । तादृशःविक्रमौघःपराक्रमसमूहोयस्यसतथोक्तस्तस्यसंबुद्धिः दयावारिनिधेकृपासमुद्रविभोश्रीकृष्णत्वंगोपीःगोपांगनाःअगोपीःकिल अरक्षःकिल । किलेत्यनेनअप्सरोरूपतयास्वैरिणीरपिगोपीरंगीकृतवानितिस्वरसंसूचयति । वंचितादुर्दशादुष्टानांशिशुपालादीनांदशावस्थाययासातांस्वस्याःपातिव्रत्यसूचनार्थमिदंविशेषणं । मांएवंगोपीवत्स्वीयांस्वकीयांविधेहिकुरु ॥ ४७ ॥ बंधुभिरनंगीकृतत्वात्त्वंकथंनेयेत्यतआह ।

**गोपीरगोपीः किल लोकनाथ स्वापच्छिदापादनविक्रमौघ ॥ एवं विभो वंचितदुर्दशां मां स्वीयां दयावारिनिधे विधेहि ॥ ४७ ॥ किं रुक्मिणा भीष्मकेण किमन्यैर्नृपसंज्ञितैः ॥ अनादिसिद्धां मां जायां न यतस्ते प्रयोजनम् ॥ ४८ ॥ नयेश मामन्यजनैरभोग्यां त्वदंघ्रियुग्मार्चनकर्मयोग्याम् ॥ इमामवस्थामवधूय नो चेद्भवामि भूम्नो हृदयस्य योग्या ॥ ४९ ॥**

किमिति । हेश्रीकृष्णअनादिसिद्धांअनादिकालतःसिद्धांतवजायांमांस्वांलक्ष्मीमितिवा । नयतस्तेरुक्मिणाकिंभीष्मेणाकिं नृपसंज्ञितैः नृपाइतिसंजातासंज्ञायेषामितिनृपसंज्ञितास्तैः नृपाइतिसंज्ञामात्रमेवनतुनृपालकाइत्यर्थः । अन्यैर्वाकिंप्रयोजनं । नृपसंज्ञितैरित्यनेनपुरुषादरूपाणांतेषांनृपालनरूपयोगायोगंसूचयति । रुक्म्यादीनामनंगीकारस्त्वप्रयोजनइतिभावः ॥ ४८ ॥ नयेति । हेईशश्रीकृष्णतवयौअंघ्रीपादौतयोर्यद्युग्मंतदर्चनंतदेवकर्मतस्ययोग्यां । अन्ये त्वत्तोन्येयेजनास्तैरभोगानर्हां । मांनय नोचेत्ननयसिचेत्इमांरुक्मिणीरूपमवस्थामवधूयतिरोधायभूम्नःपूर्णस्यतवहृदयंमनस्तस्ययोग्याभवामि देहंत्यक्त्वाजन्मांतरेतवचित्तस्ययोग्याभवामीतिलौकिकोर्थः । रुक्मिणीरूपांमांनवरयसिचेत्श्रीरूपतयातववक्षस्येवस्थास्यामीतिहृदयम् ॥ ४९ ॥

दिशेति । सौंदर्यमेवसमुद्रस्तेनसांद्रोघनस्तस्यसंबुद्धिः असुनाथप्राणनाथमुकुंदश्रीकृष्णआश्रिताया:ममईक्षणंतवदर्शनंदिशप्रदिश । नचेत्प्रदर्शनंनदिशसिचे त्दिशासुदिक्षुचरंतीअहं याःनार्यःक्षणःक्षणकालःतंआश्रिताःतासांसंबंधितदीयंतद्भाग्यंतस्यतदीयभाग्यमित्यर्थः । त्वांनाथेयाचे । नाथृनाधृयाञ्चोपतापैश्व र्याशीःषुलट् । तदीयभाग्यंमेभूयादितियाचइत्यर्थः । आशिषिनाथइतितदीयभाग्यस्येतिकर्मणिषष्ठी ॥ ५० ॥ त्वदैक्यमिति । हेकृष्णअंतर्हृदित्वयाऐक्यं त्वदैक्यंत्वदद्वैतंतत्स्मरतांजनानांदैत्यजुष्टंदैत्यसेवितंदैत्यैरनुभूयमानमित्यर्थः । अनिष्टंअंधंतमःभवतिकिल । तत्तस्मात्कारणात्त्वैकपत्नींतवकेवलपत्नींमांअ भिकांक्षतःपरिगृहीतुमिच्छतस्तान्प्रसिद्धानिमान्शिशुपालादीन्उपेक्षितुंनार्हसि ऐक्यस्मरणादपिसाक्षात्पत्न्यपहारोबलीयानितिभावः ॥ ५१ ॥ त्वमिति ।

दिशाऽसुनाथेक्षणमाश्रिताया मुकुंद सौंदर्यसमुद्रसांद्र ॥ दिशासु नाथे क्षणमाश्रिता यास्तदीयभाग्यस्य न चेच्चरंती ॥ ५० ॥ त्वदैक्यमंतः स्मरतां जनानां भवत्यनिष्टं किल दैत्यजुष्टम् ॥ त्वदेकपत्नीमभिकांक्षतस्तदु पेक्षितुं नार्हसि तानिमांस्त्वम् ॥ ५१ ॥ त्वमंग लक्ष्मीरमणः स्वतंत्रस्त्वदीयजाया कमलाऽहमस्मि ॥ अस ज्जनानामभिमानहानिं मदर्थितायाश्छलतो विधत्स्व ॥ ५२ ॥ इति पत्रगतालापं सतमालोक्य माधवः ॥ रथमारुह्य तरसा प्रतस्थे यत्र सा प्रिया ॥ ५३ ॥ संदेशं भीष्मकन्यायाः संदृश्य कमलेक्षणः ॥ तं देशं दय या गच्छन्मंदस्मितमुखोऽच्युतः ॥ ५४ ॥

हेअंगप्रियकृष्णत्वंस्वतंत्रोलक्ष्मीरमणः अहंतवसंबंधिनीत्वदीयाजायाभार्यामहालक्ष्मीः अस्मि । तर्हिकिमर्थमर्थितेत्यतआह । मदर्थितायाइति । मद्विषयकप्रार्थनायाःछलतोव्याजेनअसज्जनानांशिशुपालादीनांअभिमानहानिःअभिमानक्षतिः तांविधत्स्वकुरु ॥ ५२ ॥ इतीति । समाधवःश्रीकृष्णःइतिउक्तप्रकारेणतं पत्रगतःपत्रगतःयःआलापःतंआलोक्यपत्रंदृष्ट्वेत्यर्थः । तरसाशीघ्रेणरथःस्यंदनस्त मारुह्ययत्रसाप्रियारुक्मिणीतिष्ठतितत्रप्रतस्थेप्रययौ ॥ ५३ ॥ संदेशमिति कमलेक्षणःअच्युतःश्रीकृष्णःभीष्मकन्यायाःभीष्मकपुत्र्याः संदिश्यतेप्रेष्यतेइ तिसंदेशःलिखितपत्रंतंसंदृश्यप्रेक्ष्यमंदस्वल्पंस्मितंयस्यतत्मंदस्मितंतादृशंमुखंयस्यसतथासन्दययातंदेशंविदर्भदेशंअगच्छत् रुक्मिण्याहरणार्थंजगाम ॥५४॥

भैष्मीति । आश्रितेषुपक्षपातःसोस्यास्तीतितथोक्तःएषश्रीकृष्णःभैष्म्याःरुक्मिण्याःकरग्रहणंपाणिग्रहणंतत्करिष्यतीतिइहअस्मिन्नर्थेवक्तव्यंकिमस्तियत्यस्मात्सदयःसन्दययासहितःसन्केवलंवचनंवचनमात्रंततत्हृतवानितितथोक्तस्तस्यरुक्मिण्याःसंदेशमात्रहृतोपीत्यर्थः । ब्राह्मणस्यहस्तंकरएवपलवःतेनस्वहस्तकरपल्लवेनअग्रहीत् ॥ ५५ ॥ उद्यदिति । तदातस्मिन्नेवदिने । पद्मायाःलक्ष्मीरूपायाःरुक्मिण्याःउदयोभ्युदयःतस्मै । अर्थांतरेकमलविकासाय । उद्यत्प्रकाशमानंयन्मरीचिशतंतेनभासितःप्रकाशितःसर्वदेशोयेनसतथोक्तः विवाहसमयत्वात्बहुसौंदर्यंप्रदर्शयतीतिभावः । अर्थांतरेउद्यत्किरणशतभासितसर्वदेशः । निशाचराराक्षसाएवघूकाःउलूकाःतेषांशोकोदुःखंतंपुष्णन्वर्धयन् । अर्थांतरेरात्रौचरतांदिवांधानांघूकानांशोकंपुष्णन् । संतांतत्रस्थसज्जनानांच

भैष्मीकरग्रणमेष करिष्यतीति वक्तव्यमस्ति किमिहाश्रितपक्षपाती ॥ यद्ब्राह्मणस्य सदयः करपल्लवेन प्रत्यग्रहीद्वचनमात्रहृतोऽपि हस्तम् ॥ ५५ ॥ उद्यन्मरीचिशतभासितसर्वदेशः पद्मोदयाय स निशाचरघूकशोकम् ॥ पुष्णन् ललास दिनराडिव पूर्वसिंधोः सच्चक्रमानितगतिर्हि तदोपकंठे ॥ ५६ ॥ दुष्टौघपूर्णां नगरीं प्रवेष्टुं कृष्णो ह्यनिच्छन् बहिरेव वासम् ॥ चक्रे स्थली नागरिकैर्वृता सा तद्वीक्षणोत्कैरजयत्पुरीं ताम् ॥ ५७ ॥

शौरिं तदोपायनपाणयस्तमालोक्य सौंदर्यसमुद्रसांद्रम् ॥ वीरानपार्थानपरानुपेक्ष्य पौराः सदाराः किल ते प्रचक्रुः ५८

क्रंसमूहस्तेनमानितागतिःआगमनंयस्यसतथोक्तः । अर्थांतरेसमीचीनचक्रवाकमानितगतिः । सःश्रीकृष्णःदिनराडिवदिनेशइवपूर्वसिंधोःप्राचीनसमुद्रस्यउपकंठसमीपंतस्मिन्ललासहिबभौहि ॥ ५६ ॥ दुष्टौघेति । श्रीकृष्णःदुष्टौघाःदुर्जनसमूहास्तैःपूर्णांनगरींभीष्मनगरींप्रवेष्टुमनिच्छन्सन्बहिरेववासंचक्रे । नतुदुर्जनजरासंधादिभयेनेतिभावः । तद्वीक्षणंश्रीकृष्णस्यदर्शनंतस्मिन्नुत्काउत्सुकास्तैःनागरिकैःनगरस्थैर्वृतासाश्रीकृष्णाधिष्ठितास्थलीतांपुरींअजयत् भीष्मकनगरादप्यधिकंश्रीकृष्णाधिष्ठितस्थलीशुशुभइत्यर्थः ॥ ५७ ॥ शौरिमिति । दारैःसहिताःसदाराःसभार्याःपौराःपुरेभवाःजनाःतदासौंदर्यमेवसमुद्रस्तेनसांद्रोघनस्तंशौरिंकृष्णंउपायनंपाणिषुयेषांतेतथासंतःआलोक्यअपरान्शिशुपालादीन्वीरानुपेक्ष्यअपगतःअर्थोयेभ्यस्तेअपार्थास्तान्व्यर्थान्प्रचक्रुःकिल । श्रीकृष्णंप्रशंस

द्भिः उपायनं ददद्भिः पौरैरेव श्रीकृष्णस्पर्धिनः चैद्यादीनुपेक्ष्यैव धिक्कृत्य श्रीकृष्णकार्यं साधितमिति भावः ॥ ५८ ॥ प्रशंसाप्रकारमाह । नायमिति । श्यामलं कोमलं मनोहरमंगं यस्य स तथोक्तः । अयं पुरुषः स्मरः कामो न तस्यानंगत्वादिति भावः । वीता विगता कलंकशंका यस्य स तथोक्तः अयं शशी चंद्रो न भवति तस्य कलंकित्वादिति भावः । लोकदृशां जनदृष्टीनामार्तिहारी दुःखहरः अयं रविर्न तस्योष्णकिरणतया नयनक्लेशकारित्वादिति भावः । सोयं न विद्यते द्वितीयः सदृशो यस्य सोऽद्वितीयः असदृशः पुराणः पुरातनः पुरुषः श्रीनारायणः व्यतिरेकालंकारः ॥ ५९ ॥ श्रीरेवेति । मनोज्ञा मनोहरा सा भीष्मसुता रुक्मिणी श्रीरेव साक्षाद्रमैव अन्यस्या एतादृशसौंदर्यायोगात् । शोभनः भगः ऐश्वर्यादिर्येषां ते सुभगाः तेषु । भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु इत्यमरः । अग्रगण्यः श्रेष्ठः अयं पुरुषः

नायं स्मरः श्यामलकोमलांगो नायं शशी वीतकलंकशंकः ॥ नायं रविर्लोकदृगार्तिहारी सोऽयं पुराणः पुरुषोऽद्वितीयः ॥ ५९ ॥ श्रीरेव सा भीष्मसुता मनोज्ञा श्रीवल्लभोऽयं सुभगाग्रगण्यः ॥ एतौ समेतौ भवतामितीमे धातारमात्मेष्टदमर्थयंते ॥ ६० ॥ गृह्णाति यत्स्वैणदृशीकरं नः पुण्येन सोऽयं पुरुषाग्रगण्यः ॥ स्वर्णं तदा नीलमणिं समेतं मन्यामहे लौहमतोऽन्यथा चेत् ॥ ६१ ॥ इत्थं गृणंतः किल वृंदशस्तं नत्वा मुकुंदं नयनैः पपुस्ते ॥ कृष्णोऽपि सर्वान् सदयावलोकैर्मुग्धस्मितोऽरंजयदंजसैतान् ॥ ६२ ॥ श्रीवल्लभ एव साक्षाल्लक्ष्मीपतिरेव अन्यस्यैतादृशसौंदर्यायोगात् । इमे श्रीकृष्णदर्शनार्थमागताः पौराः जनाः आत्मेष्टदं धातारं विधिं एतौ रुक्मिणीश्रीकृष्णौ समेतौ पतिपत्नीभावं प्राप्तौ भवतामिति अर्थयंते याचंते ॥ ६० ॥ गृह्णातीति । पुरुषाग्रगण्यः पुरुषश्रेष्ठः सोयं श्रीकृष्णः नः पुण्येन एणायाः हरिण्याः दृगिव दृग्यस्याः सा तथोक्ता तस्याः हरिणाक्ष्याः करं यर्हि गृह्णाति तदा नीलमणिरिंद्रनीलरत्नं तं स्वर्णं सुवर्णं तस्मिन् समेतं खचितं मन्यामहे । अतोन्यथा चेच्छ्रीकृष्णादन्यपुरुषो गृह्णाति चेत् स्वर्णे पतितं लोहमयं पिंडं तन्मन्यामहे ॥ ६१ ॥ इत्थमिति । इत्थमुक्तप्रकारेण वृंदशः यूथशः गृणंतो वदंतः ते पौराः मुकुंदं श्रीकृष्णं नत्वा नयनैः पपुः सादरं ददृशुरित्यर्थः । मुग्धं मनोहरं स्मितं यस्य स तथोक्तः श्रीकृष्णोपि सर्वानेतान् सदयाः दयया सहिताः ये अवलोकाः निरीक्षणानि तैः अंजसा सम्य

कुअरंजयत्अतोषयत्। नयनैरुपचारेकृतेनयनैरेवामुंजग्राहेत्यौचित्यंप्रदर्शितम् ॥ ६२ ॥ चलदिति। पौराःअथोअनंतरंपताकाश्चउज्ज्वलचामराणिचतेषामो घाःसमूहाःचलंतःपताकोज्ज्वलचामरौघायस्यांसातथोक्तातां । परिस्फुरंतीछत्रसहस्रशोभायस्यांसातथोक्तातांविचित्राणियानितूर्याणिवाद्यानितेषांध्वनय स्तैःपूरिताःआशाःदिशोययासातथोक्तातांकुलदेवयात्रांवितेनुःचक्रुः ॥ ६३ ॥ स्वजनकेति। भैष्मीरुक्मिणीस्वजनकस्यस्वस्याःपितुःभीष्मकस्यगृहदेवंकुलदेव मित्यर्थः। पौत्रंस्वस्याःपुत्रपुत्रंचतुर्मुखपुत्रंपशुपतिंआराध्यसंपूज्यपौत्रमित्यनेनतदाराधनंवात्सल्यनिमित्तंनतुमाहात्म्यनिमित्तमितिसूच्यते।नजनकगृहदेवमित्य नेनपारंपर्यनिमित्तंचेतिसूच्यते। अथनिजःस्वकीयःयोगृहदेवस्तं। स्वगृहपतिमित्यर्थः। माधवंश्रीकृष्णंद्रष्टुकामासापुरमभियांत्यपिप्रियस्यश्रीकृष्णस्ययौच रणौतयोःसकाशंसमीपंतत्तेवनेनपादचारेण। तेवनंपादचारणमितिहलः। व्रजंतीसतीरथंनारुरोह। औपचारिकगृहदेवयात्रायांपादचारोविहितः किमुस्वा

**चलत्पताकोज्ज्वलचामरौघां परिस्फुरच्छत्रसहस्रशोभाम् ॥ विचित्रतूर्यध्वनिपूरिताशामथो वितेनुः कुलदेवया त्राम् ॥ ६३ ॥ स्वजनकगृहदेवं पौत्रमाराध्य भैष्मी निजमथ गृहदेवं माधवं द्रष्टुकामा ॥ अपि पुरमभियांती सा रथं नाऽरुरोह प्रियचरणसकाशं तेवनेन व्रजंती ॥६४॥ अलसविलसदक्षिस्तंभितान्याक्षवृत्तिः जलजकुल जगंधस्पर्धिसौरभ्यसांद्रा ॥ वदनमदनचित्रागण्यलावण्यचित्रा गजगतिरजतातं भीष्मपुत्र्यैक्षदेनम् ॥ ६५ ॥**

भाविकगृहदेवयात्रायामितिमत्वैवरथारोहणंनकृतवती। अन्यथापुराभिगमनेरथारोहणस्योचितत्वादितिभावः ॥६४॥ अलसेति। अलसंलज्जावशात्लक्ष्यात् निवृत्तंतच्चतत् विलसच्छब्देनवलितमुच्यते विलसत्वलितंचतत्प्रेमवशात्पुनःप्रवृत्तंतच्चतत्अक्षिच। अलसंतदभीष्टार्थाक्रीडाद्यैश्वर्यंनिवर्तितंवलितंतन्निवृत्तिः स्यात्। पुनस्तत्रावलोकनमित्युक्तत्वात्। तेनअक्ष्णानयनेनस्तंभिताअन्येषांराज्ञांअक्षवृत्तिरिंद्रियवृत्तिर्ययासातथोक्ता नयनविलासदर्शनमात्रेणैवसर्वेमुमुहुरि तिभावः। अनेनरुक्मिण्याःविलासातिशयःसूच्यते। जलजानांकमलानांकुलंसमूहःतस्मिन्जातःजलजकुलजःयःगंधःतंस्पर्धतइतिस्पर्धितच्चतत्सौरभ्यंचतेन सांद्राघना। अनेनरुक्मिण्याःपद्मिनीजातित्वंद्योत्यते।वदनमेवमुखमेवमदनशस्त्रंयस्याःसातथोक्ता। तन्मुखेनैवकामःसर्वान्जयतीतिभावः। अरविंदस्यमदनशस्त्र त्वाच्चेदंरूपकं। अगण्यंयल्लावण्यंसौंदर्यंतेनचित्राविचित्रा। चित्रेत्यनेनतदवयवोचितसौंदर्यंतत्रतत्रपरिपूर्णंसूच्यते। गजस्यगतिरिवगतिर्गमनंयस्याःसागजगतिः

भीष्मपुत्रीअजतातंचतुर्मुखतातंएनंश्रीकृष्णंऐक्षत् अपश्यत् । अधुनापिश्रीकृष्णोमांनेतुंनायातीतिकृष्णंदृष्टवतीतिभावः गजगतिरित्यनेनश्रीकृष्णागमप्रत्याशयागतिमांद्यंद्योत्यते ॥ ६५ ॥ कृष्णेनेति । ममजननीमाताइयंकृष्णेनैवनेयातदाहंश्रीकृष्णपुत्रोभवामीत्याशयाऽत्युत्सुकःतस्याःरुक्मिण्याःदृष्टिर्दर्शनंततोजन्मयस्यासौतथोक्तःस्मरएव दृष्टिजन्मेत्यनेनइदानीमपिरुक्मिण्याःमातृत्वंसूच्यते। आत्मशरैःस्वकीयसंमोहनाद्यस्त्रैःसकलान्नृपालान्मूर्छावशान्अकार्षीत् नूनंनिश्चयः। रुक्मिणींदृष्ट्वाकामोद्रेकात्मूर्छितेत्युत्प्रेक्षा ॥६६॥ तदिति । तदनु भूतेषुप्राणिषुमदनेनमंदीभूतानिचित्तानियेषांतेतथोक्तास्तेषुसत्सु कामेन मूर्छितेष्वित्यर्थः। अविदिताअज्ञातागतिर्गमनंयस्यसतथोक्तः । स्वतंत्रःश्रीकृष्णःप्रमोदःसंतोषःतस्मादुद्यंतीउद्गतारोमराजिःरोमपुलकोयस्याःसातथोक्तातां वि

कृष्णेन नेया जननी ममेयमित्युत्सुकोऽसौ स्मर एव नूनम् ॥ मूर्छावशानात्मशरैरकार्षीत्तद्दृष्टिजन्मा सकला
न्नृपालान्॥ ६६ ॥ तदनु मदनमंदीभूतचित्तेषु भूतेष्वविदितगतिरुद्यद्रोमराजिं प्रमोदात् ॥ विकसितनयनाब्जो
द्भूतहर्षांबुधारां निजरथमधिरोप्य स्वां प्रपेदे स्वतंत्रः॥ ६७॥ पुनर्विवाहेन किमिंदिराया इतीव लक्ष्मीरमणः
स कृष्णः ॥ अपांगदूतीविनिवेदितात्ममनोनुरागामतनोत्सुयोगाम् ॥ ६८ ॥ कृष्णास्येंदुसमीपलग्नमुदितभ्राज
त्कपोला प्रभोर्हस्तांभोजयुगेन वेष्टितलसन्मध्या भियेवांऽजसा॥ भर्त्रासह्दयसंहतायतभुजा मोदांबुधौ मग्नधीः
सा पाणिग्रहणादपीममधिकं मेने विवाहोत्सवम् ॥ ६९ ॥

कसितेयेनयनाब्जेताभ्यामुद्भूतंहर्षाज्ञातमंबुहर्षांबुतस्यधारायस्याःसातांस्वांस्वकीयांभैष्मींनिजोयोरथःतंअधिरोप्यआरोप्यप्रपेदेगतवान् ॥ ६७॥ पुनरिति । लक्ष्मीरमणःसःश्रीकृष्णःइंदिरायाःभैष्म्याःपुनःविवाहःविधिसहितपरिणयनंतेनकिंकिंप्रयोजनंइतीवअपांगएवदूतीतयाविनिवेदितआत्मनःस्वस्यमनोनुरागोमानसिकस्नेहोययासातांकृतोद्वाहानामपिदूतिकासंघट्टनकर्त्रींतिभावः। सुष्ठुयोगोयस्याःसासुयोगातां सुसंगतांअतनोत् ॥ ६८ ॥ कृष्णेति । भूमिस्थितांगृहीत्वास्वरथमारोपयतःश्रीकृष्णस्यआस्यमेवेंदुश्चंद्रस्तस्ययत्समीपंतस्मिन्लग्नःसंबद्धःअतएवमुदितःभ्राजत्कपोलोयस्याःसा। अनेनचुंबनंध्वन्यते । प्रभोःश्रीकृष्णस्यहस्तांबुजाभ्यांवेष्टितंआलिं

गितंलसत्तूमध्यंयस्याःसा पृथुलश्रोण्याउद्धारेहस्तद्वयावेष्टनस्योचितत्वादितिभावः । अनेनआलिंगनंसूचितं । भियेवपतनभीयेवअंजसासम्यक्भर्त्तुःश्रीकृष्णस्ययदंसद्वयंतस्मिन्संहतौआहितौआयतौदीर्घौभुजौयस्याःसादृढंगृहीतभर्तृकंठेत्यर्थः । अनेनरुक्मिण्याःपुरुषालिंगनंसूच्यते उक्तरीत्याकपोलयोःसमागमात् परस्परालिंगनाच्च । मोदांबुधौमग्नधीःसारुक्मिणीपाणिग्रहःपाणिग्रहणंतस्मादपिइमंविवाहएवोत्सवस्तं अधिकंमेने । पाणिग्रहणादित्यनेनलज्जयापरस्पराद्दृष्टमुखयोःपाणिग्रहणमात्रं अत्रोक्तरीत्यालिंगनादेर्जातत्वादधिकमित्युक्तम् ॥ ६९ ॥

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायिनी ॥
संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातोऽयमभूच्चतुर्दशमितः सर्गो मुदां स्वर्गिषु॥७०॥

इति श्रीरुक्मिणीशविजये श्रीमद्वादिराजकृतौ चतुर्दशः सर्गः ॥ १४ ॥

रोम्णामिति । स्वर्गिषुदेवेषुचतुर्दशमितःकृष्णकृतपूतनाहननकंसहरणजरासंधजयांतमहोत्सवानांकयाचिद्विवक्षयाचतुर्दशमितः परिगणनायांत्रयोदशसंख्यारुक्मिण्याहरणस्यचतुर्दशत्वमितिभावः । चतुर्दशमितःचतुर्दशसंख्याभिःमितःपरिमितःपरिगणितइत्यर्थः । मुदामयंसर्गःअभूत् । काव्यपक्षेतुचतुर्दशसर्गोभूदित्यर्थः ॥ ७० ॥ इतिश्रीरुक्मिणीशविजयटीकायांनारायणभट्टविरचितायांचतुर्दशःसर्गः ॥ १४ ॥



## ॥ अथ श्रीरुक्मिणीशविजये पंचदशसर्गप्रारंभः ॥

श्रीलक्ष्मीरमणायनमः ओजस्तेजोबलंधीर्द्युतिरतिमहिमाश्रीर्यशोरूपमाज्ञावीर्यंचेत्येवमादीनूपरमगुणगणानूयेस्मरंतोलभंते । यद्भक्तानांयआज्ञाऽप्यखिलजन मनःक्षोभिणीनैतिपार्श्वंचेतस्त्वंतस्ययशश्चच्चरणकमलयोर्भृंगतांयाहिविष्णोः । विवाहीकृतविद्वेषिनिवहोरुक्मिणीशितुः । विवाहोममहर्षायभवताद्भवतापहः । तरणिमिवेति । मदनवशाःकामुकाः मानिनःअहंकारिणः मानोगर्वोभवेदहंकारइतिहलः । राजानः विषमःअसह्यःमृगदृशीवियोगःरुक्मिणीवियोगःसएवरोगःत स्मात् । तस्याःपुरस्तात्स्वतनुंस्वशरीरं जात्येकवचनं । उज्झितुंत्यक्तुमुद्यताइव यथास्निग्धःपुरुषःप्रेयसीवियोगेशरीरंत्यजतितथेतियुद्धेम्रियमाणानामयमपहासः । तंश्रीकृष्णंअन्वधावन् । कथमिव नमस्तरणिमिव ॥१॥ युद्धेस्वभावतःकृतहस्तच्छेदादीनांयथापराधंविभजन्नुत्प्रेक्षते यइति । येराजानःभैष्म्याःरुक्मिण्याःपरिरं

तरणिमिव तमस्तमन्वधावन्मदनवशाः किल मानिनो महीशाः ॥ विषमम्रृगदृशीवियोगरोगात्स्वतनुमि वोज्झितुमुद्यताः पुरस्तात् ॥ १ ॥ ये भैष्म्याः परिरंभणं चकमिरे तेषां भुजान् चिच्छिदुर्यै वा तन्मुखचंद्र चुंबनरुचिं तेषां शिरांसि द्विषाम् ॥ ये तल्पे शयनं तया सह खला लोकांबया संगरे प्रेतैः सार्धमशीशयन् हरिभटास्तान् दुर्मदान्सायकैः ॥ २ ॥ साहाय्यं क्व चकार शंभुदयिता तद्वैरिमातुः कथं देव्याः श्रीपतिवि प्रयोगमहरत्तद्विप्रयोगोऽपिवा ॥ किं तु श्रीपतिरेव तां स्वविरहायोग्यां समव्यापिनीं निन्येऽश्लेषकथां ख लैः सह मुहुः शिक्षन् स रक्षन् श्रुतिम् ॥ ३ ॥

भणमालिंगनंतत्चकमिरे । हरिभटाःश्रीकृष्णभटाःसंगरंयुद्धंतस्मिनूतेषांभुजानूचिच्छिदुः । परिरंभणस्यहस्तापराधत्वादितिभावः । येराजानःतस्याःमुखंतदेवचं द्रःतस्यचुंबनंतस्मिनूरुचिर्माधुर्यंतां चकमिरेतेषांशिरांसिचिच्छिदुः । चुंबनस्यमुखापराधत्वादितिभावः । येखलाःलोकांबया इंदिरालोकमातामेत्यम रः । तयारुक्मिण्यासहतल्पःपर्यंकःतस्मिनूशयनंचकमिरे । दुर्मदानूतानूसायकाःशराःतैःप्रेताःकुणपाःतैःसार्धंसाकंअशीशयनूशयनंकारयामासुः ॥ २ ॥ कटा क्षविक्षेपमात्रेणजगत्सर्जनसमर्थायाःरुक्मिण्याःपार्वतीप्रार्थनयाविप्रदौत्येनचश्रीकृष्णसमागमोजातइत्यस्वरसंकौशल्येनप्रतिपादयन्नाह । साहाय्यमिति

॥

शंभोःशिवस्यदयिताभार्यापार्वतीतस्यशिवस्यवैरिःकामःतस्यमातुःरुक्मिण्याःसाहाय्यंसहायत्वंतत् क्वचकार । स्वभर्तुरनिष्टंभार्यासाधयतीत्येतदयुक्तमितिभा
वः । देव्याःरुक्मिण्याःश्रीपतेःश्रीकृष्णस्यविप्रयोगोवियोगःतं सचविप्रश्चतद्विप्रौश्रीकृष्णविप्रावित्यर्थः । तयोर्योगःसमागमः तद्विप्रयोगोपिवाकथमहरत् ।
विप्रयोगेसतिविप्रयोगएवस्यात् नतुतन्नाशइति । शब्दश्लेषमूलकोयमस्वरसः । किंतुअश्लेषकथांरुक्मिणीश्रीकृष्णयोर्वियोगकथांखलैःसहमुहुर्मुहुःशिक्षन्
खलान्रुक्मिण्याःस्वयोगवार्तांचसंहरन्नित्यर्थः।श्रुतिंरुक्मिणीश्रीकृष्णयोर्नित्यसमागमप्रतिपादकवेदंरक्षन्श्रीपतिरेवश्रीकृष्णएव समेनव्याप्तुंशीलमस्याअस्ती
तिसमव्यापिनीतां । यत्रश्रीकृष्णःतत्ररुक्मिणीयत्ररुक्मिणीतत्रश्रीकृष्णइतिसमव्याप्तिमतीमित्यर्थ । अतएवस्वेनविरहोवियोगःतस्मिन्अयोग्यांतांरुक्मिणीं
निन्ये ॥ ३ ॥ रक्तेति । तुरगाःसैन्यसुग्रीवमेघपुष्पबलाहकाइतिवचनात्सुग्रीवःसैन्यइतिश्रीकृष्णरथाश्वौ । सुग्रीवश्चउद्धतसैन्यश्चसुग्रीवोद्धतसैन्यौ । सुग्री

रक्तांभोनिचये गजादिनिकरैराबध्य सेतुं हतैः सुग्रीवोद्धतसैन्यमात्रबलवान् श्रीपूर्वरामो युधि ॥ प्राची
नावनिजां निनाय स निजामव्यग्रवक्त्रांबुजां जित्वा प्राक्तनरावणं हतबलं तल्लग्नचित्तं खलम् ॥ ४ ॥
अहयीदहयी कश्चिदनंसीदपरोऽच्युतम् ॥ अक्रमीन्नपरो विद्वो विक्रमार्कोदये हरेः ॥ ५ ॥

वोद्धतसैन्यौकेवलौतौतन्मात्रंतदेवबलंतदस्यास्तीतितथोक्तः द्वावेवाश्वौरथाग्रनिबद्धौपुरतःपुरतोगमनायप्रेषितौपार्ष्णिनिबद्धमेघपुष्पबलाहाख्याश्वद्वयमपिनापे
क्षितंसैन्यंतुसैरामित्यसहायशूरत्वमभिप्रेतं ।अर्थांतरेसुग्रीवस्यसुग्रीवाख्यकपीश्वरस्यउद्धतमुन्नद्धंयत्सैन्यंकपिसेनातदेवबलंतदस्यास्तीतितथोक्तः कपिसेनासहा
यइत्यर्थः । श्रीयायुक्तःपूर्वरामःपूर्वरामःश्रीकृष्णःयुधिहतैः गजाएवाद्रयस्तेषांनिकरास्तैः रुक्मिणःगजपतित्वात्गजाएवबहून्नताइतिभावः । रक्तान्येवांभांसि
तेषांनिचयःसमूहःतस्मिन्शोणितसमुद्रे । सेतुंआबध्यक्रमेणैव । हिंसनात्तद्देहानांसेतुत्वमितिभावः । तस्यांपूर्वंसीतात्मिकायांरुक्मिण्यांलग्नंचित्तंयस्यसतथा
तंहतंनिहतंबलंसैन्यंयस्यसतथातं । प्राक्तनरावणंपुरातनरावणंखलंदुष्टंशिशुपालंजित्वानिजांस्वीयांअव्यग्रंप्रसन्नंवक्त्रांबुजंमुखकमलंयस्याःसातांप्राचीनाप्रा
क्तनायाअवनिजाभूमिजासीतातांपूर्वंसीतांरुक्मिणीमित्यर्थः । तांरुक्मिणींनिनाय ॥ ४ ॥ अहयीदिति । हरेःश्रीकृष्णस्यविक्रमःपराक्रमःसएवार्कःसूर्यः

तस्यउदयःतस्मिन्सतिकश्चित् हयोस्यास्तीतिहयीहयीनभवतीत्यहयीसन्अश्वरहितःसन्अहयीत्गतवान्। तुरगारूढःतुरगात्अवरुह्यपलायितवानित्यर्थः। हयगतावित्यस्यलुङिरूपमिदं। यांतत्वाद्वृद्ध्यभावः। मध्यमजीवस्वभावोयं। अपरोभटःअच्युतंश्रीकृष्णंअनंसीत्अनमत्। णमप्रह्वत्वेशब्देचेत्यस्माल्लुङिरूपं। उत्तमस्वभावोयं।अपरःभटःशरैर्विद्धःसन्नाक्रमीत्पादविक्षेपमपिनाकरोत्।मूर्छयाएकपदमपिप्रक्षेप्तुंसमर्थोनाभूदित्यर्थः। क्रमुपादविक्षेपइत्यस्माल्लुङिरूपं। अधमप्रकृतिरियम्॥५॥ विवाहप्रक्रिययायुद्धंवर्णयति।हत्वेति। श्रीकृष्ण उन्मुखीशिखाज्वालायस्यसउन्मुखशिखः प्रदक्षिणमेधमानइत्यर्थः। सचासौप्रतापानलश्चस्वीयःयःप्रतापःअतएवअनलस्तस्मिन्शत्रुसमूहःसमित्स्थानीयोवैरिनिचयःतंहत्वा शराएवभ्राजद्दृतयःवसंतोत्सवजलसंकोचितभृंगचर्मकृतसेचनोपयुक्तपात्रविशेषाःतासांश्रेणयःताभिः। रक्तमेवरसउदकंतेनार्द्रास्तेषांभावआर्द्रतातां कृत्वा। यथाविवाहोत्सवेकुंकुमोदकासेकेनार्द्राभवंतितथेत्यर्थः। स्वःस्वर्गे

हत्वा शत्रुसमूहमुन्मुखशिखः स्वीयप्रतापानले कृत्वा रक्तरसार्द्रतामपि शरभ्राजद्दृतिश्रेणिभिः॥ स्वःस्थ
प्रेषितपुष्पलाजनिकराकीर्णः क्षितीशार्पितैर्वित्तैस्तत्समयोचितैः सह निजां निन्ये निसर्गप्रियाम्॥ ६ ॥
कृष्णे स्वां दयितां नयत्युरुबले तद्बंधुयोग्यां दशामापन्ना इव भूभुजोंतकपुरीमन्वागता वै गता॥ अन्ये
स्विन्नमुखा दृगंबु सस्रजुः केचिच्च मूर्छां श्रिताश्चैघाद्या मलिनानना गतगिरश्चिंतां दुरंतां ययुः॥ ७॥

तिष्ठंतीतिस्वःस्थाः स्वरव्ययंस्वर्गनाकइत्यमरः। देवास्तैःप्रेषितानिवृष्टानियानिपुष्पाणितान्येवलाजनिकराःतैराकीर्णःवृष्टःसन्क्षितीशैःपराभूतभूमिपैःअर्पितानिपरित्यक्तानितैः। सचासौसमयश्चतस्यउचितैःविवाहसमयोचितैरित्यर्थः। वित्तैःपराभूतरिपुसेनालब्धगजादिवित्तैरित्यर्थः। सह निसर्गेणस्वभावेनप्रियांप्रीतिविषयांनिजांनिजभार्यांनिन्येनीतवान्॥ ६ ॥ कृष्णइति। उरुउत्कृष्टंबलंयस्यसतथातस्मिन्श्रीकृष्णेस्वांदयितांभार्यांरुक्मिणींनयतिसतिभूभुजःराजानःतद्बंधूनांरुक्मिणीबंधूनांयोग्यामुचितांदशामवस्थामापन्नाइवप्राप्ताइवअन्वागताःसंतःकेचनअंतकपुरींयमपुरींगतावैययुर्हि।यथासुहृदःअत्यंतबंधुवियोगेसतिमरणंप्राप्नुवंतितथेत्यर्थः। अन्येकेचनस्विन्नंस्वेदयुक्तंमुखंयेषांतेतथासंतःदृशःअंबुदृगंबुनेत्रजलंससृजुः पराभवजनितदुःखेनाश्रूण्यमुंचत्। अश्रुपातोपिबंधु

वियोगोचितः । केचिच्चमूर्छांदृढशस्त्रपातवशात्मूर्छांश्रिताःप्रापाः । चैद्याद्याःशिशुपालाद्याःमलिनंकांतिरहितंआननंमुखंयेषांतेतथासंतःगतागीःसंभाषणं येषांतेतथासंतःदुरंतांचिंतांययुः । मूर्छावक्रमालिन्यव्यवहारासामर्थ्यादिकंकन्यावियोगेनस्नेहवशात्विवाहसमयेबंधुष्वपिसाधारणम् ॥७॥ नेति । श्रीकृष्णःरिपुवाहिनींशत्रुसेनांनजघान । तस्यश्रीकृष्णस्यसेनातत्सेनाचरिपुवाहिनींनजघान । किंतुसासेनाजनन्याःलोकमातुःरुक्मिण्याःयोद्रोहःपाणिग्रहणरूपोद्योगरूपोपराधस्तंकरोतीतितथोक्तः । सचासौचैद्यश्चतस्ययःपक्षपातःतेनहताम्रता ॥ ८ ॥ रुक्मीति । सःरुक्मीरुक्मिणीभ्रातायदारुक्मंसुवर्णमस्यास्तीतिरुक्मीधनवान्सइव । यथाधनमदांधोमहतांसहविरुध्यति तथाविरोधंचक्रे श्रीकृष्णेनसहविरोधंकृतवान् । तदाचक्रधरःदेवःश्रीकृष्णःरुक्मेणसुवर्णेनखचितंरौ

न कृष्णो न च तत्सेना जघान रिपुवाहिनीम् ॥ जननीद्रोहकृच्चैद्यपक्षपातेन सा हता ॥८॥ रुक्मी स रुक्मीव यदा विरोधं चक्रे तदा चक्रधरश्च रौक्मम् ॥ छित्त्वा मुहुस्तस्य धनुर्भविष्यदुद्योगमुत्थापयति स्म देवः ॥ ९ ॥ अचीकृपन्मुंडितमूर्धजं तं शचीपतिस्तुल्यकृतिर्मुरारिः ॥ उपेक्ष्य यद्गेहमगाद्धि लक्ष्मीस्तदेतदस्यानुगुणं खलस्य ॥ १० ॥ सहस्रसंख्यावनिपालभंगसमुत्थभास्वज्जयकामिनीभिः ॥ सहात्मदासीभिरनन्यकांता जगाम सा चंचललोचनांता ॥ ११ ॥

क्मंतत् । तस्यरुक्मिणःधनुर्मुहुर्बहुवारंछित्त्वातस्यरुक्मिणःभविष्यंश्चासौउद्योगश्चतंअक्षय्यधनुःप्राप्त्यर्थंशिवंप्रतितपःकरणरूपंप्रयत्नंउत्थापयतिस्म । मुहुर्धनुराच्छेदेसत्यक्षय्यधनुःप्राप्त्यर्थंतपःकरणेनानुभूतबहुतरकायक्लेशमेनंपश्चान्मारयिष्यामीतिबुद्ध्याधनुरेवाच्छिनदितिभावः ॥ ९ ॥ अचीकृपदिति । शचीपतिस्तुल्यकृतिःइंद्रस्तुल्यकर्मामुरारिःश्रीकृष्णःतंरुक्मिणंमुंडिताःमूर्धजाःकेशाःयस्यसतथातं अचीकृपत् । यद्गेहंयस्यरुक्मिणोगेहंतदुपेक्ष्यलक्ष्मीःरुक्मिणीरूपाअगाद्धि । रुक्मिगृहंविहायश्रीकृष्णसमीपमगमद्धि । अस्यखलस्यरुक्मिणःतदेतत्शिरोवपनमनुगुणंहि । गतश्रियोहिसंन्यासादिनामुंडितकेशाभवंतीतिहेतर्थः ॥ १० ॥ सहस्रेति । चंचलःलो[illegible]ांतोपांगोयस्याःसातथोक्ता अनेननवोढोचितलज्जासूच्यते । अन्यकांताअन्यभार्यानभवतीत्यनन्यकांता । श्रीकृष्णे

कपत्नीत्यर्थः। सारुक्मिणीआत्मदासीभिःस्वकिंकरीभिःसहस्रंसंख्यायेषांतेसहस्रसंख्याःतेचतेऽवनिपालाश्चतेषांभंगःपराभवःतस्मात्समुत्थाःसमुत्पन्नायेभास्वंतो जयाएवकामिन्यस्ताभिः आत्मदासीभिरित्यनेनश्रीकृष्णकटाक्षवतामेतादृशजयकामिन्यःस्वयमेवायास्यंतीत्यर्थोगम्यते। यदपांगलेशंआश्रित्यविश्वंविजयं विसृजत्यचिंत्याश्रीरितिवचनात्। सहसार्धंजगाम। यथाराजकुमारीदासीसहस्रेणसहगच्छति तथेतिभावः॥ ११॥ तद्योधाइति। धैर्येणोर्जिताअभिवृद्धाःतस्य श्रीकृष्णस्ययोधाःभटाःजयाएवकामिनीजनाःस्त्रीजनाःतैर्युक्ताःसंतःगर्जंति। तुरगाःयुद्धामाःयुद्धेप्रामाःवडवाःस्वस्त्रीरूपाःवामीःनिरीक्ष्यमुहुःहेषाह्वेषाः ह्रेषा ह्वेषाचवाजिनामितिहलः। तन्वतेकुर्वंति। हस्तींद्राःगजेंद्राःयुद्धामाःकरिणीःसमेत्यपरितःबृंहितंगर्जिततंतत्कुर्वंति। बृंहितंकरिगर्जितमित्यमरः। भक्तानामभीष्टं

तद्योधा जयकामिनीजनवृता गर्जंति धैर्योर्जिता युद्धामा वडवा निरीक्ष्य तुरगा हेषा मुहुस्तन्वते॥ हस्तींद्राः करिणीः समेत्य परितः कुर्वंत्यहो बृंहितं भक्ताभीष्टकरो हरिर्ननु पुरा स्वीयान् सजायान् व्यधात्॥ १२॥ अलंकृतां निजपुरीं जलजायतलोचनः॥ हयहस्तिरथोपेतः प्रियया सहितोऽविशत्॥ १३॥ करं जिघृक्षुर्वैदर्भ्याः शरण्योऽथ यथाविधि॥ प्रियया बंधुभिः सार्धं प्रययौ मूलमाधवम्॥ १४॥ गच्छंतमास्थापयतीव कृष्णं द्वारावती तत्कृतरम्यरूपा॥ कांत्योल्लसंत्योभयभागहेम्नां द्वार्यंचलेनाभिमुखं मुरारेः॥ १५॥

तत्करोतीतितथोक्तःपरार्थैकप्रवृत्तिरित्यर्थः। हरिःश्रीकृष्णःपुरास्वविवाहात्पूर्वमेवस्वीयान्भटादीन्सजायान्सस्त्रीकान्ननुनूनंव्यधात्अहोआश्चर्यम्॥ १२॥ अलंकृतामिति। हयाश्वहस्तिनश्चरथाश्चतैरुपेतःयुक्तःप्रिययाभार्ययारुक्मिण्यासहितःकमलवदायतेविशालेलोचनेयस्यसतथोक्तःश्रीकृष्णःअलंकृतांनिजाचसापुरीचतांआत्मीयपुरींद्वारवतींअविशत्॥ १३॥ करमिति। अथअनंतरंविधिमनतिक्रम्ययथाविधिशास्त्रोक्तप्रकारेणेत्यर्थः। विदर्भेविदर्भदेशेजातावैदर्भीरुक्मिणीतस्याःकरंजिघृक्षुःग्रहीतुमिच्छुःशरण्यःशरणप्रदःश्रीकृष्णःप्रिययारुक्मिण्याबंधुभिश्चसार्धंमूलमाधवंमूलमाधवाख्यद्वारवत्युपवनंतत्प्रययौ।मूलमाधवाख्यक्षेत्रेरुक्मिणीविवाहोजातइतिद्वारवतीकल्पोक्तंयथानुसारेणेदमुदितम्॥ १४॥ गच्छंतमिति। तेनश्रीकृष्णावस्थानेनकृतातत्कृतारम्यशोभामनोह

रकांतिर्यस्यास्सातथोक्ता । द्वारवतीमुरारेःश्रीकृष्णस्यमुखंअभिमुखंअग्रइत्यर्थः। उल्लसंत्याउभयौचतौभागौचतयोःहेम्नांरत्नखचितद्वारोभयपार्श्वस्थितहे म्नांकांत्याअंचलंकांत्याख्यमित्रस्ववसनांचलंतेनेत्यर्थः । चेलांचलेनास्यकुचांचलेमामित्यादिप्रयोगादंचलशब्दःपटभागेप्रसिद्धः । गच्छंतंश्रीकृष्णंद्वारिआ स्थापयतीव। यथाप्रियागच्छंतंप्रियंचेलांचलेनबद्धागंतुंनमुंचतितथेतिभावः ॥ १५ ॥ कृष्णइति । श्रीकृष्णेबलाद्व्रजतिसतिसापुरीतस्यश्रीकृष्णस्यमंदहासः सएवनवचंद्रिकानूतनज्योत्स्नातयाद्रवंतःजलानिमुंचंतःयेइंदुकांताःचंद्रकांतपाषाणास्तैः आस्रस्यअश्रुणःयाधारातां बभार। उद्गतानिसर्वजनानांपुरान्निर्गम नेनउद्गतानियानिवचांसितेषांरभसोव्यापारोयस्याःसातथासती । तस्यश्रीकृष्णस्ययत्सैन्यंतस्ययःसंभ्रमःइतस्ततोधावनंतेनसमुत्थानिउद्गतानियानिरजांसितैः। आस्यस्यमुखस्यमालिन्यंतत् । आस्यस्थानीयगोपुरादौमालिन्यंबभार। अनेनतत्कालवियुक्तस्त्रीस्वभावोध्वन्यते ॥ १६ ॥ भर्तुरिति । ततोनंतरंसाद्वारवती

**कृष्णे बलाद्व्रजति सा द्रवदिंदुकांतैस्तन्मंदहासनवचंद्रिकयाऽस्रधाराम् ॥ तत्सैन्यसंभ्रमसमुत्थरजोभिरास्यमालि न्यमुद्गतवचोरभसा बभार ॥ १६ ॥ भर्तुस्ततः प्रतिकृतिं स्फुरदात्मवप्रलग्नोच्चरत्ननिकरेषु निधाय दीना ॥ तस्था विवाथ फलिताऽच्युतभूषणेषु विश्लेषशंकिहृदयाऽनुययाविवेशम् ॥ १७॥ चलत्पताकानिलनिर्मलीकृते रथौघच क्रावलिभिः समीकृते ॥ सुरालिमुक्तामलपुष्पलांछिते गजेंद्रदानांबुकदंबसिंचिते ॥ १८ ॥** दीनासतीस्फुरंतोभास्वंतःआत्मनः स्वस्याःयेवप्राःप्राकारास्तेषुलग्नानियानिउच्चरत्नानिउत्तमरत्नानितेषांनिकराःतेषु । भर्तुःश्रीकृष्णस्यप्रतिकृतिंप्रतिबिंबंनिधायतस्थाविव तद्गमनेपितत्प्रतिकृति मालिंग्यकथंचित्कालंनेष्यामीतिस्थितेवेत्यर्थः । अथअच्युतस्य यानिभूषणानिरत्नखचितभूषणानितेषुफलितासापुरी। विश्लेषंवियोगंशंकतइतिविश्लेषशं कितादृशंहृदयंमनोयस्यास्सातथासतीईशंकांतंश्रीकृष्णंअनुययाविव रूपांतरेणानुजगामेव ॥ १७ ॥ सेनाविस्तारंवर्णयन्नेवराजमार्गालंकारमाह। चलदिति। यद्वाश्रीकृष्णप्रयाणप्रकारंवर्णयन्मार्गस्योभयपार्श्वेपुंजीभूयस्थितसेनालंकारंवर्णयति । चलदिति। मन्मथकोटिरूपःश्रीकृष्णःचलंत्यःयाःपताकाःतासाम निलस्तेनशुष्कतृणबंधाद्यपगमेनसम्मार्जनेनैवनिर्मलीकृतःतस्मिन्। रथौघाःरथसमूहाःतेषांयानिचक्राणितेषामावलयःताभिःसमीकृतेसमानीकृते । सुरालिमु

क्तानिसुरसमूहमुक्तानियानिअमलपुष्पाणितैःलांछितेचिह्निते । गजेंद्राणांयानिदानानिमदास्तान्येवांबूनिजलानितेषांकदंबःसमूहःतेनसिंचितेमार्गेमंदंयथाभव तितथा ययावित्युत्तरेणान्वयः ॥ १८ ॥ वराश्वेति । वराःउत्तमाःयेश्ववाराःसादिनःतेषामुच्चयःसमूहःतेनसूचिताःप्रेरिताःतैःइतस्ततःमंडलेनमंडलाकारेणयद्धाव नंतस्मिन् । उद्यताउद्युक्तास्तैःपरिस्फुरंतियानिचामरभूषणानिचामराणिचभूषणानिचतैरुज्ज्वलाःशोभमानास्तैः । हेषितेनभूषितानिआननानियेषांतेतथातैःवि राजितेराजमार्गेययावित्यन्वयः ॥ १९ ॥ पार्श्वद्वयेति । कलशानांपूर्णकलशानांउपमानंसादृश्यंयेषांतेतथातैः । पार्श्वयोर्द्वयंतस्मिन्तिष्ठंतीतितथोक्तायेइभाःग जास्तेषांकदंबाःसमूहाः राजमार्गेगमनावसरत्वात्पार्श्वद्वयेव्यूहीकृत्यस्थितगजसमूहाइत्यर्थः । तेषांयेरंगिकुंभाःधातुरंजितकुंभप्रदेशास्तैःसमेते नीलाःयेउपलाः पाषाणाःतेषांतोरणानिइंद्रनीलात्मकतोरणाइत्यर्थः । तेषामाभेवाभायेषांतेतथातैः अन्योन्यंसक्ताःसंबद्धाःतेचतेउन्मुखाःऊर्ध्वमुखाःतेचतेकुंचितमीषदव

वराश्ववारोच्चयसूचितैर्हयैरितस्ततो मंडलधावनोद्यतैः ॥ परिस्फुरद्भूषणचामरोज्ज्वलैः विराजिते हेषित भूषिताननैः ॥ १९ ॥ पार्श्वद्वयस्थेभकदंबरंगिकुंभैः समेते कलशोपमानैः ॥ अन्योन्यसक्तोन्मुखकुं चिताग्रहस्तैश्च नीलोपलतोरणाभैः ॥२०॥ विचित्ररत्नोज्ज्वलभूषणौघैः पदांबुजैः प्राहुणिकांगनानाम् ॥ रंगप्रभां मुष्णति राजमार्गे मंदं ययौ मन्मथकोटिरूपः ॥२१॥ मध्येस्थापितमाधवा स्मितलसत्फेना च लच्चामरव्रातोर्मिर्विततातपत्रकमठा हस्त्यश्वपत्त्यावृता ॥ वीणावेणुनिनादगर्जितयुता वाद्यैः समा सा च मूराच्छन्नानिमिषांतरागतमहीपालौघसेना सरित् ॥ २२ ॥

नतंअग्रंयेषांतेतथोक्ताःतेचतेहस्ताःशुंडाश्चतैश्चसमेतेराजमार्गेययावित्यन्वयः ॥ २० ॥ विचित्रेति । विचित्राणियानिरत्नानिपद्मरागेंद्रनीलमौक्तिकवैदूर्यादिना नारत्नानितैरुज्ज्वलाःप्रकाशमानाभूषणौघाःयेषांतानितथोक्तानितैः । प्राहुणिकाःविवाहार्थमागताःयेजनाः वैवाहिकःप्राहुणिकइतिहलः । तेषामंगनास्तासां प दांबुजैःरंगप्रभांनीलरक्तपीतशुभ्रादिचूर्णैःकृतरंगकांतिंमुष्णतिअपहरतिराजमार्गेमन्मथकोटिरूपःश्रीकृष्णःमंदंययौ ॥ २१ ॥ मध्यइति । मध्येस्वमध्येस्थापितः माधवःश्रीकृष्णोययासा । समुद्रपक्षेसमुद्रशायित्वात्श्रीकृष्णस्यवारिधिरपिमध्यस्थापितमाधवः । स्मितमेवलसत्फेनोयस्यास्सा । चलंतिचामरव्रातान्येवऊर्म

योयस्यास्सा। विततान्यातपत्राण्येवकमठाःकूर्मायस्यास्सा हस्तिनश्चअश्वाश्चपत्तयश्चतैरावृता। यावंतोदृश्यतेनरकरितुरगादयःस्थलेजीवाः तावंतःसलिले ष्वपि। नरपूर्वास्तेपिविज्ञेयाइतिवचनात् समुद्रस्यापिहस्त्याद्यावृतत्वंद्रष्टव्यं। वीणाश्चवेणवश्चतेषांनिनादस्सएवगर्जितंगर्जनंतेनयुता। आच्छन्नाःमनुष्यरूपेणा च्छन्नाअनिमिषादेवायस्यांसा। समुद्रोप्याच्छन्नमीनः। सुरमत्स्यावनिमिषावित्यमरः। अंतरामध्येमध्ये आगताःयेमहीपालौघाःतेषांयाःसेनास्ताएवस रितोनद्योयस्यास्सा॥ वारिजलानिधीयंतेऽस्मिन्निति वार्द्धिःसमुद्रः। तस्यसमासाचमूःकृष्णचमूःमंदंययौ॥ २२॥ लक्ष्मीशेति। लक्ष्मीशस्यश्रीकृष्णस्ययेवाहरथहस्तिभटौघाःवाहाःवाजिनश्चरथाश्चहस्तिनश्चभटाश्चतेषामोघाःसमूहास्तेषांवेगःतस्माज्जातं त्रिदिवंस्वर्गःतत्व्रजत्स्वर्गपर्यंतमूर्ध्वंगच्छदित्यर्थः। आत्तोरयोवेगोयेनतत्। तद्रजःकर्तृपदं। कृष्णानुषंगःश्रीकृष्णसंबंधःययोस्तौतथोक्तौयौचिदचेतनौसज्जनशालग्रामरूपौतयोःसंगःसमागमस्तंभजतीतितथोक्तः

लक्ष्मीशवाहरथहस्तिभटौघवेगजातं व्रजत्त्रिदिवमात्तरयं रजस्तत् ॥ कृष्णानुषंगिचिदचेतनसंगभा
जो वक्ति त्रिविष्टपगतिं गतमेधसोऽपि ॥ २३ ॥ विचित्ररत्नद्युतिरंगकांत्या सुमौक्तिकौघाक्षतलाजरा
ज्या ॥ मंदानिलाख्यव्यजनैः स्वतीरे सिंधुः स्वजामातरमंचतीव ॥ २४ ॥ तुंगैस्तरंगैर्धृतशंखचक्रैः कीर्णं
पयः फेनसितं वितन्वन् ॥ हस्तैर्मुरारेर्व्रजतोऽधिमार्गं वस्त्राणि विस्तारयतीव वार्द्धिः ॥ २५ ॥

तस्य गतमेधसोपिज्ञानरहितस्यापित्रिविष्टपस्यगतिःप्राप्तिःतांवक्ति। हस्त्यश्वपदातीनांचेतनरूपत्वात्रथस्याचेतनरूपत्वात्उभयोरपिश्रीकृष्णसेनांगत्वेनतदनुषंगित्वात्तदुत्पन्नरजसोजडत्वेनबुद्धिरहितत्वाच्चैवंनिदर्शनम्॥ २३॥ विचित्रेति। सःसिंधुःसमुद्रःस्वतीरंस्वतटंतस्मिन्विचित्राणियानिरत्नानितेषांयाद्युतिःसैवरंगकांतिःतया। सुमौक्तिकौघाएवअक्षताश्चलाजाश्चअक्षतलाजास्तेषांराज्यासमूहेनमंदानिलामंदवायवःतइतिआख्यानामयेषांतानिमंदानिलाख्यानितानिचतानिव्यजनानिचतैः। अनेनप्रतिपदंनवनवमंदानिलागमःसूच्यते। जामातरंस्वदुहितृभर्तारंश्रीकृष्णंअंचतीवपूजयतीव॥ २४॥ तुंगैरिति। तुंगैरुन्नतैःधृतानिशंखाश्चचक्राणिचक्रांकशिलाश्चशंखचक्राणियैस्तैस्तथोक्ताः द्वारवत्याःसमीपेसमुद्रात्शंखचक्रांकशिलानामुत्पत्तेरितिउदितं शंखचक्रधरैरिति वैष्णवधर्मोध्वन्यते। तरंगैःफेनसितंफेनेनशुभ्रंतत्। पयःजलंकीर्णंतीरेविस्तृतंवितन्वन्फेनिलंजलमूर्मिभिःतीरेप्रसार्यपुनःनिवर्तयन्नित्यर्थः। वारिधीयंतेऽस्मिन्निति वार्द्धिःसमुद्रः। व्रजतः

गच्छतःमुरारेःअधिमार्गंमार्गेमार्गेवस्त्राणिहस्तैर्विस्तारयतीव। यथामहाप्रभोःगच्छतःउपचारार्थान्अधिमार्गेस्थापयंतितद्वदाचरतीतिभावः॥२५॥नीलाश्मेति। नीलाःअश्मानइंद्रनीलरत्नानितेषांद्युतिरिवद्युतिर्येषांतानितथोक्तानितादृशानियानिपत्त्राणिपर्णानितैःशोभंतइतितथोक्तास्तैःअधोव्यालंबंतइतिअधोव्यालंबीनियानिपुष्पाणितान्येवस्फुरन्मुक्तादामानियेषांतेतथातैः। उल्लसंतोयेकिसलयानिःपल्लवानितेषांश्रेण्येववितानंतेनोज्ज्वलैःसिंधुनासमुद्रेणप्रेषितानियानिरत्नानितैःसंहितानिखचितानितलानियेषांतेतथातैःसुवर्णानांयेउन्नतास्तंभाःतइवअंगानिप्रकांडाःयेषांतेतथातैः। समानमायतंप्रमाणंएषांतैःमणिमंडपोरत्नमंडपःतस्यानुकृतिःअनुकरणंएषांतेतथातैःवृक्षैर्युक्तंवनंअविशदित्युत्तरेणान्वयः ॥ २६ ॥ विष्वगिति। श्रीकृष्णःविष्वक्समंतात्लंबिनःफलोच्चयाःयस्मिंस्तथातत्। कलाः

**नीलाश्मद्युतिपत्रशोभिभिरधोव्यालंबिपुष्पस्फुरन्मुक्तादामभिरुल्लसत्किसलयश्रेणीवितानोज्ज्वलैः॥ सिंधुप्रेषितरत्नसंहिततलैर्वृक्षैः सुवर्णोन्नतस्तंभाभैर्मणिमण्डपानुकृतिभिर्युक्तं समानायतैः॥ २६॥ विष्वग्लंबिफलोच्चयं कलपिकैरारब्धगीतं वनं गर्जद्धारिधिमद्दलं शुकवचस्तोत्रं स्वतन्वीक्षया॥ नृत्यत्केकिनटीमनोज्ञमलिगीर्वीणानिनादं पतत्पुष्पौघाक्षतलाजवृंदमविशन्मांगल्यवेश्मोपमम्॥ २७॥ यद्इंदिरायास्तदभूद्धि मूलं प्रियांगसंश्लेषमहोत्सवश्रियः॥ ततस्तदार्याः प्रवदंति नूनं स्थलं स्थलज्ञा भुवि मूलमाधवम्॥२८॥**

मधुरस्वराःयेपिकाःकोकिलाःतैःआरब्धंगीतंगानंयस्यतत्। गर्जद्वारिधिरेवमद्दलोवाद्यविशेषोयस्मिंस्तथातत्। शुकवचांस्येवस्तोत्राणियस्मिन्तथातत् स्वतनोःस्वस्यनीलमेघोपमस्यश्रीकृष्णतनोःशरीरस्यईक्षयादर्शनेननृत्यंतःयेकेकिनोमयूराःतएवनत्योनर्तक्यःताभिर्मनोज्ञंमनोहरंअलीनांभ्रमराणांगिरःस्वराः ताएववीणानिनादोयस्मिन्तथातत्। पताकाचलनोत्पन्नवायुवशात् पतंतियानिपुष्पाणितेषामोघास्तएवअक्षताश्चलाजाश्चतेषांवृंदंयस्मिन्तत्तथातत्। मांगल्यस्यविवाहस्ययद्वेश्ममंडपभूतंगृहंतस्यउपमायस्यतत्तथातत्। वनंमूलमाधवाख्यंवनंतत् अविशत् ॥ २७ ॥ यदिति। यत्यस्मात्कारणात्तद्वनइंदिरायाःरुक्मिण्याःप्रियस्यश्रीकृष्णस्यसं[?]षएवमहोत्सवस्तस्यश्रीःसंपत्तस्याःमूलंकारणमभूद्धि। ततःकारणात्स्थलंस्थलवाचकशब्दप्रवृत्तिनिमित्तंतत्

जानंतीतिस्थलज्ञाः आर्याःभुवितत्स्थलंमूलमाधवंप्रवदंति । मायाःधवःपतिःमाधवःतस्यमूलमितिव्युत्पत्तेरितिभावः ॥ २८ ॥ आसन्निति । अथानंतरंकेच ननृपाःसदाराःसंतःभीष्मपुत्र्याःपक्षेआसन् एकाकिन्यारुक्मिण्याआनीतत्वात् विवाहोचितविनोदकरणायरुक्मिणीपक्षेपिस्त्रीपुरुषादीनामपेक्षितत्वादितिभा वः । अपरेनृपाः मुरारेःपक्षेआसन् । तदाबलादानीतस्वपुत्रीसहायमसहमानःवार्धिःसमुद्रःवारिजवदक्षिणीयस्याःसावारिजाक्षीतस्याःरुक्मिण्याःपक्षोऽहमेवे तिउच्चैर्वदन्निवगर्जति ॥ २९ ॥ रत्नौघेति । रत्नौघाःरत्नसमूहाःतैःपूर्णंयत्रवेःसूर्यस्यवर्णइववर्णःप्रभायस्यतत्तथोक्तं यत्सुवर्णपात्रंतस्मिन्सत्कर्णपत्रंकर्णाल कारोचितसमीचीनतालपत्रंमुखंप्रभृतियेषांतानितथोक्तानि । तानिचतानिशोभनवस्तूनिहरिद्रादीनिचतेषांराशिःसमूहस्तं विस्तीर्यनिधाय । शंखाश्चपटहाश्च

आसन्नृपाः केचन भीष्मपुत्र्याः पक्षे सदारा अपरे मुरारेः॥ वार्धिस्तदा गर्जति वारिजाक्ष्याः पक्षोऽहमेवेति वद न्निवोच्चैः ॥ २९ ॥ रत्नौघपूर्णरविवर्णसुवर्णपात्रे सत्कर्णपत्रमुखशोभनवस्तुराशिम् ॥ विस्तीर्य शंखपटहध्वं निपूरिताशा जग्मुर्वधूगृहमहोत्सवनिर्णयाय ॥ ३० ॥ विविच्य सर्वांगविचारकाले तयोः समंताद्घटना किलाऽसी त् ॥ सुपीनदेवीस्तनमध्यदेशे सुदुर्लभा सा परमच्युतस्य ॥ ३१ ॥ कन्यामिमांकनकदामकदंबगौरीं धन्यां दिशं तु हरये हरिनीलभासे ॥ युक्तस्तयाऽयमुदवाह इवात्तविद्युद्विष्वक्करिष्यति समस्तपुमर्थवर्षम् ॥ ३२ ॥

तेषांध्वनयःतैःपूरिताआशादिशोयैस्तेतथासंतःउत्सवनिर्णयःविवाहोत्सवस्यनिश्चयःतस्मैवधूगृहंजग्मुः ॥ ३० ॥ विविच्येति । तयोःरुक्मिणीश्रीकृष्णयोः । सर्वा णियानिअंगानिविवाहांगानिराश्यादिकूटानितेषां हस्तमुखाद्यवयवानामितिध्वनिः । विचारकालःविमर्शस्यकालःतस्मिन्घटनाघटनरूपविचारावसरइत्यर्थः । विविच्यपृथक्पृथक्विवेकंकृत्वासमंताद्दशकूटेष्वपि सर्वावयवेष्वितिध्वनिः । घटनाआसीत्किल । ध्वनिलब्धार्थेष्वेकस्याक्षेपमाह सुपीनेत्यादिना । अच्युत स्यश्रीकृष्णस्यपरंकेवलंसुपीनौनिबिडौयौदेवीस्तनौरुक्मिणीस्तनौतयोर्मध्यदेशःमध्यप्रदेशःतस्मिन् साघटनासंभावितानिबिडस्तनांतरेतुसुदुर्लभेतिशृंगाररलब्धो विनोदः ॥ ३१ ॥ वाग्दानप्रक्रियांवर्णयति कन्यामिति । कनकदामानिसुवर्णमालाःतेषांकदंबःसमूहःतद्वद्गौरींसुवर्णमालावत्कदंबपुष्पवच्चगौरवर्णांवाधन्यांकृतार्थां

मिमांकन्यांरुक्मिणींहरिनीलवत्इंद्रनीलवत्भाःकांतिर्यस्यसतथातस्मैहरयेश्रीकृष्णायदिशंतु। अनेनइंद्रनीलखचितसुवर्णालंकृतवत्भविष्यतीतिभावः। तयाकनकदामगौर्यारुक्मिण्यायुक्तोयमिंद्रनीलप्रभःश्रीकृष्णःआत्तास्वीकृताविद्युत्सौदामिनीयेनसतथोक्तःउदवाहइवमेघइवविष्वक्समंतात्समस्तायेपुमर्थाः पुरुषार्थाःधर्मादयःतेषांवर्षंवृष्टिस्तत्करिष्यति रुक्मिणीप्रदानेनसकलपुरुषार्थंभवद्भ्यःप्रदास्यतीतिभावः॥ ३२॥कुलमग्रेपरीक्षेतेतिउक्तेःकुलविचारप्रकारमाह। विदर्भेति। इयंसतीरुक्मिणी।विदर्भस्यभीष्मकस्यवंशएवोदधिःसमुद्रःतस्मिन्जातमुत्पन्नंचतत्रत्नंच। अथवाविगतादर्भाश्ववंशाश्वविदर्भवंशाःकुशवेणवोयस्मिन्सविदर्भवंशःसचासावुदधिश्चक्षीरसमुद्रइत्यर्थःतज्जातरत्नमिवसाक्षाद्रमैवेत्यर्थः।सोपिकृष्णः।उडुनायकस्यसोमस्यकुलेउद्भवोउत्पत्तिर्येषांतेतथोक्ताःतेषांयादवानांअलंकृतिरलंकारभूतः तत्तस्मात्एतत्कुलमूलभूतयोःसमुद्रसोमयोःसहजमित्रत्वात्। एतयोःरुक्मिणीश्रीकृष्णयोः। परंपरायोग्यःवंशपरंपरोचितः।

**विदर्भवंशोदधिजातरत्नमियं सती सोऽप्युडुनायकस्य ॥ कुलोद्भवालंकृतिरेतयोस्तु परंपरायोग्यमवैति योगम् ॥ ३३ ॥ पद्मालया सा किल पावनांगी नारायणोऽयं नवनीरदाभः ॥ तेनावयोः सुस्थिरमेव योगं मन्यामहेऽन्योन्यविभूतिहेतुम् ॥ ३४ ॥**

तं योगंसंबंधं। अवैतिजानाति। वैदर्भाणांयादवानांसंबंधःपरंपरागतइत्येका। रत्नमलंकृतिरित्यनेनरत्नस्यस्वर्णाभरणस्यचयोगोयुक्तएवेत्यपरा। क्षीरसमुद्रजातत्वेनलक्ष्मीत्वोक्त्याकुलोद्भवानांपुरुषाणांअलंकृतिरुत्तमइतिपुरुषोत्तमत्वोक्त्याचलक्ष्मीनारायणयोःयोगःसमुचितइत्यन्याइतितत्रेधासंबंधघटनाप्रदर्शितेतिद्रष्टव्यम्॥ ३३ ॥ प्रकारांतरेणसंबंधघटनामाहुः। पद्मेति। सापावनमंगंयस्याःसापावनांगी रुक्मिणी। पद्ममालयायेस्याःसापद्मालयाकिल। लक्ष्मीःपद्मालयेत्युक्तेः। नवनीरदवदाभायस्यसतथोक्तःअयंश्रीकृष्णःनाराआपःअयनमाश्रयोयस्यसनारायणःकिल। तेनजलपद्मयोर्नित्यसमागमेनकारणेनपद्मालयानारायणरूपयोःयोगंसुस्थिरमेवमन्यामहे।पद्मजलयोःपरस्परशोभाकारित्वेनतद्वासिनोरनयोरपियोगंअन्योन्येनविभूतिस्तस्यहेतुःपरस्परशोभाकारणमित्यर्थः। तंमन्यामहे। पद्मस्यजलशोभाकारित्वमात्रंजलस्यतुपद्मोज्जीवकत्वेनश्रैष्ठ्यंद्योत्यते। नवनीरदाभइत्यनेननीरदप्रतिस्पर्धितयाश्रीकृष्णस्यतदपन्न...

पद्मानिष्टापहारकत्वंध्वनिः । रुक्मिणीवैरिविनाशकत्वंचद्योत्यते ॥ ३४ ॥ आर्यइति । आर्यःश्रीकृष्णः । स्वभार्यां । यदि । भारंस्थूलंयत्कार्यंतस्मिन् । नैवोपदिश्यात्नाज्ञापयेत् । पुनःकदाप्येनांयदिनत्यजेत् । अत्रास्थांयदिजात्वपिकदाचिदपिनकुप्येत् कोपंनकुर्यात्तर्हि । नोस्माकंअब्जमुख्याःरुक्मिण्याःकरंपाणिंगृह्णातु ॥ ३५ ॥ संदेशमात्रमिति । हेविभोहरेकृष्ण । नःविश्वदःसर्वदस्त्वं । एनांरुक्मिणीं । नः केवलंसंदेशःसंदेशमात्रंपत्रिकामात्रंतत् । अभिवीक्ष्य । यदिनोस्माकंगृहं । संप्रेषयिष्यसि । अन्याचसापत्नीचअन्यपत्नीतांपत्न्यंतरंयदिनकरिष्यसिपत्न्यंतरपरिग्रहंनकरिष्यसीत्यर्थः । यदिबंधूनःस्मरिष्यसि कन्यावरणानंतरंकृतकृत्यतयावयंनविस्मरणीयाइतिभावः।तर्हिवल्गुमनोहरंवदनंयस्याःसातथोक्तारुक्मिणीवरिष्ठंत्वांवरयेत्इतिकन्यापक्षीयाणांवचनम् ॥ ३६ ॥ इदा

आर्यः स्वभार्यां यदि भारकार्ये नैवोपदिश्यात् न पुनः कदापि ॥ एनां त्यजेज्जात्वपि नात्र कुप्येद्गृह्णातु तर्ह्यब्जमुखीकरं नः ॥ ३५ ॥ संदेशमात्रमभिवीक्ष्य हरे गृहं नः संप्रेषयिष्यसि करिष्यसि नान्यपत्नीम् ॥ बंधूंन्स्मरिष्यसि विभो यदि विश्वदो न त्वां तर्हि वल्गुवदना वरयेद्वरिष्ठम् ॥ ३६ ॥ ब्रह्मांडाख्यगृहं चतुर्दशलसत्प्रासादशोभं हरेः साध्वीयं सततं विचारयतु तन्मध्ये गृहस्थोचितम् ॥ स्वर्णाद्रिक्षितिधान्यरत्नलवणक्षीरेक्षुसर्पिर्दधिस्वादूदादि सुतांश्च पद्मजमुखान् तेषां धुरं मंदिरम् ॥ ३७ ॥

नींवरपक्षीयाणांप्रत्युत्तरप्रकारमाह । ब्रह्मांडेति । इयंसाध्वीरुक्मिणी । चत्वारःअधिकाःदशचतुर्दशपातालाद्याश्चतुर्दश लोकाएवलसत्प्रासादास्तैःशोभतइति तथोक्तं । हरेःब्रह्मांडमितिआख्यायस्यतत्ब्रह्मांडाख्यंयत्गृहंतत् । सततंविचारयतु । तन्मध्यंब्रह्मांडाख्यगृहमध्यंतस्मिन् । गृहस्थोचितं । स्वर्णाद्रिःमहामेरुःसचक्षितिश्चधान्यानिचरत्नानिचसमुद्राकारेणवर्तमानानिलवणंचक्षीरंचइक्षुश्चसर्पिश्चदधिचस्वादूदंस्वादूदकंतच्चतानिआदयोयस्यतत्तथोक्तंतत् आदिशब्देनसमुद्रादिकंगृह्यते । बृहच्छरीरतयामहागृहस्थत्वेनगृहादीनांस्थूलत्वादिकमुक्तमितिद्रष्टव्यं । पद्मजःविरिंचःमुखंप्रमुखोयेषांतेतान् सुतांश्च । हरेःसर्वस्रष्टृत्वात्अस्याश्चलोकमातृत्वाच्चेतिभावः । तेषांब्रह्मादीनां । धुरंसत्यलोकाधिपत्यादिकंधुरं । मंदिरंसत्यलोकादिकंचविचारयतु । ब्रह्मांडादीनामेतेषांसंपद्रूपत्वेन

अस्याश्चसंपदभिमानिश्रीत्वेनैतद्विचार्यमितिभावः ॥ ३७ ॥ ननुभारकार्येनोपदिश्यादित्युक्तेर्महाकार्यमिदंकथमुपदिश्यतइत्यतआहुः । कार्यमिति । एतद्गृह कृत्यं । गृहिण्याभार्ययारुक्मिण्या । कार्यं । विचार्यतयागृहमस्यावशेवर्ततइतिगृहिणीतिव्युत्पत्तेरितिभावः । अन्येचतेजनाश्चतैरसाध्यंएतद्गृहांतःप्रवेशादे रयोग्यत्वादितिलौकिकं । ब्रह्मांडपरिपालनादेरन्यासाध्यमितिहृदयं । भारंकरोतीतिभारकारि नभवति । भाररूपत्वेपिगृहकृत्यमिदमनयैवकर्तव्यमितिभावः । अन्यस्यापिभारकार्यत्वेपिअस्याःनेदंभारकार्यमित्याहुः । तन्वीति । इयंतन्वीस्त्रीरुक्मिणी । तदेतत्सकलंब्रह्मांडपोषणादिकं । स्वस्याःलोलश्चंचलोयोलीलाकटाक्षःलीलापांगनिरीक्षणंतेनकरिष्यति । विश्वस्थितीतिद्वादशस्तोत्रेउक्तं । भारकार्येनैवोपदिश्यादित्यस्येदमुत्तरम् ॥ ३८ ॥ नैनामिति । सःश्रीकृष्णः । एनांरुक्मिणीं । संसदिसभायामपि । नत्यजेत् । सभायांलक्ष्मीनारायणरूपतयावस्थितेरितिभावः । रहसिअंतःपुर्यांकथंत्यजेत्नत्यजेदितिभावः । स्वैरेणस्वेच्छयाअ

कार्यं गृहिण्या गृहकृत्यमेतन्नो भारकार्यंन्यजनैरसाध्यम् ॥ तन्वी तदेतत्सकलं स्वलोललीलाकटाक्षेण करिष्यतीयम् ॥ ३८ ॥ नैनां संसदि संत्यजेन्न रहसि स्वैरावतारेषु वा स्नानाभ्यंजनभोजनादिविविधक्रीडासु वाऽस्यै दिशेत् ॥ स्वांगाश्लेषसुखं विभूषणगतं बिंबोष्ठजं चामृतं वंशाद्याश्रितमेतया विरहितं देशं परं संत्यजेत् ॥ ३९ ॥

वताराःरामकृष्णाद्यवताराःतेषुवा नसंत्यजेत् सीतादिरूपतयालक्ष्म्याअपिसहावतारादितिभावः । स्नानंचअभ्यंजनमभ्यंगस्तच्चभोजनंचतानिआदयोयासांताः तथोक्ताःयाःविविधक्रीडाःतासुक्रीडास्वित्यनेनस्नानादिकमपिक्रीडामात्रंनतुसुखाप्त्यर्थमितिद्योत्यते । एनांनसंत्यजेदित्यन्वयः । सस्त्रीकतयाभिषेकादिपूजास्वीकारादितिभावः । विभूषणानिकंठमालाद्याभरणानिगतंप्राप्तंतत् । स्वस्यअंगंशरीरंतस्यआश्लेषःसंबंधःतस्यसुखंतज्जन्यसुखमित्यर्थः । तत् । अस्यैरुक्मिण्यैदिशेत् । लक्ष्म्याएवभूषणाकारतयास्थितेरितिभावः । वंशोवेणुवाद्यंतदादियेषांतानिवंशादीनिमुखचुंबिशंखश्रृंगादिवाद्यानितेषुआश्रितं । बिंबसदृशःओष्ठःबिंबोष्ठः तस्माज्जायतइतितथोक्तंतत् । अमृतंअधरामृतंचेत्यर्थः । अस्यैदिशेत् । श्रीदेवीवेणुमाश्रित्येतिवचनात् परंकेवलं । एतयारुक्मिण्याविरहितंदेशंत्यजेत् । देशतःकालतःरुक्मिण्याःश्रीकृष्णेनसमव्याप्तेरितिभावः । एतद्रहितदेशमेवत्यजेदित्युक्त्याएतत्त्यागःसुतरांनेतिसूचितः । नपुनःकदाप्येनांत्यजेदित्यस्योत्तरम् ॥ ३९ ॥

क्रुद्धोपीति । अयंश्रीकृष्णः ।सर्वंचतद्भुवनंचतस्मै । क्रुद्धोपिसंहृतसकललोकोपीत्यर्थः । क्रुधद्रुहेर्ष्यासूयार्थानांयंप्रतिकोपइतिचतुर्थी । भीष्मस्य ष्मकस्यपुत्रीतस्यांरुक्मिण्यां । क्रोधःकोपस्तंनकरिष्यति । परंतुतदापिप्रलयेऽपि । एनांश्रीलक्ष्मीरूपिणीं । कोमलांगींरुक्मिणीं । दोर्भ्यांहस्ताभ्यांप रिरभ्यरमयेत्किल किलेत्यनेनलक्ष्मीभुजांतरगतःस्वरतोपिचाग्रइतिप्रमाणप्रसिद्धिंद्योतयति । इमांरुक्मिणींवियुक्तांसीतावताराादिषुवियोगवतींकलयेज्जा नाति । अस्यश्रीकृष्णस्य । कोपस्तत्रतस्मिन्नेवपुरुषे लक्ष्म्याःवियोगंवदतःसुराणकादेस्तमोदानादितिभावः । अविद्यमानवियोगज्ञातनिमित्तःकोपइत्युक्त्या अस्यांनकदापिकोपइतिसूचितम् ॥ ४० ॥ केशमिति । स्वपुंसांस्वभक्तानांदयितःप्रियःसश्रीकृष्णः । रुक्मिण्याःकेशःकेशभारस्तं । प्रगृह्य । करजाःनखाः

**क्रुद्धोऽपि सर्वभुवनाय न भीष्मपुत्र्यां क्रोधं करिष्यति परं परिरभ्य दोर्भ्याम्॥एनां तदाऽपि रमयेत्किल कोमलांगीं कोपोऽस्य तत्र य इमां कलयेद्वियुक्ताम् ॥४०॥ केशं प्रगृह्य करजैः कुचकुंभपार्श्वे कुर्वन् व्रणानि मृदुलोष्ठपुटं दशन्सः ॥ दंतक्षतं विरचयेद्दयितः स्वपुंसां क्रोधं तदा न कलयध्वमसौ विलासः ॥ ४१ ॥ प्रायः स न प्रेषयति स्वभक्तगेहेष्विमां तेऽपि न लक्षयंति ॥ यूयं हि दत्तामपि मामिदानीं धीराः परावृत्य न किं दिशध्वम् ॥ ४२ ॥**

तैः । कुचएवकुंभस्तस्यपार्श्वेतस्मिन् । व्रणानिक्षतानि । कुर्वन् । मृदुलंयदोष्ठपुटंतत् । दशन् । दंतैःक्षतंव्रणस्तद्यदाविरचयेत् । तदाक्रोधंनकलयध्वंनजानी ध्वम् । केशग्रहणव्रणकरणदंतक्षताद्यैःकोपेष्वपिदर्शनादितिभावः तर्हिकिमर्थंकचग्रहणादिकमित्यतआहुः । असाविति । असौकेशग्रहणादिविलासःश्रुतिवि नोदकोप भ्रमनिवारणव्याजेनउपकरिष्यमाणकेशग्रहणविलासकथनमिदंकन्यायाश्चित्तकर्षणार्थंजात्वपिनात्रकुप्येदित्यस्योत्तरार्थंच॥ ४१॥प्रायइति । श्रीकृ ष्णःस्वभक्तानांगेहानिगृहाणितेषु । प्रायःइमां । संपद्रूपिणींनप्रेषयति तंभ्रंशयामिसंपद्भ्योयस्यचेच्छाम्यनुग्रहमितिवचनात् । तेपिभक्ताअपितांसंपदंनलक्षयंति नवांच्छंति । तथापितत्पराराज्यंनैववांच्छंतिकिंचनेतिवचनात् । हेधीराःयूयमिदानीमद्यद्वारकायामवस्थितिकाले । दत्तामपिगृहनिधिपश्वादिरूपेणदत्तामपि

अचउपसर्गात्तइतिदकारस्यतकारादेशः।इमांश्रियम्। आचंडालादिभिःप्राप्यद्वारकानिधिकोटिकदितिवचनात्। परावृत्यदात्रेश्रीकृष्णायेत्यर्थः। नदिशध्वांकें। दारान्सुतानितिसदाचारेप्युक्तंदिशध्वमेवेत्यर्थः। गृहंनःसंप्रेषयिष्यसीत्यस्योत्तरमिदम् ॥ ४२ ॥ नैवान्यामिति।पूर्णःरुक्मिणीमात्रेणाप्तकामः।अयंपुरुषाग्रणीःपुरुषश्रेष्ठःश्रीकृष्णःअन्यांकन्यांनवरयेत्। वृतोपिषोडशसहस्रकन्याभिःगोपीभिश्चवृतोऽपि। अनेनस्वस्याकांक्षाभावेऽपितासामाकांक्षानुसारेणवर्णनमितिसूचितम्। अन्यायाअंगनाःस्वभोग्याःस्त्रियस्तासांदेहस्तस्मिन्। इमांप्रेयसीमतिशयेनप्रियांरुक्मिणीरूपांलक्ष्मींरमयेत्। श्रीकृष्णेनानुभूयमानास्वन्यासुलक्ष्मीसंनिधानादितिभावः।करिष्यसिनान्यपत्नीमित्यस्योत्तरम् ॥ ४३ ॥ बंधून्स्मरिष्यसीत्यस्यानंगीकारेणैवोत्तरमंगीकारयंति। सदेति। सदाअपरोक्षीकृतंसाक्षाच्चक्षुषादृश्यमानंसर्वंविश्वंसकलंजगद्येनसतथोक्तः। स्मरणीयंशीलंयस्यसतथोक्तः। श्रीकृष्णः। कथंवोयुष्मान्स्मरेत्। चाक्षुषदर्शनेजागरूकेसतितज्जनितसंस्कारोत्तरका

नैवान्यां वरयेत्कन्यां पूर्णोऽयं पुरुषाग्रणीः ॥ वृतोऽप्यन्यांगनादेहे रमयेत्प्रेयसीमिमाम् ॥ ४३ ॥ सदापरोक्षीकृतसर्वविश्वः कथं स्मरेद्वः स्मरणीयशीलः ॥ तथाऽपि युष्मासु कृपां स कुर्यात्स्मृतेः फलं स्वांघ्रियुगाश्रयेषु ॥४४॥ न पारिबर्हं बहु दातुमीशा रथाश्वहस्त्यादिबलानि वाऽस्मै ॥ इमां परं पद्ममुखीं दिशामास्तिथिज्ञमाहूय तिथिर्विचार्या ॥ ४५ ॥ न पारिबर्हं स वृणोति पूर्णसुखः परं कांक्षति तत्कटाक्षम् ॥ विरिंचवैरिंचिमुखामराणामगण्यभाग्यं हि यतो बभूवः ॥ ४६ ॥

लिकस्मरणस्यासंभवादितिभावः। स्मरणीयशीलइत्यनेनयत्तदद्दश्यमित्यादिनास्वानुग्रहमंतरेणसाक्षाददृश्यस्यतस्यस्मरणंभवद्भिरेवकार्यमितिसूचितम्। तथापि। तस्ययौअंघ्रीतयोःर्युग्मंयुगंतदेवाश्रयोयेषांतेतथातेषु। युष्मासु। स्मृतेःस्मरणस्यफलंफलरूपांकृपांकुर्यात्। स्मरणेनापिकृपैवकर्तव्यानामेवकरिष्यसीत्यर्थः ॥ ४४ ॥ नेति। अयमस्मैश्रीकृष्णाय। पारिबर्हंवरायदीयमानंद्रव्यंतद्बहुदातुंनेशानसमर्थाः। रथाश्वअश्वाश्वहस्तिनश्चतेआदयोयेषांतानितथोक्तानि। तानिचतानिबलानिसैन्यानिचतानिवादातुंनेशाः। परंकेवलंइमांपद्ममुखींरुक्मिणींदिशामः। तिथिंजानातीतितिथिज्ञस्तंज्योतिर्विदमाहूयतिथिर्विवाहयोग्यतिथिर्विचार्या ॥ ४५ ॥ नपारिबर्हमिति। पूर्णसुखःसःश्रीकृष्णः। पारिबर्हंवरायदीयमानद्रव्यंतत्। नवृणोति। परंतु। तस्याः रुक्मि ॥

ण्याः कटाक्षःलीलावीक्षणंतं । कांक्षतिइच्छति । यतःकटाक्षात् । विरिंचोब्रह्मासचविरिंचस्यापत्यंपुमान्वैरिंचिःशिवःसचतौमुख्यौप्रमुखौयेषांतेतथो क्तास्तेचतेऽमराश्चतेषां गण्यंनभवतीत्यगण्यंयद्भाग्यंतत् । बभूवहि ॥ ४६ ॥ रुक्मिणीश्रीकृष्णयोःअवयववर्णनव्याजेनपंचानांशुभग्रहाणांमुखाद्युच्चस्थान स्थितिंचतुर्णांअशुभग्रहाणांपादाख्याधस्स्थानस्थितिंवर्णयन्रसिकोज्योतिर्वित्सर्वापितिथिःअनयोरनुकूलैवेत्यतआह । यद्वक्त्रइति । ययोःश्रीकृष्णरुक्मि ण्योःवक्त्रंतस्मिन्जात्येकवचनं । विधुंचंद्रं । आमनंतिवदंति । चंद्रोपममुखत्वादितिभावः । मुग्धंमनोहरंयत्स्मितंमंदहासस्तस्मिन् । शोभनश्चासौबुधश्चतं बुधंसौम्यंआमनंति । स्मितस्यमंदत्वेनाल्पप्रकाशबुधसदृशत्वादितिभावः । यद्वामुग्धस्मितेसति । सुबुधंसम्यक्ज्ञानिनं । आमनंति । यमुद्दिश्यकृपयामंदस्मि तंकुरुतेससम्यक्ज्ञानीभवतीत्यर्थः । एतयोःकरतलयोः । उद्यन्योव्योममणिःद्युमणिःबालसूर्यः । तंआमनंतिविदंति । करतलस्यरक्तत्वेनबालार्कसदृशत्वा दितिभावः । कटितटंकटिप्रदेशस्तस्मिन्गुरुमलघुंआमनंति कटितटस्यपृथुत्वादितिभावः । बृहस्पतिमितिध्वनिः । गुरुर्निषेकादिकरेषुरोधसिबृहस्पतौ । पित्रा

**यद्वक्त्रे विधुमामनंति सुबुधं मंदस्मिते हस्तयोरुद्यद्व्योममणिं गुरुं कटितटे मध्यं च काव्यास्पदम् ॥ य त्पादस्पृशि मंगलं पदतले केतुं गतौ मंदगं यद्रोचिश्चकितं तमस्तदनयोर्नित्यं मुहूर्तोदयः ॥ ४७ ॥ यदीय वीक्षाविषयस्य नित्यं विधोर्बलं तारबलं च सुष्ठु ॥ यदीयतारं जपतस्तदस्य सदा मुहूर्तोदयमेव मन्ये ॥४८॥**

दौनाबृहत्त्व्यातदुर्ज्ञानालघुष्विति अभिधानात् । मध्यंचकाव्यास्पदंएककाव्यविषयीभूतं । बहुगुणवत्तयाएकेनकाव्येनवर्णयितुंयोग्यमित्यर्थः । शुक्रास्पदमिति ध्वनिः । काव्यउशनाभार्गवःकविरित्यमरः । इतिपंचानांग्रहाणांउच्चस्थानस्थितिरुक्तेतिद्रष्टव्यं । ययोःपादाःयत्पादाःतान्स्पृशतीतितथोक्तस्तस्मिन्मंगलं पादत लेकेतुःरेखारूपोध्वजः । तंकेत्वाख्यग्रहमितिध्वनिः । आमनंति । गतौगमनेमंदंगच्छतीतिमंदगस्तंशनैश्चरमामनंति । गतेर्मंदत्वेनशनैश्चरसाम्यादितिभावः । तमःअंधकारं । यद्रोचिषाययोःकांत्याचकितंअधःकृतमामनंति । राहुमितिध्वनिः । तमोराहौगुणेध्वांतइतिरत्नमाला । तत्तस्मात्कारणात् । अनयोःरुक्मि णीकृष्णयोःनित्यंमुहूर्तोदयःशुभमुहूर्तस्यउदयः । महाशुभलक्षणसंपन्नयोरनयोःकिंमुहूर्तविचारेणेतिहृदयम् ॥ ४७ ॥ यदीयेति । यस्यश्रीकृष्णस्यसंबंधिनी यदीयासाचसावीक्षाचकृपाविलोकनंतस्याःविषयःतस्य । नित्यं । विधोश्चंद्रस्यबलमस्ति । नक्षत्रप्रणवयोरपितारशब्दवाच्यत्वात्तारजपेनतद्बलेसति

नक्षत्रादेरनुकूलत्वावश्यंभावात्शब्दसाम्याच्चेतदुक्तं । यस्यश्रीकृष्णस्यसंबंधीयदीयःसचासौतारःप्रणवःतं । जपतः । सुष्ठुसम्यक् । तारबलंअस्ति । नक्षत्रम्रक्षंभंताराम्इतिवचनात्आकारांतोपितारशब्दोस्ति । एतत्प्रतिपादकतारोपासकस्यापिताराबलंकिम्वस्येतिफलितोर्थः । ततृतस्मात् । अस्यश्रीकृष्णस्यसदा । मुहूर्तोदयःचंद्रताराबलोपेतमुहूर्तोदयस्तं । मन्ये ॥ ४८ ॥ द्वित्रैरिति । ज्योतिषांनक्षत्राणांपंथावीथीतंजानातीतिज्योतिष्पथज्ञःतेनोक्तासातिथिः । द्वौवात्रयोवामानंयेषांतानिद्वित्राणितैः । संख्याव्ययेत्यादिनासमासः । बहुव्रीहौसंख्येयेडजबहुगणादितिडच् । दिनैरंतरिताव्यवहितापिसा । महस्यविवाहोत्सवस्यऋद्धिरभिवृद्धिःउद्यंतीचसामहर्द्धिश्चतां विवाहोत्सवार्थंसंपादितवस्तुसंपत्तिमित्यर्थः । मिषतांपश्यतां । जनानां । क्षणस्याभेवाभायस्याःसाक्षणाभाक्षणसंमिताऽभूत् । नानाविधसंभ्रमदर्शनार्थमितस्ततःगच्छतांक्षणप्रायाऽभूदितिभावः । भैष्म्यारुक्मिण्यास्तुकल्पानांयदयुतंतेनसंमितासमाआसीत् । तावत्पर्यंतंकृष्णकरग्रह

द्वित्रैर्दिनैरंतरिताऽपि साऽभूत् ज्योतिष्पथज्ञोक्ततिथिः क्षणाभा ॥ उद्यन्महर्द्धिं मिषतां जनानां भैष्म्यास्तु
कल्पायुतसंमिताऽसीत् ॥४९॥ तांबूलपत्रं किल पूगयुक्तमासीद्विवाहोत्सवनिर्णयाय ॥ चेतःसु निश्चाय
यति स्म यूनां मांगल्यदीक्षोत्सवमेतदेव ॥ ५०॥ ततः क्रमेणोभयवर्गनार्यो गृहेगृहे तैलयुतां हरिद्राम् ॥
ददुर्विवाहोत्सवमूलभूतं परस्परं स्नेहमिवाऽर्पयंत्यः ॥ ५१ ॥ कन्यावरौ चक्रतुरर्थकामावन्येद्युरर्चां पितृ
देवतानाम् ॥ मन्येऽहमन्योन्यमभूत्तदग्रे चीर्णोत्सवौ संप्रति जातलज्जौ ॥ ५२ ॥

प्रत्यूहहेतुत्वादितिभावः ॥ ४९ ॥ तांबूलपत्रमिति । पूगयुक्तंक्रमुकयुक्तं तांबूलपत्रं । विवाहएवउत्सवस्तस्यनिर्णयःतस्मै । आसीत्किल । निश्चयतांबूलमितिलोकप्रसिद्धेरितिभावः । तथाहि । यूनांचेतस्सुचित्तेषु । एतदेवतांबूलमेव । मांगल्यस्यदीक्षासैवोत्सवस्तंनिश्चाययतिस्म । कामोद्रेककारित्वेनतच्चर्वणमदनोद्दीपितंचेतःदीक्षामाकांक्षतइतिभावः ॥५०॥ ततइति । ततोनंतरं । क्रमेण । उभयश्चासौवर्गश्चतस्यनार्यःकन्यावरपक्षीयाःसुवासिन्यः । तैलयुतांहरिद्रां । विवाहएवउत्सवःतस्यमूलभूतःतं । विवाहस्यस्नेहमूलत्वादितिभावः । स्नेहंपरस्परंअर्पयंत्यइवगृहेगृहेददुः । तैलस्यापिस्नेहशब्दवाच्यत्वात्श्लिष्टमूलेयमुत्प्रेक्षा ॥ ५१ ॥ कन्यावराविति । अन्येद्युरन्यस्मिन्दिनेतैलदानादिनाउपरिउपरितनदिनइत्यर्थः । अर्थमभ्युदयपुरुषार्थंकामयेतइतितथोक्तौ । कन्यावरौरुक्मिणीश्रीकृष्णौ । पितृदेवतानांनांदीमुखानां ।

अर्चांचक्रतुःकिल। किलेत्यनेनसर्वपितृदेवतापूज्यस्यतत्पूजनमौपचारिकमितिद्योत्यते। कविस्तुनिमित्तांतरमुत्प्रेक्षते। तदग्रइति। तासांपितृदेवतानांअग्रंपुरोभागस्तस्मिन्। अन्योन्यं। चीर्णःकृतःउत्सवःविवाहोत्सवःयाभ्यांतौतथोक्तौ। क्षीरसमुद्रमथनानंतरंदेवतासभामध्येलक्ष्मीविवाहस्यजातत्वादितिभावः। अमूरुक्मिणीश्रीकृष्णौ। संप्रतिइदानीं। तत्संनिधावेवपुनर्विवाहोद्योगेसत्यपहसिष्यंतीतिजाताल्लज्जाययोस्तौजातलज्जौ। तन्मुखमुद्रणीयार्चांचक्रतुरित्यहंमन्ये ॥५२॥ अथेति। अथसमानोधर्मोयस्यासौसधर्मातस्यभावःसाधर्म्यं स्नातकस्यस्नातकवृत्तिनःसाधर्म्यंतत्। संप्राप्य कृतस्नातकव्रतइत्यर्थः। तीर्थंस्नातुंजिगमिषुःगंतुमिच्छुःयदूननंदयतीतियदुनंदनःश्रीकृष्णः। इतिवक्ष्यमाणप्रकारेणप्रीत्याश्वशुरस्थानीयेनप्रत्यषिध्यतनिवारितः ॥ ५३ ॥ परिहृतेति। परिहृतःभवएवपाशोयेनसतथोक्तःतत्संबुद्धिः। श्रीशलक्ष्मीपतेइदंविशेषणद्वयंहेतुगर्भं।शौरेश्रीकृष्ण संसाराभावान्नतत्परिहाररूपपारत्रिकफलाययात्रा लक्ष्मीपतित्वात्। नसंप

अथ स्नातकसाधर्म्यं संप्राप्य यदुनंदनः॥ स्नातुं जिगमिषुस्तीर्थं प्रीत्यर्थं प्रत्यषिध्यत ॥ ५३ ॥ परिहृत
भवपाश श्रीश मा याहि शौरे त्रिभुवनपरिगीतं तीर्थजातं त्वयीशे॥ व्रजति सकलमासीत्पृष्ठतः स्पष्टयु
ष्मच्चरणवरणभूम्यां क्वाऽस्ति तीर्थं त्वदग्रे ॥ ५४ ॥

द्यादिरूपैहिकफलायवायात्रेतियात्रासंभवेहेतुसूचनात्।स्पष्टंचहेतुमाह। त्रिभुवनेत्यादिना। ईशेत्वामिनित्वयिव्रजतिगच्छतिसतित्रयाणांभुवनानांसमाहारस्त्रिभुवनंतस्मिन्। परिगीतंशास्त्रेषुपरिपठितंसकलंतीर्थजातंतीर्थसमूहःपृष्ठतःपृष्ठभागेस्पष्टंध्वजवज्रादिचिह्नोपेतत्वेनसर्वैर्दृश्यमानंयुष्माकंयौचरणौतयोर्वरणमंगीकारःसंबंधइत्यर्थः। यस्याःसातथोक्ताचसाभूमिश्चतस्यांतवपादरजोराजितायांपूर्वंक्षिप्तपदभूम्यामित्यर्थः।अतएवप्राक्पृष्ठतइत्युक्तं।आसीत्। श्रीकृष्णपादधूल्यांगंगादिसर्वतीर्थानांसन्निधानादितिभावः। तत्तीर्थोद्देशेनअग्रतोउद्दिष्टतीर्थानांपृष्ठतोवस्थानात्कारणात्। अग्रंपुरोभागस्तस्मिन्। तीर्थं। क्वास्ति। यस्यपादरजसिसकलतीर्थानि किंतस्यतवतीर्थयात्रया। यदिलोकनटनार्थंव्रजसि। तदापिविस्पष्टविष्णुपादांकदर्शनेनविष्णुपदरजस्त्वबुद्ध्यासर्वैरपिसकलतीर्थसंनिधानवत्तयाज्ञातेप्राचीनपदांकेस्नातुंपरावृत्त्यैवागच्छइत्युत्तरत्रपादविक्षेपाभावेनतीर्थस्यैवाभावात्नगच्छ। स्थितपदेमानुषाकारत्वात्पादस्यविष्णुपदत्वज्ञापकध्वजाद्य

साधारणचिह्नानांस्पष्टमितराद्दश्यतयातीर्थबुद्ध्याभावेनलोकरंजनार्थंतीर्थयात्रांकुर्वन्नपितत्रापिनतिष्ठतीतिभावः ॥ ५४ ॥ यर्हीति । हेईशश्रीकृष्ण । यर्हियदि । तेतव । सकलानियानितीर्थानितेषांनिषेवणंसेवनंतस्मिन्निच्छातर्हित्वदीयमुनयःत्वद्भक्ताऋषयःतत्रतत्रतीर्थेत्वांस्नापयंति । शालग्रामादिषुसन्निहितंत्वांपुरुषसूक्तादिमंत्रैरभिषिंचंतीत्यर्थः । उद्धृतजलेनैवइदंस्नानंनमज्जनमित्यतआह । जलमध्येत्यादिना । विवेकाःध्यानविशेषाःतैःजलमध्यंगतःप्राप्तःतंकुर्वंति । अघमर्षणस्नानावसरेऋतंचेत्यादिमंत्रैःजलांतःसन्निधापयंति । तत्तस्मात्अद्येदानींतीर्थयात्रयातवविधेयंकर्तव्यंकिंआस्ते नकिमपीत्यर्थः ॥ ५५ ॥ यत्रेति । यत्रयस्मिन्देशे । तवसंबंधिनस्त्वदीयाःतेचतेगुणाश्चतेषांकीर्तनंकथनंतच्चनर्तनंत्वत्पुरतोनर्तनंतच्चतेआदीयस्यस्मरणादेःतत्तथोक्तंतत् । भवति । तत्रैवतीर्थनिकराःसंवसंतिकिल । किलेत्यनेनसर्वाणितीर्थानिवसंतितत्रयत्राच्युतोदारकथाप्रसंगइतिपुराणप्रसिद्धिंद्योतयति । यदितीर्थजिगमिषुस्तर्हितदीयकृष्णमुकुंदादिनाम्नामुच्चारणंकर्तव्यंतेनतीर्थानिस्वयमेवायास्यंतीइतिभावः । सुजनाःसज्जनाः । समस्तंसुकृतं । नित्यनैमित्तिककर्मानुष्ठानजनितपुण्यंसकलंयत्रयस्मिंस्त्वयि । अर्पयंति । करोतियद्यत्सकलंपरस्मैनारायणायेतिसमर्पयेत्तदितिवचनात् । हेईशतस्यतेसकलंकार्यंकृत्यंपूर्णंआकलयामिजानामि कृतकृत्योभवामीत्यर्थः ॥५६॥ गंगादीति । हेईश । गंगाआदिर्येषांतानिगंगादीनितानिचतानितीर्थानिचतेषांनिकराः । यस्यतवपदाब्जंतस्यसंगःतस्मात् । पुनंति । यावैलसच्छ्रीतुलसीविमिश्रकृष्णांघ्रिरेणुपतनादधिकंपुनातीतिवचनात् । भुवि । भवान्अंतरंगेचित्तेयेषांतेतथोक्ताःमुनयः । अंगानांस्वशरीराणांअनुषंगःसंबंधःतस्यकरणंविधानंत

यर्हीश ते सकलतीर्थनिषेवणेच्छा तर्हि त्वदीयमुनयः खलु तत्र तत्र ॥ त्वां स्नापयंति जलमध्यगतं विवेकैः कुर्वंति तत्तव किमद्य विधेयमास्ते ॥ ५५ ॥ यत्र त्वदीयगुणकीर्तननर्तनादिस्तत्रैव तीर्थनिकराः किल संवसंति ॥ यत्रार्पयंति सुजनाः सुकृतं समस्तं तस्येश ते सकलमाकलयामि पूर्णम् ॥ ५६ ॥ गंगादितीर्थनिकराः किल यत्पदाब्जसंगात्पुनंति भुवि तानपि पावयंति ॥ अंगानुषंगकरणाद्भवदंतरंगाः किं गाहनेन तव तीर्थचयेषु तस्य ॥ ५७ ॥

स्मात् । तानपितीर्थनिकरानपिपावयंतिकिल । किलेत्यनेनतीर्थंकुर्वंतितीर्थानिस्वात्मस्थेनगदाभृतेतिवचनंस्मारयंति । तस्यतीर्थपवित्रीकरणसमर्थपादस्यत्वस निधानोपेतमुनिस्पर्शमात्रेणापितीर्थपवित्रीकरणसमर्थस्यतवतीर्थानांचयाःसमूहास्तेषुगाहनमवगाहनंतेन । किं नकिमपिप्रयोजनमित्यर्थः ॥५७॥ यद्रोमेति । ब्रह्मांडानांयेखर्परास्तेषांशतानिचअयुतानिचकोटयश्चताअपि । यस्यतवरोम्णःकूपस्तमपिपूरयितुंनशक्ताःनसमर्थाः । गंगापि । यस्यचरणस्तस्ययस्संनखः तस्यकेवलंसेकमात्रंनखमपिमज्जयितुमसमर्थेत्यर्थः । तत्तस्मात् । एतादृशबृहच्छरीरस्यतवमज्जनस्यविधिःकरणंतस्मिन्उर्व्यांतीर्थंक्कुत्रास्ति रो ममात्रमपिमज्जयितुंतीर्थंनपश्यामीतिभावः ॥ ५८ ॥ यद्वाग्ररुक्मिण्यांश्रीकृष्णस्यमनोनुरंजयितुंतदवयववर्णनंकुर्वन्सकलदेवताग्रगण्यायाःरुक्मिण्याः यात्रयासकलतीर्थयात्राफलंस्यादितिभावेनाह । भूकाशीमिति । भूरेवकाशीयस्याःसातथोक्तातां । काश्याधनुराकारतयाभूसदृशत्वात् । वरउत्तमोयोनाभिः

यद्रोमकूपमपि पूरयितुं न शेकुर्ब्रह्मांडखर्परशतायुतकोटयोपि ॥ गंगाऽपि यच्चरणसन्नखसेकमात्रं त
त्काऽस्ति मज्जनविधौ तव तीर्थमुर्व्याम् ॥५८॥ भूकाशीं वरनाभिमानसवतीं हारावलीजाह्नवीं नीवी-
दिव्यसरस्वतीं प्रविलसद्रोमालिसूर्यात्मजाम् ॥ कांचीशोभिकटिं कुचोच्चबदरीं नेत्रांतयुग्मप्रभाकावेर्यं
तरगास्यचंद्रसरसीं यात्राऽस्तु भैष्मीं प्रति ॥ ५९ ॥

सएवमानसंमानससरोवरंतद स्याअस्तीतितथोक्तातां । सरोवरवत्नाभेर्निम्नत्वात् । हारावल्येवजाह्नवीगंगायस्यास्सातां । गंगायाःश्रीविष्णुपादरजोभिषंगेणगौरत्वात्प्रवालादिमिश्रहाराणांगौ रत्वादितिभावः । नीव्येवदिव्यासरस्वतीयस्याःसातां । सरस्वतीनद्याःपीतवर्णत्वात्रुक्मिण्याःपीतांबरत्वात् । प्रविलसंतिसम्यग्विलसंतियानिरोमाणितेषामलिराव लिःसैवसूर्यात्मजायमुनायस्याःसातां । उभयोरपिनीलत्वात् । कांच्यारशनयाशोभिनीकटिर्यस्याःसातां । ध्वनिताकांचीपुरी । कुचावेवउच्चबदर्यौस्थूलबदरीफ लेयस्याःसातां । बदरिकाश्रमोध्वनिलब्धः । नेत्रयोरंतौतयोर्युग्मेतयोःप्रभेतेएवकावेर्यौद्वेधाविशीर्णकावेरीप्रवाहौतयोरंतरंमध्यंतद्गच्छतीतितत्तथोक्तं । यदास्य मेवचंद्रसरसीचंद्रपुष्करिणीयस्याःसातथोक्तातां । चंद्रमुखीत्वादितिभावः । भैष्मींप्रतितवयात्रास्तु । एकत्रैवसकलतीर्थनिषेवणस्यैवलाभादितिभावः ॥ ५९ ॥

क्षेत्रइति । हेईश । अस्मिन्मूलमाधवाख्यक्षेत्रे । त्वंभैष्म्याःभीष्मपुत्र्याःरुक्मिण्याःपाणिंपरिगृह्य । तदेतत्तीर्थं । जगति । नविद्यतेप्रतिमायस्यतदप्रतिमंअसदृशंविधेहि । अत्रैवरुक्मिणीविवाहेसत्यस्यैवसकलतीर्थोत्तमत्वप्राप्तेरितिभावः । संप्रतीदानीं । व्याप्तस्यतेतवयात्रां । ननंदयामः नांगीकुर्मइत्यर्थः । व्याप्तस्यगगनवच्चलनायोगात्कथंचित्स्वशक्त्याचलनसंभवेपियत्रजिगमिषोस्तत्रापिव्याप्ततयातवावस्थितिःकिंयात्रयेतिभावः ॥ ६० ॥ नित्यमिति । सशौरिःश्रीकृष्णःनित्यंसर्वदा । निजःस्वकीयःयःऊरुस्तस्मिन्स्थितालक्ष्मीरूपेणावस्थितासाचसाभीष्मपुत्रीचतस्याःनृत्यंतौघनौदृढौउत्तुंगावुन्नतौयौकुचौतयो

क्षेत्रे त्वमास्मिन्परिगृह्य भैष्म्याः पाणिं जगत्यप्रतिमं तदेतत् ॥ तीर्थं विधेहीश न कृष्णयात्रां व्याप्तस्य ते संप्रति नंदयामः ॥ ६० ॥ नित्यं निजोरुस्थितभीष्मपुत्रीनृत्यद्घनोत्तुंगकुचग्रहस्य ॥ प्रत्यूहशांतीरिव कांक्षमाणः चक्रेऽथ शौरिर्ग्रहशांतिकर्म ॥६१॥ रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायिनि ॥ संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते सर्गः पंचदशो मुदामयमभूत् स्वर्गीश्वराणां कुले ॥ इति श्रीरुक्मिणीशविजये पंचदशः सर्गः समाप्तः ॥१५॥

र्ग्रहः ग्रहणंतस्य । यःप्रत्यूहोविघ्नःतस्यशांतयःपरिहाराःताःकांक्षमाणःसन् । ग्रहाणांनवग्रहाणांशांतिरुपशमःयेनतत्तथोक्तंतच्चतत्कर्मचतत् । आदित्यादिनवग्रहपीडाशमनकारिकर्मतत्पूजात्मककर्मेत्यर्थः । चक्रेकृतवान् । ग्रहशांतिकर्मणिकृतेकुचग्रहणविघ्नशांतिर्भविष्यतीत्यभिप्रायेणैवग्रहशांतिकर्मकृतवानित्युपहासः । अनेनसकलदेवतापूज्यस्यश्रीकृष्णस्यग्रहपूजाकरणमौपचारिकमितिद्योत्यते ॥ ६१ ॥ रोम्णामिति । स्वर्गीश्वराणांदेवश्रेष्ठानांकुलेमुदांसंतोषाणां पंचदशःसर्गःस्थिरभूत् । बहुवारसंतोषोजातइत्यर्थः । काव्यपक्षेअयंपंचदशःसर्गःअभूदित्यर्थः । इतिश्रीरुक्मिणीशविजयव्याख्यायांपंचदशःसर्गःसमाप्तः

श्रीकृष्णाय नमः ॥ स्वयंवराया रुक्मिण्याः स्वयंवरविचारधीः ॥ शुद्धिं विदध्यादस्माकं बुद्धेर्बुधमनोरमा ॥ श्रीकृष्णस्यसकलदेवोत्तमत्वंप्रतिपादयितुंश्रीरु क्मिण्याःस्वयंवरंवर्णयत्यस्मिन्नध्याये । तत्रादौब्रह्मादीन्देवान्यथास्वरूपंवर्णयति । सखीतेष्वस्वरसबीजंप्रदर्शयति । स्वयंवरेति । स्वयमेववरःपत्युर्वरणंस्वयं वरःतस्मिन्समुद्योगःप्रयत्नःतस्मिन्सति । समागतान्विवाहदर्शनार्थमागतान्स्वयंभूश्चतुर्मुखःप्रमुखोयेषांतेतान् । सुरान्समीक्ष्य । सखीबुद्धिलक्षणासखी । इ त्थंवक्ष्यमाणप्रकारेण । रुक्मिणींबभाषे । रुक्मिणीस्वविवाहदर्शनार्थमागतान्ब्रह्मादीन्समीक्ष्यस्वबुद्ध्येत्थंविचारितवतीत्यभिप्रायः ॥ १ ॥ कल्पादीति । पुरा । कल्पस्यब्रह्मकल्पस्यआदिस्तस्यवारिउदकानितेषुकल्पादिवार्षुप्रलयोदकेष्वित्यर्थः । कमनीयःमनोहरोयःफणींद्रःशेषःसएवपर्यंकस्तस्मिन् । लक्ष्म्यासहकृतः आलयआवासोयेनसतथातस्य मुक्तानामोघास्तैःसेवितौपादौयस्यसमुक्तौघसेवितपादः तस्यमुक्तौघसेवितपदः पद्भन्नित्यादिनापादशब्दस्यपदादेशः । आदौ

स्वयंवरसमुद्योगे स्वयंभूप्रमुखान्सुरान् ॥ समागतान्समीक्ष्येत्थं बभाषे रुक्मिणीं सखी ॥ १ ॥ कल्पा
दिवार्षु कमनीयफणींद्रतल्पे लक्ष्म्या सहाऽदिपुरुषस्य कृतालयस्य ॥ मुक्तौघसेवितपदः किल नाभिदे
शात् पद्मं पुराऽजनि ततः सखि पद्मयोनिः ॥ २ ॥ आत्माभिधः स्वयमिति प्रथितो ऽवाच्यस्तातोऽस्य य
न्मुररिपुस्तदमुं मुनींद्राः ॥ ख्यात्या स्वयंभुवमजं विदुरात्मयोनिं चेतःस्थतच्छ्रुतिततिं सति वेदगर्भम् ॥ ३ ॥

विद्यमानःपुरुषःतस्यश्रीनारायणस्यनाभेर्देशःप्रदेशस्तस्मात्पद्ममजनिजातं । हेसखिरुक्मिणि । ततःपद्मात्पद्मंयोनिःकारणंयस्यसतथोक्तः । पद्मजातत्वव्युत्प त्त्यापद्मयोनिःपद्मयोनिवाच्योब्रह्माअजनि । अस्यपद्मजातत्वेविवदमानंप्रतितन्नामैवप्रमाणीकृतंभवति । अनेननारायणोत्पन्नत्वेनतत्सदृशत्वाभावोनंगीकारेऽ स्वरसबीजंसूचितम् ॥ २ ॥ ननुस्वयंभ्वादिपदवाच्यतयाअनुत्पत्तिरित्यतआह्वः । आत्माभिधइति । यद्यस्मात्कारणात् । आत्मेत्यभिधानामयस्यसतथोक्तः । स्वयमितिप्रथितःप्रसिद्धः स्वयंशब्दवाच्यइत्यर्थः । अइतिशब्देनवाच्यअवाच्यः । मुररिपुःश्रीनारायणः । अस्यचतुर्मुखस्यतातःजनकः । तत्तस्मात् । अमुंचतुर्मुखंमुनींद्राः । ख्यात्यानाम्ना । स्वयंश्रीकृष्णःभूरुत्पत्तिस्थानंयस्येतिस्वयंभूस्तं । आत्अकारशब्दवाच्यात्जातइत्यजस्तं । आत्मायोनिरुत्पत्तिकार

णंयस्यसआत्मयोनिस्तंविदुः । अन्यथानिरवकाशात्मयोनिःनाभिजन्मांडजइत्यादिजननप्रतिपादकशब्दविरोधादितिभावः । वेदानांगर्भःप्रतिपाद्यइतिभ्रांतिंनि
वारयन्नाह । चेतःस्थेति । हेसतिरुक्मिणि । चेतसितिष्ठतीतिचेतःस्था तच्छ्रुतितितिंतस्यश्रीविष्णोःप्रतिपादिकाःश्रुतयःतच्छ्रुतयःतासांततिःसमूहोयस्यसतथोक्तः।
तं । चतुर्मुखंवेदाःगर्भेयस्येतिवेदगर्भस्तंविदुः ॥ ३ ॥ महोर्मीति । महांतोयेऊर्मयःतेषांसंघाताःसमूहाःतेषांशतानितैराततंव्याप्तंयदंभःप्रलयजलंतस्मिन् अदृ
ष्टंसत्समीचीनंयत्विष्टरंस्वस्यपीठंतच्चतत्पद्मंचतस्यमूलंकारणंश्रीहरिःयेनसतथोक्तः । यतःपरमात्मनोनाभेरिदंपद्ममुत्पन्नंतस्यहरेःदर्शनशून्यइत्यर्थः । विधिं
तदुचितकर्मजानातीतिविधिज्ञः । विजिताअक्षवृत्तिरिंद्रियव्यापारोयेनसतथोक्तः । सविधिः । पितरंश्रीहरिंदिदृक्षुःसन् । तपस्तेपे । अज्ञानंतपश्चरणाचारबी
जम् ॥४॥ अथेति । अथतपश्चरणानंतरं । सब्रह्मा । फणानांसहस्राणितेषु । स्थितानियानिअमलरत्नानितेषांरश्मयःतैस्तृणीकृतातिरस्कृताअकौंडुपलक्षलक्ष्मीःअ

महोर्मिसंघातशतातताभस्यदृष्टसद्विष्टरपद्ममूलः ॥ विधिर्विधिज्ञो विजिताक्षवृत्तिस्तपः स तेपे पितरं दिदृ
क्षुः ॥ ४ ॥ अथांऽबुकल्लोलविलोलडोलांतरस्थनागाधिपभोगशय्याम् ॥ फणासहस्रामलरत्नरश्मितृणी
कृताकौंडुपलक्षलक्ष्मीम् ॥ ५ ॥ अपश्यदस्यां सह सिंधुपुत्र्या शयानमंभोजविशालनेत्रम् ॥ मनोज्ञदोर्दं
डसहस्रभासं प्रवालमृद्वंघ्र्यरुणीकृताशम् ॥ ६ ॥ सुवर्णवर्णांबरशोभिमध्यमगण्यलावण्यसमुद्रहृद्यम् ॥
विशालनीलाचलकल्पमल्पास्मिताननाधःकृतचंद्रदर्पम् ॥ ७ ॥

कौंश्चउडुपाश्चतेषांलक्षंतस्यलक्ष्मीःकांतिःययातां । अंबुनःप्रलयजलस्यकल्लोलास्तरंगास्तएव महत्सूल्लोलकल्लोलावित्यमरः । विलोलडोलातस्याअंतरंमध्यंत
स्मिन्स्थितःयःनागाधिपःशेषस्तस्यभोगःशरीरंसएवशय्यातां । अपश्यदित्युत्तरेणान्वयः । मुक्तौघसेवितपदइत्युक्तत्वात् मुक्तोयंशेषइतिद्रष्टव्यम् ॥ ५ ॥ अ
पश्यदिति । सब्रह्मा । अस्यांफणींद्रभोगशय्यायांसिंधुपुत्र्याक्षारसमुद्रस्यपुत्र्यालक्ष्म्यासह । शयानं अंभोजवत्पद्मवत्विशालानिनेत्राणियस्यसतथातं । म
नोज्ञाःमनोहराःयेदोर्दंडाःबाहुदंडाःतेषांसहस्रंतस्यभाःकांतिर्यस्यसतथातं । प्रवालवत्किसलयवत्मृदवःकोमलाःयेअंघ्रयःतैररुणीकृताआशादिशोयेनसतथातं
विष्णुमपश्यत् ॥ ६ ॥ सुवर्णेति । सुवर्णस्यवर्णमिववर्णोयस्यतत्तथोक्तंयदंबरं पीतवस्त्रमित्यर्थः । तेनशोभतइतिशोभितादृशंमध्यंयस्यसतथातं । अग

ण्यानियानिलावण्यानितान्येवसमुद्रस्तेनहृद्योमनोहरस्तं । विशालोयोनीलाचलइंद्रनीलपर्वतःतेनकल्पःसमानस्तं । अल्पंस्मितंयस्यतत् अल्पस्मितंयदाननं तेनअधःकृतःतिरस्कृतःचंद्रदर्पोयेनसतं अपश्यदित्यन्वयः ॥ ७ ॥ परिस्फुरदिति । परिस्फुरंतियानिकुंडलानितानिचहाराश्चकांच्यःरशनास्ताश्चकिरीटानिच मुद्राअंगुलीयकानिताश्चअंगदानिचतोरणानिनूपुराणिचतानिआद्यानियेषांतानितैः आभरणैःविराजितं । तिग्ममरीचिःसूर्यस्तस्यरोचींषीवरोचींषियस्यतत्त थोक्तं । यच्छरीरंतेनसंभासितःप्रकाशितःसर्वदेशोयेनसतथातंअपश्यदितिसंबंधः ॥ ८ ॥ विशालेति । ब्रह्मा । विशालंयद्वक्षस्स्थलंतस्मिन्शोभतइतिशोभितद्वं शंरत्नंकौस्तुभरत्नंयस्यसतथातं । विचित्राःभूषाअलंकारास्तासामावलयस्ताभिःभूषितानिअंगानिअवयवाःयेषांतेतथातैः विवृद्धभक्त्याअवनतैःनम्रैः । विमु

परिस्फुरत्कुंडलहारकांचीकिरीटमुद्रांगदतोरणाद्यैः ॥ विराजितं तिग्ममरीचिरोचिःशरीरसंभासितसर्वदेशम् ॥ ८ ॥ विशालवक्षस्स्थलशोभिरत्नं विमुक्तशक्रार्कविरिंचमुख्यैः ॥ विचित्रभूषावलिभूषितांगैर्विवृद्धभक्त्याऽवनतैः परीतम् ॥ ९ ॥ उन्नालाब्जवरातपत्रमहिराडुन्नम्रसिंहासनं सन्नद्धोर्जितमुक्तभृत्यनिकरं मान्योर्मिसच्चामरम् ॥ तन्नादाभिधदुंदुभिं शुभयशश्चिह्नोक्तिभिर्बंदिवत् तं नारायणचक्रवर्तिनमसावुन्मीलिताक्षं व्यधात् ॥ १० ॥

क्तायेशक्राश्चार्काश्चविरिंचाश्चतेमुख्याःप्रधानायेषांतेतथातैर्देवैः । परीतंपरिच्छन्नंतंश्रीहरिमपश्यदितियोजना ॥ ९ ॥ उन्नालेति । असौब्रह्माउद्गतंनालंयस्यतत् उन्नालंयदब्जंस्वनाभेरुपरिविद्यमानपद्ममित्यर्थः । तदेववरंउत्तमंआतपत्रंछत्रंयस्यसः तं । अहिराडेवशेषएवउन्नम्रमुन्नतफणावलिभिरूर्ध्वभागेनम्रंचसिंहासनंयस्यसतथातं । सन्नद्धाःशंखचक्रादिसन्नद्धयुक्ताःयेऊर्जितमुक्ताउत्तममुक्तास्तएवभृत्यास्तेषांनिकरोयस्यसतं । मान्याःयेऊर्मयस्तएवसच्चामराणियस्यसतं । तेषामूर्मीणांयोनादःसइतिअभिधायस्यसतथोक्तःसदुंदुभिर्यस्यसतं । नारायणचक्रवर्तिनंनारायणाख्यराजश्रेष्ठं । बंदिवत्स्तुतिपाठकइव । शुभानियशश्चिह्नानियासुतास्तथोक्तायाउक्तयःताभिःश्रीकृष्णयशोंकितस्तुतिवचनैरित्यर्थः । उन्मीलितानिविकसितानिअक्षीणियस्यसःतथातंव्यधात् । उ

न्मीलिताक्षइत्यनेनश्रीविष्णोर्ननिद्राकिंतुअक्ष्णांमुद्रणमेवेतिसूचितं । सुदर्शनधारिणिनारायणेचक्रंवर्तयतीतिव्युत्पत्त्यासाक्षादेवचक्रवत्त्वस्यस्वाभाविकत्वात् एकांतेपिचक्रवर्तिनःचिह्ननापगतमितिभावः ॥ १० ॥ रमेति । रमाचरमेश्वरश्चताभ्यामनुगृहीतःप्रेरितः । एषःब्रह्मा । अग्रेआदिकालेऽस्मिन् । क्रमात् । इदंसमस्तंजगत्ससर्जसृष्टवान् । सृजामितन्नियुक्तोहमितिवचनात् । सदाअच्युतस्यांघ्रीतयोःस्मरणंतेनधन्यः । अयं । यन्मेहृदौत्कंठ्यवताटतोहरिरितिवचना त् । तदीयाःयेभक्ताःतेषुविष्णुभक्तेषुअग्रगण्यःश्रेष्ठः । विष्णुप्रेरणाभावेसृष्टौसामर्थ्याभावः ध्यानेनधन्यत्वंचात्रास्वरसबीजमितिब्रह्माणमुद्दिश्यवचनमिदम् ॥ ११॥ इदानींवायुस्वरूपंवर्णयति । हेसखिरुक्मिणि । अयंपुरोवर्तीप्राणगणाःइंद्रियगणावातेषामधिनाथःअधीश्वरःमुख्यप्राणइत्यर्थः । स्वयंभुवाब्रह्मणा । सर्वगुणाःबलज्ञानादिसर्वशुभधर्मास्तैः । समानः । पूर्वमादिकाले । शिवादिदेवाःव्यवदंत । अहंश्रेष्ठोहंश्रेष्ठइतिविवादमकुर्वंत । अहंमुख्यमस्मीतितेऽब्रुवन्नि

रमारमेशानुगृहीत एषः क्रमात्ससर्जाग्र इदं समस्तम् ॥ सदाऽच्युतांघ्रिस्मरणेन धन्यस्तदीयभक्तेष्वयम
ग्रगण्यः ॥ ११ ॥ अयं सखि प्राणगणाधिनाथः स्वयंभुवा सर्वगुणैः समानः ॥ शिवादिदेवा व्यवदंत
पूर्वं ततोऽस्य सत्वं प्रकटीबभूव ॥१२॥ हरेर्मनुं जीवनिकायकाये जपन्नयं जीवयतीह विश्वम् ॥ निजां
कमारोप्य किलैनमार्ये जगत्पतिर्जातसुखं विधत्ते ॥ १३ ॥

तिश्रुतेः । ततोविवादानंतरंअस्यमुख्यप्राणस्यसत्वंबलंप्रकटीबभूव । तत्प्राणउत्क्रांतेऽपद्यततत्प्राणेप्रपन्नउदतिष्ठत् । तंदेवाअब्रुवन्त्वमुक्थमसीतिश्रुतेः । एवंशि वायुत्तमत्वेनसिद्धोप्ययंपूर्वोक्तब्रह्मसमानएव । नतुतत्पितृश्रीकृष्णसमानइत्यस्वरसबीजम् ॥ १२ ॥ हरेरिति । हरेर्मनुंहंसमंत्रःतं । जीवानांयोनिकायःसमू हःतस्यकायःशरीरंतस्मिन्स्थित्वाजपन्नयंमुख्यप्राणःइहलोकेविश्वंसर्वंजगत्जीवयति । हंसमंत्रस्यश्वासोच्छ्वासरूपत्वादितिभावः । हेआर्येश्रेष्ठेरुक्मिणि जगत्पतिःश्रीविष्णुः । एनंमुख्यप्राणं । निजःस्वकीयःअंकऊरुःतं । आरोप्य । जातंसुखंयस्यसतथातं । संपन्नानंदंविधत्तेकिल । अच्युतांकेस्वासीनमस्यनु तिनित्यवचःप्रवृत्तिमितिमुख्यप्राणध्यानादितिभावः । अत्रविष्णुमंत्रजापकत्वेनतद्दासत्वंतल्लालनार्हशिशुत्वंचास्वरसबीजम् ॥ १३ ॥

क्वचिदिति । सुराणांशिवादीनां । क्वचित्काले । रक्षसोवशोऽधीनःतस्यभावस्तत्ता । असुरावेशेनतद्वशताभवेत् । अमुष्मिन्मुख्यप्राणे । कदापिसारक्षोवशता नास्ति । तंवाहासुराऋत्वाविदध्वसुरितिश्रुतेः । अच्छिन्नाःकदाचिदपिविच्छेदरहिताःमुकुंदधर्माःहरिभक्त्यादयोयस्यसः । अयंमुख्यप्राणःभावीभविष्यन्यःक ल्पःतस्मिन् । विरिंचतामेष्यति ॥ १४॥ पयोब्धिजमिति । हेअंबुजाक्षिरुक्मिणि । एषःमुख्यप्राणःस्वयंपयोब्धेःजातंपयोब्धिजंक्षीरसमुद्रमथनोत्पन्नमित्यर्थः । दुर्विषहंसोढुमशक्यंतत्विषंप्राक्पूर्वंपपौ । शिवः । नष्टःजवःशीघ्रमारकत्वरूपोवेगोयस्यततत्तथोक्तंतत् । अल्पंमुख्यप्राणभुक्तशेषंस्वल्पविषंपपौ । वायुरस्माउ पायंथपिनष्टिस्माकुनंनमा । केशीविषस्यपात्रेणयद्रुद्रेणापिबत्सहेतिश्रुतेः । एषःमुख्यप्राणःहरेःनिदेशःआज्ञातस्मात् । प्रियायहरिभक्तायविमुक्तमपि मोक्षमपि

क्वचिद्धि रक्षोवशता सुराणां भवेदमुष्मिन्न कदापि साऽस्ति ॥ अयं किलाऽच्छिन्नमुकुंदधर्मो विरिंचतामे
ष्यति भावि कल्पे ॥ १४ ॥ पयोब्धिजं दुर्विषहं विषं प्राक् स्वयं पपौ नष्टजवं शिवोऽल्पम् ॥ विमुक्तमप्ये
ष हरेर्निदेशात् प्रियाय दातुं प्रभुरंबुजाक्षि ॥ १५ ॥ इहावतीर्यापि हनूमदाख्यो व्यधत्त सेवां सति भी
मरूपः ॥ विभोर्विधत्तेऽद्य स मध्वरूपी विधास्यतेऽन्यैस्त्रिदशैरसाध्याम् ॥ १६ ॥ स्वबुद्धिसख्येत्थमुदीरिता
सा कृपाकटाक्षेण निरीक्ष्य भैष्मी ॥ निजांघ्रिपद्मावनतौ सुतौ तौ स्वकांतमेतत्प्रभुमेव मेने ॥ १७ ॥

दातुंप्रभुःसमर्थः । विष्णुर्हिदातामोक्षस्यवायुश्चतदनुज्ञयेतिवचनात् ॥ १५ ॥ इहेति । हेसतिनिर्दोषेरुक्मिणि । यःवायुः । इहभूमाववतीर्यहनूमदितिआख्याय स्यसतथासन् । विभोःस्वामिनःश्रीरामस्य । अन्यैस्त्रिदशैर्देवैरसाध्यांअशक्यांसेवांव्यधत्तअकरोत् । भीमइतिरूपंयस्यसतथासन् विभोःश्रीकृष्णस्यसेवामद्यअ धुनाविधत्ते । मध्वइतिरूपंतदस्यास्तीतितथोक्तःसन्विभोर्वेदव्यासस्यसेवांसमीचीनमतप्रवृत्तिरूपांसेवांविधास्यतेकरिष्यति । अत्रापिसेवाकरत्वमस्वरसबीजम् ॥ १६ ॥ स्वबुद्धीति । साभैष्मीरुक्मिणी । स्वस्याःबुद्धिःसैवसखीतया । इत्थमुक्तप्रकारेणउदीरितासतिउक्तासतिनिजौयौअंघ्रीतावेवपद्मेतयोरवनतौनम्रौसु तौतौब्रह्मवायू । कृपायुक्तःकटाक्षःकृपाकटाक्षःतेननिरीक्ष्य । एतत्प्रभुंएतयोःब्रह्मवाय्वोःप्रभुंस्वामिनंश्रीकृष्णमेवस्वस्याःकांतंपतिंमेनेनिरूपितवती ॥ १७ ॥

भवोयमिति । हेसखिरुक्मिणि । अब्जमासनंयस्यसोब्जासनश्चतुर्मुखःतस्माल्लब्धंजन्मयस्यसतथोक्तः । सोयंभवःशिवः । अयंपुरोवर्तीविहंगानांपक्षिणांराजाविहंगराजःगरुडः । अयंपुरोवर्ती । अहीनांसर्पाणांईश्वरोऽहीश्वरःशेषः । मुकुंदसेवाभिरताएतेशिवगरुडफणीश्वराःसमानाःविज्ञानंचबलंचप्रमोदश्चयेषांतेतथोक्ताःकिलात्रास्वरसबीजंस्पष्टम् ॥ १८ ॥ समुग्धाकारेणोक्तक्रमेणैकैकंविविच्यवर्णयति । शर्वइति । हेदेविरुक्मिणिअयंशर्वःशिवःसुपर्वणांदेवानांयेरिपवोदैत्याःतेषांयोगर्वोऽहंकारःतस्यविभेदोविनाशःतस्मिन्दक्षःसमर्थःअतिशौर्यवानित्यर्थः । तदेवशौर्यमेकत्रश्रृंगग्राहकतयादर्शयति । पूर्वंपुरापुरत्रयंअजेयदैत्यसहितंपुराणांत्रयंततअजैषीत्किल अजयत्किल । गुणांतरंवदति । हर्यंघ्रीति । गौरीपार्वती । हरेःश्रीकृष्णस्ययदंघ्रितीर्थंपादतीर्थंतेनपरिपूर्णःकपर्दोजटाजूटोयस्यसतं ।

भवोयमब्जासनलब्धजन्मा विहंगराजोयमहीश्वरोयम् ॥ समानविज्ञानबलप्रमोदा मुकुंदसेवाभिरताः किलैते ॥ १८ ॥ शर्वः सुपर्वरिपुवर्गविभेददक्षः पूर्वं पुरत्रयमयं किल देव्यजैषीत् ॥ हर्यंघ्रितीर्थपरिपूर्णकपर्दमेनं गौर्यत्यसाध्यमपि तं वशयांबभूव ॥ १९ ॥ पुच्छेन कच्छपतनोः पवनस्य पृष्ठमच्छोऽवलंब्यसरिदर्णवशैलपूर्णाम् ॥ सिद्धार्थखंडमिव कुंडलिराट् सुपृथ्वीं पृथ्वीमयं किल बिभर्ति फणातपत्रे ॥ २० ॥ सोऽयं गरुज्ज निमरुज्जवचालिताद्रिद्वीपांबुराशिरहिवर्ण्यबलः सुपर्णः ॥ प्रादान्नियुध्य बलिना बलिनासमं यो गोमंतमूर्ध्नि मुकुटं निजदेवतायै ॥ २१ ॥

अत्यसाध्यंवैराग्याभिमानित्वात्स्त्रीभिर्वशीकर्तुमशक्यमपितमेनंशिवं । वशयांबभूव स्वीचकार । अत्रविष्णुपादोदकधारणंस्त्र्यंतरपरिग्रहश्चास्वरसबीजं । गौरीत्यनेनपरिगृहीतवनितांतरस्यातिसौंदर्यमस्वरसबीजंचापिध्वन्यते । अतिशयितसौंदर्यवद्वनितांतरोपेतस्त्याज्यइतिभावः ॥ १९ ॥ इदानींशेषमभिवर्णयति । पुच्छेनेति । अच्छःशुभ्रः । अयंकुंडलिराट्अहीश्वरःशेषः । कच्छपस्यकूर्मस्यतनुरिवतनुःशरीरंयस्यसतथा । तस्यपवनस्यवायोःपृष्ठंपृष्ठप्रदेशं । पुच्छेनस्वपुच्छप्रदेशेनअवलंब्यआश्रित्यसरितश्चअर्णवाश्चतैःपूर्णाअतएवसुपृथ्वींबहुविस्तारवतीं । पृथ्वींभूमिं । फणएवातपत्रंछत्रंतस्मिन् । सिद्धार्थस्यसर्षपस्यखंडःशकलःतमिवबिभर्तिकिल । एतादृशोपिश्रीकृष्णपुत्रवायुकूर्माश्रयइत्यत्रास्वरसबीजम् ॥ २० ॥ गरुडंप्रतिक्षिपति । हेसखिरुक्मिणि । अहिभिःशत्रुभूतसर्पैःवर्ण्यं

स्तुल्यंबलंयस्यसःतथोक्तः । सोयंसुपर्णः । गरुद्भ्यांपक्षाभ्यांजनिरुत्पत्तिर्यस्यसतथोक्तःयःमरुत्वायुस्तस्यजवःवेगःतेनचालिताअद्रयश्चद्वीपाश्चअंबुराशयः समुद्राश्चतेचयेनसतथोक्तः । अतिसमर्थइत्यर्थः । यःसुपर्णः बलंसामर्थ्यंअस्तीतिबलीतेन बलिनाविष्णुमुकुटापहारिणामहाबलिनासमंसार्धंनियुध्यगोमंतस्यगोमंताख्यपर्वतस्यमूर्धाअग्रभागःतस्मिन् । निजाचसादेवताचतस्यैस्वामिनेश्रीकृष्णायेत्यर्थः । मुकुटंकिरीटंततप्रादात् कथातुभागवतादौद्रष्टव्या । अत्रान्यसेवाकारित्वंविष्णुपरदेवताकत्वंचास्वरसबीजम् ॥ २१ ॥ पुनरपिसुपर्णशेषयोःस्वरूपंवर्णयति । सइति । सताक्ष्यःगरुडः । अन्येचतेसुराश्चतैः । इंद्रादिभिः । तपोभिरपिअसाध्यं कर्तृकरणयोस्तृतीया । विष्णोर्वाहोवाहनंतस्यभावस्तत्त्वं । तपोभिःसाधनैरवाप । अयमहीश्वरःशेषःअन्यसुरैरिंद्रादिभिअसाध्यंतस्यश्रीकृष्णस्यसंबंधितदीयंचतत्तल्पंचतस्यभावस्तत्त्वं । तपोभिरवाप । तौगरुडशेषौसुराणांस्वावरदेवानांविमुक्तिमार्गौमोक्षस्यमार्गभूतौकिल । किलेत्यनेनकेच

**स विष्णुवाहत्वमवाप तार्क्ष्यस्तपोभिरप्यन्यसुरैरसाध्यम् ॥ तदीयतल्पत्वमहीश्वरोऽयं विमुक्तिमार्गौ किलतौ सुराणाम् ॥२२॥ गरुत्मदंसाचलनीलमेघं फणींद्रहारोच्चयनीलरत्नम् ॥ उमेशहंसप्रियपादपद्मं पतिं सती सा चकमे रमेशम् ॥ २३ ॥ त्रिविष्टपेशोऽयमभूद्बलारिस्त्रिविक्रमश्रीचरणप्रसादात् ॥ विमथ्नता तेन पयःपयोधिं विचित्रसौभाग्यवतः कृतोऽसौ ॥ २४ ॥**

नदेवाःगरुडमाविश्यमुक्तिंगच्छंति । केचनशेषमाविश्येतिशास्त्रप्रसिद्धिंद्योतयति ॥ २२ ॥ पूर्वोक्तास्वरसबीजानिस्पष्टयंतीरुक्मिणीतद्विहायतत्पतिंश्रीकृष्णमेवैच्छदित्याहकविः । गरुत्मदिति । सासतीपतिव्रतारुक्मिणी । गरुत्मतःगरुडस्ययोंसःसएवाचलःपर्वतःतस्मिन्नीलमेघइववर्त । गरुडांसमारूढमित्यर्थः । फणींद्रःशेषःसएवहारोच्चयःहारसमूहःतस्मिन्नीलरत्नमिवमध्यनायकत्वेनविद्यमानंनीलरत्नमिवतमहींद्रतल्पेस्थितमित्यर्थः । उमेशएवहंसःहंसपक्षीतस्यप्रियमिष्टंपादपद्मंयस्यसतथातं । पादोदकस्यशिवेनशिरसिधृतत्वादितिभावः । रमेशंश्रीकृष्णं पतिं चकमे ॥ २३ ॥ इद्रंवर्णयति । त्रिविष्टपेशइति । हेसखिआर्येरुक्मिणि । अयंबलस्यबलनामकस्यासुरस्यारिःशत्रुरिंद्रः । त्रिविक्रमस्योपेंद्रस्यनारायणस्ययौश्रीचरणौश्रीपादौतयोःप्रसादःतस्मात् । त्रिविष्ट

पस्यस्वर्गस्यईशोऽभूत् । पयांस्येवक्षीराण्येवपयांसिउदकानितानिधीयंतेपूर्यंतेऽस्मिन्निति पयःपयोधिःक्षीरसमुद्रःतं । मथ्नतातेननारायणेनअसाविंद्रः । विचित्राणियानिसौभाग्यानितैःमहारत्नपारिजातादिभाग्यैःवृतःकृतः । अत्रास्वरसबीजंस्पष्टम् ॥ २४ ॥ तदेवसौभाग्यंविविच्यवदति । कल्पद्रुमइति । हेदेविरुक्मिणि । कल्पद्रुमःकल्पवृक्षः । करिवरःगजश्रेष्ठःऐरावतःकविभिर्वर्ण्यःयःवाजीहयउच्चैःश्रवाख्यश्चनित्यंअस्यवशःअधीनःतस्मिन् वर्ततेकिल । हेसखि । इंद्रस्य यत्पदंस्थानंतस्ययोग्यामहाविभूतिःपरमैश्वर्यंयस्यसतथोक्तः । इदिपरमैश्वर्यइतिधातोः । सोयमिंद्रःमध्येसभामध्येमहत्यत्आसनंसिंहासनंतत्गतःसन्दैवीं देवसंबंधिनींसभां । अजस्रंपरिपातिशास्ति ॥ २५ ॥ इदानींदेवतासमुदायंप्रतिक्षिपति । अयमिति । हेअग्र्येश्रेष्ठेरुक्मिणि । अग्र्यइतिसंबोधयंतीस

कल्पद्रुमः करिवरः कविवर्ण्यवाजी नित्यं वशेऽस्य किल देवि सभां स दैवीम् ॥ मध्ये महासनगतः परिपात्यजस्रमिंद्रोऽयमिंद्रपदयोग्यमहाविभूतिः ॥ २५ ॥ अयं सुराणां गुरुरेष धर्मः सुधाकरोऽसौ स सहस्ररश्मिः ॥ अयं च रत्नाकरशब्दितोऽग्र्ये महत्त्वमेषामभिधैव वक्ति ॥ २६ ॥ इमे सुराः श्रीपतिनित्यसेवावियोगभीत्याऽनिमिषा विनिद्राः ॥ प्रपेदिरे तत्करुणाप्रभूतसुधारसास्वादनतोऽमरत्वम् ॥ २७ ॥ मरुत्वदत्यूर्जितभाग्यहेतुं सुरौघसंजीवनमूलभूतम् ॥ नरांस्तृणीकृत्य जगाम भैष्मी परिस्फुरद्भूषणभूषितांगी ॥ २८ ॥

खीत्वमेतेभ्योपिश्रेष्ठाकथम वरान्वरयसीतिध्वनयति । अयंपुरोवर्तीबृहस्पतिःसुराणांगुरुः । एषःयमःधर्मः । धर्मप्रवर्तकत्वात्धर्मनामा । असौचंद्रःसुधाकरःअमृतकरःचंद्रः । सःसूर्यःसहस्ररश्मिः । अयंवरुणश्चरत्नाकरइतिशब्दैःसंजातोस्येतिरत्नाकरशब्दितःरत्नाकरशब्दवाच्यइत्यर्थः । एषांबृहस्पत्यादीनांमहत्त्वंश्रेष्ठ्यंअभिधैवनामैववक्ति ॥ २६ ॥ इमे सुराइति । हेअग्र्ये । श्रीपतेःश्रीभर्तुःश्रीकृष्णस्य यानित्यसेवातस्याःवियोगोविच्छेदःतस्यभीतिःतया । नविद्यतेनिमिषश्चक्षुर्निमेषणंयेषांते । विगतानिद्रायेषांते विनिद्राःअस्वप्नाः । इमेसुराः । तस्यलक्ष्मीपतेःयाकरुणातयाप्रभूतःयःसुधारसःतस्यास्वादनंतस्मादिनिततः । नम्रियंतइत्यमराः तेषांभावस्तत्त्वंप्रपेदिरे ॥ २७ ॥ मरुत्वदिति । मरुत्वतःइंद्रस्ययत्अत्युच्छ्रितभाग्यंतस्यहेतुःतं । सुरौघःसुरसमूहःतस्यसंजीवनंयदमृतंतस्यमूलभूतःकारणभूतःतं । श्रीकृष्णं । परिस्फुरंतियानिभूष

णानितेषांभूषितानिभूषणीभूतानिअंगानिअवयवाःयस्याःसातथोक्ता। भैष्मीरुक्मिणीनरान्तृणीकृत्यजगाम श्रीकृष्णवरणार्थंजगाम॥ २८ ॥ इदानींवरणीयश्रीकृष्णस्यमहत्त्वंपूर्वोक्तेभ्योविशिनष्टि। अयमिति। हेसखिअयंश्रीकृष्णः। मुकुंददातीतिमुकुंदःमोक्षदःकिल। चित्ज्ञानंसाचप्रमोदःआनंदःसचचित्प्रमोदौतावेवतन्मयानिअव्ययांगानिनाशरहितांगानियस्यसतथोक्तः। अखिलदोषाःतैःशून्यःरहितः। गुणैरंबुराशिरिवसमुद्रइवगुणांबुराशिः मोक्षप्रदत्वादिगुणसमुद्रः। श्रीकृष्णः। विश्वजनःसमस्तसज्जनःतस्यगुप्त्यैरक्षणायास्मिन्भूतले। अवातरत्किलअवतारंचकारकिल॥ २९ ॥ जगदिति। हेसखि। जगतोविश्वस्ययाजनिरुत्पत्तिःसाचस्थेमास्थितिःसचलयोनाशःसचतेआदयोयेषांतेतथोक्ताःतेचतेधर्माश्च आदिशब्देनज्ञानाज्ञानबंधमोक्षादिकंगृह्यते। शास्त्रंयोनिःप्रमा

अयं मुकुंदः सखि चित्प्रमोदमयाव्ययांगोऽखिलदोषशून्यः॥ अवातरद्विश्वजनस्य गुप्त्यै गुणांबुराशिः किल भूतलेऽस्मिन्॥ २९ ॥ जगज्जनिस्थेमलयादिधर्मा भवंत्यमुष्मात् किल शास्त्रयोनेः॥ अमुष्य साम्यं कतमः सुराणामुपैति यद्रोमसु विश्वकोशाः॥ ३० ॥ समस्तवेदाः किल सेतिहासाः पुराणयुक्ताः स्मृतिभिः सहैनम्॥ समानशून्यं प्रभुमामनंति प्रमथ्य योऽब्धिं लभते स्म लक्ष्मीम्॥ ३१ ॥

णंयस्यसतथोक्तःतस्मात्। अनेनोक्तवक्ष्यमाणश्रीकृष्णमाहात्म्येषुशास्त्रंप्रमाणमित्युक्तंभवति। जन्माद्यस्ययतःशास्त्रयोनित्वात्इत्यादिब्रह्मसूत्रार्थोयमितिसूच्यते। अमुष्मात्श्रीकृष्णात्। भवंतिकिल। यस्यश्रीकृष्णस्यरोमाणिलोमानितेषुविश्वेचतेकोशाश्चविश्वकोशाः। समस्तब्रह्मांडानितिष्ठंति। अमुष्यश्रीकृष्णस्यसाम्यंसुराणांमध्ये। कतमःसुरःउपैतिप्राप्नोति। नकोपीत्यर्थः। एतादृशमाहात्म्यस्यान्यत्राभावादितिभावः॥ ३० ॥ समस्तेति। सेतिहासाःइतिहाससहिताःपुराणयुक्ताः। समस्तवेदाःस्मृतिभिःसहएनंप्रभुंश्रीकृष्णं। समानशून्यंआमनंतिवदंति। नतेविष्णोजायमानोनजातः। नास्तिनारायणसममित्यादिः। युक्तिंचाह। प्रमथ्येति। यःश्रीकृष्णः। अब्धिंप्रमथ्यलक्ष्मींलभतेस्म अलभत। तवमूलरूपेपतिरयंअधुनापिवरणार्हइत्यनेनसूचितम्॥ ३१ ॥

यदीयेति । अंडमेवब्रह्मांडमेवकटाहः पात्रविशेषः तस्यभेदीभेदनशीलः । यस्यसंबंधीयदीयः सचासौपादश्च । विधातुःब्रह्मणःयौहस्तौताभ्यांक्रियमाणंयदर्हणं पादप्रक्षालनादिरूपपूजातस्यसारवेदी । हेमृगाक्षिसोयंश्रीकृष्णःविविधाःयेअवताराःतैर्वियोजितःअत्युद्धतभूमिभारःअतिशयभूमिभारोयेनसथोक्तः । अनेनापिसर्वोत्तमत्वमेवस्पष्टीकृतंभवति ॥ ३२ ॥ विवेकेति । विवेकएवबुद्धिरेवसखितयाइत्युक्तप्रकारेणविबोधिता । आत्तागृहीतामालाययासातथोक्ता । साकमलारुक्मिणी । तूष्णींबभूव । लज्जावशादयमेवममेपतिर्भूयादितिनोक्तवतीत्यर्थः । तदापरंकेवलंप्रहर्षचिह्नानिरोमोद्गमादीनि । तंप्रभुंश्रीकृष्णंरुक्मिणीआकांक्षतीत्यूचुः ॥ ३३ ॥ तयोरिति । मुहूर्तःअवधिर्यथाभवतितथामुहूर्तावधिग्रहणमुहूर्तपर्यंतमित्यर्थः । तयोःरुक्मिणीश्रीकृष्णयोःमध्येदत्तंजवनिकाकारे

**यदीयपादोऽडकटाहभेदी विधातृहस्तार्हणसारवेदी ॥ मृगाक्षि सोऽयं विविधावतारवियोजितात्युद्धतभूमिभारः ॥ ३२ ॥ विवेकसख्येति विबोधिता सा बभूव तूष्णीं कमलात्तमाला ॥ प्रहर्षचिह्नानि परं तदोचुः प्रभुं तमाकांक्षति रुक्मिणीति ॥ ३३ ॥ तयोर्मुहूर्तावधि मध्यदत्तं पटं विनिर्भिद्य मिथः स्पृशंत्यः ॥ प्रभाः सदाऽखंडितयोगभाग्यं विबोधयंति स्म विवेकभाजः ॥ ३४ ॥ सीतास्वयंवरमहोत्सवगानकाले जातौ रमापुलकमाधवमंदहासौ ॥ सा जानकीयमयमेव हि रामचंद्रः किं तन्मुहूर्तकथयेति हि शंसतुः स्म ॥ ३५ ॥**

णस्थापितं । पटं । विनिर्भिद्य । मिथः । रुक्मिणीप्रभाःश्रीकृष्णंश्रीकृष्णप्रभाःरुक्मिणीमितिपरस्परंस्पृशंत्यःपटस्यसूक्ष्मत्वात्कांत्योरतिशयितत्वाच्चअन्योन्यागमनमितिभावः । प्रभाःकांतयः विवेकंज्ञानंभजंतीतिविवेकभाजःतान्ज्ञानिनःपुरुषान्प्रति । सदाऽखंडितयोगःअविच्छिन्नसंबंधस्तस्यभाग्यंतत्विबोधयंतिस्म । योगविघटनार्थंतयोर्मध्येपटेदत्तेपियोगविघटनाभावादितिभावः ॥ ३४ ॥ सीतेति । सीतायाःयःस्वयंवरःसएवमहोत्सवःतस्यगानकालःतस्मिन्मंगलार्थंसीतास्वयंवरवर्णनगाथाकालइत्यर्थः । जातौ । रमायाःरुक्मिण्याःयःपुलकःसचमाधवस्यश्रीकृष्णस्ययोमंदहासःसचतौ साजानकीसीताइयंरुक्मिणीसःरामचंद्रःअयमेवश्रीकृष्णएव । अतःतयोःरुक्मिणीश्रीकृष्णयोःमुहूर्तकथयामुहूर्तावधिकथनेनकिंप्रयोजनमितिशंसतुःस्म । अन्ययोर्विवाहवार्तायांततोन्ययोः

पुलकादौकारणाभावेनसीतारामाविविदिदृक्षूणांमतिरासीदितिभावः ॥ ३५ ॥ आसीदिति । परस्परेणयदीक्षणंतदेवकर्मतस्ययःकालस्तस्मिन् । मुरारेःश्रीकृष्णस्य नयनंभैष्मीमुखंरुक्मिणीमुखंतदेवांबुजंतत्तूगतंनिपतितमासीत् । तस्याःरुक्मिण्याःनयनंचमुरारेर्नाभिरेवसरसीसरोवरंसैवनिलयोगृहंयस्यतत्तथोक्तंआसीत् । तत्रनिपतितमित्यर्थः । अनेननवोढायाःलज्जासूच्यते । तदेतत्श्रीकृष्णनयनस्यरुक्मिणीमुखांभोजेपातःरुक्मिणीनयनस्यश्रीकृष्णनाभिसरस्यांपातइत्येतत् युक्तंहि । यद्यस्मात्कारणात्असौश्रीकृष्णःअर्कःदृशियस्यसःअर्कदृक् । इयंरुक्मिणी उत्पलाक्षी । अर्कस्यकमलप्रियत्वात्उत्पलस्यसरोजातत्वे नस्थित्यर्थंतदपेक्षितत्वादितिभावः ॥ ३६ ॥ गुडेति । बंधूनांवर्गःसमूहःतस्मिन् । गुडैरन्वितास्ताभिः । शुभाःयाःजीरिकाःताभिः । परस्परंपरस्परोवर्षतिसति । वक्षसिस्थितायाअंभोधिसुतारमातयाजितःश्रीकृष्णःरमायाःश्रीकृष्णवक्षःसमाक्रम्यस्थितत्वेनतयाजितइत्यर्थः । तस्याःरुक्मिण्याःपक्षाःसहायास्तैः रु

आसीत्परस्परनिरीक्षणकर्मकाले भैष्मीमुखांबुजगतं नयनं मुरारेः॥ तस्याश्च नाभिसरसीनिलयं तदेतत्
युक्तं यदर्कदृगसावियमुत्पलाक्षी ॥ ३६ ॥ गुडान्विताभिः शुभजीरिकाभिः परस्परं वर्षति बंधुवर्गे ॥ व
क्षस्थितांभोधिसुताजितस्तत्पक्षैः प्रयुक्तं प्रथमं बभार ॥ ३७॥ आकंठमापादतलान्मुरारेः नेत्रांतनी
लोत्पलचारुमालाम् ॥ श्रीः संदधे तत्क्षणहृष्टरोमसत्कंचुकं श्रीपतिरात्मपत्न्याम्॥ ३८ ॥

क्मिणीपक्षीयैरित्यर्थः । प्रयुक्ताःगुडजीरिकाःप्रथमंपूर्वं । बभारधृतवान् । वधूवरयोर्मध्येपुरुषप्रयुक्तंजीरकादिकंप्रथमंकन्योपरिपततिचेत्पुरुषोजय वान् । कन्याप्रयुक्तंप्रथमंपुरुषोपरिपततिचेत्कन्याजयतीतिलोकप्रवादः । अत्रचरमारूपेणश्रीकृष्णवक्षःसमाक्रम्यस्थितायाःकन्यायाःरुक्मिण्याःजयः स्पष्टएवेतितत्प्रयुक्तजीरिकाःश्रीकृष्णएवप्रथमंबभारेतिभावः ॥ ३७॥ आकंठमिति । श्रीरुक्मिणीनेत्रांताएवनीलोत्पलानितेषांचारुमालातां । मुरारेःश्री कृष्णस्यपादयोस्तलंतस्मात् । आआरभ्यकंठात्आपर्यंतंआकंठं । अव्ययीभावसमासस्यानित्यत्वात् आपादतलादित्यत्रभिन्नंपदं । आकंठमित्यत्रसम स्तत्वादेकंपदं । संदधेसाधितवती । लज्जावशात्मुखमदृष्ट्वापादतलमारभ्यक्रमेणकंठपर्यंतंदृष्टवती । मालापिपादमारभ्यकंठपर्यंतस्थानीयेत्यर्थः । श्रीपतिः ।

आत्मपत्न्यांभार्यायांरुक्मिण्यांतस्यनिरीक्षणस्यक्षणःकालःतस्मिन्लावण्यभरितस्यभर्त्रवयवनिरीक्षणकालेहृष्टानिरोमाणिपुलकानितान्येवस

श्रीकृष्णः । आत्मपत्न्यांभार्यायांरुक्मिण्यांतस्यनिरीक्षणस्यक्षणःकालःतस्मिन्लावण्यभरितस्यभर्त्रवयवनिरीक्षणकालेहृष्टानिरोमाणिपुलकानितान्येवस
त्कंचुकंतत्संदधे । श्रीकृष्णदर्शनेनरुक्मिण्याःरोमांचोजातइतिभावः । भर्तृदर्शनजनितानंदस्यहृदंतरजृंभणात्बहिःतत्परितःस्थितेषुकरोरःपृष्ठदेशेष्वेवरोमोद्गम
स्यजातत्वात्तस्यैवकंचुकोपमा । विवाहकालेकन्यकयामालादातव्यावरेणकंचुकादिकंमितितदुभयं । किंबाहेनेत्येवमेवताभ्यांकृतमित्यर्थः ॥ ३८ ॥ उग्रो
यमिति । हेसखिरुक्मिणि । अयंशिवः । उग्रःक्रूरत्वेनउग्रनामा । हेअमले । अयंवायुःचंचलः । हेरमेरुक्मिणि । सोयंशेषःगूढाअदृश्यमानाःपादाःयस्यसः
गूढपात् । असौब्रह्माद्यद्धः । अयमग्निःज्वलनःज्वलमानः । एषसूर्यस्तपनःसंतापकर्ता । असौगरुडःसत्समीचीनंवक्रतुंडंवक्रवदनंयस्यसतथोक्तः । हेमुग्धेम
नोहरे । एषःद्वादशानांमध्येपूषनामकादित्यः । नविद्यंतेदंतायस्यसोदंतकःदंतरहितः तस्मात्पूषाप्रपिष्टभागोदंतकोहीतिश्रुतेः । हेदेवि । असौवरुणःजलराड्ड

उग्रोयं सखि चंचलोऽयममले सोयं रमे गूढपाद्वृद्धोऽसौ ज्वलनोऽयमेष तपनः सद्वक्रतुंडो ह्यसौ ॥ मुग्धेऽदं
तक एष देवि जलराट् गोत्रासहोऽसौ क्षितावित्याद्याभिधयैव धिक्कृतसुराः श्रीरासदाच्युतम् ॥ ३९ ॥
वेधा वैदिकमौलिरेष पवनो मंत्रं जपन् संततं शर्वोऽसौ सुविरक्तधीस्स मघवा व्यापारभाराकुलः ॥
सूर्यः पर्यटनप्रियः स तु शशी दोषाकरोऽसौ स्मरोऽनंगश्चेत्यखिलानुपेक्ष्य कमला वव्रे यदूनां पतिम् ॥ ४० ॥

लयोरभेदात्जडराट्मूर्खराट्इतिनिंदाध्वनिः । असौइंद्रःक्षितौगोत्रासहः पर्वतविरोधी । कुलविरोधीतिध्वनिः । इतिआद्यायस्याःसाइत्याद्यासाचसाअभिधाच
तयैवइतिव्युत्पन्नतत्तन्नाम्नैवेत्यर्थः । धीक्कृताःसुराःययासातथोक्ता । श्रीःरुक्मिणी । अच्युतंश्रीकृष्णं । आससादमालासमर्पणार्थंश्रीकृष्णसमीपमागत
वती ॥ ३९ ॥ अंग्यंतरेणदेवोपेक्षानिमित्तमाह । वेधाइति । वेधाःब्रह्मा । वैदिकेषुवेदज्ञेषुमौलिःश्रेष्ठः । छांदसशिरोमणिरित्यर्थः । एषपवनः संततं । मंत्रो
हंसमंत्रःतं । जपन्जपशीलइत्यर्थः । असौशर्वःशिवः । सुविरक्तासम्यग्विषयरागरहिताधीर्यस्यसतथोक्तःविरक्तइत्यर्थः । मघवाइंद्रः । व्यापारःत्रैलोक्य
पालनरूपोव्यापारःसएवभारःतेनआकुलःपूर्णःपीडितइतिध्वनिः । सूर्यःपर्यटनप्रियःपर्यटनप्रीतिमान्सदासंचरणशीलइत्यर्थः । सः शशीतुदोषांनिशांकरोतीति

दोषाकरःनिशाकरःदोषाश्रयइतिध्वनिः। असौस्मरःअनंगश्चशरीररहितः । चशब्देनअकर्णःशेषःपक्षपातीगरुडःप्रेतपतिर्यमःइतितेषुदोषस्यविद्यमानत्वाम् । अखिलान्पूर्वोक्तान्सर्वानुपेक्ष्यकमलारुक्मिणीयदूनांपतिंकृष्णंवव्रेवृतवती ॥ ४० ॥ पुत्रइति । पद्माद्भवतीतिपद्मभूःब्रह्मा यस्यपुत्रः। फणिपतिःशेषःयस्यशय्या । खगेशःपक्षीशःगरुडःयस्यरथः । शंभुःशिवःयस्यचरणांबुपादजलंततूमौलौयस्यससतथोक्तः ।अगंपर्वतंभिनत्तीतिअगभित्इंद्रः । येनकृष्णेनदत्तंयत्साम्राज्यंवामनरूपेणबलेरपहृत्यदत्तसाम्राज्यमित्यर्थः । तत्भुनक्तीतितथोक्तः । विधुरवीचंद्रसूर्यौ । नित्यंसर्वदायस्यविष्णोःपदमाकाशंतत्संगतौप्राप्तौहरिचरणभजकाविति ध्वनितोर्थः । सावधूः । श्रीः लक्ष्मीः । यस्यश्रीकृष्णस्यवल्लभाप्रिया । तंवर्यंउत्तमंद्वारकानायकंश्रीकृष्णंसासुदतीस्त्रीरुक्मिणीवरयांबभूव वृतवती ॥ ४१ ॥ यावाइति । यामालिका । चंपकानांमालायांग्रथितचंपकपुष्पाणांसंपदाश्रिया । अब्जमेववसतिःनिवासस्थानंयस्यसतथोक्तः

पुत्रो यस्य स पद्मभूः फणिपतिः शय्या खगेशो रथः शंभुर्यच्चरणांबुमौलिरगभिद्यद्दत्तसाम्राज्यभुक् ॥
नित्यं यत्पदसंगतौ विधुरवी यद्वल्लभा श्रीर्वधूस्तं वर्यं वरयांबभूव सुदती सा द्वारकानायकम् ॥ ४१ ॥
या वै चंपकसंपदाऽब्जवसतेर्दूर्वाश्रिया स्वात्मनः केतक्या विभवेन कृत्तिवसनस्यांभोजकांत्या विधोः ॥
सन्नीलोत्पलशोभया दिनमणेः श्रीमत्तुलस्याऽमता हेरंबस्य हरेः परं समुचिता सा मालिका शोभते ॥४२॥

तस्यब्रह्मणः भ्रमरस्येतिध्वनिः। तस्यापिमधुपानार्थत्वेनाब्जवसतित्वात्। अमताअप्रियावै भ्रमरचंपकयोर्विरोधादितिभावः।दूर्वाश्रियादूर्वाणांकांत्या स्वात्मनः दुर्गारूपायाःस्वस्याअमता । कृत्तिःगजचर्मवसनंयस्यसतथोक्तस्तस्यशंकरस्य केतक्याःविभवेनअमताऽप्रिया । नकेतक्याचशंकरमितिस्मृतेः । अंभोजकांत्यापद्मकांत्याविधोश्चंद्रस्यामता । चंद्रांभोजयोर्विरोधादितिभावः । संतिउत्तमानियानिनीलोत्पलानितेषांशोभयादिनमणेःसूर्यस्यामताअप्रिया सूर्योत्पलयोर्विरोधादितिभावः । श्रीमत्तुलस्याहेरंबस्यविनायकस्यामता । नतुलस्याविनायकमितिस्मृतेः । परंकेवलंहरेःश्रीकृष्णस्यसमुचितायोग्यासकलपुष्पैरपिहरिपूजायाःकर्तुंयोग्यत्वात् । नाक्षतैरर्चयेद्विष्णुमित्युक्ताक्षतानांमालायामभावादितिभावः । सामालिकाशोभते ॥ ४२ ॥

हरेरिति । प्रमोदोत्थितासंतोषादुत्थितारोमराजिःरोम्णांपरंपरायस्याःसातथोक्ता । रमारुक्मिणी । विष्णोर्निवेदितान्नेनयष्टव्यंदेवतांतरमितिस्मृतौ । हरेःप्रसादः
भुक्तशेषःतंएकंकेवलंभुंजतेअनुभवंतीतितथोक्ताःतेषांहरेःसमर्पितवसनमाल्यगंधादिधारणशीलानामित्यर्थः । सुराणामिमां । अप्रसादरूपांमालांकथंदास्या
मीतीवमुकुंदकंठःश्रीकृष्णकंठस्तस्मिन्समर्पयामास ॥ ४३ ॥ सेति । व्यालोलाःयेहाराःतैरुज्ज्वलाशोभमाना । सारुक्मिणी । धारायाःदानधारायाःयान्यंबू
निजलानितेषांकदंबकंसमूहस्तेनसहशोभनंप्रेमसुप्रेमतस्मात्संजातंअश्रुसुप्रेमाश्रुतस्यधारातां । हरेःश्रीकृष्णस्य । आवेद्य । आजन्मालिकयाप्रकाशमानमा
लया । समं । प्रणयएवस्नेहएवसन्मालासमीचीनमालातां । आवेद्य । नेत्रांतःनेत्रकटाक्षःतेन । सुनीराजनं आवेद्य । शुचिस्मितमेवशोभनस्मितमेवअमृतरसाःअ

हरेः प्रसादैकभुजां सुराणामिमां प्रदास्यामि कथं त्वितीव ॥ रमा प्रमोदोत्थितरोमराजिः समर्पयामास
मुकुंदकंठे ॥ ४३ ॥ सा धारांबुकदंबकेन सह सुप्रेमाश्रुधारां हरेर्भ्राजन्मालिकया समं प्रणयसन्मालां
सुनीराजनम् ॥ नेत्रांतेन शुचिस्मिताऽमृतरसैर्नैवेद्यमावेद्य तत्पार्श्वं मंदमुपाश्रयत् फलमिदं व्यालोल
हारोज्ज्वला ॥ ४४ ॥ नार्योऽक्षतान् प्रववृषुर्नवकुंकुमाभान् संगीतमंगलकथाः समलंकृतांग्यः ॥ सौवर्ण
विष्टरगतौ सदयैरपांगैः कन्यावरौ च फलमक्षतमेव तासाम् ॥ ४५ ॥ मृतजलानितैः । नैवेद्यं । आवेद्यसमर्प्य । फलमि

वअभिषेकपुष्पमालानीराजननैवेद्यादिभिःहरेःपूजायांकृतायांतत्सामीप्यगमनमोक्षलक्षणफलमिव । तत्पार्श्वंश्रीकृष्णपार्श्वं । तत् । मंदंशनैःयथाभवतितथाउ
पाश्रयत् ॥ ४४ ॥ नार्यइति । समलंकृतानिअंगानिअवयवाःयाभिस्ताः तथोक्ताः । संगीताःसम्यग्गीताःमंगलकथाःयाभिस्ताःतथोक्ताः । नार्यः । नवंयत्
कुंकुमंतस्याभेवाभायेषांतेतथातान् । अक्षतान्प्रववृषुः । सुवर्णस्यविकारःसौवर्णंसुवर्णकृतमित्यर्थः।यद्विष्टरंपीठंततद्गतौकन्यावरौचरुक्मिणीश्रीकृष्णौच । दयया
सहिताःसदयाःतैः । अपांगैर्नेत्रांतैः । तासांस्त्रीणांअक्षतमेवनाशरहितमेव । फलंमोक्षफलं । ववृषतुःअक्षतदानस्याक्षतमोक्षलक्षणमुचितमितिभावः ॥ ४५ ॥

गृहीतेति । गृहीतौपाणीयाभ्यांतौतथोक्तौ । वधूवरौरुक्मिणीकृष्णौ । आस्यगंस्वमुखेस्थितंमुखादिद्रश्चाग्निश्चेतिश्रुतेः । तमग्निं । रम्याचसारहस्यगोष्ठीचत स्यां । रमणसमयेमनोहरशृंगारवचनगोष्ठ्यामित्यर्थः । आत्मीयंस्वकीयंविधातुंकर्तुमिव । लाजैःसमेधितोऽभिवृद्धोयोऽग्निस्तस्यप्रदक्षिणातां । चक्रतुःकिल ॥ ४६ ॥ ततइति । ततोनंतरं । चतुर्थेदिवसे । प्रहृष्टौएतौरुक्मिणीश्रीकृष्णौ । चिरंदीर्घकालं । रतमावयोःश्रुतंतस्मिन्सति । तल्पाकारतनुर्यस्यसतस्मि न् । फणींद्रेशेषे विलंबिनिरतावसानपर्यंतंतल्पतयास्मत्सन्निधावेवस्थितेसति । क्ष्मांभूमिं । वहतेतिधारयतेतिबुद्ध्या । नागबलिंनागानांगजानांबलिंपूजांप्रचक्र तुःकिल । दिग्गजैःयुष्माभिःसहभूमंडलधारिणिशेषेअस्मद्भोगार्थंतल्पतयाभूमेरुपर्येवस्थितेसति । यूयमौदासीन्यंविहायक्ष्माधारयतेतिधियातद्बलिरित्युत्प्रे

गृहीतपाणी किल चक्रतुस्तौ प्रदक्षिणां लाजसमेधिताग्नेः ॥ वधूवरौ रम्यरहस्यगोष्ठ्यां विधातुमात्मीय मिवास्यगं तम् ॥ ४६ ॥ ततश्चतुर्थे दिवसे किलैतौ चिरं रते तल्पतनौ फणींद्रे ॥ विलंबिनि क्ष्मां वहतेति नूनं प्रचक्रतुर्नागबलिं प्रहृष्टौ ॥ ४७ ॥ सा मंदस्मितमौक्तिकेन सदपांगाख्यैर्हयैर्हृत्पुरा वक्षोजद्विरदेन का यकनकाख्योद्भूतरोमानुगैः ॥ तत्संसक्तमनोरथेन विविधांगश्रीविचित्रांबरैस्तद्योग्यामृतसाधनाधरभुवा संतर्पयामास तम् ॥ ४८ ॥

क्षा ॥ ४७ ॥ सेति । सारुक्मिणी मंदस्मितमेवमौक्तिकंतेन । संतःयेअपांगास्तइतिआख्यानामयेषांतेतथोक्ताःतैः । हयाअश्वास्तैः । अपांगानामितस्ततःसं चरणशीलत्वादितिभावः । हृदयंब्रह्मपुरमितिश्रुतेः । सर्वप्रलयेपिलक्ष्मीभुजांतरगतइत्युक्त्याहरेर्लक्ष्मीवक्ष्यस्यवस्थितेवैकुंठादिलोकत्रयस्यापिश्रीरूपत्वात्रु क्मिणीहृदेवभगवतोयोग्यापूरितिभावः । वक्षसिजातौवक्षोजौकुचौताविवद्विरदोगजःतेनउत्तुंगत्वादितिभावः । कायएवदेहएवकनकंसुवर्णंआख्यायस्यतत् तेनउद्भूतानियानिरोमाणितान्येवअनुगाःअनुचरास्तैः । कृष्णसंगममनुश्रुत्यागमनाद्धृहृत्वादितिभावः । तस्मिन्श्रीकृष्णेसंसक्तंयन्मनःतदेवरथःतेन । विवि धानियानिअंगानिपादहस्ततलनखकटाक्षकचादीनितेषांश्रियःकांतयःताएवविचित्रांबराणिरक्तनीलशुभ्रादिनानावर्णोपेतवस्त्राणितैः । प्रणयापराधशम

नालिंगननखक्षतनिरीक्षणोपरिसुरतकलेत्यादिकांतीनांकृष्णांगस्पर्शयोग्यत्वात्तासांतद्वस्त्रत्वंतद्रात्रिकृष्णांतःपुरदासीचस्वयमेवेत्यतःस्वांगेषुतान्यूढ्वाकालेकाले स्वभर्तुरर्पयतीतिभावः । तस्यतदेवरूपस्यश्रीकृष्णस्ययोग्यंयदमृतंतस्यसाधनंचसाऽधराख्यभूश्चअधरइतिअधरोष्ठइतिआख्यायस्याःसाअधराख्यासाच साभूश्चतयादुग्धाब्धिमथनोद्भूतममृतंस्वयमपीत्वायमपित्वादेवेष्वेवदानात्इदमेवामृतंभगवद्योग्यमितिभावः । तंकृष्णंसंतर्पयामास ॥ ४८ ॥ ज्वलदिति । ज्वलंतःप्रकाशमानाःकलापाःभूषणानियेषांतेतथोक्ताः । स्फुरन्अंगलेपःअंगरागोयेषांतेतथोक्ताः । विचित्राणिवस्त्राणियेषांतेतथोक्ताः । स्मितेनशोभीनिवक्त्राणियेषांतेतथोक्ताः । वधूश्चवरश्चतयोराभेवाभायेषांतेतथोक्ताः । वधूसदृशाइत्यर्थः । नराः नार्यश्चनारीविशेषणत्वेस्त्रीलिंगबहुव्रीहिर्द्रष्टव्यः । स्वयंवरःस्वयंवरोत्सवःतस्मिन्तत्रतत्रसंचरंतिकिल ॥ ४९ ॥ स्वर्गिभिरिति । स्वर्गिभिर्देवैःगीयमानः । भग्नःदुर्जनदर्पोयेनसतथोक्तः । असौरुक्मिणीर

ज्वलत्कलापा स्फुरदंगलेपाः विचित्रवस्त्राः स्मितशोभिवक्त्राः ॥ स्वयंवरे तत्र नराश्च नार्यो वधूवराभाः किल संचरंति ॥ ४९ ॥ स्वर्गिभिर्गीयमानः स्वं दुर्गमाविश्य दुर्गमम् ॥ भग्नदुर्जनदर्पोऽसौ रुक्मिणीरमणो बभौ ॥ ५० ॥ स्वफेनकांत्या सितपार्श्वयुग्मः शिखाभिरौर्वस्य सुपीतमध्यः ॥ सितेतरोऽन्यत्र स भूतधात्र्या विचित्रवस्त्रश्रियमातनोति ॥ ५१ ॥ असह्यवह्निव्यथितोपि वार्धिरनंतरत्नान्युदरे पिधाय ॥ न जातु पानीयमपि प्रदत्ते धनस्य लाभादधिको हि लोभः ॥ ५२ ॥

मणःरुक्मिण्याःभर्ताश्रीकृष्णः । गंतुमशक्यंदुर्गमंतत्शत्रुभिरगम्यमित्यर्थः । स्वंस्वकीयंदुर्गंद्वारकांआविश्यप्रविश्यबभौ ॥ ५० ॥ इदानींएतत्सर्गसमाप्तिपर्यंतंसमुद्रंवर्णयति । स्वफेनेति । स्वस्ययेफेनाःतेषांकांत्या सितंशुभ्रंपार्श्वयुग्मंयस्यसतथोक्तः । और्वस्यवडवाग्नेःऔर्वस्तुवडवानलइत्यमरः । याःशिखाःज्वालास्ताभिः सुपीतंमध्यंयस्यसतथोक्तः । अन्यत्रप्रदेशेसितात्श्वेतात्इतरअन्यःनीलइत्यर्थः । सःसिंधुः । भूतधात्र्याःभूम्याः भूतधात्र्यब्धिमेखलेत्यमरः । विचित्रंशुभ्रपीतनीलवर्णैःरंजितंयद्वस्त्रं । वाणगरेत्यपभ्रष्टभाषयाकथ्यमानंतस्यश्रियंकांतिमातनोति । भूम्याधृतविचित्रांबरवत्तिष्ठतीत्यर्थः । सागरांबरेत्यादौसागरस्यभूम्यंबरत्वंपूर्वकवयोपिकथयंति । विचित्रांबरवर्णनंतुइदमपूर्वमेवेतिज्ञातव्यम् ॥ ५१ ॥ असह्येति । वारिधीयंतेऽस्मिन्नितिवार्धिःसमुद्रः । सोढु

मशक्यःअसह्यःसचासौवह्निश्चतेनवडवाग्निनाव्यथितोपिप्राणसंकटंप्राप्नोतीतिध्वनितोर्थः । अनंतरत्नानि । उदरेगर्भेपिधायआच्छाद्य । बहुद्रव्यवानपीतिध्वनितोर्थः । जातुकदाचित्पानीयमपिजलमपिनप्रदत्ते । लवणजलत्वादितिभावः । तथाहि । धनस्यलाभःप्राप्तिःतस्मात् । अधिकःउत्कृष्टःलोभोभवति । लाभात्लोभोविवर्धतइतिउक्तेः ॥ ५२ ॥ सरित्पतिरिति । सरितांनदीनांपतिःसमुद्रः । तासांमुखंतस्मादितितन्मुखतःनदीमुखतः । नदीसमुद्रसंगमस्थलंनदीमुखमित्युच्यते । अचुंबितनद्याख्यस्त्रीमुखइतिध्वनिः । वेलांतीरंमर्यादामितिध्वनिः । विलंघयति । नदीमुखस्थलेसमुद्रजलंतीरमतिक्रम्यनदींप्रविश्यबहुदूरंगच्छतीतिभावः । अत्रनदीसंगमस्थले । विवेकहीनः । इदंनदीजलंइदंसमुद्रजलमितिविवेचयितुंअशक्यइत्यर्थः । धर्माधर्मविवेकशून्यइतिध्वनिः । ननुगांभीर्यादिगुणयुक्तस्यसमुद्रस्यमर्यादालंघनंविवेकराहित्यंचकथमितिध्वनितार्थमाशंक्यार्थांतरंन्यस्यति । तथाहीति । तद्युक्तंहि । नार्याकांतयासहसंगतानांपुरु

सरित्पतिस्तन्मुखतोऽपि वेलां विलंघयत्यत्र विवेकहीनः ॥ तथा हि नार्या सह संगतानां कुतो विवेकः
कुत एव वेला ॥ ५३ ॥ बहूपभोग्याऽपि सरित्समुद्रतटे न सा कंटकितोपकंठा ॥ रहस्युपाहूय विटान् स्व
भर्तृतटे सदाचारपराश्च काश्चित् ॥ ५४ ॥ स्वीयाशां युवतिमुपेत्य रागभाजस्तोयेशः सुहृदपि वीक्ष्य
नाशमिंदोः ॥ आनंदादनिशमुपैति वृद्धिमुच्चैरेकस्यामभिरतिमिच्छतोः क्व मैत्री ॥ ५५ ॥

षाणांविवेकःकुतः वेलासमयःकुतः । स्त्रीसमागमेनोद्रिक्तकामानांतिथ्यादिमर्यादाधर्माधर्मविचारश्चनास्तीतिभावः ॥ ५३ ॥ बहूपभोग्येति । सरित्नदीस्वोत्पत्तिस्थलेबहूपभोग्याबहूनांस्नानपानाद्युपभोगार्हापि । संजाताःकंटकाःअस्येतिकंटकितंतादृशमुपकंठंसमीपंयस्याःसातथोक्तासानदी । समुद्रस्यतटंतीरंतस्मिन् । बहूपभोग्यानभवति । नदीस्वोत्पत्तिस्थलेस्वादुजलोपेतत्वात्सर्वजनसेव्या । समुद्रतटेकंटकग्रस्ततीरत्वात्लवणजलोपेतत्वाच्चनोपयोगार्हेतिस्वभावः । तत्रस्वैरिणीजात्याअर्थांतरंन्यस्यति । तथाहीति । काश्चित्तुस्त्रियःरहसिविटान्उपाहूयस्वस्याःभर्तापतिःतस्यतटंसमीपंतस्मिन्सन्उत्तमोयोआचारःतस्मिन्पराआसक्ताहि ॥ ५४ ॥ स्वीयाशामिति । सुहृत्चंद्रसुहृदपि । तोयेशःसमुद्रः । स्वीयास्वकीयायाआशादिक्सैवयुवतीस्तां । वारुणीदिगंगनामित्यर्थः ।

उपेत्यप्राप्य । रागभाजःरक्तिमानंप्राप्तस्य अनुरागभाजइतिध्वनिः । इंदोश्चंद्रस्यनाशमस्तमयं । वीक्ष्य । आनंदात्संतोषात् । अनिशं । उच्चैःसम्यक्वृद्धिमुपैति । चंद्रास्तमयेसतिसमुद्रोभिवर्धतइतिप्रसिद्धिः । ननुसुहृन्नाशेकथंसंतोषइत्यतःपश्चिमदिशोवरुणस्त्रीस्थानीयत्वेनचंद्रस्यतदनुषंगेएकस्यामुभयानुरागंमनसिनिधायार्थांतरंन्यस्यति । एकस्यामिति । एकस्यांनार्यांअभिरतिंसुंदोपसुंदवत्सुरतक्रीडामिच्छतोःपुरुषयोःमैत्रीक्वकुत्र ॥ ५५ ॥ अंतरिति । अंतःस्वोदरेकृतांतस्ययमस्यउपमायस्यसतथोक्तःसचासौवाडवाग्निश्चतेनसंतप्तंगात्रंयस्यसतथोक्तोपिवार्धिःसमुद्रः । मुदेवसंतोषेणेवगर्जन्ध्वनन् । फेनएवस्मितंतस्यश्रीर्यस्यसतथासन् । गगनंस्पृशंतीतिगगनस्पृशःतादृशःऊर्मयोयस्यसतथासन् । गांभीर्यमावेदयतीवप्रकटयतीवगंभीरोपिअंतर्महाव्यसनोपिबहिर्मुखहासादिनासंतोषमेवप्रकटयतितद्वदितिभावः ॥ ५६ ॥ असेव्यतामिति । श्रीकृष्णः । स्वस्यगृहमावासस्थानंतस्यसिंधोःसमुद्रस्य । दोषारात्रिरस्यास्तीतिदोषीदोषःकलंका

अंतःकृतांतोपमवाडवाग्निसंतप्तगात्रोऽपि मुदेव गर्जन् ॥ फेनास्मितश्रीर्गगनस्पृगूर्मिर्गांभीर्यमावेदयतीव वार्धिः ॥ ५६ ॥ असेव्यतां दोषिसखित्वजातां जहार कृष्णः स्वगृहस्य सिंधोः ॥ इति स्म चित्रं न यतस्तदिष्टा हरंति पापानि महांति हृष्टाः ॥ ५७ ॥ पुराऽप्यजेयो मुरजित् किलात्र पुरीं विधायाभवदत्यजेयः ॥ ममेत्थमाभाति कलत्रवस्त्रकृतालयं कः खलु जेतुकामः ॥ ५८ ॥

ख्यदोषःअस्यास्तीतिवादोषीचंद्रःतस्ययत्सखित्वंसुहृत्त्वंतेनजातांअसेव्यतांदोषिसमागमेनशुद्धोपिअसेव्योभवतीतिध्वनिनादोषिसखित्वजातामित्युक्तं । लवणजलत्वादपेयतांजहार । सबालस्त्रीजलक्रीडाऽमृतवापीकृतार्णवइतिवचनात्द्वारवत्यांसमुद्रजलमपिस्वादुत्वात्सदास्नानपानयोग्यमितिभावः । इतियत्तत्चित्रमाश्चर्यंनभवति । यतःकारणात्तदिष्टाःतस्यश्रीकृष्णस्येष्टाःभक्ताःहृष्टाःसंतःमहांतिपापानिदर्शनमात्रेणहरंति । किंपुनःतस्यसहवासेसतीतिभावः ॥ ५७ ॥ पुरापीति । पूर्वमपिअजेयःजेतुमशक्यः । मुरजित्श्रीकृष्णः । अत्रसमुद्रे । पुरींविधाय । अत्यजेयःशत्रुभिरत्यंताजेयः । अभूत्किल । अत्रशत्रुभिरजेयत्वेममेत्थमाभाति प्रतिभाति । कलत्रस्यभार्यायाःयद्वस्त्रंतस्मिन्कृतःआलयोयस्यसतथातं । स्त्रीनीवीलीनंइत्यर्थः । जेतुंकामोयस्यसजेतुकामः । कः । खलुनको

पीत्यर्थः । भूमेर्विष्णुकलत्रत्वात्समुद्रस्यभूवस्त्रस्थानीयत्वात्लोकधर्ममाश्रित्येयंविनोदोक्तिः ॥ ५८ ॥ सइति । रम्यफेनएवआसवोमद्यंउभयोरपिशुभ्रत्वा त्फेनिलत्वाच्चेतिभावः । तेनशोभतइतिशोभिताद्दशंवक्त्रंयस्यसतथोक्तः । सःसमुद्रः । विधोःचंद्रस्यउदयःतस्मिन्सति । तरंगाएवहस्तास्तैःनदीनांजघनंतत् कटिमितिध्वनिः । संस्पृशति । विधूदयेतावत्अभिवर्धतइत्यर्थःतथाहि । इंदुदृष्ट्याचंद्रदर्शनेन । सरसस्यविलासयुक्तस्यकस्यपुरुषस्यकामोनस्यात्स्यादेवेत्य र्थः ॥५९॥ सितेतरइति । सितेतरःनीलःपीतःपीतवर्णःकृशानुरग्निःमध्येयस्यसतथोक्तः । सहस्रशःसहस्रसंख्याभिःनदीभिःश्लिष्टाआलिंगितातनुःशरीरंयस्यस

स रम्यफेनासवशोभिवक्त्रस्तरंगहस्तैर्जघनं नदीनाम् ॥ विधूदये संस्पृशतींदुदृष्ट्या न कस्य कामः सर सस्य हि स्यात् ॥ ५९ ॥ सितेतरः पीतकृशानुमध्यः सहस्रशः श्लिष्टतनुर्नदीभिः ॥ अनेकयोषित्परितो षदायी स पीतवासा इव भासतेऽब्धिः ॥ ६० ॥ वर्त्मनीत्थं वारिराशिं वर्णयंतो मुनीश्वराः ॥ समेत्य तां द्वारवतीं मुदा कृष्णमुपासते ॥ ६१ ॥ रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिं तयतां विचित्रविमलश्लाघ्यार्थसंदायिनि ॥ संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते संजातः सुरमंडलीषु महितः सर्गो मुदां षोडशः ॥ १६ ॥ इति श्रीरुक्मिणीशविजये वादिराजीये षोडशः सर्गः ॥ १६ ॥

तथोक्तः । सोब्धिः । अनेकाःयाःयोषितःतासांपरितोषःतंददातीतितथोक्तः । पीतंवासोयस्यसःपीतवासाःपीतांबरःश्रीकृष्णःसइवभासते ॥ ६० ॥ वर्त्मनीति । मुनीश्वराः । वर्त्मनिमार्गेइत्थमुक्तप्रकारेणवारिराशिंसमुद्रंवर्णयंतःसंतःतांद्वारवतींसमेत्यमुदासंतोषेणकृष्णमुपासते ॥ ६१ ॥ रोम्णामिति । उक्तएवार्थः ॥ ६२ ॥

इतिश्रीरुक्मिणीशविजयटीकायांनारायणभट्टविरचितायांषोडशःसर्गः ॥ १६ ॥ ॥ ॥ ॥ ७ ॥ ॥

श्रीवेंकटेशायनमः ॥ नारायणंमुनींद्रौघभारतीगीतसत्कथम् ॥ द्वारकानायकंवंदेतारकंभवसागरात् ॥ १ ॥ एकार्थेनतत्तदवतारान्एकार्थेनसर्वपद्येषुश्रीकृष्णकथांचतुर्विंशतिपद्यैःऋषिवाक्यतयावर्णयिष्यन्आदौमूलरूपंचएकोक्त्यावर्णयति । स्वभजकेति । स्वभजकाब्जकुलोदयहेतवेस्वस्यभजकोभक्तःस्वभजकःयःअब्जोजलेभ्योजायतइतिअब्जश्चतुर्मुखः अब्जःसंभूतोहिरण्यगर्भइतिश्रुतेः । तस्यकुलंगोत्रंऋजुगणइत्यर्थः।तस्यउदयःसृष्टिःतस्यहेतुःकारणंतस्मै । यद्वाअब्जकुलंमुक्तब्रह्माणःतस्याभ्युदयहेतवेवा ।भवमहानलमुक्तभयानुगच्छविपदे। भवःसंसारःसएवमहानलोमहाग्निःतस्मान्मुक्तंभयंयेषांतेमुक्तभयाःश्रीदेवीविमुक्तगरुडविष्वक्सेनाद्याःविमुक्ताइत्यर्थः । तएवानुगाःसेवकाःतेषांछविःकांतिःतस्याःपदंस्थानंतस्मिन् । जलनिधौप्रलयसमुद्रेतत्रापिवरभोगिनिकेतनेवरःश्रेष्ठश्चासौभोगीचवरभोगी मुक्तशेषइत्यर्थः ।सएवनिकेतनंमंदिरंतस्मिन् । लसतेप्रकाशमानाय । नविद्यतेविपत्यस्यसअविपत्तस्मैअविपदे । जननमरणादिविपद्रहितायेत्यर्थः।

स्वभजकाब्जकुलोद्भवहेतवे जलनिधौ वरभोगिनिकेतने ॥
भवमहानलमुक्तभयानुगच्छविपदेविपदे लसते नमः ॥ १ ॥ ॥ १ ॥

सृष्ट्यादिनाआयासरहितायेतिवा । नारायणायनमइतिमूलरूपस्वभावःसर्वोपिवर्णितः । एवंसर्वत्रार्थद्वयंद्रष्टव्यं । श्रीकृष्णपक्षेतु । स्वभजकाब्जकुलोदयहेतवेस्वस्यभजकोभक्तःयःअब्जश्चंद्रः अब्जोजैवातृकःसोमइत्यमरः । तस्यकुलंवंशःतस्योदयोभिवृद्धिस्तस्यहेतुःकारणंतस्मै सोमवंशेऽवतीर्यतदभिवृद्धिहेतवइत्यर्थः । वरभोगिनिकेतनेवराःश्रेष्ठाःयेभोगिनःसुखिनः भोगःसुखेस्त्र्यादिभृतावित्यमरः । तेषांनिकेतनंस्थानभूतंतस्मिन् । भवमहानलमुक्तभयानुगच्छविपदेभवस्यकाशिराजेष्टदेवस्यशिवस्ययोमहानलःद्वारकानाशायप्रयुक्तःकृत्यारूपोग्निःतस्मान्मुक्तंतादृशंभयंयेषांतेतथोक्ताःतेचतेअनुगाःअनुचराःयादवाश्चतेषांछविःकांतिःतस्यांपदंस्थानंतस्मिन् द्वारावतीपट्टने । जलनिधौद्वारावतीसमुद्रेलसतेशोभमानायअविपदेविपद्रहितायअथवाविपदेइतिपदच्छेदःविःपक्षीगरुडःतस्मिन्पादौचरणौयस्यसविपत्तस्मैविपदेगरुडवाहनायेत्यर्थः पदादयःपथच्छब्दाइतिवचनात् । तुभ्यंश्रीकृष्णायनमइतिसंबंधः ॥ १ ॥

कपिलावतारकथयासहकृष्णकथांवर्णयति । कुशकृतेति । मुनयश्चतेजनाश्चमुनिजनाः । कुशकृतस्थलसिद्धपुरीश्वरं । कुशैर्दर्भैःकृतंतादृशंस्थलंयस्याःसातथोक्ताऋष्याश्रमत्वेनपरितःकुशकृतस्थलेत्यर्थः । साचसासिद्धपुरीनामककपिलाश्रमइत्यर्थः । तस्यईश्वरःस्वामीतं । कठिनतत्त्वगतिश्रमदायुधं । कठिनादुर्बोधायातत्त्वगतिःतत्त्वानामवगतिःपरावरतत्त्वानांज्ञानमित्यर्थः । तस्यायःश्रमःअज्ञानविपरीतज्ञानजन्यखेदःतद्द्यतिखंडयतिइतिकठिनतत्वगतिश्रमदंतच्चतदायुधंचतत्वमार्गाज्ञानादिच्छेदनआयुधरूपमित्यर्थः । कठिनतत्त्वगतिश्रमदंआयुधंज्ञानलक्षणायुधंयस्यसतथोक्तःतमितिवा तत्त्वनिरूपणायकपिलस्यावतीर्णत्त्वात् । जनककर्दमशोभिगृहांगणेजनकःप्रजापतिःसचासौकर्दमश्चकर्दमाख्यप्रजापतिरित्यर्थः । तस्यशोभतइतिशोभियद्गृहांगणंतस्मिन्स्थितमितिशेषः।निजःस्वकीयःयोनाथःतंमुनिजनाचार्यमित्यर्थः । अमुंकपिलंजगुः । अनेनअखिलावतारस्यकर्दमप्रजेश्वरगृहाख्यस्थलंतत्त्वोपदेशलक्षणावतारप्रयोजनंकपिलपितृनिरूपणंचकृतमितिबोध्यं । श्रीकृष्णावतारपक्षेतु । मुनिजनाःद्वारकांप्रत्यागताःमुनिजनाः । कुशकृतस्थलसिद्धपुरीश्वरंकुशःकुशाख्योयोदैत्यःतेनकृतंयत्स्थलंद्वा

## कुशकृतस्थलसिद्धपुरीश्वरं कठिनतत्त्वगतिश्रमदायुधम् ॥ जनककर्दमशोभिगृहांगणे मुनिजना निजनाथममुं जगुः ॥ २ ॥

रकानिर्माणात्पूर्वंतत्स्थलंकुशाख्यदैत्याधिष्ठितत्वात्कुशस्थलीत्युच्यतेतस्मिन्सिद्धासंपन्नायापुरीद्वारावतीतस्याःईश्वरःतं । कुशंहत्वाकुशस्थल्यांद्वारावतीनिर्माणंकृतमितिपौराणिकीकथा । कठिनतत्त्वगतिश्रमदायुधंकठिनायातत्त्वक्तस्यकुशदैत्यस्यत्वक्चर्मतस्याःयःअतिश्रमःतंददातीतिकठिनतत्त्वगतिश्रमदंकठिनतत्त्वचःमुहुर्मुहुःछेदादिनातिदुःखदमित्यर्थः । तादृशमायुधंशार्ङ्गाख्यायुधंयस्यसतथोक्तस्तंकुशाख्यदैत्यहंतारमित्यर्थः । त्रिविक्रमरूपिणाहरिणाशार्ङ्गमुक्तशरेणवारंवारंभिन्नसर्वांगःसकुशदैत्यःस्वकुलदेवशिवकृपयापुनःपुनःयुधिविजितश्चनममारकिल । ततस्तंदैत्यंशार्ङ्गशरघातेनश्रांतसर्वांगंशेषकरस्थहलेनकृतपरिघायांघातयित्वाकुशेश्वराख्यशिवलिंगेप्रतिष्ठितेसतिलिंगभंगभयेनसोत्थानमसहमानःतत्रैवममारेतिपौराणिकींकथांसूचयितुंअतिश्रमदायुधमित्येवोक्तं त्रिविक्रमावतारेकृतापूर्वकथासंग्रहायचइत्थमुक्तं । जनककर्दमशोभिगृहांगणेजनकस्यपितुःनंदगोपस्यकर्दमेनगोमूत्रादिसंबंधजनितपंकेनशोभतइतिशोभियत्गृहांगणंतस्मिन्स्थितमितिशेषः । निजनाथममुंश्रीकृष्णंजगुः । कर्दमदिग्धसर्वांगतयासंचरंतंशिशुरूपमपिजगुःकिल । इदानींसर्वोत्कृष्टत्वेनद्वारकायांस्थितंगायंतीतिकिंवक्तव्यमितिभावः ॥ २ ॥

नारायणावतारकथयासहकृष्णंवर्णयति । यमजनिमिति । हेऋषेयमात्यमधर्मप्रजेश्वरात्जनिरुत्पत्तिर्यस्यसतथोक्तःतं धर्मप्रजेश्वरस्यैवयमरूपेणसूर्या
दवतीर्णत्वात्धर्मजनिमितिवक्तव्येयमजनिमित्युक्तं । निजचिद्घनमूर्तितःनिजास्वविषयिणीयाचित्ज्ञानंतयाघनानिबिडानारायणविषयकज्ञानभरितेत्य
र्थः । यामूर्तिःमूर्तिनाम्नीधर्मप्रजेश्वरस्यपत्नीतस्याइतिततः प्रकटितंआविर्भूतं । तापसस्यमुनेःविग्रहइवविग्रहोदेहोयस्यसतथातंमुनिरूपमित्यर्थः ।
नारायणं । भजसेवस्व । बहुरूपिणांपरस्परसंभाषणरूपतयैतेषांपद्यानांएकंप्रतिसंबोधनेएकवचनंबहून्प्रतिसंबोधनेबहुवचनमितिसर्वत्रद्रष्टव्यं । गिरेःशतशृं
गपर्वतस्यमूर्धाशिखरंतस्मिन्शतशृंगपर्वतइति नारायणस्य । मातापित्रोःकथनं तापसविग्रहमिततपश्चरणलक्षणावतारप्रयोजनकथनं । नरधृतमिति
तदनुजस्वरूपकथनं गिरिमूर्धनीतिगंधमादनशिखराख्यावतारस्थलकथनमितिद्रष्टव्यं । शतशृंगपर्वतेधर्मप्रजेश्वरात्तत्पत्न्यांमूर्तिनाम्न्यांनारायणावतारोजा
तइतिपौराणिकीकथा। श्रीकृष्णावतारपक्षेतु। यंअजनिंभजताआपसःविग्रहमितिपदच्छेदः । हेमुनयः। यंश्रीकृष्णंनविद्यतेजनिरुत्पत्तिर्यस्यसोऽजनिस्तंज
न्मरहितंभजतभजध्वं । सःश्रीकृष्णःनिजचिद्घनमूर्तितः । निजास्वाभाविकीसाचसाचिद्घनाज्ञानमयीचसामूर्तिश्चतस्याइतिततःस्वकीयचिद्घनमूलरूपादित्य

**यमजनिं भजतापसविग्रहं प्रकटितं निजचिद्घनमूर्तितः॥ नरधृतं गिरिमूर्धनि यत्पदं विलसते लसतेड्यनखेंदुना ॥ ३ ॥**

र्थः । प्रकटितःकृष्णकेशात्मनाविर्भूतः। नतुशुक्रशोणितादुत्पन्नइत्यर्थः। विग्रहःशरीरंतंआप । शुक्रशोणितोत्पन्नोयंविग्रहःकिंनेत्ययुक्तिमाह । गिरीति । गि
रिस्तुतिरूपकवाचि । मूर्धनिअवनतेनम्रेशिरसि। नरेणअर्जुनेनअर्जुनस्यनरावेशत्वान्नरेणेत्युक्तं धृतं । पश्यामिदेवांस्तवदेवदेहेसर्वांस्तथाभूतविशेषसंघान् । ब्र
ह्माणमीशंकमलासनस्थमृषींश्चसर्वानुरगांश्चदिव्यान् । नांतंनमध्यंनपुनस्तवादिंपश्यामिविश्वेश्वरविश्वरूपेत्यादिनास्तुतं । नमःपुरस्तादथपृष्ठतस्वनमोस्तुतेस
र्वतएवसर्वेत्यादिनानमस्कृतंचेत्यर्थः । केवलंशुक्रशोणितोत्पन्नदेहस्यएतादृशव्याप्त्यादेःदेवक्युदरादुत्पत्तेः। पूर्वमपिविद्यमानब्रह्मरुद्रादिदेवताधारत्वस्यचायो
गादितिभावः । यत्पदंयस्यकृष्णस्यपदं। लसताशोभमानमौक्तिकादिद्रव्येणईड्यःस्तुत्योयोनखेंदुस्तेन । विलसते उत्पन्नदेहादीक्षणतयाशोभते । प्रथमश्लो
केसोमवंशादुत्पत्तिःयादवैःसहद्वारवत्यांनिवासःकथितः। द्वितीयपद्येद्वारवतीनिर्माणप्रकारःबाललीलाचवर्णिता। तृतीयपद्येस्मिन्शुक्रशोणितादुत्पत्यभावःज्ञा
नमयशरीरत्वंचेतिसयुक्तिकंतात्पर्यंकथितं। एवमुत्तरत्रापिभिन्नाभिन्नासकलापिकृष्णकथावर्णिता । अर्थांतरेणतुमूलरूपमारभ्यसकलावतारकथांचवर्णिते

तिचतुर्विंशतिश्लोकात्मकमिदमेवैकंचित्रकाव्यमितिद्रष्टव्यम् ॥ ३ ॥ इदानींदत्तावतारंश्रीकृष्णावतारंचएकोक्त्यावर्णयति । विमलेति । विमलंदत्तइतिपदंना मयस्यसविमलदत्तपदःतत्तन्नामेत्यर्थः । प्रणतःशरणागतोयोर्जुनःकार्तवीर्यार्जुनःतस्ययोभ्युदयोयोगर्द्धिराज्याद्यभ्युदयस्तस्यहेतुःकारणीभूतः । अमानवोदि व्यःयोयोगःयोगाभ्यासःतंधरतीतिधृत् धारकः । सुशोभनाधीर्यस्याःसासुधीस्तया । अनसूययाअनसूयाख्ययाअत्रिभार्यया । हृदिगर्भेधृतःसदत्तात्रेयःममभवेसं सारेयःतापःआध्यात्मिकादितापःतंहरतीतितथोक्तःभवतात् भूयात् । अत्रविमलदत्तपदइतिअवतारनामकथनंप्रणतार्जुनाभ्युदयहेतुरितिअमानवयोगधृदितिवा वतारप्रयोजनकथनं । अनसूययाहृदिधृतइतिमातृकथनंद्रष्टव्यं । श्रीकृष्णावतारपक्षेतु विमलायनिर्दोषायविष्णुभक्तायदत्तंपदंद्वारावतीस्थानंयेनसतथोक्तः । चक्रांकिताःप्रवेष्टव्याःयावदागमनंमम । नामुद्रिताःप्रवेष्टव्यायावदागमनंममेतिवचनात् । प्रणतःशरणागतःयोर्जुनःभीमानुजःतस्ययोऽभ्युदयःशत्रुविजयाद्यभ्यु

विमलदत्तपदः प्रणतार्जुनाभ्युदयहेतुरमानवयोगधृत् ॥ हृदि धृतः सुधिया ह्यनसूयया स भवताद्भव तापहरो मम ॥ ४ ॥ भरतशास्त्रविशारदताकरं प्रियकृतं पितृवन्नवयोगिनम् ॥ यदृषभं सुमतिर्हि जयं त्यगात् सुमधुरा मधुराधिपमंतिके ॥ ५ ॥

दयःतस्यहेतुःकारणभूतः । नविद्यतेमानंपरिमितिर्येषांतानिअमानानिअपरिमितानीत्यर्थः । तादृशानिवयांसिपक्षिणोयस्यसोऽमानवयाःसचासावगश्चपर्वतःगो वर्धनःतंधारयतीतिअमानवयोगधृत् । नविद्यतेअसूयामात्सर्यंयस्याःसाऽनसूयातयाअसूयारहितया । सुधियासुशोभनाचसाधीश्चतयासम्यग्ज्ञानेनेत्यर्थः ।भक्तैः हृदिहृदयेधृतःध्यातइत्यर्थः । सःश्रीकृष्णःममभवतापहरोभवतात् । अर्जुनराज्यपदत्वंगोवर्धनगिर्युद्धरणंचप्राक्कथितमेवात्रकथितम् ॥ ४ ॥ इदानींऋषभावतारं श्रीकृष्णवतारेणसहैकोक्त्यावर्णयति ।भरतेति।भरतशास्त्रविशारदताकरंभरतःऋषिपुत्रोभरताख्यःतस्यस्वपुत्रस्यशास्त्रेषुविशारदःप्रवीणःशास्त्रविशारदःतस्यभावस्त त्ताशास्त्रकौशल्यंतत्करोतीतिभरतशास्त्रविशारदताकरस्तं । स्वपुत्रस्यभरतस्यसर्वशास्त्रोपदेष्टारमित्यर्थः । नवचतेयोगिनश्चतेषांनवयोगिनां । कविर्हरिरंतरिक्ष इत्यादिनाप्रसिद्धानांभरतातिरिक्तानांस्वपुत्राणांनवसंख्याकयोगिनामित्यर्थः । पितृवत् यथापितापुत्रस्नेहयुक्तस्तथेत्यर्थः । ऋषभस्यनवयोगीश्वरपितृत्वेपिशु

क्शोणितसंबंधादिनालौकिकपितृवत्पितृत्वाभावात्पितृवदियुक्तं। प्रियंमोक्षाद्यभीष्टंकरोतीतिप्रियकृत्तं। मधुराणांप्रियंवदानांअधिपोधीश्वरःतं । यमृषभं
ऋषभनामकंहरिं। सुमधुरासुमनोहरासुशोभनामतिर्बुद्धिर्यस्याःसासुमतिःजयंतीजयंतीनाम्नीअंतिकंसमीपंतस्मिन् । अगात् । ऋषभइंद्रदत्तांजयंतीनाम्नींपत्नीं
उवाहेतिपौराणिकीकथा । अत्रभरतशास्त्रविशारदताकरमितिनवयोगिनांपितृवत्प्रियकृतमित्यनेनचविशेषणद्वयेनतत्त्वोपदेशादिलक्षणावतारप्रयोजनस्यऋ
षभइतिनाम्नःजयंतीतिभार्यायाःमधुराधिपइतिशांतावतारत्वस्यचकथनंकृतमितिद्रष्टव्यं । श्रीकृष्णविषयेतुभरतशास्त्रंनाट्यशास्त्रंतस्मिन्विशारदतानिपुणतात
स्याआकरआश्रयीभूतःतं। वृंदावनेविचित्रनाट्यकरणादितिभावः। पितृवत्नवाश्चतेयोगिनश्चतेनवयोगिनःतेषांनूतनयोगाभ्यासवतामित्यर्थः। प्रियकृतमभीष्ट
कारिणंनूतनयोगाभ्यासकारिणाउपनीतानांमुनीनांअंतःकरणशुद्ध्यादिप्रदमित्यर्थः। उपनयनानंतरंप्रथमकृष्णमंत्रस्यैवलोकेउपदेशदर्शनादिदमुक्तं। मधुराधिपं
मधुरापुरीनाथंयमृषभंश्रेष्ठंश्रीकृष्णंसुमधुरासम्यक्शांताजयंतीविषयादिकंजयंतीशोभनाचसामतिश्चसुमतिः । अंतिकंश्रीकृष्णसमीपंतस्मिन्अगात् शोभनबु
द्धिविषयइत्यर्थः। सुमधुरायांप्राक्कंसभयेनकृष्णस्मरणादाशंकितचित्ताःसंतःकंसंहत्वाकृष्णेमधुराधिपेजातेसतिनिःशंकंध्यानगानादिनास्वमनस्तन्निष्ठमेवकृ

**जनकदोषमुपेत्य स शर्वरीत्यनुभवं जननीमपि हर्षयन् ॥ घटयते दृशि बालवपुस्फुरत्सुरसदोरसदोहकृदन्वहम् ॥ ६ ॥**

तवंतइतिभावः।यद्वासुमधुरामधुराधिपमित्यत्र सुमधु रामधुरा आधिपमितिपदच्छेदः आधिर्मानसीव्यथातंपातिवर्धयतीतिआधिपःतं। रागोद्रेकात्सेवितमपिप
श्चात्तापकारीत्यर्थः।शोभनंचतत्मधुचसुमधुशोभनमद्यमित्यर्थः। रामस्यदाशरथिरामस्ययाधूर्व्यापारःतयारामधुरा। वनवासकंदमूलाहारादिव्रतचर्ययेत्यर्थः।
जयंतीविषयान्जयंतीअनाकांक्षतीत्यर्थः। सुमतिःशोभनबुद्धिःयंश्रीकृष्णंअगादितिसंबंधः। मद्यादिदुर्विषयेषुअनासक्ताव्रतादिसत्कर्मस्वासक्ताबुद्धिःश्रीकृष्णं
विषयीकरोतिनान्येतिभावः ॥ ५ ॥ इदानींश्लिष्टोक्त्याशिशुमारावतारंवर्णयति। भवंभवमनुभवंप्रत्यवतारमित्यर्थः। जनकःप्रजापतिःसचासौदोषःदोषाख्यः
तं। दोषाख्यप्रजेश्वरमित्यर्थः।उपेत्य। पूर्वंतद्धृदयंप्रविश्येत्यर्थः। अवतारार्थंपितृप्रवेशद्वारामातृप्रवेशस्यानुशरणादितिभावः। पश्चात्पितृभूतदोषप्रजेश्वरप्रवेशानं
तरंशर्वरीतिशर्वरीतिनाम्नींजननीमपिहर्षयन्तदुदरादवतीर्णइत्यर्थः। दोषाख्यप्रजेश्वरात्शर्वरीनाम्न्यांतत्पत्न्यांशिशुमारोवतीर्णइतिपौराणिकीकथा। अहःअहः
अन्वहंप्रतिदिने। रसस्याद्भुतरसस्यदोहःदोहनंतंकरोतीतिरसदोहकृत्। अद्भुतकार्यकृदित्यर्थः। तदेवदर्शयति। बालइति। बालवपुस्स्फुरत्सुरसदःबालंपुच्छंतच्च

वपुःशरीरंतच्चतयोःस्फुरंतःप्रकाशमानाःयेसुराःतेषांशुक्रांगारबृहस्पतिबुधचंद्रसूर्यादिज्योतिश्चक्राश्रितदेवानांसदःसभाततत्। दृशिजनानांचक्षुषिघटयतेदर्शयतीत्यर्थः।पुच्छाश्रितंज्योतिश्चक्रंप्रवर्ततइतिपौराणिकीप्रसिद्धिः। अत्रापिशिंशुमारावतारप्रयोजनंमातापितृनामचकथितमितिद्रष्टव्यं। कृष्णपक्षेतुअन्वहंप्रत्यहम्। स्फुरत्सुरसदोरसदोहकृत्स्फुरत्प्रकाशामानंयत्सुरसदःसुराणांसभास्वर्गइत्यर्थः। तस्ययोरसःसुखंतस्यदोहःदोहनंततत्करोतीतिकृत्। द्रष्टॄणांस्वर्गसुखप्रदइत्यर्थः। बालस्यवपुरिववपुःशरीरंयस्यसबालवपुःशिशुरूपःश्रीकृष्णः। जनकस्यनंदगोपस्यदोर्हस्तस्तंजनकदोषमुपेत्यप्राप्यतत्करलालितइत्यर्थः। जननींयशोदामपिहर्षयन्प्राक्पितृकरेणलालितःपश्चान्मातृकरंप्राप्यतयापिलालितइत्यर्थः। शर्वस्यशिवस्यरीतिःप्रकारःदिगंबरत्वधूलिधूसरत्वललाटलंबाश्वत्थसुवर्णनिर्मितललाटाभरणेनत्रिनेत्रत्वादिकमित्यर्थः। तस्याःअनुभवंस्मरणभिन्नज्ञानं दृशिचक्षुषिघटयतेदर्शयते। लोकैश्चक्षुषाशिवइवदृश्यतइत्यर्थ। कर्दमशोभिगृहांगणइतिप्राक्सूचिताबाललीलाअनेनप्रपंचितेतिद्रष्टव्यम्॥ ६॥ इदानींधन्वंतरिंश्लिष्टोक्त्यावर्णयति। विजनितेति। यःधन्वंतरिःअगदःऔषधंपाणौयस्यसःअगदपाणिःसन्। विजनितापदवद्यवनाय विजनिताःविशेषेणोत्पादिताःआपदोव्याधयोयैस्तानिविजनितापदानियानिअवद्यानिवातपित्तश्लेष्मरूपदोषत्रयाणिविज

## विजनितापदवद्यवनाय यो ह्यगदपाणिरभूच्छमदायकः॥ उदधिरत्नममुं सहजश्रियं हृदि भजेदिभजेड्यगतिं कृती॥७॥

नितापदवद्यानितान्येववनंतस्मै। शमस्यदायकःनाशप्रदोभूत्। धन्वंतरिःवैद्यशास्त्रप्रवर्तकत्वात्इत्यवतारप्रयोजनमुक्तंभवति। उदधेःक्षीरसमुद्रस्यरत्नंतत्क्षीरसमुद्रोत्पन्नमित्यर्थः। सहजासहोदरीश्रीर्महालक्ष्मीर्यस्यससहजश्रीस्तम्। इभात्गजात्जातःइभजःकलभःतद्वत्ईड्यगतिःश्लाघ्यगमनंयस्यसतथोक्तःतं। बालगजगमनमित्यर्थः। अमुंधन्वंतरिं। कृतीकुशलःपुरुषःहृदिभजेत्। श्रीकृष्णविषयेतु। यःश्रीकृष्णः। वेःपक्षिणःजनिरुत्पत्तिर्यस्यसविजनिःबालपक्षीत्यर्थः। विश्वक्षुषिव्योम्निवातेपरमात्मनिपक्षिणीतिरत्नमाला। तस्ययस्तापोविनाशस्तंददातीतिविजनितापदस्तद्वत्विजनितापदवत्। यथाबालपक्षिघातकःआयुधंनापेक्षतेतद्वदित्यर्थः। नविद्यतेगदायस्यसोगदःतादृशःपाणिःयस्यसोगदापाणिःसन्। निश्चक्रामनिरायुधइतिवचनात्। यवनःकालयवनःतस्मैयवनायशमस्यमृत्योःदायकःप्रदाताशमदायकःमृत्युप्रदोऽभूत्। मृत्युश्चमुचुकुंदनयनाग्निनेतिसूचनायप्राक्दायकइत्युक्तं। सहजाचसाश्रीश्चसहश्रियंस्वाभाविकसंपदं। इभात्गजात्जातःइभजःकुवलयापीडाख्यगजःतेनईड्यास्तुत्यागतिःतदग्रेसंचारोयस्यसइभजेड्यगतिस्तं। यद्यप्यसौकुवलयापीडःदुष्टत्वात्नस्तौ

तितथापिकौशलवशात्स्तुत्यर्हमित्यर्थः । उदधेःरत्नमिवरत्नं उदधेरलंकारभूतइत्यर्थः । अमुंश्रीकृष्णं । कृतीपुरुषःहृदिभजेत् ॥ ७ ॥ हयग्रीवकथां श्रीकृष्णकथयासहवर्णयति । मधुरयेति । मधोःमधुनाम्नोदैत्यस्ययोरयःवेगःतेनअजितअपराजित । युद्धेअतिवेगवतामधुनामकदैत्येनजेतुमशक्येत्यर्थः । दानवसद्विरौदानवानां सीदंतिनिषीदंतिअस्यामितिसत्संसत्सभेत्यर्थः । सैवगिरिःपर्वतःतस्मिन्दानवसद्गिरौविषये । अशनिवत्वज्रवत्कायोदेहोयस्यसोऽशनिकायःतत्संबुद्धिःदैत्यपर्वतध्वंसेवज्रकल्पावयवेत्यर्थः । अंकेनिक्षिप्यमुष्टिनैवमधुकैटभयोर्मर्दनात्गतःमधुकैटभाहृतःयआगमोवेदःतस्यसाधकस्तस्यसंबुद्धिः गतागमसाधक । वेदापहारिणौमधुकैटभौहत्वापुनरानीतसकलवेदेत्यर्थः । हर्षकराआकृतिर्यस्यसतत्संबुद्धिःहर्षकराकृते । अश्वाकारत्वेपिअतिसुंदरइत्यर्थः । भवःसंसारोगतोयस्मात्सभवगतःतत्संबुद्धिःभवगतमोक्षदायक सकलवेदोपदेष्टृत्वात्भवात्संसारात्गतःभवगतःतत्संबुद्धिरितिवा नित्यमुक्तेत्यर्थः । अवगतंज्ञानंअखिलंयेनसतत्संबुद्धिःअवगताखिल सर्वज्ञेत्यर्थः । नरश्चासौतुरंगमश्चतत्संबुद्धिःनरतुरंगमश्रीहयग्रीव । नःपाहि । मातापित्रोरभावात्तन्मूर्तेर्वर्णनं अवतारप्रयोजनंचोक्तं । श्रीकृष्णपक्षेतु । मधुरयामनोहरयायुद्धेऽहमेकाकीआयुधंनगृह्णामिइत्यादिरूपया । सतीसमीचीनायागीःवचनंतयासद्गिरा । जितःवंचितःदानवोदुर्योधनोयेनसतत्संबुद्धिःजितदानव । वशानांस्ववशानांपांडवानांनिकायःसमूहःतस्यगतंद्यूतैरपहृतंयद्राज्यादितस्यागमःपुनःपांडवेषुप्राप्तिस्तस्यसाधकःतस्यसंबुद्धिःवशनिकायगतागमसाधक । नरस्यार्जुनस्यतुरंगमारथनिबद्धाश्वाःतेषांहर्षःसंतोषःतंकरोतीतिहर्षकरीतादृशीआकृतिराकारोयस्यसतत्संबुद्धिःनरतुरंगमहर्षकराकृते । सारथिभूतलालितपार्थरथाश्वेत्यर्थः । भवःसंसारःतस्मिन्गतिःस्थितिस्तस्यांभवगतौ भूलोकप्राप्तावपीत्यर्थः । अगताःअनिर्गताःसहैवस्थिताइत्यर्थः । खिलानभवतीत्यखिलाःअमृताइत्यर्थः । अगताःसहैवस्थिताःअखिलानाशरहिताःमुक्तायस्मात्सअगताखिलःतत्संबुद्धिरगताखिलमुक्ताश्रयेत्यर्थः । श्रीकृष्णनःपाहि । पूर्वश्लोकेकालयवनवधप्रकारोनिरूपितःअत्रतुभारतकथेतिविवेकः ॥ ८ ॥ इदानींश्रीकृष्णेनसहपांडुरंगविठ्ठलंवर्णयति ।

मधुरयाजितदानव सद्गिरावशनिकायगतागमसाधक ॥ नरतुरंगमहर्षकराकृते भवगतावगताखिल पाहि नः ॥ ८ ॥ प्रणतविप्रजनामयतोऽकरोन्ननु जलांतरवर्ति निजास्पदम् ॥ विमलभीमरथीप्सितदायकः स्वविजितोविजितोऽप्ययमच्युतः ॥ ९ ॥

प्रणतेति । यतःकारणात् जलस्यपुंडरीकतीर्थजलस्यअंतरंमध्यंतस्मिन्वर्ततेतच्छीलमितिजलांतरवर्तियत्निजास्पदंस्वकीयगृहंतत् । प्रणतःशरणागतोयोविप्रः पुंडरीकमुनिःतस्मात्जातंप्रणतविप्रजंतादृशंनामपुंडरीकक्षेत्रमित्यभिधायस्यतत्तथोक्तं । अकरोन्ननुकृतवान्खलु । स्वकीयस्थलमपिपुंडरीकसंबंधिनाम्ना प्रथयामास। अतःविमलायाभीमरथीभीमरथ्याख्यानदीतस्याःयदीप्सितमभीष्टंतस्यदायकःदाताअयमच्युतःपांडुरंगःअविजितोपिशत्रुभिरनिर्जितोपिस्वैःस्वभक्तैःविजितःतदिच्छानुसारेणवर्तमानइत्यर्थः । इतिपांडुरंगस्यविठ्ठलस्यमहिमावर्णितः।श्रीकृष्णपक्षेतु । अयमच्युतःश्रीकृष्णःप्रणताःयेविप्रजनाःमथुरापुरीस्थाः ब्राह्मणजनाःतेषांआमयःकालयवनकृतोपद्रवःतस्मादितिततः । निजंस्वकीयंयदास्पदंततूस्वकीयपट्टनमित्यर्थः । जलस्यसमुद्रस्ययदंतरंमध्यंतस्मिन्वर्तितुंशीलं अस्यास्तीतिजलांतरवर्तितत्अकरोन्ननु । विमलःनिर्मलःअविच्छिन्नविष्णुधर्मेत्यर्थः । यःभीमःभीमसेनःसएवरथीमहारथिकःतस्ययदीप्सितमीष्टंतस्यदायकःप्रदायकःप्रदाताः । अयमच्युतःश्रीकृष्णः । अविजितोपिवैरिजनैरनिर्जितोपिस्वविजितःस्वभक्तैर्विजितःस्वभक्ताधीनइत्यर्थः।भीमसेनाख्यभीमनिर्मलभक्ताभीष्टदायकत्वात्स्वभक्तवशइतिभावः ॥ ९॥ केशवाद्यवतारानूवर्णयति । रुचिरेति । हेरुचिरमनोहरकेशवकेशवनामकतेतवशंबरमेवउदकमेवधामगृहंशंबरधाम

**रुचिर केशव शंबरधाम ते लसति मारमनोसिसमाकृते॥ सकलगोकुलपालक दुष्कृतिं परिहरारिहराऽखिलवास नः १०**

नीरक्षीरांबुशंबरमित्यमरः । लसतिशोभते । अनेननाराआपोअयनमावासोयस्येतिनारायणइतिव्युत्पत्तिसूचनेननारायणेत्युक्तंभवति । समासर्वावतारेषुसमानाआकृतिःआकारोयस्यससमाकृतिःतत्संबुद्धिःसमाकृतेसमानाकारत्वं । मायाःलक्ष्म्याःरमणःभर्ताअसि । मायाःधवःपतिरितिव्युत्पत्यामाधवेत्युक्तंभवति । कलाभिःचतुःषष्ठिकलाविद्याभिःसहितंसकलंयद्गोकुलंगवांवाचांशास्त्राणामित्यर्थः । कुलंसमूहःतस्यपालकःरक्षकःतत्संबुद्धिःसकलगोकुलपालक । गाःशब्दान्विंदतेप्राप्नोतिपालयतीतिव्युत्पत्त्यागवांशब्दानांइंद्रइतिव्युत्पत्त्यावागोविंदेत्युक्तंभवति । निरुक्तत्वाद्रेफलोपादिकंद्रष्टव्यं । अरीन्हरतीतिअरिहरःतत्संबुद्धिःहेअरिहरशत्रुसंहारक । अखिलेषुवासःआवासोयस्यसःतथोक्तस्तत्संबुद्धिःअखिलावास । अनेनविष्लृव्याप्तावितिधातोःवेवेष्टिसर्वमितिव्युत्पत्तिसूचनेनविष्णोइत्युक्तंभवति । नोस्माकंदुष्कृतिंपापंपरिहर । श्रीकृष्णपक्षेतु । रुचिराःमनोहराकेशाःकुंतलाःयस्यसरुचिरकेशःतत्संबुद्धिःहेरुचिरकेश । मारस्यकामस्ययन्मनस्तस्यअसिसमाखड्गसमाआकृतिःस्वरूपंयस्यसतथोक्तःतत्संबुद्धिःमारमनोसिसमाकृते । कंदर्पादप्यनंतगुणितसौंदर्येत्यर्थः । पूर्वत्रमारमणेत्येकपदत्वात्णत्वं । अ

त्रमारस्यमनइतिभिन्नपदत्वात्णत्वाभावः । श्रीकृतेवशंवरंचतत्धामचवरधामउत्तमधामद्वारवतीमंदिरंलसतिशोभते । शंबरधामेत्यत्रबवयोरभेदात्पूर्वत्रार्थे बकारःइतिश्लोकपाठेविशेषः । सकलंयद्गोकुलंतस्यपालकरक्षक । अरिहरअरीन्कंसादीन्हरतिनाशयतीतितत्संबुद्धिःहेअरिहर अखिलवासखिलोनभवती त्यखिलःवासःस्थानंयस्यतत्संबुद्धिः । अद्यापिसमुद्रांतर्भगवन्मंदिरंअविनष्टंसदस्तीतिपौराणिकीकथा । श्रीकृष्ण । नः । दुष्कृतिंपापं । परिहर ॥ १० ॥ मधिवि ति । मधोर्मधुनामकस्यदैत्यस्यमदक्षयोगर्वविनाशोयस्मात्सतथोक्तःतस्यसंबुद्धिःहेमधुमदक्षय । मधुंसूदयतीतिव्युत्पत्त्यामधुसूदनेत्युक्तंभवति । मैवलक्ष्मीरेव आलिःसखीतस्याःअसुःप्राणःतस्यविस्तृतिर्विस्तारोयस्मात्सतथोक्तःतत्संबुद्धिःहेमाल्यसुविस्तृते । लक्ष्मीप्राणनाथेत्यर्थः । कुःपृथ्वीसाचजनःजनलोकःसचउ पलक्षणंचैतत् । लोकत्रयस्येत्यर्थः । तयोर्मानंप्रमाणंपरिमितिरित्यर्थः । तस्यसमाप्तिःइयत्तातांददातीतिकुजनमानसमाप्तिदः । त्रैलोक्यमानसमाप्तिदइत्यर्थः । तादृशःविक्रमःपदविक्षेपोयस्यसतथोक्तःतस्यसंबुद्धिःकुजनमानसमाप्तिदविक्रम । त्रिषुलोकेषुविक्रमोपदविन्यासोयस्येतिव्युत्पत्त्यात्रिविक्रमेत्युक्तंभवति ।

**मधुमदक्षयमाल्यसुविस्तृते कुजनमानसमाप्तिदविक्रम ॥ सुखद**
**वामन सोमरसार्थिषु श्रियमुदाय मुदाऽर्जयसेऽवनौ ॥ ११ ॥**

सोमस्यसोमलतायाःयोरसःतंअर्थितुंशीलमेषामस्तीतिसोमरसार्थिनःतेषुयज्ञेषुदीयमानसोमलतारसार्थिष्वित्यर्थः । देवेषुसुखदसुखप्रदहेवामनउत्कृष्टआयः अभीष्टंयस्यसतथोक्तःतत्संबुद्धिःउदायअवाप्तसकलकामेत्यर्थः । अवनौभूमौ । मुदा । श्रियंश्रीदेवींआर्जयसेधारयसीत्यर्थः । अनेनश्रियंधारयतीतिव्युत्पत्त्या श्रीधरेत्युक्तंभवति । श्रीकृष्णपक्षेतु । मधुपुष्परसोस्यवर्ततइतिमधुमत्तच्चतत् । नविद्यतेक्षयोयस्यतदक्षयंअम्लानमित्यर्थः । तच्चतत्माल्यंवनमालाचतस्यसु विस्तृतिःसुविस्तारोयस्यसतथोक्तःतस्यसंबुद्धिःमदुमदक्षयमाल्यसुविस्तृते । कुजनानांमानोहंकारःतस्यसमाप्तिदःनाशदोविक्रमोपराक्रमोयस्यसतथोक्तस्तत्संबु द्धिःकुजनमानसमाप्तिदविक्रम । अमराणांसार्थिनःसहायास्तेषुसुजनेषुइत्यर्थः । नविद्यतेमनोयस्यसोमनाःमनोरहितः । तत्रप्रीतिरहितइत्यर्थः ।तस्यअमनसःदुर्ज नस्येत्यर्थः । सुखस्यदवइवदवाग्निरिवसुखदवःतस्यसंबुद्धिःसुखदव दुर्जनसंतोषविनाशकरेत्यर्थः । उत्उत्कृष्टःआयअभीष्टंयस्यसउदायस्तस्यसंबुद्धिःउदायअ

वाप्तसकलकामश्रीकृष्ण । अवनौभूमौमुदाश्रियंसंपदंआर्जयसे । राजकूरग्रहादिनासंपादयसिअथवाश्रियंद्वारवतीसंपदंइदंसमुद्रोदकंतस्मैउदायदातुंआर्जयसे । अंतेसमुद्रःप्लावयिष्यतीतिवचनात्पूर्वोक्तपूर्णत्वद्रव्यार्जनत्वयोर्विरोधपरिहारायइयंयोजना । सकलदेशस्थितंद्रव्यंसमुद्रेस्थापयितुंद्वारकायांसंपाद्यस्थापयसीतिभावः । अत्रापिश्लोकेमाल्यसुविस्तृतेत्यत्रडलयोरभेदात्माल्यसुविस्तृतेपाठभेदेऽर्थद्वयसिद्धिर्द्रष्टव्या ॥ ११ ॥ करणेति । करणानांइंद्रियाणांपालनंरक्षणंतस्मिन्शीलंयस्यसतथोक्तस्तस्यसंबुद्धिःकरणपालनशील । हृषीकाणामिंद्रियाणांईशइतिव्युत्पत्त्याहृषीकेशइत्युक्तंभवति । जलाज्जातंजलजंपुंडरीकंतन्नाभौयस्यसतथोक्तस्तस्यसंबुद्धिःजलजनाभपद्मनाभ । कंमुख्यप्राणंमारुतेवेधसिब्रह्मेपुंसिकइत्यमरः । आश्रिता मध्वमतानुसारिणइत्यर्थः । नतेप्रणतेभक्तजनेइत्यर्थः । स्थितिंतवसन्निधानंवदंति । वरदामधरोदर वरमुत्तमंयद्दामपाशःतद्धरतीतिवरदामधरंतादृशमुदरंयस्यसतथोक्तःतस्यसंबुद्धिः । दामउदरेयस्येतिव्युत्पत्त्यादामोदरेत्युक्तंभवति । प्रियंजुषंतिसेवंतइतिप्रियजुषःतवप्रीतिकरकर्माणःसेवकाःत्वत्प्रीतिकारिणइत्यर्थः । अमीमध्व

करणपालनशील नते स्थितिं जलजनाभ वदंति कमाश्रिताः ॥
विदुरमी वरदामधरोदर प्रियजुषो यजुषोऽग्निबलीनिव ॥ १२ ॥

शिष्याःपूर्वोक्तांभक्तजनेस्थितिंविदुः । कथमिव यजुषःयजुर्वेदात्तदभ्यासादित्यर्थः । अग्नेर्बलयःपूजास्तानिवअग्निबलीनिवयज्ञानिवेत्यर्थः । यजुर्वेदस्ययज्ञतंत्रत्वादितिभावः । श्रीकृष्णपक्षेतुकरणंसृष्टिस्तच्चपालनंरक्षणंतच्चतयोःशीलंयस्यसतथोक्तःतस्यसंबुद्धिःकरणपालनशील । यद्वा कायमारुतायभीमार्थमित्यर्थः । रणंजरासंधयुद्धंतस्ययत्पालनंअसमाप्तिःतस्मिन्शीलंयस्यसतथोक्तःतस्यसंबुद्धिःकरणपालनशील भीमसेनस्ययशोदानायअहिंसितजरासंधेत्यर्थः । श्रीकृष्ण भवदंतिकंत्वत्समीपंतत्आश्रिताःमधुराद्वारकादिषुतवसमीपेस्थिताइत्यर्थः । एकस्मिन्शरीरेत्वयासहविद्यमानाइतिवा द्वासुपर्णासयुजासखायइतिश्रुतेः । अधरोदरप्रियजुषःअधरमधोविद्यमानमुपस्थंतच्चउदरंचयोयत्प्रियंतज्जुषंतीतितथोक्ताःशिश्नोदरपरायणाइत्यर्थः । अमी । जलाश्चतेजनाश्चजलजनाःमूर्खजनाइत्यर्थः । वरंअभीष्टंददातीतिवरदातांवरदांतवस्थितिंअवस्थानंनविदुः । त्वंनमनुष्यःकिंतुसाक्षादादिपुरुषइतिनविदुरित्यर्थः । कथमिव नविद्यतेयजुर्यजुर्वेदो

येषांतेअयजुषःयजुर्वेदाभ्यासरहिताइत्यर्थः। अग्निबलीनिवयज्ञानिव यजुर्वेदाभ्यासरहितानांयज्ञकरणेऽनधिकारादितिभावः ॥ १२॥ वेदव्यासंवर्णयति। शुभसमुद्रकरमिति। विभजतेस्वांगादिभागंकुर्वतेकृष्णाजिनंमुंचतइत्यर्थः । श्रीवेदव्यासाय। अत्यंतमरुचिरप्रीतिःतांप्रददातीतिअत्यरुचिप्रदा। त्यागसमयेअप्रीतिप्रदेत्यर्थः। प्रियमिष्टंमृगाजिनंकृष्णाजिनंयस्यसतथोक्तःतस्यभावःप्रियमृगाजिनताकृष्णाजिनधारित्वमित्यर्थः। भजतांशुकादीनां। मुदेसंतोषाय। शुभसमुद्रकरंमुद्रयातर्कमुद्रयासहितःसमुद्रःसचासौकरश्वशुभःसमुद्रकरोयस्यसतथोक्तःतं । वरश्चासौयतिश्चतस्यवरयतेःउत्तमसन्यासिनःश्रीमदाचार्यस्य। स्थिराभूतिःज्ञानलक्षणैश्वर्यंयस्मात्सतथातं। तंवेदव्यासं। खिलोनष्टोनभवतीत्यखिलोमोक्षःतंददातीतिअखिलदाब्रह्मविद्यैवमुद्धुःभजतेअहो। यथाब्रह्मविद्यावेदव्यासंनमुंचतितथामप्रियामृगाजिनंनमुंचतीतिभावः। चर्मचैणंदधानइत्युक्तेः।श्रीवेदव्यासःसदाकृष्णाजिनधारीत्यर्थः।मुख्यप्राणादीनामुपदेष्टृत्वेनसाक्षादादिपुरुषोपिश्रीवेदव्यासःश्रीकृष्णाजिनधारित्वादिकृषित्वादिचर्ययालोकमनुसरतीत्यहोइत्युक्तं । श्रीकृष्णपक्षेतु। भजतांयादवानांमुदेस्नानपानादिसुखाय। शुभःशु

**शुभसमुद्रकरं भजतां मुदे प्रियमृगाजिनताखिलदैवतम् ॥ वरयतेः स्थिरभूतिमहो मुहुर्विभजते भजते त्यरुचिप्रदा ॥ १३ ॥ भजकभाविविरिंचकृते प्रियप्रणय पाशवृतस्त्वमथेष्यसि ॥ तदवनीं शिवरूप्यमितोब्धिगः कुमतिना मतिनाशनदंडधृक् ॥ १४ ॥**

द्धजलःयःसमुद्रस्तंकरोतीतिशुभसमुद्रकरःतं द्वारकायांपरितःअमृतीकृतलवणसमुद्रमित्यर्थः। आजौपारिजातादिहारकालिकयुद्धेनताःप्रणताःअखिलदैवताःयस्यसतथोक्तःतं। प्रियंसकलजनेष्टंश्रीकृष्णं। स्थिराभूतिर्भस्मयस्यसतथोक्तः भूतिर्भस्मनिसंपदीत्यमरः। तस्यशिवस्यमहःतेजःमाहात्म्यमित्यर्थः। तत्। भजतेसेवतेमानवायशिवभक्तायेत्यर्थः । अत्यरुचिःअत्यंतमप्रीतिस्तांप्रददातीतिअत्यरुचिप्रदा। ऋक् नतेविष्णोजायमानः। विष्णोर्नुकंवीर्याणि। अस्यदेवस्यमीढुषेवया। इत्यादिकाऋग्वेदवागित्यर्थः। वरयतेवृणोति। प्रतिपादयतीत्यर्थः । आजौसर्वदेवताजयेसतिएतादृशवेदवाक्यानांश्रीकृष्णप्रतिपादनेअवकाशोजातइत्यर्थः । स्थिराभूतिरैश्वर्यंयस्यसस्थिरभूतिस्तं। वैराग्याद्यैश्वर्यसंपन्नमित्यर्थः। शिवंमुहुर्विभजते। श्रीकृष्णाद्भिन्नंकरोतिअहोइत्यन्वयः। विदेहिरुद्रोरुद्रियंमहित्वमित्यादिकाश्रुतिःरुद्रंश्रीकृष्णाद्भिन्नंप्रतिपादयतीत्यर्थः॥ १३ ॥ रजतपीठपुरस्थंश्रीकृष्णंवर्णयति। भजकेति। प्रियेषुभक्तेषुप्रणयः

स्नेहोयस्यसतथोक्तस्तस्यसंबुद्धिःप्रियप्रणयभक्तवत्सलश्रीकृष्ण । पाशवृतःपाशेनदाम्नावृतःयुक्तः एकहस्तेनपाशधारीत्यर्थः । कुत्सितंचतन्मतंचकुमतं दुष्टसिद्धांतंःतदेषामस्तीतिकुमतिनःमायावादिनः । तेषांकुमतिनांअत्यंतंनाशयतीत्यतिनाशनःअतिनाशकरइत्यर्थः । तादृशोयोदंडोयष्टिस्तंधारयतीतिअ तिनाशनदंडधृक् । अपरेणहस्तेनमंथानदंडधारीत्यर्थः । त्वं । अथानंतरं । भजकःसेवकोयोभाविविरिंचःआगामिब्रह्माश्रीमध्वाचार्यःतस्यकृतेतदर्थं । इतःद्वारा वतीतःअब्धिंगच्छतीत्यब्धिगःसन्समुद्रमार्गगःसन्इत्यर्थः ।इतःकिंचित्कालानंतरंतदवनींतस्यमध्वाचार्यस्यावनींजन्मभूमिंशिवस्यरूप्यंरूप्यात्मकपीठंयस्मिन् ग्रामेसशिवरूप्यस्तंशिवरूप्याख्यग्राममित्यर्थः । तद्देशभाषायांशिवबेळीतिप्रसिद्धं । एष्यसिगमिष्यसि । रूप्यपीठपुराधिवासिनःश्रीकृष्णस्यमहिमाव र्णितः । श्रीकृष्णपक्षेतु । अब्धिंक्षीरसमुद्रंगच्छतीतिअब्धिगःक्षीरसमुद्रशायीत्यर्थः । शिवंमंगलंयद्रूपंतदस्यास्तीतिशिवरूपीकंदर्पकोटिलावण्येत्यर्थः । कुत्सितामतिर्बुद्धिर्यस्यसकुमतिस्तेनकुमतिनाकुत्सितबुद्धिनापुरुषेणकंसजरासंधादिना । अमतिरज्ञानंतंनाशयतीत्यमतिनाशनःयःदंडस्तंधारयतीतिअम

भुवनवास्यनिशं मनुसंस्तुतो विधिविरोधिविनाशकृदन्वहम् ॥
अनिमिषप्रभुरागमहर्षदो निजवशो जवशोभितसागरः ॥ १५ ॥

तिनाशनदंडधृक्इतरासाध्यकंसादिशिक्षणेसतित्वमप्येकोमानुषइत्यज्ञानविवेकलतामित्यर्थः । त्वंइदानीमिवाथब्रह्मणःआगामिदिनेपिअब्धिगःमूलरूपेणक्षी रसमुद्रशायीसन्भजकःसेवकःसचासौभावोभक्तिरस्यास्तीतिभावीसचासौविरिंचश्चतस्यकृतेतदर्थंभजकभाविविरिंचकृतेविरिंचिप्रयोजनार्थेत्यर्थः । प्रियेषुभू मिस्थितभक्तेषुयःप्रणयःस्नेहःसएवपाशःतेनवृतआवृतःसन्तदवनींभक्तानांभूमिंएष्यसि । ब्रह्मणःदिनेदिनेप्येवमेवावतारंकरिष्यसीत्यर्थः ॥ १४ ॥ क्रमेणदशाव तारान्वर्णयति । भुवनवासीति । अनिशंसर्वदा । भुवनेषुजलेषुवासःआवासःसोस्यास्तीतिभुवनवासी मत्स्यस्यसदाजलवासित्वादितिभावः । भुवनंचांबु लोकेष्वितिरत्नमाला । अहःअहःअन्वहं । ब्रह्मणःदिनेदिनेइत्यर्थः । मनुनावैवस्वतमनुनासंस्तुतः । विधेःब्रह्मणःयोविरोधीतन्मुखस्थवेदापहारित्वात्तस्यासुर स्यविनाशःतंकरोतीतिविधिविरोधिविनाशकृत् । आगमानांवेदानांयोहर्षःतंददातीत्यागमहर्षदः दैत्यापहृतान्वेदान्आनीयपुनःप्रचारकरणेनतेषांहर्षदइत्यर्थः जवेनवेगेनशोभितःजवशोभितःतादृशःसागरःप्रलयसमुद्रोयेनसतथोक्तः । त्वरयाइतस्ततःगमनेसतिस्वकांत्यासमुद्रस्यापिशोभांजनयन्निवेत्यर्थः । अनिमिषा

णांमत्स्यानां अनिमिषश्चानिमिषौद्वावेतौसुरमत्स्ययोरितिरत्नमाला । प्रभुःस्वामीअनिमिषप्रभुःमत्स्यावतारोहरिःनिजानांस्वकीयानांअस्माकंवशोवशवर्ती
भक्ताभीष्टकारित्वात्भक्तवशइत्यर्थः । अस्तु । श्रीकृष्णपक्षेतु । अनिशंनित्यं । भुवनेषुलोकेषुयोवासःसोस्यास्तीतिभुवनवासी । अन्वहं । मनुनाश्रीकृष्णमं
त्रेणभक्तैःसंस्तुतः । विधेर्यज्ञादिकर्मानुष्ठानस्यविरोधिनोदैत्यास्तेषांविनाशःतंकरोतीतितथोक्तः । आगमेनइंद्रप्रस्थंप्रतिस्वस्यागमनेनहर्षदःपांडवानांसंतोषदः
जवेनद्वारावतींप्रतिपुनःपरावृत्यागमनेनशोभितःतादृशःसागरोयेनसतथोक्तः । अनिमिषाणांदेवानांप्रभुःश्रीकृष्णः । निजानांस्वभक्तानांवशोऽस्तु ॥ १५ ॥
कूर्मावतारंवर्णयति । भुजगेति । भुजगःशेषःसचदिक्करिणोदिग्गजास्तेचतेषांयोभारःमहीमहीधरादिभारस्तस्मात्जातःभारजःयःशोकःतंहरतीतिभुजगदिक्
करिभारजशोकहृत् । बहुभारवशात्जलेमज्जतांशेषदिग्गजानांआधारतयाकूर्मरूपेणावस्थानादितिभावः । सुराणांयोमनोरथःवांछितार्थस्तस्यपूरणंतस्मिन्
कारणंकारणीभूतःसुरमनोरथस्यामृतप्राप्तिलक्षणाभीष्टस्ययत्पूरणंतस्मिन्कारणंसाधनंमंदरवासुक्यादियस्मिन्सतथोक्तइतिवा । सर्वस्यजगतःकूर्माश्रितत्वादि

भुजगदिक्करिभारजशोकहृत् सुरमनोरथपूरणकारणः ॥ स्वमतवारिनिधेर्मथने पटुर्गिरिधरोऽरिधरोऽय
मिहागतः ॥ १६ ॥ स्ववशगोरिपुभीषणचेष्टितो वरवराहतया दवकृद्विषाम् ॥ मखसहायकृतिर्धरयाऽर्चि
तः कमलयाऽमलयाऽयमहो वृतः ॥ १७ ॥

तिभावःस्वस्यमतःसंमतःयोवारिधिःक्षीरसमुद्रःतस्यमथनंनिर्मथनंतस्मिन्पटुःसमर्थःस्वपृष्ठेगिरेर्धारणाभावेमथनासंभवात्गिरिंमंदरपर्वतंधरतीतिगिरिधरःआरिंच
क्रंधरतीतिअरिधरःअयंकूर्मःइहक्षीरसमुद्रमथनप्रदेशेआगतः । श्रीकृष्णपक्षेतु भुजगःशेषःसचदिक्करिणोदिग्गजास्तेचतेषांयोभारःतस्मात्जातःभारजःयःशो
कःतंहरतीतितथोक्तःभूभारायितदैत्यविध्वंसनेनभूधारिणांशेषदिग्गजानांशोकापहारीत्यर्थः सुरमनोरथःसुराणांअभीष्टंभूभारहरणंतस्ययत्पूरणंतस्मिन्कारणंसा
धनंचक्राद्यायुधजातंयस्यसतथोक्तः । सुष्ठुअमताःवैरिणःस्वमताःतएववारिनिधिःसमुद्रःतस्यमथनंसंहरणंतस्मिन् । पटुःसमर्थः । गिरिधरःगोवर्धनधरः । अरिध
रःअरीणांशत्रूणांधरःपर्वतइवशत्रुभिरचाल्यइत्यर्थः अयंकृष्णः । इहद्वारवत्यांआगतः । भूभारहरणार्थमवतीर्यअमोघचक्रगदाद्यायुधवतःबहुवारंबहुतरजरासं
धवधंकृतवतःबाल्येपिगिर्युद्धरणसमर्थस्यश्रीकृष्णस्यशत्रुभयात्इहागमनंनेतिसूचनार्थंविशेषणपंचकम् ॥ १६ ॥ वराहावतारंवर्णयति । स्ववशेति । स्ववशा

स्वाधीनायागौर्भूमिः गौर्नाकेवृषभेचंद्रेवाग्भूदिग्धेनुषुस्त्रियामितिरत्नमाला । तस्यारिपुःहिरण्याक्षःतस्यभीषणंभयंकरंचेष्टितंव्यापारोयस्यसस्ववशगोरिपुभीषणचेष्टितः । वरःश्रेष्ठःयोवराहस्तस्यभावस्तत्तातयावरवराहतया । द्विषांदैत्यानां । दवमग्निंकरोतीतिदवकृत् । परस्परंहन्यमानदंष्ट्राग्रेणाग्निंवमन्नित्यर्थः। मखस्ययज्ञस्यसहायाःसाधनीभूताःकुशाद्याःतेषांकृतिःस्वांगेभ्यःकरणंयस्मात्समखसहायकृतिः । धरयाभूम्याअर्चितःअयंवराहःअमलयानिर्मलया । कमलयालक्ष्म्या । वृतःअहोआश्चर्यं । श्रीकृष्णपक्षेतु । स्ववशाःगोपालावस्थायांस्वाधीनाःयागावःतासांरिपवःशार्दूलवनमहिषादयः । तेषांभीषणंभयंकरंचेष्टितंव्यापारोयस्यसतथोक्तः।द्विषांदैत्यानां। वरेभ्यःश्रेष्ठेभ्यःरुद्रादिभ्यःयेवराःप्राप्तसर्वशत्रुसंहरणसामर्थ्यादिरूपाःतैरहताःअविनष्टाःयेयादवाःतानूकरोतीतिवरवराहतयादवकृत् कृष्णवशानांयादवानांरुद्रादिवरोऽकिंचित्करइतिभावः।मखस्यराजसूयमखस्यसहायकृतिःसहायस्याचरणंयस्मात्समखसहायकृतिः । मखंराजसूयंसहंतइतिमखसहाःराजसूययोग्याःपांडवाःतेषांयःआयःवित्तप्राप्तिःतस्यकृतिर्यस्मात्समखसहायकृतिरितिवा । धरयाप्राग्ज्योतिषपुरेनरकमात्राभूम्या । अर्चितःअयंकृष्णःअमलयानिर्दोषयाकमलयारुक्मिण्यावृतःअहो ॥ १७॥ नरसिंहावतारंवर्णयति।अरिहिरण्यकइति।अरिःशत्रुर्योहिरण्यकोहिरण्यकशिपुःतस्ययःसंक्षयः

**अरिहिरण्यकसंक्षयकारकं नरमृगाधिपमद्भुतचेष्टितम् ॥ अघकृदिंद्रकृतार्चनतोषितं भज मनोऽजमनोहरविक्रमम् १८**

तस्यकारकःकर्तातं । अद्भुतंचेष्टितंगिरिविदारणादिव्यापारोयस्यसतथोक्तस्तं । नरसिंहप्रादुर्भावेसतिगिरिविदारणादेःप्रसिद्धत्वादितिभावः । अघंवृत्रहत्यादिकंपापंकृतवानितिअघकृत्इंद्रस्तेनकृतंयत्अर्चनंभजनंतेनतोषितःसंतुष्टःतं । वृत्रहत्याद्यघपरिहारार्थेंद्रेणनरसिंहार्चनंकृतमितिपौराणिकीकथाप्रसिद्धा । अजस्यब्रह्मणःमनोहरःअजमनोहरःतादृशःविक्रमःप्रतापोयस्यसतथोक्तस्तं । नरश्चासौमृगाधिपश्चनरमृगाधिपःतंनरसिंहमित्यर्थः । हेमनःभजसेवस्व । कृष्णपक्षेतु । अरीणांशत्रूणांदुर्योधनादीनांयत्हिरण्यमेवहिरण्यकंतस्यसंक्षयःतस्यकारकःसंपादकस्तंदुर्योधनादीनांसंपद्विनाशकमित्यर्थः । अद्भुतमाश्चर्यंशैशवेब्रह्मांडधारणादिकंचेष्टितंकर्मयस्यसतथोक्तस्तं । अघंस्वयागध्वंसेसतिश्रीकृष्णावज्ञारूपापराधंकृतवानितिअघकृत्सचासाविंद्रश्चतेनकृतंअवज्ञापरिहारार्थंकृतंयदर्चनंपट्टाभिषेकादिपूजातेनतोषितस्तं । अजस्यकामस्य अजःशंभौविष्णुधात्रोःकामेछागेरघोःसुतइतिरत्नमाला । मनोहरःविक्रमोपादविक्षेपोयस्यसतथोक्तस्तं । मन्मथगमनमनोहरइत्यर्थः । मनोहरस्यकामस्येतिवा । नरेषुमृगाधिपःश्रेष्ठःनरमृगाधिपस्तं । पुरुषोत्तममित्यर्थः । कृष्णंभज ॥ १८ ॥

वामनावतारंवर्णयति । बलभृदिति । बलंबलनामकमसुरंहरतीतिबलहत्इंद्रःतस्ययाआर्तिःसंपन्नाशनिमित्तदुःखंतांहरतीतिबलहृदार्तिहरःयअनुजनिःअनुअनं
तरंजनिरुत्पत्तिर्यस्यसोनुजनिरिंद्रावरजइत्यर्थः।वामनस्यइंद्रानुजत्वादितिभाव । बलेर्महाबलेःयःपराजयःतंकरोतीतिबलिपराजयकृत्।सतांदेवानांजयंकरोतीति
जयकृत्अवनौभूमौजातःस्वयमेवभूमौजातंनतुशाखारूपइत्यर्थः।यःपलाशदंडःतंधारयतीत्यवनिजातपलाशदंडधृक् वामनस्यब्रह्मचारित्वादितिभावः ।वृक्षशा
खारूपदंडात्साक्षाद्भूमिजातस्यपलाशदंडस्यमुख्यत्वादवनिजातइत्युक्तं । भुवनानिलोकान्स्वप्रक्षालितोदकेनपावयतीतिभुवनपावनंतादृशंपादसरोरुहंयस्यस
तथोक्तः। वामनःनोस्माकंप्रभुःस्वामी।श्रीकृष्णपक्षेतु । बलस्यबलभद्रस्ययत्हृत्चित्तंतस्मिन्याआर्तिःतांहरतीतिबलहृदार्तिहरःबलभद्रस्यसुखकरइत्यर्थः । स
चासौअनुजनिरनुजश्च बलभद्रानुजइत्यर्थः । बलिनोबलाढ्याःयेदुर्योधनजरासंधादयःतेषांपराजयकृत् । सतांपांडवानांजयकृत्ततोप्यनंतगुणितंबलवानि
त्यर्थः । अवनौभूमौजाताःयेपलाशाःपलंमांसमश्नंतीतिपलाशाःराक्षसाः पलमुन्मानमांसयोरितिभास्करः । तेषांसुदंडःसम्यक्शिक्षणंतंधरतीतिसुदंडधृक्

**बलभृदार्तिहरोऽनुजनिः प्रभुः बलिपराजयकृज्जयकृत्सताम् ॥ अवनिजातपलाशसुदंडधृग् भुवनपावन**
**पादसरोरुहः ॥ १९ ॥ युधि सहस्रकरोर्जितबाणहृत् परशुरर्जुनसत्क्षितिदायकः ॥ कुभरसंहरणोग्ररणाग्रणीर्द्विजभवोऽजभवोन्नतिदायकः ॥ २० ॥**

सम्यक्शिक्षाकृदित्यर्थः । भुवनंलोकंपातीतिभुवनपः
अर्जुनःतस्यावनंरक्षणंयस्मात्तद्भुवनपावनंतादृशंपादसरोरुहंपादपद्मंयस्यसतथोक्तः । शिरोदेशेस्थितंदुर्योधनंत्यक्त्वापादसमीपेस्थितत्वेनार्जुनस्यरक्षणादित्य
र्थः ॥ १९ ॥ परशुरामावतारंवर्णयति। युधीति । युधियुद्धे । सहस्रंकराहस्तायस्यससहस्रकरःकार्तवीर्यार्जुनःतस्ययेऊर्जिताबाणाउत्कृष्टाःशराःतान्हरतीति
सहस्रकरोर्जितबाणहृत्तादृशःपरशुर्यस्यसतथोक्तः । अर्जुनस्यकार्तवीर्यार्जुनस्यसतीसमीचीनायाक्षितिर्विनाशःतस्याःदायकःदाता । क्षितिःक्षयावासभूष्वि
तिरत्नमाला। तदीयबाणान्छित्त्वांतेतस्यापिखंडनंकृतवानित्यर्थः । कुंपृथ्वींबिभ्रतिपालयंतीतिकुभराःक्षत्रियाःतेषांसंहरणंविनाशःयस्मिन्तत्कुभरसंहरणंतच्च
तत्उग्ररणंचतस्मिन्नग्रणीःश्रेष्ठःत्रिःसप्तकृत्वःक्षत्रियैःसहकृतसंगरइत्यर्थः।द्विजात्जमदग्न्याख्यब्राह्मणात्भवतीतिद्विजभवःब्राह्मणकुलोत्पन्नइत्यर्थःपरशुरामः
अजश्चभवश्चअजभवौतयोर्विरिंचिशिवयोःउन्नतिदायकःउन्नतेःश्रैष्ठ्यस्यप्रदाता शिवाखिलज्ञानदातेतिपरशुरामनामसुपाठात्।अजाद्भवतीत्यजभवःशिवःतस्य

उन्नतिदायकेतिवा । श्रीकृष्णपक्षेतु । युधियुद्धे । सहस्रंकराःहस्ताःयस्यसःसहस्रकरःयःऊर्जितबाणःउत्कृष्टबाणासुरःतस्यहृत्हृदयंतस्मिन्परशुरिवपरशुःनर्त्तो डकइत्यर्थः । अर्जुनस्यभीमानुजस्यसत्क्षितिःसमीचीनभूमिःतस्याःदायकःप्रदातादुर्योधनादीन्हत्वाअर्जुनस्यराज्यदातेत्यर्थः । प्राक्प्रणतार्जुनहेतुरित्यत्रोक्ता भ्युदयस्यात्रक्षितिपदेनस्पष्टीकरणात्नपौनरुक्त्यं । कोःपृथ्व्याःभरोभारःतस्यसंहरणंसंहारोयस्मात्कुभरसंहरणंचतत्उग्ररणंचतस्मिन्अग्रणीःअग्रेसरः । द्विजा नांब्राह्मणानांभवोमंगलोयस्मात्सद्विजभवः । भवःसत्ताभद्रशर्वप्राप्तिसंसारजन्मस्थितिरत्नमाला । श्रीकृष्णः । अजात्ब्रह्मणोभवतीतिअजभवःशिवःतस्यउन्न तिदायकःकैलासयात्रयाश्रैष्ठ्यप्रदःअजभवयोर्ब्रह्मशिवयोःउत्कृष्टानतयःस्वचरणनमस्काराःतासांदायकः । देवकीगर्भमारभ्यअवतारसमाप्तिपर्यंतंक्षणेक्षणेकृ ष्णपराक्रमदर्शनेनब्रह्मरुद्रयोःकृष्णनमस्कारेणैवकालोगतइतिभावः ॥ २० ॥ रामावतारंश्लिष्टोक्त्यावर्णयति । अहिमकांतिमतइति । हिमाशीतानभवतीत्यहि मासाचसाकांतिश्चअहिमकांतिःसास्यास्तीतिअहिमकांतिमान्उष्णकिरणःसूर्यःतस्यःकुलंगोत्रं । कलयाअंशेन । अधिकंयथाभवतितथाभूषितमलंकृतंअ

अहिमकांतिमतः कलयाकुलं व्यतनुताऽधिकभूषितमंजसा ॥ अभयमन्यदशास्यसुखंडितः क्षितिसुताति सुतापभिदाकृतिः ॥ २१ ॥

धिकभूषितं ।अंजसा । व्यतनुतकृतवान् । सूर्यकुलालंकारःअंशेनावतीर्णइत्यर्थः । अन्यःवैरीयःदशास्योरावणःतस्ययेऽसवःप्राणास्तेषांखंडयतीतिखंडनःअपह र्ता । शकंध्वादेराकृतिगणत्वात्शकंध्वादिषुपररूपंवाच्यंइतिपररूपत्वात्दशास्यसुखंडनइत्यत्रसवर्णदीर्घाभावः । पुत्रपौत्रादिभिःसहप्राणापहारीत्यर्थः । क्षिति सुतायाःभूसुतायाःसीतारूपायाःसीताप्रकृतेरतिसुतापाःतान्भिनत्तीतिक्षितिसुतातिसुतापभित्तादृशीआकृतिःस्वरूपंयस्यसतथोक्तः । यद्वा क्षितिसुतायैसी तार्थंयेअतिसुतापाःलोकविडंबनार्थंस्वकृतसंतापाःतएवसुतापाःअंतःसुखकरास्तापाःइत्युक्ताःतैःसाधनैःभिदायाःरामोदुःखितमिथ्याज्ञानंरामसंतापदर्शनात्जनित लोकमिथ्याज्ञानमित्यर्थः । तस्याःआकृतिःकारणंयस्मात्सतथोक्तःसःश्रीरामःअंजसाअभयंलोकस्यक्षेमंतत्व्यतनुतचकार । श्रीकृष्णपक्षेतु । अन्येषांशत्रूणां दशअवस्थासाचअसिःआयुधंसचअसुःप्राणःसचअन्यदशास्यसवःतान्खंडयतीत्यन्यदशास्यसुखंडनः । अन्येत्यनेनदैत्यानामेवप्राक्चतुरंगसेनोपेतावस्थां ततस्तदायुधंचअंतेप्राणांश्चसंहरतिनतुकदापितत्पदप्रेमकुर्वतांभक्तानामितितात्पर्यंसूच्यते । क्षितिसुतोनरकासुरःतस्यअतिसुतापःअतिक्लेशोययासातथोक्तासा

चसाभिदाविदारणंचशिरश्छेदइत्यर्थः।तस्याःकृतिःकारणंयस्मात्सक्षितिसुतातिसुतापभिदाकृतिः।अथवाक्षितिश्चसुतश्चतयोःपृथ्वीप्रद्युम्नयोःयौअतिसुतापौक्षिते र्भारनिमित्तकःक्लेशःप्रद्युम्नस्यदेहाभावनिमित्तकःक्लेशइत्यर्थः।तौभिनत्तीतिक्षितिसुतातिसुतापभित्तादृशीआकृतिःयस्यसतथोक्तःक्षितेर्भूभारविनाशनेनअनंग स्यप्रद्युम्नस्यरुक्मिण्यांदेहजननेनतयोःनिमित्तकक्लेशविनाशनादितिभावः। श्रीकृष्णः। कानांसमस्तानांफणानामित्यर्थः। योलयःमर्दनंतेनआकुलःव्यथितः तं। अतएवाकांतिंकांतिरहितं अहिंकालीयसर्पंयत्रेदानींतिष्ठतिअंतेयमुनाह्रदात्। अधिकाचसाभूश्चअधिकभूःजन्मभूमिरित्यर्थः। तस्यामुषितंस्थितंव्यतनुतच कार। यमुनाह्रदात्स्वजन्मभूमिरमणकद्वीपंप्रतिप्रेषितवानितिभावः। अंजसा। नविद्यतेभयंयस्यसोभयस्तंचव्यतनुतशिरसिस्वपादचिह्नकरणेनरमणकद्वीपेगरु डाभयंचकारेतिभावः॥ २१ ॥ इदानींश्रीकृष्णस्यवेदव्यासस्यचकथाश्लिष्ट्योक्त्यावर्णयति । रुचिरेति । रुचिरःभारतपुण्यकथोदयःभरतस्यगोत्रापत्यंपु मांसःभारताःकुरुपांडवाःतेषांपुण्याचसाकथाचपुण्यकथायुद्धरूपपुण्यकरकथेत्यर्थः। तस्याउदयोयस्मात्सरुचिरभारतपुण्यकथोदयः।शुकवत्यत्सुभाषणंत

रुचिरभारतपुण्यकथोदयः शुकसुभाषणतोषणकारणः॥ विमलधर्म
शुभस्थितिकृत्क्षितावयमसौ यमसौहृदकृन्नृणाम्॥ २२ ॥

देवतोषणकारणंयस्मिन्सतथोक्तः। क्षितौ । नृणांमध्येविमलःरागादिदोषरहितोयोधर्मःयुधिष्ठिरःतस्ययाशुभस्थितिःशुभेस्वधर्मेस्थितिर्निष्ठातांकरोतीतिविमल धर्मशुभस्थितिकृत् स्वाभाविकधर्मस्यापिभगवदधीनत्वादितिभावः। यद्वा उत्तमराज्यस्थितिकृदितिवा। यमयोःनकुलसहदेवयोःसौहृदकृत्स्नेहकृत्असौएता दृशमाहात्म्योपेतःअयंअस्मत्पुरतोदृश्यमानःइतिमुनीनांवचनं । वेदव्यासपक्षेतु। रुचिरायाभारतपुण्यकथाभारताख्यापुण्यकथापुण्यप्रदवाक्यप्रबंधःरुचि रभारतपुण्यकथातस्याउदयोयस्मात्सतथोक्तः लक्षपरिमितमहाभारताख्यग्रंथकृदित्यर्थः। शुकस्यशुकाचार्यस्ययत्सुभाषणंमनोहरवचनंतद्देवतोषणकारणंय स्यसतथोक्तः। पुत्रत्वात्स्वाभिप्रायविवेचकशुकवाक्येनतुष्यन्नित्यर्थः। क्षितौभूमौ। विमलःअंगवैकल्यरहितःयोधर्मःनित्यनैमित्तिकधर्मःतस्यशुभस्थितिकृ त्धर्मस्थापकइत्यर्थः । असौएतादृशगुणविशिष्टतयाप्रसिद्धःअयंवेदव्यासः। नृणांयमेनअंतकेनसौहृदंस्नेहःकरोतीतियमसौहृदकृत्। व्यासोक्तधर्ममाचर

तांयमभयंनास्तीतिभावः । प्रागनुक्तैवव्यासकथाअत्रवर्णितेतिज्ञातव्यम् ॥ २२ ॥ इदानींबौद्धावतारंश्लिष्टोक्त्यावर्णयति । भुवीति । स्वंस्वात्मानंवेत्तीति स्ववित्स्वप्रकाशःयथाअंबरंव्योमतथा । भुवि । एतिप्राप्नोतीतिइतःव्याप्तः । आत्मनःपरमात्मनःविष्णोःनवमाचसाआकृतिश्चनवमाकृतिःदशावतारमध्येनव मावतारः । सकलंवेत्तीतिसकलवित्सर्वज्ञः । खलानांत्रिपुरस्थदैत्यानांसंचयःसमूहःतस्यवंचकः । मतेःसम्यग्ज्ञानस्यविरोधिनीअमतिःसुष्ठुमतिःस्वमतिः तांसम्यक्ज्ञानविरोधिमिथ्याज्ञानंस्वरचितबौद्धागमेनददातीतिस्वमतिदःएषः । तथागतोबुद्धःसर्वज्ञःसुगतोबुद्धोधर्मराजस्तथागतइत्यमरःनोस्माकं । मतिदोषः कामक्रोधादिःतंहरतीतिमतिदोषहरःअस्तु । श्रीकृष्णपक्षेतु । भुवियथाअंबरंआकाशंतथाभुविआगतःजननमरणच्छेदभेदादिदोषराहित्येनागतोवतीर्णः । स्व विदितःस्वैर्भक्तजनैर्विदितःज्ञातःस्वविदितःसाकल्येनज्ञातइत्यर्थः । आत्मनःपरमात्मनःमूलमूर्तेःसकाशात्अनवमाअनवराआकृतिःस्वरूपंयस्यसोनवमाकृ

भुवि तथागत एष यथांबरं स्वविदितो नवमाकृतिरात्मनः ॥ सकलवित् खलसंचयवंचकः स्वमतिदो म तिदोषहरोऽस्तु वः ॥२३॥ विततविष्णुयशोजननांऽजसा कृतयुगोन्नतिदातृकरोर्जित ॥ द्विजसुहृत्कलि काननदैन्यहेत्वसिधराऽसि धराभयकारक॥ २४ ॥

तिः । सकलवित्सर्वज्ञःखलसंचयःदुर्योधनादिदुष्टसमूहःतस्यवंचकः । स्वमतिदःस्वस्ययामतिःज्ञानंतांददातीतितथोक्तःअर्जुनोद्धवादीनांस्वविषयकत त्त्वज्ञानप्रदइत्यर्थः । श्रीकृष्णः । नः । अमतिरज्ञानंसैवदोषःतंहरतीत्यमतिदोषहरः । अस्तु । अज्ञानंपरिहरत्वित्यर्थः ॥२३॥ इदानींकल्क्यवतारंवर्ण यति । हेविततव्याप्त । विष्णुयशसःविष्णुयशोनाम्नोब्राह्मणात्जननंप्रादुर्भावोयस्यसतथोक्तःतत्संबुद्धिःविष्णुयशोजनन । अंजसासम्यक् । कृताख्यंकृत युगंतस्योन्नतिरोन्नत्यंश्रैष्ठ्यंतद्ददातीत्युन्नतिदाताचःकरोहस्तस्तेनम्लेच्छान्हत्वाकृतयुगस्यसद्धर्मप्रवर्तनेनश्रैष्ठ्यदायकेत्यर्थः । तेनऊर्जितउत्कृष्ट । सत्यप्रवर्त कोदेवद्विजदीर्घक्षुधापहः । अनंतःस्वर्णयागैकहेमपूर्णाखिलद्विजइतिकल्किनामसुपाठात् । द्विजानांब्राह्मणानांसुशोभनंयत्हृत्हृदयंतस्ययःकलिःहृदयेवि द्यमानकलिरित्यर्थः । सएवकाननंतस्ययद्दैन्यंछेदःतस्यहेतुःकारणीभूतःयअसिःखड्गःतंधरतीतिद्विजसुहृत्कलिकाननदैन्यहेत्वसिधरहेकल्किन् । त्वंधरायाः

भूमेः भयस्याभावोऽभयंतस्यकारक । असि । श्रीकृष्णपक्षेतु । विततोव्यापोयोविष्णुःश्रीनारायणःतस्ययशःकीर्तिःतस्यजननंप्रादुर्भावोयस्मात्सविततविष्णुयशोजननःतस्यसंबुद्धिः । अंजसावक्रादिदोषराहित्येनकृतःनिर्मितःयोयुगःरथावयवविशेषःतद्वदुन्नतिर्दैर्घ्यंयस्यसोंजसाकृतयुगोन्नतिःसचासौदातापुरुषार्थप्रदश्चतादृशःयःकरःहस्तस्तेनऊर्जितउत्कृष्ट । द्विजानांनक्षत्राणांसुहृच्चंद्रःतस्यकलिकाकलातद्वदाननंयस्यसतथोक्तस्तस्यसंबुद्धिःद्विजसुहृत्कलिकाननेत्यर्थः । दैन्यहेत्वसिधर । दैन्यस्यशत्रूणांदुःखस्यहेतुःकारणीभूतःयोसिःनंदकाख्यखड्गःतंधरतीतितथोक्तस्तस्यसंबुद्धिः । हेकृष्ण । धराभयकारकभूमेर्भारावतरणेनाभयकारकःअसि ॥ २४ ॥ अवतारमालिकावर्णनंसमापयति । इत्थमिति । इत्थमुक्तप्रकारेणसरसाःस्नेहयुक्ताःयेसँल्लापाःसमीचीनवचनानितैः । सतांपतिंश्रीकृष्णं । अहःप्रतिप्रत्यहंप्रतिदिनंसंस्तुवंतःतेमुनयःतस्यश्रीकृष्णस्ययत्पदंतदेवांभोजंपद्मंतत्ईक्षमाणाःपश्यंतःसंतःद्वारकायांनिवसंति ॥ २५ ॥ इदानीं

इत्थं स्वरससँल्लापैः संस्तुवंतः सतां पतिम् ॥ प्रत्यहं तत्पदांभोजमीक्ष्यमाणा वसंति ते ॥ २५ ॥ इहाखिलैश्वर्यसुभोगवृद्धेः परत्र निश्रेयससौख्यसिद्धेः ॥ महः परं द्वारमवाप्य पृथ्व्यामसौ पुरी द्वारवती बभूव ॥ २६ ॥ यतोभितोऽच्छस्फटिकावदातलसत्कवाटांतरिताऽपि सेयम् ॥ पुरी नृणां द्वारवतीव भाति ततोऽपि तां द्वारवतीं वदंति ॥ २७ ॥

आसर्गसमाप्तिद्वारावतींवर्णयति । इहेति । इहसंसारे । अखिलैश्वर्यंराज्यवित्ताद्यैश्वर्यंतच्चसुभोगःस्रक्चंदनादिवनिताभोगःसचतयोर्वृद्धिरभिवृद्धिःतस्याःपरत्रचपरलोकेच । निश्रेयसःमोक्षःतस्मिन्यत्सौख्यंसुखंतस्यसिद्धिःप्राप्तिःतस्याः । परंउत्तमं । द्वारंद्वारभूतं । महस्तेजःतेजोरूपिणंश्रीकृष्णमित्यर्थः । अवाप्यस्वस्यांसंस्थाप्येत्यर्थः । पृथ्व्यांअसौश्रीकृष्णाधिष्ठितापुरीद्वारवतीद्वारवतीशब्दवाच्या । बभूव । द्वारमस्यामस्तीतिव्युत्पत्तिसंभवात् । सर्वासामपिपुरीणांद्वारत्वेप्यस्याःउक्तरीत्याविलक्षणद्वारवत्त्वात्असाधारण्येनव्युपदेशाभवंतीतिन्यायादस्याएवद्वारवतीशब्दवाच्यत्वमितिभावः॥२६॥यतइति । सेयंपुरी । यतःकारणात् । अभितःसमंताच्चतुर्द्वारेष्वित्यर्थः । अच्छाःस्वच्छाःयेस्फटिकाःस्फटिकपाषाणाःतैरवदातानिशुभ्राणियानिलसत्कवाटानितैरंतरितापिपिहितापि । नृणांद्वा

राणिअस्यांसंतीतिद्वारवती। सैव। कवाटानांस्वच्छलेनबहिस्थितानांव्यापारस्यांतस्थितेःदृश्यमानत्वात् ।अंतस्थितव्यापारस्यबहिःस्थैर्दृश्यमानत्वात्सदाविवृत द्वारवतीवभाति। ततोपिकारणात् अपिशब्दःपूर्वपद्योचितकारणसमुच्चये। तांपुरींद्वारवतींवदंति॥२७॥ इदानीमस्याःद्वारवतीत्वंप्रतिक्षिपति। यतःकवाटइति। सेयंपुरी। यतःकारणात्कवाटेविवृतेसत्यपि। महत्याबहुयानिबिड्येत्यर्थः।हरिन्मणीनांद्वारबंधस्थमरकतरत्नानां गारुत्मकंमरकतमश्मगर्भोहरिन्मणिरित्यमरः। प्रभयाकांत्या। कवाटांतरितेवस्फटिककवाटस्यविवृतत्वेनतत्कांत्यभिभवाभावात्। द्वारबंधस्थमरकतकांत्यावृतत्वेनकवाटैरंतरितेवपिहितेवभाति। अतःसापु रीद्वारवतीतिकथंमन्ये। भ्रांतिमदुत्प्रेक्षाक्षेपानांसंकरः।कवाटतिरोधानेसतिअसंभावितद्वारस्यसद्भाववर्तनेचअतिशयोक्तिरपिसर्वैष्टदायत्कृष्णाधिष्ठितस्फटिक शिलामयचतुष्कवाटवतीमरकतरत्नखचितद्वारबंधवतीचेतिपुरीवर्णनमपिद्रष्टव्यं एवमुत्तरत्रापि ॥ २८ ॥ यदीयेति। बहुशःबह्वी अरिसेना। यस्याःद्वार

यतः कवाटे विवृतेपि सेयं पुरी कवाटांतरितेव भाति ॥ हरिन्मणीनां प्रभया महत्या कथं नु सा द्वा
रवतीव मन्ये ॥ २८ ॥ यदीयरत्नावृतहेमवप्रसकाशमभ्येत्य निवर्तते स्म ॥ समुद्यतासीन् प्रतिबिंबरा
शीन् निरीक्ष्य दीना बहुशोऽरिसेना ॥ २९ ॥ मुक्तावलीराजितसर्वगेहा नित्यं प्रमोदाशनसत्समूहा ॥
दुष्टैरगम्या दयिता मुरारेर्मुक्तिप्रदा द्वारवती पुरी सा ॥ ३० ॥

कायाःसंबंधियदीयंतच्चतत्रत्नावृतंरत्नखचितंतच्चतत्हेमवप्रंसुवर्णप्राकारश्चतस्यसकाशसमीपंतत्। अभ्येत्यगत्वा। समुद्यताःअसयःखड्गाःयैस्तेतथोक्ताः तान्। प्रतिबिंबराशीन्प्रतिकृतिसमूहान्रत्नानांबहुत्वेएकैकस्यबहुप्रतिबिंबसंभवेनप्रतिबिंबराशीनित्युक्तं।निरीक्ष्यदीनासति। प्रतिभटबुद्ध्याभययुक्तासतीत्यर्थः। निवर्ततेस्मनिवृत्ताभूत्। बहुशःबहुवारंनिवर्ततइतिवा। भ्रांतिमदलंकारः ॥ २९ ॥ मुक्तावलीति। मुक्तानांमौक्तिकमणीनांआवल्यःपरंपरास्ताभीराजिता निशोभितानिसर्वगेहानियस्याःसा। मौक्तिकनिर्मितगृहवतीत्यर्थः। अर्थांतरे मुक्तानांविमुक्तानांआवल्यःसमूहाःताभीराजितानिसर्वगेहानियस्यांसातथोक्ता। विमुक्ताधिष्ठितगृहवतीत्यर्थः। श्रीकृष्णसंनिधानवशात्नित्यंसर्वदा। प्रमोदंप्रकृष्टसुखमश्नंतीतिप्रमोदाशनाःतेचतेसंतःसज्जनाश्चतेषांसमूहोयस्यांसातथोक्ता

अर्थांतरे। प्रमोदंस्वरूपानंदमश्नंत्यनुभवंतीतिप्रमोदाशनास्तेषांसत्समूहःसमीचीनसभायस्याःसातथोक्ता। दुष्टैःशंखचक्रादिचिह्नरहितैःअगम्यागंतुमयोग्या ना
मुद्रिताःप्रवेष्टव्याइतिवचनात्।अर्थांतरे। दुष्टैरयोग्यैर्दैत्यैरगम्या। मुरारेःश्रीकृष्णस्यदयितासाद्वारवतीपुरी। मुक्तेर्मुक्तिस्थानस्यवैकुंठस्यप्रभेवप्रभायस्याःसामु
क्तिप्रभा। तुल्ययोगितोज्जीवितोपमालंकारः ॥३०॥ विचित्रेति। अब्धिःसमुद्रःविचित्राणियानिरत्नानिइंद्रनीलादीनितैरावृताःखचिताःतेचतेवप्राःप्राकाराःतेच
सौधाःराजसदनानितेचगृहाणिचअंगनानार्यश्चगोपुराणिपुरद्वाराणितानिचवापिकाःदीर्घिकाः ताश्चतासामोघोयस्मिन्तत्तथोक्तंतदिदंपुरीरत्नंद्वारवतीपुर्याख्यरत्नं
तदवाप्यस्वांतर्निधायरत्नाकरइतिशब्दःसंजातोस्यइतिरत्नाकरशब्दितःरत्नाकरशब्दवाच्यइत्यर्थः। बभूवनूनं। इत्युत्प्रेक्षालंकारः॥३१॥समुद्रमिति। समुद्रमुत्सृ

विचित्ररत्नावृतवप्रसौधगृहांगनागोपुरवापिकौघम् ॥ इदं पुरीरत्नमवाप्य नूनं बभूव रत्नाकरशब्दितोऽ
ब्धिः ॥ ३१ ॥ समुद्रमुत्सृज्य पुरीं प्रविष्टा बलेन मुक्तावलिराशुगस्य ॥ भवाब्धिमुल्लंघ्य मरुद्बलाप्तवि
कुंठमुक्तावलिवद्विरेजे ॥ ३२ ॥ तरुं मदीयं नयतूच्चमत्स्वःपुरीं न नेतुं स हरिः समर्थः ॥ मरुत्वतेतीरित
एव नूनं पुरीमिमां रम्यतमां चकार ॥ ३३ ॥ अधिष्ठिताः पोतममुं श्रयंते स्वकार्यलाभाय वणिक्समू
हाः ॥ स्वरूपलब्ध्यै हरिपादपोतकृताश्रयाः सिद्धजनाश्च दूरात् ॥ ३४ ॥

ज्यतरंगवशात्समुद्रंत्यक्त्वा। आशुगच्छतीतिआशुगोवायुःतस्यबलंवेगसामर्थ्यंतेनपुरींद्वारवतींप्रविष्टामुक्तावलिःमौक्तिकसमूहः। भवःसंसारएवाब्धिःसमुद्रस्तं
उल्लंघ्यतीर्त्वा। मरुतःश्रीमुख्यप्राणस्यबलमनुग्रहरूपबलंतेनाप्तःप्राप्तःविकुंठोवैकुंठोयैस्तेतथोक्ताः सएतान्ब्रह्मगमयतीतिश्रुतेः। तेचतेमुक्ताश्चतेषामावलिःस
मूहस्तद्वत्विरेजे। पूर्णोपमा ॥ ३२ ॥ तरुमिति। सःहरिःश्रीकृष्णः। मदीयंतरुंपारिजातवृक्षंनयतुस्वपुरींप्रतिप्रापयतु। उच्चामुन्नतांस्वरेवपुरीस्वःपुरीस्वर्गपुरी
ममस्वःपुरीमत्स्वःपुरीतांअमरावतींनेतुंसमर्थोनभवति। इतिमरुत्वताइंद्रेण। ईरितएवउक्तएवश्रीकृष्णः। इमांपुरींद्वारवतींरम्यतमांस्वर्गादप्यतिशयेनरम्यांचका
र नूनं। स्वर्गादप्यधिकमनोहराद्वारवतीतिभावः। उत्प्रेक्षालंकारः ॥ ३३ ॥ अधिष्ठिताइति। पोतोनौस्तंपोतं। अधिष्ठिताःवणिक्समूहाःवैश्यसमूहाः। स्वेषां

कार्यंतस्यलाभः तस्मैक्रयविक्रयादिनाद्रव्यप्राप्त्यैदूरादागत्य । अमुंद्वारवतीं । आश्रयंते । हरिपादएवश्रीकृष्णपादएवपोतोनौःतस्मिन्हरिपादपोतेकृतःआश्रयोयैस्तेतथोक्ताःसिद्धाश्चतेजनाश्चसिद्धजनाःयोगिजनाश्च । स्वरूपलब्ध्यैसंसारावस्थायांज्ञानानंदादिस्वरूपस्यजीवाच्छादिकाविद्ययातिरोहितत्वतन्निवृत्तिपूर्वकंज्ञानानंदादिस्वरूपप्राप्त्यै । अमुंद्वारवतीं । दूरात् । श्रयंते । ऐहिकामुष्मिकफलप्रदेयंपुरीतिभावः ॥ ३४ ॥ इमामिति । व्रतिनोयतीश्वराःइमांपुरींद्वारवतींअधिश्रित्याश्रित्य । परत्रपरलोकेमुक्तिमेवव्रजंति । नतुस्वर्गमित्येवकारार्थः । कुतइत्यतआह । पुरापीति । पूर्वमपि संसारावस्थायामपीत्यर्थः । नाकात्स्वर्गलोकात्अधिकउत्तमोयोलोकोद्वारवतीतंभजतीतिनाकाधिकलोकभाजः । तेषांव्रतिनांसनाकःस्वर्गः बहुमानस्यस्पृहायाःपात्रंविषयःबहुमानपात्रंकथंस्यात् । नहिक्षीरान्नभोजीयवागुमपेक्षतेइतिभावः ॥ ३५ ॥ गुणेनेति । श्रुतौवेदेसंगतःसंबद्धः तेन श्रुत्युक्तेनेत्यर्थः । कोटिप्रमाणमस्येतिकोटिमात्रः

**इमामधिश्रित्य पुरीं परत्र विमुक्तिमेव व्रतिनो व्रजंति ॥ पुरापि नाकाधिकलोकभाजां कथं स तेषां बहुमानपात्रम् ॥ ३५ ॥ गुणेन यस्याः श्रुतिसंगतेन स्वकोटिमात्रेण विनम्रवक्त्रा ॥ अवद्यसंछादनवैखरीज्ञा बभार काशी धनुषोऽनुकारम् ॥ ३६ ॥ सुधर्मपुंजावनमूलभूतमिहाऽच्युतं वीक्ष्य कृताधिवासम् ॥ सभां सुधर्मां प्रददौ पुरीवत् स्वसंसदत्युच्चसभाभियेव ॥ ३७ ॥**

स्वस्याःकोट्याःकोटिमात्रस्तेनस्वकोटिमात्रेणस्वस्याअपिकोटिसंधिकेनेत्यर्थः । यस्याःद्वारवत्याःगुणेनपापपरिहारकत्वमुक्तिप्रदत्वसदाकृष्णाधिष्ठितत्वादिगुणेन । विनम्रंवक्त्रंयस्याःसातथोक्तास्वतोप्यधिकद्वारवतीगुणाक्षांत्याअवाङ्मुखीत्यर्थः । स्वसेविनांनृणां । अवद्यानांदोषाणांयत्संछादनंआच्छादनंतस्मिन्यावैखरीप्रौढिःतांजानातीत्यवद्यसंछादनवैखरीज्ञा । काशीपुरी । स्वनिष्ठेर्ष्यादोषाच्छादनार्थंधनुषश्चापस्यानुकारःआकारःतंबभार । श्रुतिःश्रोत्रंतेनसंगतःसंबद्धःतेन । आकर्णांतंआकृष्टेनेत्यर्थः । केवलंकोटिःकोटिमात्रंस्वस्यधनुषःकोटिमात्रमग्रमात्रंतेनसंबद्धेनगुणेनमौर्व्याधनुषःनम्रीभावस्यौचित्यात्तदाकारेस्वीकृतेसतिस्वनिष्ठेर्ष्यालक्षणदोषःआच्छादितोभवत्वित्यभिप्रायेणेवधनुराकारंबभारेतिभावः । अतएवावद्यसंछादनवैखरीज्ञेत्युक्तं । काश्याःकोटिगुणाधिकाद्वारवतीतिभावः ॥ ३६ ॥ सुधर्मेति । इंद्रःसुधर्माणांशोभननित्यनैमित्तिकधर्माणांयःपुंजःसमूहःतस्ययदवनंरक्षणंतस्मिन्मूलभूतःकारणभूतःतं । यदायदाहिधर्मस्यग्लानिर्भवति

भारतेनिस्ष्टेः । अच्युतंकृष्णं । इहद्वारवत्यां । कृतःअधिवासोयेनसतथोक्तःतं । वीक्ष्य । पुरीवत्अमरावतीसकाशात्अधिकमनोहरद्वारवतीवत् । स्वस्यसंसत्सभासुधर्माख्यातस्याअत्युच्चाअतिश्रेष्ठायासभातस्याःभियेव । यथारमणीयद्वारवतीनिर्माणेसतिअमरावतीजनैरुपेक्ष्याजाता तथासुधर्मायाःअत्युत्तमसभाकरणेनतदीयसुधर्माख्यसभाप्युपेक्ष्याभवतीतिभियेवेत्यर्थः । सुधर्मांसभांश्रीकृष्णायप्रददौ ॥ ३७ ॥ पुरीमिति । श्रीकृष्णस्यपुरींद्वारावतीं । परिधीकृतःप्रिघाकारेणपरितःवर्तमानःअब्धिःसमुद्रोयस्याःसातां । अतएवागम्यांशत्रुभिर्गंतुमशक्यांनिशम्यश्रुत्वा । निरूढाजाताचिंतायस्यसतथोक्तः । समागधोऽक्रमात् । जरयाचिंतोत्पन्नजरसासंहितासंबद्धाजरासंहितातादृशीगात्रसीमाशरीरमर्यादायस्यसजरासंहितगात्रसीमासन्चिंताजरयापलितगात्रःसन्नित्यर्थःयोग्यंनामयस्यसयोग्यनामा । जरसाग्रस्तशरीरत्वात्जरासंधइतिअन्वर्थंनामअभूदिव । जरयाजरानाम्न्याराक्षस्यासंधितगात्रत्वेनजरासंधंनामानबभूवकिंतुचिंताजर

**पुरीमगम्यां परिधीकृताब्धिं निशम्य कृष्णस्य निरूढचिंतः ॥ स मागधोऽभूदिव योग्यनामाऽक्रमाज्जरासंहितगात्रसीमा ॥ ३८ ॥ सितानुलेपांबरमाल्यहारा शुचिस्मिता वारवधूर्व्रजंतीः ॥ इहोदितेंदुद्युतितोऽतिरिक्ता न यामिका लक्षयितुं क्षमंते ॥ ३९ ॥**

सायस्तदेहत्वेनजरासंधनामाबभूवेत्यर्थः । आमरणंउपायचिंतयापिद्वारवतीअसाध्येतिभावः । अत्रजरासंधनाम्नःकारणांतरकल्पनयाउत्प्रेक्षामूलत्वेनविभावनामूलकोत्प्रेक्षालंकारः ॥ ३८ ॥ सितेति । इहद्वारवत्यांयामिकाःरात्रौपुरपालकाः । सिताःशुभ्राःअनुलेपांबरमाल्यहाराःअनुलेपोंगहारःसचअंबरंवस्त्रंतच्चमाल्यानिकबरीन्यस्तमल्लिकादामानितानिचहाराःतेचयासांतास्तथोक्ताः । शुचिशुभ्रंस्मितंयासांताः । व्रजंतीःसंकेतगृहंप्रतिनिशिगच्छंतीःवारवधूःवेश्यांगनाः । उदितेंदुद्युतितःउदितःयइंदुःतस्यद्युतयःकांतयःताभ्यइतितितः । अतिरिक्ताःस्फटिककुट्टिमप्रदेशचंद्रकिरणानामतिनिबिडप्रतिबिंबवशात्पृथग्भूताःलक्षयितुंद्रष्टुंनक्षमंते । कबर्यांमल्लिकामालाच्छादितत्वेनअनुलेपस्थितत्वादिनातिशुभ्रत्वेनैताश्चंद्रकिरणाएवनतुनार्यइतिभ्रांत्याताःधर्षयितुंनक्षमंतइत्यर्थः । अत्युक्तिरलंकारः ॥ ३९ ॥

काव्येति । इह । मुरारेःश्रीकृष्णस्य । पुरेद्वारवत्यां । मनोज्ञाःमनोहराः । बुधाःकवयः । तेचवदान्याःदानशूराःतेच । काव्यस्यउचितःयोग्यःयःश्लोकःपद्यं तं । अपेक्षमाणाःकाव्योचितश्लोकंकर्तुमीहमानाः । दातृपक्षे । काव्येउचितःवर्णयितुमुचितःयःश्लोकोयशः पद्येयशसिचश्लोकइत्युभयत्रामरः । तमपेक्षमाणाःसंतः । विद्वज्जनानंदकरान् । पदेपदेप्रतिशब्दमित्यर्थः ॥ प्रतीक्षमाणमितिवा । अर्थान्वाच्यार्थान्विचारयंति । वदान्यपक्षे । विद्वज्जनानंदकरान्विद्वज्जनाः पंडितजनाःतेषांयःआनंदःतंकुर्वंतीतितथोक्तास्तान् । अर्थान्हिरण्यवस्त्राभरणादीन् । पदेपदेप्रतिपादविन्यासमित्यर्थः । प्रतिक्षणमितियावत् । विचारयंति ॥ ४० ॥ यदंघ्रीति । काशी यस्यश्रीकृष्णस्यअंघ्रितीर्थंपादसलिलंतेनगंगया । यस्यश्रीकृष्णस्यसंबंधियदीयंतच्चततन्नामचतस्यरामनाम्नइत्यर्थः । बलेन काश्यांमहेशोरामनामोपदिश्यजनान्तारयतीतिप्रसिद्धेः । प्रथिताप्रसिद्धा । आसीत्किल । तस्यमुरद्विषःश्रीकृष्णस्यनिवासभूतेयंपुरीद्वारवती । त्रिलोक्यांनविद्यतेद्विती

**काव्योचितश्लोकमपेक्षमाणा विचारयंतीह पदेपदेऽर्थान् ॥ विद्वज्जनानंदकरान् मनोज्ञा बुधा वदान्या**
**श्च पुरे मुरारेः ॥ ४० ॥ यदंघ्रितीर्थेन यदीयनाम्नो बलेन काशी प्रथिता किलाऽसीत् ॥ मुरद्विषस्तस्य नि**
**वासभूता पुरी त्रिलोक्यामियमद्वितीया ॥ ४१ ॥ चलद्भ्रुवश्चंचलनेत्रपातैर्जनान्समानान्वशयंति तस्या**
**म् ॥ स्मरोच्चलत्कार्मुकलग्ननीलोत्पलेषुघातैरिव वारवध्वः ॥ ४२ ॥**

यापुरीयस्याःसाअद्वितीया । असदृशीत्यर्थः । यस्यपादोदकस्यनाममात्रेणकाश्याःप्रथितत्वंकिल । किमुतस्यैवनिवासभूतायाःद्वारवत्याइतिभावः ॥ ४१ ॥ चलदिति । तस्यांद्वारवत्यां । चलंतौभ्रुवौयासांताःचलद्भ्रुवः । वारवध्वःवेश्यास्त्रियः । समानान्स्त्रीवश्यानभवामइत्यभिमानयुक्तान्जनान् । चलानिनेत्राणितेषांपाताःप्रक्षेपाःतैःलोलापांगनिरीक्षणैरित्यर्थः । स्मरस्यमन्मथस्यउच्चलत्कार्मुकंचलच्चापंतस्मिन्भ्रूसाम्यात्यत्लग्नःसंबद्धःयःनीलोत्पलमेवेषुःइंदीवराख्यबाणःनेत्रसाम्यायेदं तस्यघाताःताडनानितैरिववशयंतिस्मस्वाधीनान्कुर्वंतिस्म । द्वारवत्यांवारवध्वःस्वलीलानिरीक्षणमात्रेणजनान्वशयंतीत्यर्थः । तथालावण्यातिशयभरिताइत्यर्थः ॥ ४२ ॥

स्वगोपुरौघैरिति । इयंद्वारवती । उत्ऊर्ध्वमुखीभूताःमयूखाःरत्नकांतयोयेषांतेथोक्तास्तैः। स्वस्याःद्वारकायाःयानिगोपुराणिप्रासादविशेषाःतेषामोघा समूहास्तैः । दिवंस्वर्गंव्यतीयाय उत्तुंगगोपुरखचितरत्नकांतयःस्वर्गादप्यूर्ध्वंगताइत्यर्थः । इतियत्अतिक्रम्यगतवतीतियत्ततमुकुंदंश्रीकृष्णं । अंतर्हृ दिहृदयांतःधारयंत्याः। विचित्रतीर्थानिनानाविधतीर्थानिचसंस्पृशंत्याः । द्वारकायांनानाविधतीर्थानिसंतीतिप्रसिद्धेः । तस्याःद्वारवत्याःविचित्रमाश्चर्यंन भवति । सकलतीर्थोपसेवनेनपरमात्मध्यानेनचस्वर्गादूर्ध्वंगमनमत्याश्चर्यंनभवतीतिभावः । अतिशयोक्तिरलंकारः ॥ ४३ ॥ पुष्पीकृत्येति । अत्रद्वारा वत्यां । ब्रह्मैवपरब्रह्मभूतःश्रीकृष्णएवास्त्रंतदस्यास्तीतितथोक्तः। ब्रह्मास्त्रवान्। जनःभजकजनइत्यर्थः। सपरिवारकामजयायात्तब्रह्मास्त्रइतिध्वनितोर्थः। रतिप तेःकामस्य। शरासनंधनुः। अपुष्पंपुष्पंसंपद्यतेतथाकृत्वापुष्पीकृत्य। पुष्पवत्दृढीकृत्येत्यर्थः। अतएवपुष्पधन्वेतिकामस्यप्रसिद्धिः। शरान्बाणान् । पंच

स्वगोपुरौघैरियमुन्मयूखैर्दिवं व्यतीयाय न तद्विचित्रम् ॥ मुकुंदमंतर्हृदि धारयंत्या विचित्रतीर्थानि च संस्पृशंत्याः ॥ ४३ ॥ पुष्पीकृत्य शरासनं रतिपतेः पंचत्वभाजः शरान् तत्सेनामबलां विधाय सचिवं तूष्णीं वसंतं क्वचित् ॥ तन्मित्रं क्षयभाजनं तदनुगान् माधुर्यधुर्यान् गिराऽनंगीकृत्य च तं जनोऽत्र चर ति ब्रह्मास्त्रवान् प्रत्यहम् ॥ ४४ ॥

त्वंपंचत्वसंख्यांभजंतीतिपंचत्वभाजःतान्पंचत्वसंख्योपेतानित्यर्थः। प्राप्तमरणानितिध्वनितोर्थः। विधायकृत्वा। अतएवपंचबाणइतिकामस्यप्रसिद्धिः। त त्सेनांमन्मथबलंस्त्रियंजात्येकवचनं। अबलांबलरहितांस्त्रियंविधाय। अतएवअबलाइतिस्त्रीणांनाम। सचिवंकाममंत्रिणं । वसंतंक्वचित्प्रदेशेतूष्णींवसंतंनि र्व्यापारतयास्थितंविधायअतएववसंतमितिवदंति। तन्मित्रंतस्यमदनस्यमित्रंहृदयंहृदयाभिमानिनंचंद्रं। क्षयस्यभाजनंपात्रंतत्क्षयाश्रयमित्यर्थः। विधाय, अतएवकृष्णपक्षेप्रतिपक्षंचंद्रःक्षीयते । तस्यकामस्यअनुगान्भृत्यान्पिकशुकादीन्गिरावाचा । माधुर्यधुर्यान्माधुर्यंवाङ्माधुर्यंतस्मिन्धुर्याधुरीणाःयुद्धेम रणभीत्यात्वदीयानहंतव्याइतिमधुरवचनवक्तॄनित्यर्थः। विधायअतएवपिकादयोमधुरभाषिणः । तंचकामं। अनंगीकृत्यअनंगःसंपद्यतेतत्तथाकृत्वाअनं

गीकृत्य शरीररहितंकृत्वाअतएवअनंगइतिकामस्यप्रसिद्धिः। अहरहःप्रत्यहंप्रतिदिनंचरतिसंचरति । कृष्णकृपयासपरिकरंकामंनिर्जित्यतन्नाम्नैवसुजनख्यातिंचसंपाद्यभक्तिमात्रसंतुष्टोनिष्कामोयोगिजनोद्धारकायांसंचरतीत्यर्थः ॥ ४४ ॥ स्मरस्येति । तस्यांद्वारवत्यां । परिपंथिनाशत्रुणाकामेनशून्यारहिताःजितकामाइत्यर्थः । संन्यासिनोयोगिजनाः । स्मरस्यकामस्य । भार्यांविषयेषुविद्यमानांरतिमित्यर्थः । अपहृत्यनिवर्त्य युद्धेशत्रुवधानंतरंतद्भार्यापहरणंध्वनितोर्थः। विष्णोःकृष्णस्यस्नुषां रतेःप्रद्युम्नपत्नीत्वादितिभावः । अनेनआत्मभोगानर्हत्वंसूच्यंते । तांरतिं । तस्यश्रीकृष्णस्ययौअंघ्रीतावेवाब्जेतयोर्युगंयुगलंतस्मिन्निधाय । समविषयेरतिंत्यक्त्वास्वरतिंपरित्यज्यश्रीकृष्णचरणस्मरणएवरमंतइत्यर्थः । स्वेषांसंबंधी स्वकीयःतं । जयंकामजयंनिष्कामत्वमित्यर्थः । भुविदर्शयंतःसंतः । चरंति । ४५ ॥ मारमिति । तस्यांद्वारवत्यांअपरेसंन्यासिभ्योऽन्यकामिजनाइत्यर्थः । मारंकामं । दर्पकरंअन्यान्मोहयतिदर्पयतीतिदर्पकरः

स्मरस्य भार्यामपहृत्य विष्णोः स्नुषां तदंघ्र्यब्जयुगे निधाय ॥ जयं स्वकीयं भुवि दर्शयंतः चरंति तस्यां परिपंथिशून्याः ॥४५॥ मारं दर्पकरं प्रतर्क्य सुहृदं मत्वा जगन्मोहनं सेनां च प्रमदां शरांश्च विषामां स्तस्याऽनुगान् व्योमगान् ॥ कोदंडं सुमनःसमूहविनुतं तैः पूरितं सारथिं सेनां तामवलंब्य तस्य वशगास्तस्यां रमंतेऽपरे ॥ ४६ ॥

दृपहर्षविमोहनयोरितिधातुः। संतोषविमोचनं । प्रतर्क्यस्वप्रतिभटान्मारयतीतिमारः तंमारंप्रतर्क्यमारंकंदर्पमितिनाममात्रस्मरणेनभीताइतिभावः । तस्यकामस्यसुहृदंचंद्रंजगत्मोहयतीतिजगन्मोहनःतंमत्वा । जगदानंदोजगन्मोहनइतिचंद्रस्यप्रसिद्धिः । सेनांच । प्रकृष्टमदउत्कर्षोयस्याःसाप्रमदातां । प्रकृष्टमदकारिणीति मत्त्वा । शरान्बाणान्विषमान्विषमसंख्याकान्दुर्विषह्यानितिध्वनितोर्थः । मत्वा । अनुगान्अनुचरान्पिकादीन्व्योमगान्गगनचरान्मत्वा । भूचरैरस्माभिःअस्मत्तोप्युपरिसंहरशीलैःखेचरैःसहकथंयोद्धव्यमितिमत्वेत्यर्थः । कोदंडंचापंतत् । सुमनःसमूहःकुसुमसमूहःतेनविनुतंविशेषेणस्तुतंकुसुममयत्वात् भृंगाख्यपक्षिभिःस्तुतमितिवा । देवसमूहेनस्तुतमितिध्वनिः । सारथिंवसंतं । तैःसुमनोभिः । पूरितं । वसंतस्यकुसुमाकरत्वादितिभावः । मत्वा । तांप्रमदारूपां

सेनांअवलंब्यआश्रित्यप्रतिभटतयास्थितेसतिकामोमारयिष्यतीतिभीत्यातदीयस्त्रीरूपसेनामाश्रित्येत्यर्थः । तस्यकामस्यवशगाःसंतः । रमंते।द्वारवत्यांकामिनः अमूभिस्त्रीभिःसहसदाक्रीडंतीत्यर्थः ॥४६॥ द्वारवत्यांजनाः । श्रवणंकीर्तनंविष्णोःस्मरणंपादसेवनं । अर्चनंवंदनंदास्यंसख्यमात्मनिवेदनमित्युक्तनवविधभक्तियुक्ताइतिवर्णयति । तच्छास्त्रेति । अत्रद्वारवत्यांकतिचित्केचिज्जनाःतस्यश्रीकृष्णस्ययच्छास्त्रंतद्वैष्णवशास्त्रमित्यर्थः। तस्ययच्छ्रवणंतदेवोत्सवःतेन । कृष्णस्यअर्चांकुर्वंति । कृष्णार्चकाःकतिचित् । तंश्रीकृष्णं । संकीर्त्यस्तुत्वा । अपरेश्रीकृष्णंसंस्मृत्य । केचन सुधियः । तस्यश्रीकृष्णस्ययत्पादाब्जंतस्यनिषेवातया पादसेवनेनेत्यर्थः । केचनसुधियःतस्यश्रीकृष्णस्यअर्चया । अपरे सख्येनापिसुहृद्भावेनच । अपिशब्दःसमुच्चये । केचित्बहुशः । प्रणम्यप्रणामंकृत्वा । केचिच्चतवदासावयमित्युक्त्वा । केचन आत्मानंस्वशरीरादिकंसर्वंत्वदीयमितिनिवेद्य । कृष्णार्चकाःइतिप्रत्येकंसंबंधः । मोक्षनिरताःमोक्षेआसक्ताःसंतःसं

तच्छास्त्रश्रवणोत्सवेन कतिचित् संकीर्त्य संस्मृत्य तं तत्पादाब्जनिषेवया च सुधियस्तस्यार्चया केचन॥
सख्येनाप्यपरे प्रणम्य बहुशः केचिच्च दासास्तवेत्यात्मानं च निवेद्य मोक्षनिरताः संत्यत्र कृष्णार्चकाः
॥ ४७ ॥ अंगीकारगिरां श्रुतावभिरताः संकीर्त्य ता मानिनीत्वत्पादौ परिगृह्य वंदनमहो कृत्वा त्वदीया
वयम् ॥ त्वद्दासा वयमित्युदीर्य मनसाऽतीतां स्मरंतो रतिं नीवीमोक्षफलाय सख्यकुशलाः केचिच्च रामार्चकाः४८

ति ॥ ४७ ॥ इदानींविलासिकृतनानावस्थानांनवविधभक्तित्वंवर्णयति । अंगीकारेति । अत्रद्वारवत्यां । अंगीकारगिरांत्वयासहरंस्यइतिस्त्रीणामंगीकारगिरो वचांसितासां । श्रुतौश्रवणे । अभिरताः । कामिनीःसंकीर्त्य कोपपरिहारलक्षणाभक्तिःउक्ताभवति । मानिनीःकोपवतीःताःकामिनःसंकीर्त्यकोपपरिहाराय स्तुत्वा ।अनेनकीर्तनमुक्तंभवति।तस्याःपादौतत्पादौतौपरिगृह्यक्षमापनायगृहीत्वा।अनेनपादसेवनमुक्तंभवति।वंदनंक्षमापनायनमनंतत्कृत्वाअहोकामिनीनांवंदनमाश्चर्यं । वयंत्वदीयास्त्वदधीनाइत्युदीर्य।अनेनात्मनिवेदनंसूचितं । त्वद्दासावयमित्युदीर्यअनेनदास्यमुक्तं । अतीतांपूर्वदिनेअनुभूतांरतिंमनसास्मरंतः ।अनेनस्मरणंसूचितं।सख्यंसौहार्दकरणंतस्मिन्कुशला । अनेनसख्यमुक्तं।केचिच्चविलासिनोजनाः।नीव्यायःमोक्षःमोचनंसएवफलंतस्मै।अनेनविलासिनामपिमोक्षःसंपा

दितः । रामार्चकाःरामाणांस्त्रीणांअर्चकाः अनेनार्चनमुक्तं । श्रीकृष्णार्चकानांप्रतिनिशितस्फुरणायनार्यर्चकाइत्यनुक्त्वारामार्चकाइत्युक्तम् ॥ ४८ ॥
प्राकारादिति । अत्रद्वारवत्यां । प्राकारोवप्रःतस्मात् । बहिरियंवारिधिः । स्वातौस्वातिनक्षत्रे । अंबुजलंददातीतिअंबुदाःमेघाःतैरर्पितंवृष्टं । वारिजलं । प्राप्य । ततःवर्षाकालात् । चिरेणबहुकालेन । हृदयंअंतःप्रदेशःतस्मिन् । मुक्ताभिःमौक्तिकमणिभिःप्रचुरःमुक्तामयःजायतेस्वातौमेघवृष्टंजलंअंतःसमुद्रस्यशुक्तिपुटेषुपतितंकालांतरेमौक्तिकमणिभावंप्राप्नोतीत्यर्थः । द्वारवतीपरितःश्रीकृष्णसंनिधानवशात्समुद्रेमौक्तिकानिफलंतीतिभावः ।अतःद्वारवत्याःअभ्यंतरेविप्रजलधिःब्राह्मणाएवसमुद्रःब्राह्मणसमूहइत्यर्थः । हस्तानांपुटानितलानितेषु । कृष्णएवाब्दोमेघःतेनवृष्टंदत्तंतत् । वित्तमेवांबुजलंतत् । सदाप्रतिपद्यप्राप्यसचासौक्षणश्चतत्क्षणःतंतत्क्षणं । तस्मिन्नेवक्षणइत्यर्थः । मुक्तामयःमुक्तःनिर्गतःआमयोदारिद्र्यलक्षणोव्याधिःयस्यसतथोक्तः । जायते । अहोआश्चर्यं । श्रीकृष्णद

**प्राकाराद्बहिरत्र वारिधिरयं प्राप्यांबुदैरर्पितं स्वातौ वारि ततश्चिरेण हृदये मुक्तामयो जायते ॥ अंतर्ह**
**स्तपुटेषु विप्रजलधिः कृष्णाब्दवृष्टं सदा वित्तांबु प्रतिपद्य तत्क्षणमहो मुक्तामयो जायते ॥ ४९ ॥ आ**
**शासक्तजनाशुगेन जविनोपांते रजो जृंभयन् तेनैवाग्रतमः सृजन् शुभदृशामप्यांध्यमापादयन् ॥ अं**
**तस्तंभितसत्ववृत्तिरनिशं संसारवाराशिवत् प्रत्यूहीभवति त्रिधामनगरप्राप्तौ जलौघाश्रयः ॥ ५० ॥**

त्तद्रव्यप्रतिग्रहीतॄणांतत्क्षणादेवदारिद्र्यविच्छेदोजायतइतिभावः । श्लिष्टगर्भव्यतिरेकालंकारः ॥४९॥ आशासक्तेति । जवोस्यास्तीतिजवीतेनजविनावेगवता । अतएवआशासुदिक्षुआसक्ताःसंबद्धाःजनायेनसःआशासक्तजनःसचासावाशुगोवायुःतेनजनानपिइतस्ततःप्रापयिता झंझामारुतेनेत्यर्थः । उपांतंतीरंतस्मिन् अनिशंसर्वदा । रजःसैकतमयींधूलिंजृंभयनउत्थापयन् । तेनैवबद्धतरधूलिमुत्थापयतावायुनाविकरप्रतिरोधेसतिउग्रंनिबिडंयत्तमोंधकारःतत्सृजन् । शुभादृशोयेषांतेशुभदृशःतेषामपिचक्षुष्मतामपिअंधस्यभावआंध्यंतत्चक्षुषिधूलिप्रवेशेनअंधीभावमापादयन् । अनिशंसर्वदा । अंतरभ्यंतरेस्तंभितातिरोहितासत्ववृत्तिःसत्वानांमत्स्यादिजंतूनांवृत्तिर्वर्तनंयस्यसतथोक्तः । जलौघःजलसमूहःतस्याश्रयःसमुद्रः । संसारएववाःजलानांराशिःसमूहोयस्मिन्सवाराशिः

समुद्रः तद्वत्संसारसमुद्रोपि जविनाविन्ताशयाबद्धदूरगमनवेगवताआशया विन्ताशयाआसक्ताःसंबद्धाःयेजनास्तएवआशुगोवायुस्तेन । उपांतंदातृसमीपंतस्मि
नूरजःदातृषुक्रियमाणरागातिशयधूलीभूतंरजोगुणंजृंभयन् याञ्चयास्वह दयस्थितंविन्ताशांप्रकटयन्तैनैवयाचकजनेनैवउग्रंयत्तमःतमोगुणस्तत्सृजन् द्रव्या
लाभेसतितमोविकारंक्रोधंसृजन्नित्यर्थः । शुभाद्दृक्ज्ञानंयेषांतेशुभदृशो ज्ञानिनस्तेषामपिआंध्यमविवेकत्वमापादयन् । अंतस्तंभितासत्ववृत्तिःसत्वगुणस्यवर्त
नंयेनसतथोक्तः । जलौघःमूर्खसमूहःतस्याश्रयः । त्रीणिधामानिअनंत ासनवैकुंठश्वेतदीपाख्यानियस्यसतथोक्तःतस्यश्रीकृष्णस्ययानगरप्राप्तिःतस्यांद्वारवती
प्रवेशइत्यर्थः । अर्थांतरेवैकुंठप्राप्तौ । अप्रत्यूहःप्रत्यूहःसंपद्यतेतथाभवती निप्रत्यूहीभवति । यथासंसारःमोक्षंगंतुंनमुंचतितथाद्वारवतीपरिधीभूतःसमुद्रःशत्रून्द्वार
वतींगंतुंनमुंचतीत्यर्थः ॥ ५० ॥ उत्तुंगेति । उत्तुंगाउन्नताःयेऊर्मयस्तरंगाःत एवकराःतेष्वनुषक्ताःसंबद्धाःविलसच्चक्रांकशंखाःचक्रांकाश्चशंखाश्चविलसंतश्चते
चक्रांकशंखाश्चतेयस्यसतथोक्त । द्वारवत्यांसमुद्रेचक्रांकशंखानामुत्पत्तेः । अर्थांतरे । उत्तुंगौउन्नतौयौऊर्मीतरंगौतद्वद्यौकरौहस्तौतयोरनुषक्तौचक्रांकशं

**उत्तुंगोर्मिकरानुषक्तविलसच्चक्रांकशंखस्फुरद्रत्नौघा वृतगात्रवास्यनिमिषः फेनानुलेपोज्ज्वलः ॥ स्वा**
**सक्तैर्जलसंचयैरपि महापापानि निर्मूलयन् वार्द्धिः कृष्ण इवावतीह परितो योगींद्रजिह्वोत्सवः ॥ ५१ ॥**

खौसुदर्शनचिह्नपांचजन्यशंखौयस्यसतथोक्तः । स्फुरंतियानिरत्नानितेषामोघ ःसमूहाःतैरावृतंतत्गात्रं समुद्रस्यरत्नाकरत्वादितिभावः । तस्मिन्वसंतितच्छीला
इतिस्फुरद्रत्नौघावृतगात्रवासिनःतादृशाअनिमिषाःमत्स्याःयस्यसतथोक्तः । अ र्थांतरेतु । स्फुरद्रत्नौघैःआभरणस्थरत्नसमूहैःआवृतंयत्गात्रंशरीरंतस्मिन्वासि
नःअनिमिषाःइंद्रादयोदेवाःयस्यसतथोक्तः । फेनाएवानुलेपःअंगरागःतेनोज्ज्वल ःशोभमानः । अर्थांतरे । फेनवत्स्थितोयोनुलेपःअंगरागःतेनोज्ज्वलःस्वासक्तैः
स्वस्मिन्संबद्धैःस्वसंबंधिभिरित्यर्थः । जलसंचयाःजलसमूहाःतैरपिस्नानपानादि क्रकुर्वतां । महांतियानिपापानितानि । निर्मूलयन्विनाशयन् । समुद्रस्थचक्र
तीर्थस्यमहापापपरिहारकत्वादितिभावः । अर्थांतरे । स्वस्मिन्आसक्ताआश्रिताः शक्तिमंतस्तैः । जडानांभगवदितरविषयेकौशलरहितानांयेसंचयास्तैरपिअन्ये
षांपापजनानांमहापापानिनिर्मूलयन् । योगींद्राणांयाजिह्वारसनातस्याउत्सवः रसास्वादनादिशक्तिःयस्मात्सतथोक्तः समुद्राभिमानिनोवरुणस्यरसनेंद्रियाभि

मानित्वादितिभावः।अर्थांतरे। योगींद्राणांस्तोतॄणांसनकादीनांयाजिह्वातस्याउत्सवः उत्सवभूतःयोगींद्रजिह्वायास्तुत्यइत्यर्थः । वार्धिःसमुद्रःकृष्णइव । इहभूमौ।
इमांपुरींद्वारवतीं। परितः। अवतिरक्षति ॥ ५१ ॥ सच्चक्रेति । सतांसज्जनानांचक्रंसमूहोयस्याःसासच्चक्रा । द्वारवत्यांसंतएववसंतिनत्वसंतइतिभावः । अर्थांतरे।
सत्समीचीनंचक्रंसुदर्शनंयस्याःसातथोक्ता । करेणतत्रतत्रराजभ्यःसमाहृतबलिरूपद्रव्येण नतुकोशस्थद्रव्येण । पुष्टंकटकंसेनायस्याःसातथोक्ता । अन्यत्रक
रेणदेदीप्यमानहस्तेनपुष्टानिबहुगुणितप्रभासंपन्नीकृतानिकटकानिकरभूषणानियस्याःसातथोक्ता। भोगःसुखंयेषामस्तीतिभोगिनोविलासिनस्तेषामिंद्राःश्रेष्ठा
स्तेषांभोगःविषयभोगःतस्यआस्पदंआश्रयीभूतंस्थानंयस्यांसातथोक्ता ।अन्यत्र। भोगिनांनागानामिंद्रःस्वामीशेषःतस्यभोगएवशरीरमेवआस्पदंस्थानंशयन
स्थानंयस्याःसा। भोगःसुखेस्त्र्यादिभृतावहेश्चफणिकाययोरित्यमरः। नेत्रस्थानंप्रासादानांकिंचित्अवाग्भागस्तस्मिन्गतौस्थितौइंद्विनौइंदुश्चंद्रःसचइनःसूर्यः

**सच्चक्रा कर (भोग) पुष्टकटका भोगींद्रभोगास्पदा नेत्रस्थानगतेंद्विना कनकसद्मप्रातिपीतांबरा ॥ भाति स्वोदरवा**
**सिहंसगमना सेयं सुधर्मावहा विष्णोराकृतिवत्समुद्रहृदये लक्ष्मीधरालिंगिता ॥ ५२ ॥ ये पुरारिरिपुणाऽ**
**नये पुरा संगताघ्रनयनाः स्म संगताः ॥ कांतया सह वरालकांतया तेऽपि रेचकभृतोऽत्र तेपिरे ॥ ५३ ॥**

सचतौयस्याःसा अनेनप्रासादानामत्युच्चत्वंद्योत्यते। अर्थांतरे। नेत्रयोःयेस्थानेतेगतौप्राप्तौइंद्विनौचंद्रसूर्यौयस्याःसा। सूर्याचंद्रमसौअस्यचक्षुषीइतिश्रुतेः। क
नकस्ययत्सद्मप्रंसमीचीनप्राकारःतेनअतिपीतंअंबरंयस्याःसा॥ अर्थांतरे। कनकसद्मप्रवत्अतिपीतमंबरंवस्त्रंयस्याःसा॥स्वस्यायदुदरमभ्यंतरंतस्मिन्वासिन्यःअ
वस्थानशीलाः॥ हंसगमनाःहंसवत्मनोहरंगमनंयासांतास्तथोक्ताःतादृशानार्यःयस्याःसा॥अर्थांतरे स्वोदरेस्वोदरस्थनाभिकमलेइत्यर्थःवासीअवस्थानशीलः
हंसेनहंसपक्षिणागमनंयात्रायस्यसहंसगमनोब्रह्मायस्याःसा। सुधर्मांसुधर्माख्यांसभांवहतीतिसुधर्मावहा॥अर्थांतरे शोभनानियानिधर्माणिनित्यनैमित्तिककर्मा
णितानिवहतीतितथोक्ता नित्यनैमित्तिकधर्मास्पदीभूतेत्यर्थः।लक्ष्मींधारयतीतिलक्ष्मीधरःकृष्णस्तेनालिंगिताश्रिता॥अर्थांतरे।लक्ष्मीचधराचताभ्यांश्रीदेवीभूदेवी
भ्यांआलिंगितासेयंपुरी। विष्णोराकृतिवत्क्षीराब्धौपद्मनाभदेहवत्समुद्रहृदयंसमुद्रमध्यंतस्मिन्भाति॥५२॥यइति।विलासिनः। पुरापूर्वं। संगेनस्त्रीसंगमेनताम्रेर

केनयनेचक्षुषीयेषांतेसंगताक्षनयनाःसंतः । पुरारिःत्रिपुरांतकःशिवस्तस्यरिपुःकामःतेन । अनयोग्राम्यधर्मस्तस्मिन्मिथुनीभावइत्यर्थः।संगताआसक्ताःतेपितथा पिअत्रपुर्यां । वराःमनोहराःअलकांताःकुंतलाग्राणियस्याःसावरालकांतातया । कांतयावध्वा । सह । रेचकंप्राणायामंबिभ्रतीतिरेचकभूतःप्राणायामनि ष्ठाःसंतःइत्यर्थः । प्राणायामैकदेशवाचिनारेचकशब्देनरेचकपूरककुंभकरूपप्राणायामोलक्ष्यते । तेपिरेतपस्यांचक्रिरे । उपभोगार्हमनोहरनार्यभावान्नतपः करणं किंतुशांकरसत्प्रसादद्वारवतीप्रभावादितिभावेनवरालकांतयाकांतयासहेत्युक्तम् ॥५३॥ चरंतीति । तस्यांद्वारवत्यां । बहूनियानिनामानिविष्णुसर्वोत्तम त्वादिविषयकप्रमाणानितैर्युक्ताः । विदग्धाःकुशलाः । बुधाःज्ञानिनः । बहुमानयुक्ताःविद्वज्जनैर्मानिताःसंतःचरंति । बहुलःशस्तोरंगःगैरिकादिरंजनद्रव्यं येषांतेतथोक्तः । मत्ताःमदोद्धताःगजाश्चरंतिसंचरंति । बहिश्चपुराद्बहिश्च । सिंधोःसमुद्रस्य । बहुशःबहवःतरंगाःऊर्मयःचरंति । विद्भिर्विलसितरंगैर्गजा

चरंति तस्यां बहुनामयुक्ता बुधा विदग्धा बहुमानयुक्ताः ॥ गजाश्च मत्ता बहुशस्तरंगा बहिश्च सिं धोर्बहुशस्तरंगाः ॥ ५४ ॥ अंगनालमलकावलिभृंगं मंदहासमधुमन्मथबाणम् ॥ अंगनालममलं मुख पद्मं बिभ्रती वशयितुं जगदेतत् ॥ ५५ ॥ न मुनयोऽनुययुर्मनसा च यं तमपि लब्धुमिमामनसा चय म् ॥ दधदुपैति जनः सह जायया विघटिताऽपकृतिः सहजा यया ॥ ५६ ॥

दिभिश्चसंकीर्णेयंपुरीतिभावः ॥ ५४ ॥ अंगनालमिति । अंगमेवशरीरमेवनालंयस्यतत् । अलकानांचूर्णकुंतलानांआवलयःपंक्तयःताएवभृंगायस्यत त्तथोक्तंतत् । मंदहासएवमधुमकरंदोयस्यतत्तथोक्तंतत् । मन्मथस्यकामस्यबाणस्तत् । बाणभूतमित्यर्थः । पद्मस्यकामबाणत्वादितिभावः । अमलं निर्मलंमुखंएवपद्मंतत् । बिभ्रतीअंगना । एतत्जगत्विश्वंवशयितुंवशीकर्तुंअलंसमर्था । जगन्मोहनकांतासमर्थेयंपुरीतिभावः ॥ ५५ ॥ नमुनयइति । मुनयःऋषयः । यंश्रीकृष्णं । मनसाच नकेवलंपादादिबहिरिंद्रियेणमनसापीतिचार्थः । नानुययुःनप्रापुः । तमपिश्रीकृष्णं । लब्धुंगंतुंअनसाश कटेनचयःसमूहस्तं । दधत्धारयत् । जनःपुंजीभूतोजनइत्यर्थः । जाययावध्वासह । ययाद्वारवतीपुर्या । सहजाअनादिसिद्धा । अपकृतिःश्रीकृष्णदर्शनप्रति

बंधिकाप्रकृतिः । विघटितानिरस्ता । तामिमांद्वारवतींपुरींषण्मासपर्यंतंअवस्थानार्थंआर्यापुत्रादिसमस्तभारंशकटेऊढ्वाचोरादिभयपरिहारार्थंपुंजीभूयअद्यापि गच्छतीत्यर्थः । द्वारावतीयोगिनामपिदुर्लभंश्रीकृष्णसाक्षात्कारंप्रयच्छतीतिभावः ॥ ५६ ॥ परमिति । यस्यांद्वारवत्यां । रमालक्ष्मीःपरमुत्तमं । आश्रयोआवासःतं । आपप्राप । लक्ष्म्यानिवासभूतेयंपुरीतिभावः । यस्यांनिवसन्जनः । दिविस्वर्गेनिवसन्निवसर्वदासर्वेषांअभीष्टानांयद्दानंप्रदानंतस्मादितिसर्वदानतः । समस्तवस्तुप्रदानतोनिमित्तात् श्रमःद्रव्याभावनिमित्तक्लेशःतं । मासंवेत्तिनजानाति । अमानोनाःप्रतिषेधइतिवचनात्माशब्दःप्रतिषेधार्थः । द्वारवत्यांदरिद्रःकोपिनास्तीतिभावः ॥ ५७ ॥ निवारयंतीति । इहद्वारवत्यां । भटाःकृष्णभटाः । ईशःशिवः कृतस्यकृतयुगस्यअंतमवसानंतस्मिन्त्रेतादियुगेष्वित्यर्थः । नवीनःनूतनोयोमार्गस्तस्मिन्नूतनवैष्णवमार्गइत्यर्थः । धर्मिणांधर्ममार्गस्यनूतनत्वात्नवीनेत्युक्तं । विशतःप्रविशतःवैष्णवधर्ममाचरतोदैत्यान्शैवादिदुःशास्त्रकरणेनमोहयित्वावैष्णवधर्ममार्गेगंतुंनमुंचतियथेत्यर्थः । तथाविशतःद्वारवतींप्रविशतःदुर्जनान् । निवारयंति । प्रवेष्टुंनमुंचंति । नचेत्निवारिताःपरावृत्यनगच्छंतिचेत् ब

परमाप रमा यस्यामाश्रमं मा श्रमं दिवि॥ निवसन्निव संवेत्ति सर्वदा सर्वदानतः ॥५७॥ निवारयंतीह भटा यथेशो नवीनमार्गे विशतः कृतांते ॥ न चोत्क्षिपंतीह वृका इवाऽर्तानवीनमार्गे विशतः कृतांते॥ ॥५८॥ तनोति सा कोपिनि शांतभावं मनस्सु यः कोपि निशांतभावम्॥ खगाश्च यस्यां कलशालिकंठा गृहाश्च भास्वत्कलशालिकंठाः ॥ ५९ ॥

लात्द्वारावतींप्रवेष्टुमिच्छंतिचेदित्यर्थः । मार्गोनभवतीत्यमार्गःतस्मिन् । द्वारमार्गंविहायप्राकारोल्लंघनेनद्वारान्यमार्गेइहद्वारवतींविशतःदैत्यान् । वृकाः । अमार्गेविशतःमार्गंविहायअटव्यामितस्ततःसंचरतःअतएवार्तान्आक्रोशतःअवीनिवउरणकानिव । कृतांतेयमेक्षिपंति । बलात्द्वारवतींगंतुंइच्छतोहत्वायमलोकंप्रापयंतीत्यर्थः । अथवा । कृष्णभटाःवृकाइवस्वयंकदापिआर्तानभवंतिकिंतुकृष्णाज्ञयैववि:पक्षीसचइनःसूर्यःसचतयोःयोमार्गःआकाशमार्गइत्यर्थः । तस्मिन्विशतःसौभादिव्योमचारियानेनद्वारवतींप्रविशतःशाल्वादीन्कृतांतेयमेक्षिपंति । अंतकलोकंप्रापयंतीतियोजना ॥ ५८ ॥ तनोतीति । सापुरी । कोपोस्यास्तीतिकोपीतस्मिन्कोपिनिकोपवतिपुरुषे । शांतस्यभावःशांतभावःतंशांतत्वमित्यर्थः । तनोति । क्रोधादिदोषपरिहर्त्रीयंपुरीतिभावः । यस्यांपुरि । यःकोपियो

वाकोवाचंडालोपीत्यर्थः । मनस्सुअंतःकरणेषु । निशांतस्यप्रभातस्यभावस्तं । तमोराहित्यमित्यर्थः । तनोति । अंतःकरणशुद्धिपुरीतिभावः । यस्यांपुर्यां । क लेनअव्यक्तमधुरस्वरेणशालिनःशोभमानाःकंठायेषांतेकलशालिकंठाःखगाःशुकपिकादिपक्षिणश्च । संति । भास्वत्कलशाःविलसत्कलशाःतेषामालिःश्रेणिः कंठेसौधकंठप्रदेशेयेषांतेतथोक्ताः । गृहाश्चसंति । पिकादिपक्षिभिःमनोहरगृहैश्चरम्येयंपुरीतिभावः ॥ ५९ ॥ भित्तिस्थेति । यस्यांपुरि भित्तौतिष्ठंतीतिभि तिस्थानियानिरत्नानितेषुफलितानिप्रतिफलितानियानिप्रतिरूपाणिअंतस्थितायाःस्वयाःप्रतिबिंबानितान्येवचित्राणिआलेख्यानितैश्चित्राःविचित्राः । मुर जितःकृष्णस्ययाःललनाःस्त्रियःतासांनिवासाःआवासभूताःअवरोधवधूगृहाः । सुशोभीनिसम्यक्शोभनशीलानियानिनवचतानिरत्नानिपद्मरागगारुत्मतें द्रनीलमौक्तिकादीनितेषांरुक्कांतिःतया । रंगस्यनीलपीतादिरंगवल्याःअनुषंगःसंबंधःतेनरमणीयोमनोहरःतंप्रदेशंदधानाइवविभांति ॥ ६० ॥ सौहार्दे

भित्तिस्थरत्नफलितप्रतिरूपचित्रचित्राः सुशोभिनवरत्नरुचा दधानाः ॥ रंगानुषंगरमणीयमिव प्रदेशं
यस्यां विभांति मुरजिल्ललनानिवासाः ॥ ६० ॥ सौहार्दनृत्यदुरुकेकिनिकायशोभिसौधेषु यत्र रुचिराचल
शृंगबुद्ध्या ॥ संसक्तमभ्रनिचयं परितः पतंत्यः स्वस्पर्धिगात्रमजयन् मरुता पताकाः ॥ ६१ ॥ तस्यां
सुवर्णवरवेष्टनभाजि तेजः प्रद्योतितांबरहरिन्मणिविद्रुमाद्यैः ॥ रत्नैर्नवैर्नवविधैः खचिते सहंते प्रासादमू
र्ध्नि न बुधाः कपिशीर्षनाम ॥ ६२ ॥

सौहार्दनमेघसौहार्देननृत्यंतःनर्तनंकुर्वंतःयेउरुकेकिनःउत्तममयूराःतेषांनिकायःसमूहःतेनशोभिनोयेसौधाःतेषु । रुचि ति । यत्रयस्यांपुरि । पताकाः । सौहार्दनमेघसौहार्देननृत्यंतःनर्तनंकुर्वंतःयेउरुकेकिनःउत्तममयूराःतेषांनिकायःसमूहःतेनशोभिनोयेसौधाःतेषु । रुचि राणियानिअचलशृंगाणितानीतिबुद्धिःरुचिराचलशृंगबुद्धिःतया । अनेनसौधानामत्युत्तमत्वंद्योत्यते । संसक्तंलग्नं । स्वाभिःस्पर्धिस्पर्धनशीलंस्वस्पर्धितादृशं गात्रंयस्यसतथोक्तस्तं । अभ्रनिचयंमेघसमूहंपरितःपतंत्यःमरुतास्वचलनजन्यवायुना । अजयन्जितवत्यः । सौधपताकाःस्वचलनजन्यवायुनासौधलग्नमेघा न्निराकुर्वन्नित्यर्थः ॥ ६१ ॥ तस्यामिति । तस्यांपुरि । बुधाःविद्वांसः । सुवर्णस्यवरवेष्टनंसुवर्णनिर्मितप्रासादावरणफलकाःतद्भजतीतिसुवर्णवरवेष्टनभाक्त

स्मिन् । तेजोभिः प्रद्योतितं प्रकाशितमंबरं गगनं यैस्तानि तथोक्तानि यानि हरिन्मणिविद्रुमाद्यानि हरिन्मणिरिंद्रनीलरत्नं तच्च विद्रुमश्च तावाद्यौ येषां तानि तथोक्तानि तैः

नवनवसंख्याकाः विधाः प्रकाराः येषां तानि नवविधानि तैः । नवैः नूतनैः । रत्नैः खचितः यः प्रासादः मूर्धा तस्मिन् । कपिशीर्षइतिनाम आख्या कपिशीर्षनाम तत् । प्रा

सादाग्रे च कपिशीर्ष इति हलः । नसहंते । नवरत्नखचितसौवर्णप्रासादाग्रस्य कपिशीर्षनामनोचितमिति न क्षमंत इत्यर्थः ॥ ६२ ॥ नयतीति । इहपुरि । यतिः

संन्यासी । भोज्यं प्रमाणमस्येति भोज्यमात्रं भोज्यप्रमाणं तच्च तत् अन्नमात्रं च केवलान्नं च तस्मात् भोज्यमात्रान्नमात्रात् । यावता उदरपूर्तिः तावदन्नमात्रादित्य

र्थः । अन्यद्वस्तु न नयति न गृह्णातीत्यर्थः । रतेः रतिदेव्याः भर्ता कामः तेन रतिभर्त्रा । प्रेरितः सन् । भोक्तुमनुभवितुं योग्यं भोग्यं तस्मिन् भोग्ये वनितादिविषय इत्यर्थः ।

नचरति च । कामासक्तो वनितादिविषयं न भुनक्ति चेत्यर्थः । आत् अकारवाच्यात् विष्णोर्जनिः उत्पत्तिर्यस्य सो जनिर्ब्रह्मा तस्य मतं सिद्धांतः मध्वसिद्धांत इत्यर्थः ।

नयति न यतिरन्यद्भोज्यमात्रान्नमात्राच्चरति च रतिभर्त्रा प्रेरितो नैव भोज्ये ॥ जनिमजनिमतज्ञः संत

रत्येव चांते यमभयमभयाप्त्या स्वस्थवृत्तिश्च वेत्ति ॥ ६३ ॥ न वहति हृदि तोषं वैरिवध्वा कपोले न

वहतिमवलोक्य श्वासविश्रांतवाक्या ॥ समुदितरविदृष्ट्या व्रीडविश्रांतनेत्रा समुदितरवरांगीभावमा

विष्करोति ॥ ६४ ॥

तत् जानातीति अजनिमतज्ञः सन् । अंते देहावसाने तस्मिन् । जनिः पुनरुत्पत्तिः तां जनिं संसारमित्यर्थः । संतरत्येव । न विद्यते भयं यस्य सो भयः परमात्मा तस्याप्तिः प्रा

प्तिः तया । स्वस्था शश्वदेकप्रकारा वृत्तिर्वर्तनं यस्य स तथा सन् युक्तः सन्नित्यर्थः । यमभयं मृत्युभयं तत् न वेत्ति च ॥ ६३ ॥ नवहतीति । अत्र पुर्यां । काचन कामि

नी । वैरमस्या अस्तीति वैरिणी सा च सा वधूश्च तस्याः सपत्न्याः । कपोलो गंडस्तस्मिन् । न वाच साहृतिश्च तां न वदंत हृतिं । अवलोक्य । श्वासेति श्वासे विश्रांतं पर्यवसन्नं ता

दृशं वाक्यं वचनं यस्याः सा तथोक्ता सती । ईर्ष्यया श्वासं मुंचंती किमपि न वदंती सतीत्यर्थः । हृदि हृदये । तोषः संतोषः तं । न वहति न प्राप्नोति । समुदितः सम्यगुदितो यो

रविः सूर्यः तस्य या दृष्टिर्दर्शनं तया । व्रीडया लज्जया विभ्रांते चंचले नेत्रे यस्याः सा तथोक्ता । सूर्यप्रकाशे सति स्वकपोलस्थनखक्षतं जनाः पश्यंतीति जातलज्जेत्यर्थः ।

मुदासंतोषेणसहवर्ततइतिसमुत्तस्मात्इतरोअसंतोषःनिःश्वासंमुंचंत्याइतरायावरांगीनायिकायाःसमुदितरवरांगीवनितायाभावःइतरस्याःअसंतोषभावस्तं । निगूहनायचेष्टामित्यर्थः । आविष्करोतिप्रकटयति । तस्याःपुरतःस्वात्मनैवंलज्जयानेत्रचापल्यादौकृतेतस्याःअसंतोषोजातइतिभावः ॥ ६४ ॥ विहायेति । विहाय । सालोक्यं । उदारं । अंते । विहायसा । आलोक्य । मुदा रमंते । महीशकन्यासकलार्थरूपं । अहीशकन्यासकलार्थरूपमितिपदच्छेदः । इहपुर्यां । सिद्धाः । अहिःशेषःसचईशःशिवःसचकोब्रह्मासचतेषांयोन्यासःविषयभोगत्यागःवैराग्यमित्यर्थः । अहीशकन्यासःतत्पूर्विकाचसाकलाविद्याचवैराग्यपूर्वकज्ञानमित्यर्थः । अहीशकन्यासकलातस्याअर्थरूपःविषयरूपःतं । अर्थरूपमित्युक्त्याशेषादिज्ञानेपिपदार्थमर्यादाभासतेनसाक्षादिति । शेषादीनामप्यगमत्वमनेनद्योत्यते । विद्युद्वन्मानुषाविद्युत्सूर्यमंडलवत्सुराः । प्रतिबिंबवच्चगिरिशोब्रह्मैनंपश्यतिस्फुटमित्युक्तेः । उदारंउत्कृष्टंकृष्णं । महीशानांराज्ञांयाःकन्याःषोडशसह

विहाय सालोक्यमुदारमंते विहायसाऽऽलोक्यमुदा रमंते ॥
महीशकन्यासकलार्थरूपमहीशकन्यासकलार्थरूपम् ॥ ६५ ॥

स्रसंख्याकाःश्रीकृष्णस्यपत्न्यः । तासांसकलार्थाःयेभ्यास्तानिमहीशकन्यासकलार्थानितादृशानिरूपाणिषोडशसहस्रशरीराणियस्यसतथोक्तस्तं । षोडशसहस्रपत्नीनांगृहेषुषोडशसहस्ररूपाणिकृत्वास्थितमित्यर्थः । महीशकन्यासकलार्थान्वस्त्राभरणविलासान्रूपयतीतिसतथोक्तस्तमितिवा । विहायसाआकाशमार्गेणस्थित्वाआलोक्यब्रह्माद्यगम्यमाहात्म्यःश्रीकृष्णःषोडशस्त्रीगृहेषुतावद्रूपाणिधृत्वासंचरतीतिकौतुकेनतंदृष्ट्वेत्यर्थः । अंतेदत्तं समानोलोकोयस्यससलोकःतस्यभावःसालोक्यंतत्सालोक्यमोक्षंविहायमुदादर्शनजन्यसंतोषेणरमंते । मोक्षसुखादप्यधिकोहिकृष्णदर्शनजन्यःसंतोषइतिभावः । आनंदपुलकस्तुत्यादिक्रीडांकुर्वंति । मुक्तावप्येकैकस्तद्बिंबरूपदर्शनस्यशक्तिःसर्वदाव्यक्तिःकदाचिदिहतुसाष्टोत्तरशतषोडशसहस्ररूपाणिसर्वदादृश्यंतइतिहर्षेणसिद्धावैकुंठादिलोकस्थित्यास्यसालोक्यमप्युपेक्ष्यगगनेस्थित्वाद्वारवतीमहोत्सवमेवपश्यंतीतिभावः ॥ ६५ ॥

मदभ्रमिति । मदभ्रमत्तारविशंकिनेत्रं । अदभ्रमत्ता । रविशंकिने । अत्र । प्रायोजयत् । या । नगधीरचित्तं । प्रायः । अजयत् । यानगधीः । अचित्तमितिप दच्छेदः। अत्रपुर्यां। अदभ्रमनल्पंयथाभवतितथामत्ताप्रमत्ता। वारुणीमदिरास्वादनेनात्यंतंमदोद्रिक्तेत्यर्थः। अतएवअचित्तनविद्यतेचित्तज्ञानंयस्याःसा कार्याकार्य विवेकशून्येत्यर्थः । यानारी । रवेःसूर्यात्शंकीशंकमानःतस्मैरविशंकिने सूर्यंदृष्ट्वापश्यंतीतिशंकमानायतस्मैपुरुषाय । मदेनभ्रमत्चलत्ततत्तारंकनीनिकाय स्यतत्मदभ्रमत्तारं कनीनिकक्षयोस्तारमितिभास्करः। तच्चतत् विशंकिनेत्रंचतत् । प्रायोजयत्प्रयुक्तवती । यानेनविमानेनगच्छंतीतियानगाःदेवास्तेषांधीःचित्तं यस्यांसा । देवैरपिअपेक्षणीयत्वेनातिसुंदरीत्यर्थः । सानारी । नगवत्पर्वतवत्धीरंनिश्चलंचित्तंयस्यसतथोक्तस्तं । अतिधैर्योपेतमित्यर्थः । तंपुरुषंप्रायः । अज यत्जितवती । द्वारवत्यांकटाक्षक्षेपमात्रेणातिधैर्योपेतपुरुषवशीकरणसमर्थानारीतिष्ठतीतिभावः ॥ ६६ ॥ सरसाइति । अस्यांपुर्यां । सरसाःशृंगाररससहिताः

**मदभ्रमत्तारविशंकिनेत्रमदभ्रमत्ता रविशंकिनेऽत्र ॥ प्रायोजयद्या नगधीरचित्तं प्रायोऽजयद्यानगधीरचित्तम् ॥६६॥**

**सरसा विलसद्धारसरसारशिरोधराः ॥ नयनैर्वशयंत्यद्धा नयनैपुण्यजिष्णुभिः ॥६७॥ सेयं पुरी वितनुते विषयोपभो क्तुः प्रायः फलेन समतां विषयोज्झितस्य ॥ यत्कृष्णसंगतवधूषु ललामलेपैस्तद्ध्यानधूतदुरितेषु च तस्य साम्यम् ॥ ६८ ॥**

विलसंतःप्रकाशमानाःयेहारसराःतैःसाराःमनोहराःतादृशाःशिरोधराःकंठाःयासांताःतथोक्ताःनार्यः । नयःनीतिःसाचनिपुणायाःभावःनैपुण्यंतच्चताभ्यांजिष्णू निजयशीलानितैः । नयनैःनेत्रैः । जनानूवशयंतिस्वाधीनानूकुर्वंति ॥ ६७ ॥ सेयमिति । सेयंपुरीद्वारवती । विषयाणांस्रगादिविषयाणांउपभोक्तातस्यविष योपभोक्तुः कामिजनस्य । विषयैरुज्झितोरहितः । प्रायःफलेन । समतांसाम्यं । वितनुतेकरोति । यद्यस्मात्कारणात्कृष्णेनसंगताःसंबद्धाःयाःवध्वःतासु । ल लामानिचलेपाःअंगरागाःतेचतैः । अतिकालिकगाढालिंगनेनानुषक्ततिलकानुलेपैरित्यर्थः । तस्यश्रीकृष्णस्य । साम्यंसादृश्यं । तत्तत्तिलकेनतिलकंतदनुले पनेनानुलेपनिमित्तसाम्यं । वितनुते । तस्यश्रीकृष्णस्ययत्ध्यानंतेनधूतंनिरस्तंदुरितंपापंयेषांतेतथोक्ताःतेषुपुरुषेषु । तस्यश्रीकृष्णस्यसाम्यंमोक्षसारूप्यं । वि तनुते । अतःकारणात्विषयभोक्तुःविषयोज्झितस्यचफलेनसमतांवितनुतइतिसंबंधः ॥ ६८ ॥

प्रकारांतरेणफलसाम्यमाह । दंतक्षतमिति । इहपुरि । नवायाःनूतनायाःनार्याःओष्ठःअधरोष्ठःतस्मिन् । नवंनूतनं । आर्द्रमित्यर्थः । दंतेनक्षतंव्रणंतत् । वीक्ष्य । सपत्न्याः । दुरंताअपरिमिता । चिंता । समभूत् । तस्याःनूतनदंतक्षतस्ययत्आच्छादनंतस्मिन्युक्तिशून्याउपायेनशून्या । अनेननायिकायाःमुग्धावस्थाग म्यते । अन्यातन्वी । वनिता । दैन्यंचिंतां । मुहुर्दर्शयती । भर्तृसंगतायाःतदसंगतायाश्चफलचिंतासाम्यात्फलसाम्यमितिभावः ॥ ६९ ॥ यदर्थंद्वारावतीव र्णिता । तत्फलमाह । वाचेति । येदिविजाताःदिविजाःतेषांवराःश्रेष्ठाःतेषांसभातस्यांआराधितानांमुनीनांनारदादीनां । वाचा । अलंसम्यक्कीर्तितः । यःसुप्रगी तःसन्सम्यक्स्तुतःसन् । चिदेवज्ञानमेवफलंतत्अपरोक्षज्ञानरूपमित्यर्थः । जन्मजननंतच्चअंतोमरणंतावेवआदीनिकारणभूतानियानिएनांसिपापानितेषांज न्मांताद्येनसांविहर्तिंचनाशंचरचयति । प्रथमंपरोक्षंददातिपश्चात्पूर्वोत्तराघंपरिहरतीत्यर्थः । यःरुजंरोगंभिनत्तीतिरुग्भेदीसंसाररोगभेदीत्यर्थः । यः प्रौढाःचतुराः

दंतक्षतं वीक्ष्य नवं नवोष्ठे चिंता दुरंता समभूत्सपत्न्याः ॥ अन्या तदाच्छादनयुक्तिशून्या तन्वी मुहुर्दर्शय तीव दैन्यम् ॥ ६९॥ वाचा यः कीर्तितोऽलं दिविजवरसभाराधितानां मुनीनां जन्मांताद्येनसां यो रचय ति विहर्तिं चित्फलं सुप्रगीतः ॥ रुग्भेदी प्रौढसद्वाग्मिषु विविधसुवाणीविलासैः प्रतर्क्यः शस्तोऽस्यादौ त थांऽते विमलयतिततेर्जल्पशुद्धौ सहायः ॥ ७० ॥

संतोयेवाग्मिनःतेषुसद्वाग्मिषुमध्येविविधाःनानारसभरिताःसुवाणीविलासाःशोभनवाग्विलासाःतैःप्रतर्क्यःवर्णनीयःअत्रैकपदत्वात्नयतिभंगोदोषाय । वंगक्षो णिभुजापराक्रमयुजानिर्वासितावैरिणःसंविष्टाःप्रतिचत्वरंप्रतिमठंयेनूतनकापालिकाः॥ यूपार्द्रव्रणसंस्पृशोव्यपनयंतःसत्वरंमक्षिकाइतिवत् । यःआदौस्थितिद शायां । तथाअंतेमरणसमयेविमलाःरागादिदोषरहिताःयेयतयःसंन्यासिनःतेषांततिःसमूहःतस्यां । जल्पस्यवचनस्यशुद्धिस्तस्यांजल्पशुद्धौ । सहायःसहाय कारी । जीवताम्रियमाणेनवायोगिना । एतन्नामोच्चारणेनैववाक्छुद्धिःसंपादितेवेतिभावः । शस्तःप्रशस्तः । सःश्रीकृष्णः । अस्यांद्वारकायां । अस्ति । श्री कृष्णसंनिधानादेवेयंपुरीवर्णितेतिभावः । पद्मबंधमुखेनकविनामकाव्यनामचप्रदर्शयत्यनेनपद्येनकाव्यकारः । तथाहि । यःग्रंथः । दिविजवरसभायांदिविजव

तद्देववत्वराःश्रेष्ठाःतेषांसमीचीनविष्णुभक्तानांसभायांआराधितानांज्ञानिनांवाचाअलमत्यर्थं । कीर्तितः । यःग्रंथःसुप्रगीतःसन्सम्यक्स्तुतःसन् । चिदेवज्ञानमेवफलंतत् । श्रीकृष्णविषयकज्ञानमित्यर्थः । जन्मांतयोर्जननमरणयोःआदीनिकारणभूतानियानिएनांसिपापानितेषांजन्मांताद्येनसां । विहतिंचनाशंच । रचयति । श्रीहरिज्ञानप्रतिबंधकीभूतपापानिचविनाशयतीत्यर्थः । यःग्रंथः । रुग्भेदीसंसाररोगभेदी । संसारकारणीभूतपापविनाशकत्वादितिभावः । यःग्रंथः । प्रौढःप्रौढकृतत्वात् । अर्थतःशब्दतश्चचतुरःसद्वाग्मिषुमध्ये । विविधाःनानारसभरिताःयेसुवाणीविलासाःतैः । प्रतक्र्यःस्तुत्यः । जल्पशुद्धौवाक्छुद्धौ । सहायःसहकारी । श्रीकथावर्णनरूपत्वादितिभावः । अतएवशस्तःप्रशस्तःसःएतत्काव्यरूपोग्रंथःअस्मिन्पद्येस्ति । अस्मिन्ग्रंथेस्पष्टंप्रतीयतइत्यतआह । विमलेति। विमलाःनिर्दोषाःयाःयतयःविच्छेदाः त्रिमुनियतियुतेतिवचनात्एकविंशतिवर्णात्मकेएकस्मिन्पादेसप्तसप्तवर्णेषुएकैकोयतिरितित्रयोयतयः एवंपादचतुष्टयेद्वादशयतयोद्रष्टव्याःतेषांततिःसमूहःतस्याःआदौसप्तसप्ताक्षरवद्द्वादशयत्यात्मकस्यास्यश्लोकस्यादौ। अंतस्त्ववसितेमध्यइत्यभिधानात् । अंतेश्लोकमध्ये

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसदायिनि ॥
संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते सर्गः सप्तदशो मुदामयमभूत् स्वर्गीश्वराणां कुले
॥ ७१ ॥ इति रुक्मिणीशविजये सप्तदशः सर्गः ॥ १७ ॥

श्लोकावसानेचसग्रंथोस्तीतिपूर्वेणसंबंधः । तथाच वाचायःकीर्तितोलमितिएकोयतिःतस्यादिवर्णोवाकारः । एवमुत्तरत्रापियतिषुएकादशवर्णाःद्रष्टव्याः । श्लोकार्धावसानेएकोवर्णः श्लोकावसानेएकोवर्णःइतिक्रमेणसर्वान्मेलयित्वा । वादिराजरचितःरुग्मिणीशविजयःइतिचतुर्दशवर्णाःद्रष्टव्याः । द्वादशयतीनां पद्मंद्वादशदलंलेखनेकृतेद्वादशदलपद्मबंधेवादिराजरचितःरुग्मिणीशविजयइतिकविकाव्यनामचक्रेणस्पष्टंद्रष्टुंशक्यते । काव्यनायकविषयतयाकाव्यविषयतयाकाव्यावस्थितिस्थलसूचनपरतयाचएतत्पद्यस्यैवप्रवृत्तेः पद्यार्थकथनेनैवचारितार्थ्यंटीकाकृतोमम नतुकाव्यांतरटीकाकारस्यैवबंधस्थलप्रदर्शनाय स्वयंप्रयतितव्यम् ॥ ७० ॥ रोम्णामिति । उक्तएवार्थः ॥ ७१ ॥ इतिश्रीरुक्मिणीशविजयटीकायांनारायणभट्टविरचितायांसप्तदशसर्गःसमाप्तः ॥ १७ ॥

॥ इति श्रीरुक्मिणीशविजये सप्तदशः सर्गः समाप्तः ॥

श्रीगुरुभ्योनमः ॥ रुक्मिणीकृष्णसौंदर्यतिग्मभानुमरीचयः ॥ स्निग्धंमनःकृतमसादिग्धमुद्बोधयंतुनः ॥ १ ॥ अस्मिन्सर्गेश्रीरुक्मिणीकृष्णयोःपादतलमारभ्यस वांवयववर्णनंकरोति। रक्तेत्यादिना। रक्तायाआत्मीयतलत्विट्आत्मीयानिस्वकीयानियानितलानितेषांत्विट्कांतिःतया । अनेनपद्मरागरत्नेनसंबंधःप्रतिपादि तः। प्रविलसंतीयास्वीयोर्ध्वभागश्रीःस्वीयःस्वकीयःयःऊर्ध्वभागःपादतलादूर्ध्वप्रदेशःतस्यश्रीःकांतिःतया । अनेनश्रीकृष्णस्यनीलवर्णत्वात्इंद्रनीलसंबंधःसं पादितः। स्वच्छःनिष्कलंकःयःइंदुःचंद्रःतस्यच्छविरिवच्छविःकांतिर्येषांतेतथोक्तास्तादृशाःयेवृत्तसन्नखाःवर्त्तुलसन्नखाःतेषांरुचाकांत्या । अनेनमुक्ताफल संबंधःसंपादितः। स्वासक्ताःस्वाश्रिताःयाभूषाःमंजीराद्याभरणानितेषामावलिःसमूहःतस्याःअद्भुतानिविचित्राणियानिरत्नानिपद्मरागेंद्रनीलमुक्ताफलरूपाणि तेषांयत्बंधनंतत्महःकांतिःतत्तज्जातनानाविधरत्नकांतिमित्यर्थः। यच्छंतिददति। दंपत्योःजायाचपतिश्चदंपतीतयोः। जायायाजंभावोदंभावश्चनिपात्यते। दंप

रक्तात्मीयतलत्विषा प्रविलसत्स्वीयोर्ध्वभागश्रिया स्वच्छेंदुच्छविवृत्तसन्नखरुचा स्वासक्तभूषावलेः ॥ यच्छंत्यद्भुतर त्नबंधनमहः श्रीरुक्मिणीकृष्णयोः दंपत्योः पदपंकजानि भजतां संपत्कराणि ध्रुवम् ॥ १ ॥ लक्ष्मीस्तनस्फुरितकुंकु मपंकसंगे भक्त्या स्मरन्मुनिमनस्सरसीनिरूढे ॥ उत्तुंगरम्यनखमौक्तिकपुंजशोभे रक्तांगुलीपरिलसद्दलपङ्क्तिकांते ॥ २॥

त्योःश्रीरुक्मिणीश्रीकृष्णयोःपदान्येवपादाएवपंकजानिपद्मानिभजतांसेवकानांसंपदःकुर्वंतीतिसंपत्कराणिश्रेयस्कराणिध्रुवंस्वाश्रितानामचेतनानामपिभूषणा नांसंपत्कराणिकिल किमुभजतांचेतनानामितिभावः।उपमामूलहेतुरलंकारः॥ १॥कमलसाम्येनश्रीकृष्णपादौवर्णयति।लक्ष्मीस्तनेति ।लक्ष्म्याःरुक्मिण्याःयौस्त नौकुचौतयोःस्फुरितःकुंकुममेवपंकःतस्यसंगःसंबंधोयस्यतत्तथोक्तंतस्मिन्पादसेवाकरणसमयेरुक्मिण्याकुंकुमदिग्धस्ववक्षसिश्रीकृष्णपादस्यसम्यग्निधाना दितिभावः । कमलस्यापिपंकजत्वेनपंकसंबंधः।भक्त्यास्मरंतोयेमुनयःतेषांयन्मनस्तदेवसरसीसरोवरंतस्मिन्निरूढमुत्पन्नंतस्मिन्उत्तुंगाःउत्तमाःयेरम्यनखाःतएव मौक्तिकानिमुक्तामणयस्तेषांपुंजस्तस्यशोभायस्यसतस्मिन् पद्मनिधित्वेनमुक्ताफलवतःपद्मस्यसाम्यायेदंविशेषणं। रक्ताःयाःअंगुल्यःताएवपरिलसंतिपरितो लसंतियानिदलानिपद्मदलानितेषांपङ्क्तिःतयाकांतंमनोहरंतस्मिन् कृष्णांघ्रिरेवचारुकमलंतस्मिन्ममचित्तभृंगःमनोभ्रमरःसततंरस्यादित्युत्तरपद्येनान्वयः॥ २ ॥

प्रीत्येति । प्रीत्याक्वणद्वदनयत्वदनंयेषांतेतथोक्तायेहंसपक्षिण:तेषांकदंब:समूह:तद्वत्जृंभिन्य:शोभमाना:तादृशा:मुक्ताफलोल्लसितकिंकिणिमुख्यभूषा:मुक्ताफलै:मौतिकमणिभि:उल्लसिता:शोभमाना:ताश्वता:किंकिण्य:क्षुद्रघंटिकामुख्यायासांता:भूषा:आभरणानिचता:यस्मिन्तत्तथोक्तंतस्मिन्तेषांहंसानांवक्त्राणितुंडानितेभ्य:जाता:या:कविगीता:कविभिर्वर्णिता:मनोज्ञरेखा:मनोहररेखा:तासांकल्पानिसमानानियानिध्वजांकुशयवाशनिलक्ष्माणिध्वजश्वांकुशश्वयवश्वअशनिश्वतेषांलक्ष्माणिपादतलस्थितचिह्नानितैर्लभ्यंदर्शनीयंतस्मिन्कृष्णांघ्रिचारुकमलेममचित्तभृंग:स्यादित्युत्तरेणान्वय: ॥ ३ ॥ उन्मीलितेति । विमलोयोबोध:ज्ञानंसएवदिनेश:सूर्य:तस्यभासाकांत्याउन्मीलितेविकसितेनिर्मलज्ञानविषयइत्यर्थ: । सद्भि:माननीया:येगुणा:सौंदर्यसौकुमार्यसौरभ्यादयोगुणा:

प्रीत्या क्वणद्वदनहंसकदंबजृंभिमुक्ताफलोल्लसितकिंकिणिमुख्यभूषे ॥ तद्वक्त्रजातकविगीतमनोज्ञरेखाकल्पध्वजांकुशयवाशनिलक्ष्मलक्ष्ये ॥ ३ ॥ उन्मीलिते विमलबोधदिनेशभासा संमाननीयगुणभाजि कलंकिदूरे ॥ सौरभ्यलुब्धपवनेन सदा परीते कारुण्यमान्यमकरंदमहाप्रवाहे ॥ ४ ॥ नित्यानुषक्तनिजभृत्यविलोचनाख्यमत्तानुरक्तमधुपै: सततं गृहीते ॥ सत्कर्णिकोज्ज्वलतलत्विषि संततं स्यात्कृष्णांघ्रिचारुकमले मम चित्तभृंग: ॥ ५ ॥

तान्भजंतीतितथोक्तं । कलंक:येषामस्तीतिकलंकिनोदोषिण:तेषांदूरंअप्राप्यंतस्मिन् कमलमपिकलंकीचंद्रस्तस्यदूरंविरोधितस्मिन् सौरभ्येपादकमलसौरभ्येलुब्ध:आसक्त:य:पवन:मुख्यप्राण:तेनसदासर्वदापरीतेसेविते । कमलपक्षेपिस्पष्टोर्थ: । कारुण्यंकृपातदेवमान्योमानार्होयोमकरंदस्तस्यमहाप्रवाहोयस्यतत्तथोक्तंतस्मिन्कृष्णांघ्रिचारुकमलेममचित्तभृंग:स्यादित्यन्वय: ॥ ४ ॥ नित्येति । नित्यंसर्वदाअनुरक्ता:आसक्ता:येनिजभृत्या:स्वकीयभक्तजना:तेषांयानिविलोचनानितानीतिआख्यानामयेषांतेतथोक्ता:येमत्तानुरक्तमधुपा:मत्तानुषक्तभ्रमरा:तै:सततंगृहीतेस्वीकृतेसतिचसाकर्णिकाचतद्वदुज्ज्वलंशोभमानंयत्तलंपादतलंतस्यत्विट्कांतिर्यस्मिन्तत्तथोक्तंतस्मिन्कृष्णांघ्रिचारुकमलेममचित्तभृंग:सततंस्यात् ॥ ५ ॥

शंखेति। यःश्रीकृष्णपादःशंखःशंखाख्यनिधिःसचअंभोजःपद्माख्यनिधिःसचशंखांभोजनिधीतौ महापद्मश्चपद्मश्चशंखोमकरकच्छपावित्युक्तेः। समीहितं अभीप्सितंयद्धनंद्रव्यंतस्यप्रत्यर्पणंदानंतेनभक्तानामभीप्सितदानेनेत्यर्थः। निर्जित्यऐहिकामुष्मिकसकलपुरुषार्थदानात् तयोर्जयइतिभावः। हस्तिनीनांहस्तिनीजातिस्त्रीणांआंतरंचित्तंतस्यकर्षणंआकर्षणंतेन अंकुशंनिर्जित्य।हस्तिनीनांकरिणीनांआंतराकर्षणमंकुशधर्मः। स्मरणमात्रेणतन्मनसांआकर्षणात्जयइतिभावः। दितिजानांदैत्यानांयत्प्रध्वंसनंसंहारस्तेनअशनिंवज्रंनिर्जित्यउत्तुंगाउन्नतापताकापताकाकाररेखायस्यसउत्पताकस्तंध्वजंध्वजाकाररेखांअदधात्दधौ। यथाजयीराजाउत्पताकंध्वजंउन्नमयतितद्वदितिभावः। तेपिशंखांभोजांकुशादयोपिलक्षणानांगणःसमूहःतस्यइतिव्याजोमिषस्तेनमहदैश्वर्यसूचकशंखांभो

शंखांभोजनिधी समीहितधनप्रत्यर्पणेनाऽकुशं हस्तिन्यांतरकर्षणेन दितिजप्रध्वंसनेनाऽशनिम् ॥ निर्जित्य ध्वजमुत्पताकमदधाद्यः कृष्णपादो मुदा प्रायस्तेऽपि च तस्य लक्षणगणव्याजेन भेजुस्तलम् ॥६॥ धर्मा विरुद्धगतयोऽपि हरौ विरोधं संत्यज्य संति बहुशस्त्विति बोधयंतौ ॥ पद्मस्थचंद्रकलिकाद्युतिमन्नखांकौ श्रीरुक्मिणीशचरणौ शरणं ममाऽऽस्ताम् ७ मुर्ध्न्यर्पितस्वसदृशं हरिपादपद्ममाशंक्य नांऽबुजकुलं सहते शशांकः ॥ स्वस्पर्धि तच्च शशिना वशिनाऽनुरक्तं मत्वा मनस्यधित तच्च तदप्यमैत्रीम् ॥ ८ ॥

जादिशुभरेखालक्षणसमूहच्छद्मनातस्यपादस्यतलंभेजुश्च। यथापराजिताःजेतुःप्रायशःपादसमाश्रयणेनजीवंतितद्वदितिभावः ॥ ६ ॥ धर्माइति। विरुद्धागतिरवस्थितिर्येषांतेतथोक्ताःयेधर्माःयुगपदणुत्वमहत्त्वादयःश्रुतिसिद्धाःधर्माःहरौश्रीकृष्णे विरोधःसहानवस्थानलक्षणविरोधःतंसंत्यज्यबहुशःप्रायशःसंतीतीममर्थंबोधयंतौचप्रकाशयंतौ। पद्मेतिष्ठतीतिपद्मस्थायाचंद्रकलिकाचंद्रस्यकलातस्याःद्युतिःकांतिःसायेषामस्तितेद्युतिमंतःतेचतेनखाश्चतएवांकौययोस्तौचंद्रपद्मयोर्विरोधस्यप्रसिद्धेः। पादपद्मेनखचंद्रावस्थानाद्विरोधत्यागइतिभावः। श्रीरुक्मिणीशस्यचरणौममशरणंगृहंआश्रयावित्यर्थः। आस्ताम् ॥ ७ ॥ मूर्ध्नीति। शशांकश्चंद्रःमूर्ध्निअग्रभागेअर्पितःस्वसदृशःस्वसमानःनखचंद्रोयेनतत्तथोक्तंतत् अतएवस्पर्धाविषयंहरिपादपद्ममाशंक्यअंबुजकुलंकमलकुलंतत्नसहतेनखचंद्राणांस्वसदृशत्वेनस्वविरोधिचंद्रांगीकारिहरिपादकमलजातीयभ्रांत्यातानिनसहतइत्यर्थः। तदपिअंबुजकुलमपिस्वसदृशत्वात्। स्वेनअंबुजकुलेनस्पर्धतइतिस्वस्पर्धितत्तच्चततहरिपादपद्मंचवशिनावशवर्तिनासदाविद्यमानेने

त्यर्थः। शशिनाचंद्रेणअनुरक्तंमत्वेत्यर्थः । मनसिअमैत्रींचंद्रेवैषम्यनिमित्तेनशत्रुत्वंअधितअदधीत् । अनेननिमित्तेनपद्मचंद्रयोःपरस्परंविरोधोजातइतिभा
वः ॥ ८ ॥ अंगीकृतइति । यःपुरुषःलक्ष्म्याअंगीकृतःसःपुरुषःसदाउच्चागतिर्यस्यसउच्चगतिःभवतीतिसंदर्शनायलोकप्रदर्शनायप्राक्प्रथमंकमलायाःयौकरौ
हस्तौताभ्यांसंगतंसंगृहीतंततःपश्चात्क्रमेणकमलायाःकुचौचफालंललाटंतच्चकचाग्रंकेशभाराग्रंतच्चतेषुलग्नंसंबद्धंस्नेहवशात्कमलयास्वविलासायपूर्वंहस्ते
गृहीत्वापश्चात्स्वकुचमंडलेनिक्षिप्यततःस्वफालेधृत्वातदनंतरंस्वशिरसिआरोप्यहरिचरणस्योपचारेक्रियमाणेसतिकमलयाअंगीकृतपुरुषःक्रमेणोच्चोच्चगति
र्भवतीतितत्त्वमपिस्पष्टमभूदितिभावः। तत्श्रीकृष्णपादकमलंनःअस्माकंश्रियंसंपदंकुरुतात्करोतु । श्रीविलासपात्रत्वात्श्रीदानसामर्थ्यमितिभावः ॥ ९ ॥

अंगीकृतः कमलयोच्चगतिः सदेति संदर्शनाय कमलाकरसंगतं प्राक् ॥ पश्चात्क्रमेण कुचफालकचाग्रलग्नं श्रीकृष्ण
पादकमलं कुरुताच्छ्रियं नः ॥ ९ ॥ भिन्नप्रवालसदृशीपरितः स्फुरंती रम्यांगुलीदलचयद्युतिरिंदिरायाः ॥ पादांबुजे
सहजराजदलक्तकांककांतिं तनोति नखमंडलमंडनार्हाम् ॥ १० ॥ अंतःसमापूरितबह्वनंतसौंदर्यशेषैरिव पूर्यमाणैः ॥
पुष्टोर्ध्वभागे परितः सुवृत्ते जंघे तयोःस्तां स्फुटमंतरंगे ॥ ११ ॥ पूर्णस्य तज्जानु निजप्रचारैः सानंदनंदावसथांऽगणे प्राक् ॥
चूर्णीकृतानेकरजोऽस्मदीयमेनो धुनोत्वद्य हृदंगणस्थम् ॥ १२ ॥ भिन्नेति । भिन्नःयःप्रवालःविद्रुमशकलइत्यर्थः । तस्यसदृशीपरितःश्री
कृष्णपादनखमंडलीमिश्रितः । स्फुरंतीरम्यामनोहराइंदिरायाःरुक्मिण्याःअंगुलीनांयानिदलानितेषांयश्चयस्तस्यद्युतिःकांतिःपादांबुजेनखानांयानिमंडलानि
बिंबानितेषांयन्मंडनमलंकारःतस्यार्हांउचितांअलंकारोचितांसहजःअकृत्रिमःयःराजदलक्तकांकःराजन्शोभमानोयःअलक्तकांकःलाक्षालक्ष्मतस्यकांतिंशो
भांतनोति।श्रीकृष्णपादनखमंडलपरितःप्रसरंतीरुक्मिण्याःरक्तांगुलीदलकांतिःश्रीकृष्णपादनखमंडलेसहजालक्तकांकाकृतिरिवभातीत्यर्थः ॥ १० ॥ अंतरिति।
पूर्यमाणैरापूर्यमाणैरंतःअभ्यंतरेसमापूरितानियानिबह्वनंतसौंदर्याणिभूर्यपरिमितलावण्यानितेषांशेषाःतैरिवआपूर्यविशिष्टैःसौंदर्यैरिवेत्यर्थः । पुष्टौऊर्ध्वभागौय
योस्तेतथोक्तेअवशिष्टसकललावण्यानांऊर्ध्वभागेबलात्पूरणादितिभावः । परितःसमंतात् सुवृत्तेवर्तुलेतयोःश्रीरुक्मिणीकृष्णयोःजंघेममअंतरंगेअंतःकरणे
स्तांतिष्ठताम् ॥ ११ ॥ पूर्णस्येति । पूर्णस्यश्रीकृष्णस्यजानुप्राक्पूर्वंआनंदेनसहितःसानंदःसचासौनंदश्चतस्ययःआवसथंमंदिरंतस्यअंगणंतस्मिन् निजाःयेप्रचा

राःसंचरणानितैःचूर्णीकृतंअनेकरजोयेनतत्तथोक्तंतज्जानुअधुनाहृदेवांगणंतस्मिन्तिष्ठतीतितथोक्तंहृन्निष्ठंसत्अस्मदीयंएनःपापंअद्यधुनोतुद्रावयतु ॥ १२ ॥
सत्कांत्येति । रुक्मिणीमुरभिदोःरुक्मिणीश्रीकृष्णयोःऊरूयद्यपिसत्कांत्यासमीचीनशोभयाकथंचित्हरिनीलंइंद्रनीलरत्नंतच्चकांचनंसुवर्णंतच्चतयोःसमौसद
शौश्रीकृष्णस्यश्यामत्वात् देव्याःसुवर्णवर्णत्वादितिभावः।सार्वांशेनसादृश्याभावात्कथंचिदित्युक्तं । विष्वक्समंतात्वर्तुलेतेएवगुणस्तेनकथंचित्हस्तींद्रस्यगजें
द्रस्ययःहस्तःशुंडादंडःतस्यउपमासादृश्यंययोस्तौतथोक्तौ।मृदोर्भावःमृदुतासैवधर्मःतेनसौकुमार्येणेत्यर्थः।कथंचित्कुंदानांकुंदपुष्पाणांस्रग्मालातस्याःकल्पौस
मानौयद्यपिभवतःतथापिलावण्येनसौंदर्येणपरंकेवलंपरस्परमन्योन्यंतुलाउपमाइतिकृत्वाद्वंद्वस्यआत्मारूपंतस्यभावःतत्तातांबिभ्रतौदधतौस्तः।अन्यत्रस्वसाद

सत्कांत्या हरिनीलकांचनसमौ हस्तींद्रहस्तोपमौ विष्वग्वर्तुलतागुणेन मृदुताधर्मेण कुंदस्रजः ॥ कल्पौ
यद्यपि रुक्मिणीमुरभिदोरूरू कथंचित्तुला लावण्येन परस्परं परमिति द्वंद्वात्मतां बिभ्रतौ ॥१३॥ ऊरू स
मारोप्य मरुद्गणेशं संरंजयंतौ दिशतां सुखं मे ॥ वैरिव्रजं संहरतां मुरारेःस्वारातिरक्षःक्षयमूलभूमी ॥१४॥
अपरिमितसुखौघं स्वाश्रिताया रमायाः शतगुणितविकासं वाससः स्वाश्रितस्य ॥ अपि गतनिजलाभः
संततं यो विधत्ते स किल मुरभिदूरुः कारणं वैश्यजातेः ॥ १५ ॥

श्याभावाद्दक्षिणस्यवामःवामस्यदक्षिणइतिसादृश्यार्थं
द्वंद्वौबभूवतुरित्यर्थः ॥ १३ ॥ ऊरूइति । मरुतांगणःसमूहःतस्येशंमुख्यप्राणंसमारोप्यनिधायसंरंजयंतौकांतियुक्तंकुर्वंतौमुरारेःश्रीकृष्णस्यऊरूमेसुखंदिशतां ।
स्वस्यनृसिंहरूपकृष्णस्यअरातिःशत्रुर्यःरक्षःराक्षसोहिरण्यकशिपुस्तस्यक्षयःसंहारःतस्यमूलभूमीकारणस्थानेनाशहेतूइतियावत् । ऊर्वोर्निधायनृसिंहेनहि
रण्यकशिपोःविदारितत्वादितिभावः । मेवैरिव्रजःवैरिसमूहस्तंसंहरताम् ॥ १४ ॥ अपरिमितेति । यःमुरभिदःश्रीकृष्णस्यऊरुः गतःनिर्गतः निजस्यस्वस्यलाभः
अविद्यमानद्रव्यप्राप्तिःयस्यसगतनिजलाभोपिश्रीकृष्णस्यऊरोरपि श्रीकृष्णवत्पूर्णकामत्वादितिभावः । स्वंआश्रितास्वाश्रितातस्याःरमायाःअपरिमितःअनंतः
यःसुखौघःअनंतसुखराशिःतंविधत्तेदधातिददातीत्यर्थः । स्वंआश्रितंतस्यपरिधानरूपस्येत्यर्थः । वाससःवस्त्रस्यचअपरिमितःशतगुणितःअपरिमितोयोविका
सःशोभातंसततंविधत्तेसःऊरुःवैश्यजातेःकारणंकिल ऊरूतदस्ययद्वैश्यइतिश्रुतेः । किलेतिवार्त्तायां । वैश्याहिस्वदत्तद्रव्यात्द्विगुणितद्रव्यलाभायान्यस्मैक्रय

विक्रयरूपेणवस्त्रादिकंवृद्धिरूपेणधनादिकंदिशंति। अयंतुलाभहीनःसन्अन्यस्मैबहुनिर्दिशतीतिवैश्यजातेःकारणंकथंस्यादितिभावः। आक्षेपालंकारः॥१५॥
सुवर्णेति। सुवर्णस्यकनकस्ययोवर्णःतद्वद्वर्णोयस्यतत्सुवर्णवर्णंतच्चतदंबरंवस्त्रंचपीतांबरमित्यर्थः। तेनभातितच्छीलमितिसुवर्णवर्णांबरभासि सुसांद्रःसुनिबिडःसं
ध्यायाःघनःसंध्याकालिकमेघःतस्यसंगःसोस्यास्तीतितथोक्तंकांचनंसुवर्णंतच्चनीलंनीलरत्नंतच्चतयोर्गिरीउल्लसंतौचतौकांचननीलगिरीचतयोःसुवर्णनीलाच
लयोरित्यर्थः। शृंगमिवस्थितंभैष्मीमुकुंदयोःरुक्मिणीश्रीकृष्णयोःकटिद्वयंनःअस्मान्पातु ॥ १६ ॥ पीतांबरेति। पीतंयदंबरंवस्त्रंतेनअलंकृतःतंअग्र्याणि
यानिरत्नानितैःस्यूतानिखचितानितानिचतानिस्फुरंतिचतानिकिंकिणिमेखलाद्यानिचकिंकिणिःक्षुद्रघंटिकाचमेखलाकांचीदामसाचतेआद्येप्रभृतीयेषांतानि
किंकिणिमेखलाद्यानिचतैःआभरणैःजाताप्रभायस्यसतथोक्तस्तंचिदेवचिन्मयस्तस्यज्ञानात्मकश्रीकृष्णस्यपीनःपुष्टःयोलसन्नितंबःशोभमानकटिप्रदेशःतंहे

सुवर्णवर्णांबरभासि भैष्मीमुकुंदयोः पातु कटिद्वयं नः॥ सुसांद्रसंध्याघनसंगि शृंगमिवोल्लसत्कांचननील
गिर्योः ॥ १६ ॥ पीतांबरालंकृतमग्र्यरत्नस्यूतस्फुरत्किंकिणिमेखलाद्यैः॥ जातप्रभं पीनलसन्नितंबं चेतः
सदा चिंतय चिन्मयस्य ॥ १७ ॥ आपादपद्मं परिलंबमाना नीवी रमाया रमणीयकांच्याः॥ विष्वक्
स्फुरद्रत्नगणस्य मध्यलक्ष्म्या विनम्रा इव भाति भासः॥ १८॥ व्रजभुवि बहुपाशैर्यन्न बद्धं मुरारेः तदुदर
मधुनासीत्संततं भीष्मपुत्र्याः॥ पुलकितकरचारुप्रेमदाम्ना निबद्धं प्रभुरपि वशमेति प्रेमभारैरुदारैः ॥ १९ ॥

चेतःसदाचिंतय ॥ १७ ॥ आपादपद्ममिति। पादौपद्मेइवपादपद्मेपादपद्माभ्यांआपर्यंतंआपादपद्मंपादपद्मपर्यंतं परिलंबमानारमायारुक्मिण्याःनीवीरमणीय
कांच्याःमनोहरमेखलायाःविष्वक्समंतात्स्फुरंतियानिरत्नानितेषांगणःसमूहःतस्यमेखलाखचितरत्नसमूहस्येत्यर्थः। मध्यलक्ष्म्याःमध्यस्यकांत्याविनम्राःपरा
जितत्वादधोमुखीभूताःभासइवकांतयइवभाति।कांच्याःअधोभागेलंबमानसुवर्णवर्णत्वात्कांचीप्रभावद्भवतीतिभावः ॥१८॥व्रजभुवीति।यदुदरंव्रजस्यगोकुल
स्यभूःभूमिःतस्यांनंदगोकुलेबहवोयेपाशास्तैः यशोदयाश्रीकृष्णबंधनार्थंआनीतैःपाशैरित्यर्थः। नबद्धंमुरारेःतदुदरंअधुनाभीष्मपुत्र्याःअंकस्थितायाःरुक्मि
ण्याःसंजातःपुलकोस्येतिपुलकितःयःकरःसएवचारुमनोहरंयत्प्रेमदामप्रेमैवप्रवणएवदामपाशःतेनसंततंबद्धमासीत्अंकस्थितरुक्मिणीकरेण।लिंगितमासीदि

त्यर्थः। समर्थस्यबंधनेनान्याधीनत्वंकथमित्यतोर्थांतरमुपन्यस्यति। प्रभुरपीति। प्रभुरपिसमर्थोपिउदारैरुत्कृष्टैःप्रेमैवभारास्तैःस्नेहविशेषैःवशंअधीनत्वंतदेतिसम
र्थोपिस्नेहवशादधीनोभवतीत्यर्थः ॥ १९ ॥ अंकेति। वलिःश्रीकृष्णस्यत्रिवलिःत्रिधात्रिप्रकारेणोदरगताश्रीकृष्णोदरंप्राप्तासतीअंकस्थिताऊरौस्थितायाउद
धिसुतारुक्मिणीतस्याःउच्चाःअंगुलिपंचकमध्येदीर्घाःयाअंगुल्यःतर्जनीमध्यमानामिकारूपाःकरांगुल्यःतासांकांतिरिवविरेजे । वलेस्त्रिरूपतयाआलिंगितरु
क्मिणीकरांगुलित्रयात्त्रिधानिःसृताकांतिरिवशुशुभेइत्यर्थः। तन्वीसूक्ष्मामनोहराश्रीकृष्णस्यरोमलतारोम्णांरेखाचनाभिःश्रीकृष्णनाभिःतंप्रविश्यशनकैरुदि
ताऊर्ध्वंनिर्गतासतीतस्याःरुक्मिण्याःसंबंधीतदीयोयःनेत्रांतःकटाक्षस्तस्यकांतिरिवविरेजे कटाक्षस्यासितत्वादितिभावः ॥ २० ॥ सुवर्णेति। सुवर्णस्ययोवर्णःतद्व

अंकस्थितोदधिसुतोच्चकरांगुलीनां कांतिस्त्रिधोदरगतेव वलिर्विरेजे ॥ नाभिं प्रविश्य शनकैरुदिता तदीयने
त्रांतकांतिरिव रोमलता च तन्वी ॥ २० ॥ सुवर्णवर्णोदरमध्यलग्ना मनोज्ञरोमावलिरिंदिरायाः ॥ जिगाय व
क्षोजकरींद्रकुंभयुगावतीर्णां मदवारिधाराम् ॥ २१ ॥ सद्रोमावलिनीलरत्नलतिकां तन्नाभिवापीतटादुद्यंतीं विलस
त्कुचाचलतटीद्वंद्वांतरं प्राप्तये ॥ मध्ये व्योमवशादलब्धसरणिं धर्तुं विधात्रा कृतां स्निग्धाष्टापदयष्टिमब्धि
दुहितुर्मृद्वी वलिः स्पर्धते ॥ २२ ॥

द्वर्णोयस्यतत्तथोक्तंतच्चतदुदरंचतस्यमध्यंत
स्मिन्लग्नासंबद्धाइंदिरायाःमनोज्ञरोमावलिः मनोहररोमावलिःवक्षोजावेवकुचावेवकरींद्रकुंभौतयोर्युगंयुगलंतस्मादवतीर्णांनिस्सृतांमदस्ययद्वारिउदकंतस्यधी
रांजिगायमदोदकधारावद्राजेत्यर्थः ॥ २१ ॥ सद्रोमेति। अब्धिदुहितुःअब्धितनयायाःरुक्मिण्याःमृद्वीवलिः विलसंतौयौकुचौतावेवाचलौतयोःतट्यौतटेतयोर्द्व
द्वंतस्ययदंतरंमध्यंतत्प्राप्तये तस्यारुक्मिण्याःनाभिःसएववापीकूपःतस्याःतटंतस्मात्उद्यंतींनिर्यांतीं मध्येनाभिकुचमध्ये व्योम्नःवशःतस्मात्कृशोदरीत्वादिति
भावः। अलब्धासरणिर्मार्गोययासातां सतीयारोमावलिःसैवनीलायारत्नलतिकातांधर्तुंधारणायविधात्राब्रह्मणाकृतांस्निग्धामनोहरायाअष्टापदयष्टिःसुवर्णस्य
यष्टिःतांस्पर्धते रोमावल्याख्यनीलरत्नलतिकायाःकुचाचलपर्यंतमभिवृद्धयेविधातृरचितसुवर्णात्मकाधारयष्टित्रयमिवदेव्यावलित्रयंविराजतइत्यर्थः ॥ २२ ॥

श्रीभूकटाक्षेति । श्रीर्लक्ष्मीःसाचभूश्चतयोःश्रीभूदेव्योःयेकटाक्षास्तएवोत्पलानियस्मिन्सतथोक्तस्तंअब्जभूःब्रह्मैवद्विरेफोभ्रमरःतस्यआलयःनिवासभूतंअंभोरुहंपद्मंयस्मिन्सतथोक्तस्तंवृत्तंवर्तुलंअगाधंगंभीरंअच्छशोभैवनिर्मलशोभैवांबुजलंतेनपूर्णस्तंअच्युतस्यकृष्णस्यनाभिरेवह्रदःतंचित्तमेवमीनोमत्स्यःतत्संबुद्धिःहे चित्तमीनविशप्रविश ॥२३॥ उद्दीप्तेति ।उद्दीप्ताःप्रकाशमानाःयेहाराःतेषामंतराणिमध्यानितेषुयानिरत्नानितेषांकांत्याहृद्यंमनोहरंमनोज्ञःमनोहरोयदुदरबंधःउदरबंधाख्याभरणविशेषस्तेनबद्धंतिस्रोवलयोयस्यतत्त्रिवलिमाताचपिताचपितरौविश्वस्यपितरौतयोःरुक्मिणीश्रीकृष्णयोःतत्कृशोदरंनोस्माकंत्रयाणांकालानांसमाहारस्त्रिकालंतत्त्रिकालंत्रिकालइत्यर्थः पात्रादिभ्योनेतिस्त्रीत्वाभावः । कालाध्वनोरत्यंतसंयोगइतिद्वितीया । शर्माणिसुखानिनिर्मातुजनयतु ॥ २४ ॥

श्रीभूकटाक्षोत्पलमब्जभूद्विरेफालयांभोरुहमच्युतस्य ॥ नाभिह्रदं वृत्तमगाधमच्छशोभांबुपूर्णं विश चित्त मीन ॥२३॥ उद्दीप्तहारांतररत्नकांत्या हृद्यं मनोज्ञोदरबंधबद्धम् ॥ तद्विश्वपित्रोस्त्रिवलि त्रिकालं शर्माणि निर्मातु कृशोदरं नः ॥ २४ ॥ गर्भस्थसर्वभुवनावपि ताविदानीं प्रद्युम्नमुख्यजनकाविति सूचनाय ॥ विश्वैकमंदिरमपि स्म दधत्तदीयं मध्यं मुदे भवतु मन्मथगात्रमात्रम् ॥ २५ ॥ सत्तर्कमात्रकलितं सकलापवर्गं मध्यं मुदेऽस्तु मधुकैटभमर्दनस्य ॥ तद्रम्यनाभिविवराभ्युदितांबरस्य पद्मोपभोग्यपरिणाम इवोपरिष्टात् ॥ २६ ॥

गर्भस्थेति । तौरुक्मिणीश्रीकृष्णौ गर्भेउदरेतिष्ठंतीतिगर्भस्थानितादृशानिसर्वभुवनानिययोस्तौतथोक्तौतथापिइदानींप्रद्युम्नमुख्यजनकौप्रद्युम्नमुख्यानांप्रथमंजनकौप्रथमंप्रद्युम्नजनकावित्यर्थः। इतिसूचनायइममर्थंज्ञापयितुंविश्वस्यसकलजगतःएकंमुख्यंचतत्मंदिरंचविश्वैकमंदिरंविश्वंभरमपीत्यर्थः । मन्मथस्यानंगस्यकेवलंगात्रंगात्रमात्रंदधत्मन्मथस्यानंगत्वात्तद्गात्रमात्रंगात्रशून्यतांदधदित्यर्थः । मध्यस्यातिकृशत्वादितिभावः । तदीयंरुक्मिणीश्रीकृष्णसंबंधिमध्यंमुदेसंतोषायभवतुमन्मथगात्रमात्रधारणेनप्रद्युम्नमुख्यजननसूचनमुपपद्यतेइतिद्रष्टव्यम् ॥२५॥ सत्तर्केति।केवलंसत्तर्कःसत्तर्कमात्रंसमीचीनानुमानमात्रमित्यर्थः । तेनकलितंज्ञातंमध्यप्रदेशस्यपरमसू

क्षमत्वादचाक्षुषत्वादनुमानमात्रगम्यमित्यर्थः । सकलानांसमस्तजनानांअपवर्गोमोक्षोयस्मात्तत्तथोक्तंतस्यश्रीकृष्णस्ययःरम्यनाभिस्तस्यविवरंछिद्रंतस्मात्सं जातंयदंबरंआकाशस्तस्य नाभ्याआसीदंतरिक्षमितिश्रुतेः।उपरिष्टादूर्ध्वभागेपद्मायाःलक्ष्म्याःरुक्मिण्याःउपभोग्यःउपभोगार्हःपरिणामःअभिवृद्धिरूपपरिपा कःसइवस्थितं।मध्यप्रदेशस्यनाभिप्रदेशादुपरिस्थितत्वादुपरिष्टादित्युक्तं।अंकस्थितरुक्मिणीकरेणमध्यस्यालिंगितत्वादितिभावः।मधुकैटभौमर्दयतीतितथोक्तः तस्यश्रीकृष्णस्यमध्यंमुदेऽस्तु ॥२६॥ लक्ष्मीमुकुंदेति। यस्मात्कारणात्शिक्षिताधीर्येषांतेतथोक्ताःकवयोपिसूरयोपिलक्ष्मीश्चमुकुंदश्चतयोःरुक्मिणीश्रीकृष्ण योःतनुसूक्ष्मंचततवृत्तंवर्तुलंचततमनोज्ञंतच्चततमध्यंचततउद्वीक्ष्यमध्यमस्तिकिमुअस्तिकिंनवेतिअद्यापिअधुनापिसंदिहतेमनःसंदेहंकुर्वतेखलु। अतएवमध्यं संजातासंज्ञाअस्येतिसंज्ञितंसंदेहइतिसंज्ञितंसंजातसंज्ञंअभूत् संदेहासंदेहविषयत्वादेवमध्येदेहस्यसंदेहसंज्ञेतिनिमित्तांतरोत्प्रेक्षा ॥ २७ ॥ मध्यमिति । सुवृत्तं

लक्ष्मीमुकुंदतनु वृत्तमनोज्ञमध्यमुद्वीक्ष्य शिक्षितधियः कवयोऽपि यस्मात् ॥ किम्वास्ति नेति खलु संदिहतेऽधुनापि संदेहसंज्ञितमभूदत एव मध्यम् ॥ २७ ॥ मध्यं मनोज्ञं मृदुलं सुवृत्तं बुद्धौ सदा तिष्ठतु यत्र शस्तम् ॥ उद्वीक्ष्य तत्पूर्तिं विधित्सयेव पद्माकराब्जेन सदाऽऽलिलिंगे ॥ २८ ॥ वक्षः सुरक्षां कुरुतान्मुरारेः सद्वर्ण्यलावण्यगुणैकधाम ॥ तत्याज यन्नैव चिरं सपत्नीवक्षोजलब्धांकमपि स्म लक्ष्मीः ॥ २९ ॥ आलिंगितप्रियतमाकुचकुंकुमांकलक्ष्यं जिगाय वसुदेवसुतस्य वक्षः ॥ मत्तस्फुरत्परिणतद्विपधातुरक्तकुंभांकजृंभि हरिनीलविशालवप्रम् ॥ ३० ॥ मृदुलंमनोज्ञंमनोहरंमध्यंश्रीकृष्णस्योदरंसदासर्वदाबुद्धौममचित्तेतिष्ठतु । पद्मारुक्मिणीयस्यमध्यस्यकृशत्वंकार्श्यंततउद्वीक्ष्यदृष्ट्वातस्यमध्यस्ययापूर्तिस्तस्याःविधित्सयेवपूर्णंकर्तुमिच्छयेवकराब्जं करपद्मंतेनसदाआलिलिंगेआलिंगितवती ॥ २८ ॥ वक्षइति । सद्भिःवर्ण्यःस्तुत्यःयःलावण्यगुणःसौंदर्यमेवगुणस्तस्यएकंमुख्यंयद्धाममंदिरंमुरारेःश्रीकृष्णस्य वक्षःवक्षस्थलंसुरक्षांसम्यक्रक्षांकुरुतात्करोतु । लक्ष्मीःयद्वक्षःचिरंसपत्नीनांगोपीनांवक्षोजःउरसिजःकुचःतस्मात्लब्धोऽकोंगरागादिचिह्नंयस्यतत्तथोक्तंतदपिनैवतत्याजस्म । तत्परित्यागकारणेविद्यमानेपिसौंदर्यलोभात्कृष्णवक्षस्येवतिष्ठतीत्यर्थः ॥२९॥ आलिंगितेति । आलिंगिताचसाप्रियतमारुक्मिणीचतस्याः यःकुचकुंकुमांकःकुचयोःकुंकुमंतस्यांकःतेनलक्ष्यंदर्शनीयंवसुदेवसुतस्यश्रीकृष्णस्यवक्षःकर्तृ । मत्तःमदोपेतःसचासौअतएवस्फुरन्दीप्यमानःसचासौ

परिणतःतिर्यक्दंतप्रहारवत्सचासौद्विपोगजःतस्ययःधातुरक्तकुंभःधातुनागैरिकादिधातुनारक्तःरंजितःयःकुंभःमस्तकःतस्यांकःचिह्नंतेनजृंभिमनोहरंयत्हरिनी
लविशालवप्रं हरिनीलस्यइंद्रनीलपर्वतस्यविशालवप्रंविस्तीर्णतटंस्याच्चयोवप्रमस्त्रियामित्यमरः । तत्जिगायइंद्रनीलपर्वतसानुवद्विरेजइत्यर्थः ॥ ३० ॥
वक्षइति ।विशालंविस्तीर्णंहरिनीलनीलंइंद्रनीलवन्नीलंलक्ष्मीगृहंलक्ष्म्याःमंदिरंचंदनचर्चितंचंदनेनानुलिप्तं सनूउत्तमोयःकौस्तुभःकौस्तुभमणिःतस्यउद्भासकं
प्रकाशकंस्वेनैवकौस्तुभस्यप्रकाशोनतुकौस्तुभेस्वस्यप्रकाशइतिभावः । विस्तीर्णायाःभूषाःभूषणानितासांआवलिःसमूहोयस्यतत्तथोक्तंविठ्ठलस्यश्रीकृष्णस्य
तद्वक्षःममचित्तेअस्तु ॥ ३१ ॥ सौवर्णेति । सुवर्णस्यविकारौसौवर्णौयौरम्यकलशौमनोहरकुंभौताभ्यामुपमितंमनोज्ञंइंदिरायाःरुक्मिण्याःवक्षोजावेवस्तनावे
वकुड्मलेपद्मकुड्मलेतयोर्युगंद्वंद्वंजयतिउत्कृष्टंवर्तते । तस्मिन्वक्षोजकुड्मलयुगेचार्चितोपिअनुलिप्तोपिनवकुंकुमानिनूतनकुंकुमानितेषांराशिःसमूहःपुरुषोत्तम

वक्षो विशालं हरिनीलनीलं लक्ष्मीगृहं चंदनचर्चितं तत् ॥ सत्कौस्तुभाभासकमस्तु चित्ते विस्तीर्णभूषा
वलि विठ्ठलस्य ॥ ३१ ॥ सौवर्णरम्यकलशोपमितं मनोज्ञं वक्षोजकुड्मलयुगं जयतींदिरायाः ॥ यच्चार्चि
तोऽपि नवकुंकुमराशिरासीद्वक्षोनुलेपनमणिः पुरुषोत्तमस्य ॥३२॥ आच्छादितोरस्थलमूलदेशं जातस्य
यस्याऽखिलधर्मगोप्ता ॥ शौरिः करं यच्छति तं रमायाश्चारुस्तनं वर्णयितुं क ईशः ॥ ३३ ॥

स्यसकलदेवतोत्तमस्यश्रीकृष्णस्यवक्षसःयान्यनुलेपनानिउरस्थितानुलेपनानीत्यर्थः । तेषुमणिःश्रेष्ठःआसीत् । यत्प्रसादोब्रह्मादिभिर्धृतःतादृशेनापिश्रीकृष्णे
नरुक्मिणीवक्षोजप्रसादधारणात्वक्षोजसौंदर्यस्यातिशयःकथंकथनीयइतिभावः ॥ ३२ ॥ अच्छादितेति । आच्छादितःउरस्थलमूलदेशःउरस्थलमेवमूलदे
शःस्वकारणीभूतमूलप्रदेशःयथाभवतितथातदाच्छादितोरस्थलमूलदेशंस्वजननकर्मणा । स्थगितसकलवक्षस्थलप्रदेशोयथाभवतितथेत्यर्थः । जातस्ययस्य
स्तनस्यउरोजेनसमस्तस्योरसःआच्छादनात्पितृद्रोहिणइतिध्वनितोर्थः । अखिलोयोधर्मःतस्यगोप्तारक्षकःश्रीशौरिःश्रीकृष्णःकरंहस्तं । बलिमितिध्वनितोर्थः ।
यच्छतिप्रयच्छतितादृशद्रोहिणोपिस्तनस्यधर्मगोप्तुःशौरेःकरदानात्कारणात्रमायाःरुक्मिण्याःतंचारुस्तनंवर्णयितुंकःपुमान्ईशःसमर्थःनकोपीत्यर्थः ॥ ३३ ॥

उद्यदिति । मंदहसितमेवामृतंतेनशोभतइतिशोभिबिंबंमंडलंयस्यतत्तथोक्तंउद्यन्मनोज्ञमुखमेवनिर्मलपूर्णचंद्रस्तंउद्वीक्ष्यसदामुकलितेयेअंबुजकोशेतयोःकांतिं बिभ्रत्रुक्मिण्याःनित्यतारुण्यात्कदाचिदपिकुचशैथिल्यंनास्तीतिभावः । विश्वजनन्याःजगन्मातुःकुचमंडलंस्तनमंडलंनःपुष्णातु ॥ ३४ ॥ सद्वंशेति । सद्वंशः समीचीनवंशःतस्मिन्जातोपिसमीचीनवेणुजनितोपिवेणोर्मुक्ताफलजन्मभूमित्वादितिभावः । सत्कुलप्रसूतोपीतिध्वनिः । सुशोभनःगुणःसूत्रंयस्यसतथोक्तोपि मुक्ताहारस्यसूत्रसंबंधत्वादितिभावः । सौशील्यादिगुणवानितिध्वनिः । सुवृत्तंसम्यग्वर्तुलंरत्नंमध्यनायकीभूतंरत्नंयस्यसतथोक्तोपिसदाचारसंपन्नोपीतिध्वनिः । हारःमौक्तिकहारःकमलायाःरुक्मिण्याःकुचांतेकुचयोरंतोमध्यंतस्मिन्अवकाशःस्थलंतंनैवलभतेनप्राप्नोतिः । कुचयोर्निबिडत्वादितिभावः । तथाहिक

उद्यन्मनोज्ञमुखनिर्मलपूर्णचंद्रमुद्वीक्ष्य मंदहसितामृतशोभिबिंबम् ॥ बिभ्रत्सदा मुकुलितांबुजकोशकांति पुष्णातु विश्वजननीकुचमंडलं नः ॥ ३४ ॥ सद्वंशजातः सुगुणः सुवृत्तरत्नोऽपि हारः कमलाकुचांते ॥ नैवावकाशं लभते कुलेन किंवा गुणौघैः कठिनोपयकंठे ॥३५॥ शार्ङ्गस्य ग्रहणे मनोरमगुणस्याऽऽकर्षणे सायकस्याऽऽदाने युधि माधवस्य फलिताः संधानकर्मण्यपि ॥ चत्वारः कबरीं प्रगृह्य कमलामालिंग्य गंडस्थलीं संगृह्याऽधरजामृतं च पिबतो हस्ता रहःकेलिषु ॥ ३६ ॥

ठिनस्यकठिनचित्तस्यउपकंठंसमीपंतस्मिन्कुलेनाकिंप्रयोजनंगुणौघैःकिंनिष्ठुरपुरुषसमीपेआभिजात्यसौशील्यादयोगुणाश्चनशोभंतइत्यर्थः।कुचमंडलस्यापि कठिनत्वादर्थांतरन्यासस्यावकाशः ॥३५॥ शार्ङ्गस्येति । युधियुद्धेशार्ङ्गस्यशार्ङ्गाख्यधनुषःग्रहणेएकोहस्तःमनोरमोमनोहरोयोगुणःमौर्वीतस्यआकर्षणेएकः सायकस्यादानेएकःसंधानमेवकर्मतस्मिन्संधानकर्मणिशरसंधानक्रियायामप्येकइतिचत्वारोमाधवस्यहस्ताःफलिताःसंजातप्रयोजनाःएकैकैवक्रियाचतुष्टय करणेहस्तचतुष्टयस्यापेक्षितत्वादितिभावः। रहःकेलिषुसुरतक्रीडासुकबरींरुक्मिण्याःकेशपाशंप्रगृह्यकमलांरुक्मिणीमालिंग्यगंडस्थलींसंगृह्यअधरात्अधरोष्ठात्जातमधरजंयदमृतंतच्चपिबतःश्रीकृष्णस्यचत्वारोहस्ताःफलिताःकबरीग्रहणेएकःआलिंगनेद्वौगंडस्थलीग्रहणेएकइतिचत्वारोहस्ताःउपयुक्ताइत्यर्थः ३६

हस्ताइति । स्फुरंतियानिमरकतानिमरकतरत्नानितेषांद्युतिरिवद्युतिर्येषांतेतथोक्ताःफलिताश्चताःपुष्पिताश्चताःपारिजातशाखाःपारिजातवृक्षस्कंधाःतैःसमानाः सदृशाःविभवायेषांतेतथोक्ताःमरकतरत्नरूपफलमुक्ताफलरूपपुष्पसमेतपारिजातवृक्षशाखासदृशाइत्यर्थः । विभवःसमर्थाःअतिदीर्घाःआजान्ववलंबिनःनः अखिलार्थान्सकलपुरुषार्थान्यच्छंतुप्रयच्छंतु ॥३७॥ चक्रमितिाचक्रंसुदर्शनंमर्दितंदैत्यचक्रंदैत्यसेनायेनतत्तथोक्तंचक्रमहंमन्निकटेत्वमपिचक्रंवेतिबुद्ध्यादै त्यचक्रंममर्देत्यर्थः। एवमुत्तरत्राप्यर्थोद्रष्टव्यः। शंखःपांचजन्यःस्वनाःस्वनिर्घोषाःतैर्धिक्कृतःनिराकृतःशत्रुशंखःशत्रूणांशंखःखर्वमहाखर्वादुपरितनशंखाख्य संख्यायेनसतथोक्तःधिक्कृतबहुसंख्याकशत्रुसमूहइत्यर्थः । शंखोनिधौललाटास्थिसंख्यावलयकंबुष्वितिरत्नमाला । शंखस्त्वहंमन्निकटेत्वंशंखोवेतिबुद्ध्या शत्रुशंखंधिक्कारेत्यर्थः । पद्मंचविध्वस्तानिनिराकृतानिपरास्यपद्मानिपरेषांशत्रूणांआस्यपद्मानियेनतत्तथोक्तंपद्ममहमेवमन्निकटेयूयमपिपद्मानिवेति

हस्ता स्फुरन्मरकतद्युतयोऽतिदीर्घाः कृष्णस्य रम्यनखमौक्तिकशोभमानाः ॥ यच्छंतु नः फलितपुष्पितपा
रिजातशाखासमानविभवा विभवोऽखिलार्थान् ॥ ३७ ॥ चक्रं हरेर्मर्दितदैत्यचक्रं शंखः स्वनैर्धिक्कृतश
त्रुशंखः ॥ पद्मं च विध्वस्तपरास्यपद्मं गदा च सा पापगदापहंत्री ॥ ३८ ॥ द्विषामसत्योऽपि निजप्रहर्ष
करोऽस्य खड्गः किल नंदकाख्यः ॥ वियुक्तनारीपरितापकारी किमिंदुरानंदकरो न लोके ॥ ३९ ॥

बुद्ध्याविध्वस्तानीत्यर्थः। साहरेर्गदाचपापमेवागदोव्याधिःरोगव्याधिगदामयाइत्यमरः। तस्यापहंत्रीपापहंत्रीत्यर्थः। अहमेवगदात्वमपिगदोवेतिबुद्ध्यापापाख्य गदमपहंत्रीत्यर्थः॥ ३८ ॥ द्विषामिति। निजानांभक्तानांप्रहर्षःसंतोषःतंकरोतीतितथोक्तःअस्यश्रीकृष्णस्यखड्गःद्विषांशत्रूणांअसत्योपिनंदयतीतिनंदकःनंदकइ तिआख्यायस्यसतथोक्तःकिल। नंदयतीतिनंदकइतिनामसर्वानंदकस्यकथंघटतइत्यतोर्थांतरंउपन्यस्यति वियुक्तेति। वियुक्ताःभर्तृविरहिण्योयाःनार्यःतासांप रितापःदुःखंतत्करोतितच्छीलइतितथोक्तःइंदुश्चंद्रःलोकेआनंदकरोनभवतिकिंतुभवत्यवेत्यर्थः । तद्वत्द्विषांदुःखकारिणोभक्तानंदकत्वेननंदकइतिसंज्ञाघटतइ तिभावः। अन्यथावियुक्तनारीदुःखदस्यचंद्रस्यापिसर्वानंदकत्वाभावादानंदकरत्वेनचंद्रइतिसंज्ञानघटेतेतिभावः ॥ ३९ ॥

शरैरिति । नविद्यतेपारंअवसानंयेषांतेअपाराः तैः शरैः रिपुवर्गः रिपुसमूहः तस्यदैन्यंदुःखंतत्करोतीतितथोक्तः अस्यमुरारेः चापः त्रिषुनतः त्रिनतः कोटिद्वयेमध्येचेतित्रि षुस्थानेषुनम्रइत्यर्थः । समर्थस्यनम्रीभावः कथमित्यतोऽर्थांतरंन्यस्यति तथाहीति । तथाहिसन्शोभनोवंशः कुलंतस्मिन्भवतीतिभवः उत्पन्नः सद्वंशेभवउत्पत्तिर्येषांते तथोक्ताइतिवासत्कुलप्रसूताइत्यर्थः । समीचीनवेणुजातत्वेनसद्वंशभवत्वं । चापस्यापिशृंगाच्छरोजायतइतिवचनेनउपादानोपादेययोरैक्यात्चापस्यापिवंश भवत्वंयुक्तं । सद्वंशाभवंत्यस्मादितिवासद्वंशभवाः समीचीनवंशप्रवर्तकाः स्वयमपिसमीचीनाएवेतिभावः । गुणाढ्याः सौशील्यादिगुणसंपन्नाः पुरुषाः गुणेनमौर्व्या आढ्यत्वंचापस्यापि । समर्थाअपि सर्वश्चासौसंधिश्चतस्मिन्सर्वसमयइत्यर्थः । नताः नम्राः ॥ ४० ॥ हस्ताइति । कटकानिवलयानितानिचकंकणानितानि

शरैरपारै रिपुवर्गदैन्यकरोऽस्य चापस्त्रिनतो मुरारेः ॥ तथा हि सद्वंशभवा गुणाढ्या नताः समर्था अपि सर्वसंधौ ॥ ४० ॥ हस्ता हरेर्वलयकंकणमुद्रिकाद्यैर्दीप्ताः सुदर्शनगदांबुजशंखशोभाः ॥ वृत्तास्त्रिरेख मणिबंधरुचोऽतिदीर्घा रक्ताब्जकोमलतला मम मानसे स्युः ॥ ४१ ॥ भैष्म्याः क्वणत्कटककंकणरंजितो मे हस्तः समस्तफलदस्तनुतादभीष्टम् ॥ येनाऽनिशं रहसि बंधमपेक्षमाणः श्रीशोऽखिलं हरति पूर्णम नोरथोऽपि ॥ ४२ ॥

च मुद्रिकाः अंगुलीयका नि ताः आद्याः येषांतानितैराभरणैर्दीप्ताः शोभमानाः सुदर्शनंचगदाचअंबुजंपद्मंचतच्चशंखश्चतेषांशोभायेषांतेतथोक्ताः वृत्ताः वर्तुलाः तिस्रोरेखाः यस्यसत्रिरेखः यः मणिबंधः करमूलप्रदेशः तस्यरुचः कांतयोयेषांतेतथोक्ताः रक्तंयदंबुजंपद्मंतद्वत्कोमलंतलंयेषांतेतथोक्ताः अतिदीर्घाः हरेः श्रीकृष्णस्यहस्ताः मममानसंमनस्तस्मि न्स्युः भवेयुः ॥ ४१ ॥ भैष्म्याइति । क्वणंतिकूजंतियानिकटककंकणानिकटकानिचकंकणानिकरभूषणानिचतैरंजितः अलंकृतः समस्तानियानिफलानिअभी ष्टानितानिददातीतितथोक्तः भैष्म्याः रुक्मिण्याः हस्तः अभीष्टंअनिशंमेमह्यंतनुतात्करोतु । पूर्णः मनोरथोवांछितार्थोयस्यसतथोक्तः तथापिअवाप्तसकलकामोपी त्यर्थः । श्रीशः श्रीकृष्णः रहसियेनहस्तेनबंधः आलिंगनंतंअपेक्षमाणः सन्अखिलंजगत्हरतिसंहरति । अखिलजगतिसतिआलिंगनासंभवादितिभावः ॥ ४२ ॥

वृत्तेइति। वृत्तेवर्तुलेतिस्रोरेखाःययोस्तेत्रिरेखेरत्नौघारत्नसमूहाःतैर्दीप्तेश्रीश्चश्रीशश्चतयोःकंधरेग्रीवेरुक्मिणीश्रीकृष्णयोःकंठावित्यर्थः। विष्वक्परितःस्रवंति निःसरंतियानिरत्नानितैःचित्रौविचित्रौशंखावेवशेवधीनिधीः निधिर्नाशेवधिर्भेदाःशंखपद्मादयोनिधेरित्यमरः। जिग्यतुःजितवत्यौशंखाख्यनिधिवत्शुशुभातेइत्यर्थः॥ ४३ ॥ रत्नौघेति। रत्नौघःरत्नसमूहस्तेनरम्यंतेनपरश्रितेनआश्रितेनकंठबंधेनेत्यर्थः। चित्रेणविचित्रेणनिजंस्वकीयंयद्भूषणंतेनकंठाभरणेनेत्यर्थः। दीप्तंवृत्तंतिस्रोरेखायस्यसतथोक्तस्तंवरःश्रेष्ठोयोभारस्तेनजुष्टस्तंश्रीरमणस्यकंठंनित्यंस्मर॥ ४४ ॥ सन्नीलेति। संतियानिनीलोत्पलानितानिचचारूणियानिचंपकानितानिचलसत्योयाःजातयःजातिकुसुमानिताश्चस्फुरंत्योयाःमल्लिकास्ताश्चरक्तानियानिअशोकानिअशोककुसुमानितानिचमृदूनियानिप्रसूनानियेभ्यो

वृत्ते त्रिरेखे रत्नौघदीप्ते श्रीश्रीशकंधरे॥ विष्वक्स्रवद्रत्नचित्रौ जिग्यतुः शंखशेवधी॥ ४३ ॥ रत्नौघरम्येण परिश्रितेन चित्रेण दीप्तं निजभूषणेन॥ वृत्तं त्रिरेखं वरहारजुष्टं नित्यं स्मर श्रीरमणस्य कंठम् ॥४४॥ सन्नीलोत्पलचारुचंपकलसज्जातिस्फुरन्मल्लिकारक्ताशोकमृदुप्रसूनरचिता रम्याब्जराजन्मुखी॥ मुक्तानीलमणिप्रवालविलसन्माणिक्यहेमोज्ज्वला भर्तुः साऽर्पितरुक्मिणीकरलतेवाऽऽभाति माला विभोः॥ ४५ ॥ बंधोज्झिताया अपि सिंधुपुत्र्या मांगल्यसूत्रं किल नित्यबद्धम्॥ मुग्धांगनामोहनकंठयोगे मोक्षोऽप्यनाकांक्षित एव नूनम्॥ ४६ ॥

तिरिक्तानितानिमंदारादीनितानिचतैःरचिताग्रथितारम्याणियान्यब्जजातिपद्मानितैःराजन्मुखंअग्रभागोयस्याःसातथोक्ताअग्रभागनिबद्धकमलत्रयेत्यर्थः। विभोःश्रीकृष्णस्यमालावनमालामुक्ताःमौक्तिकमणयःताश्चनीलमणयश्चप्रवालाश्चविलसन्माणिक्यानिचहेमानिहेममयानितानिचतैरुज्ज्वला अत्रक्रमोविवक्षितः नीलोत्पलादीनांयथायोग्यंनीलमण्यादौसादृश्यंद्रष्टव्यं। भर्तुःश्रीकृष्णस्ययौअंसौतयोरर्पितायारुक्मिणीकरलतारुक्मिण्याःयौकरौतावेवलतासैवआभाति॥ ४५ ॥ बंधोज्झितायाइति। बंधःसंसारबंधःउज्झितःपरित्यक्तोययासातथोक्तातस्याअपिनित्यमुक्तायाअपीत्यर्थः। सिंधुपुत्र्याःरुक्मिण्याःमांगल्यं

चतत्सूत्रंचमांगल्यसूत्रंकंठसूत्रंनित्यंबद्धंनित्यबद्धंकिल । नित्यसुवासिनीत्वातूरुक्मिण्याःकंठेसदाबद्धमेवावतिष्ठतीत्यर्थः । पत्युःश्रीकृष्णस्याविनाशित्वेनकंठसूत्रवियोगःकदापिनास्तीतिभावः । बंधरहिताया:कंठसूत्रसमागमेबंधःकथमित्यतोर्थांतरंन्यस्यति मुग्धायाइति । मुग्धायाःमनोहरायाःअंगनायाःअबलायाःनार्याःमोहनोमनोहरोयःकंठस्तस्ययोगःसंबंधःआलिंगनमित्यर्थः । तस्मिन्सतिमोक्षोपिबंधाभावोपिअनाकांक्षितएवनूनम् ॥ ४६ ॥ सन्नीलेति । सतूयन्नीलरत्नंतेनरुचिरंमंगलदेवतायाःरुक्मिण्याःमंगलमेवमांगल्यंतस्यसूत्रंकंठसूत्रंइहमेश्रियैसंपदेस्यात् । अब्जस्ययद्दलंतद्वदायतेअक्षिणीयस्याःसातथोक्तातस्याःकंठेधृतंयन्मांगल्यसूत्रंप्राक्पूर्वंनव्ययुंक्तवियोगंनप्राप अग्रेनवियोक्ष्यतिवियोगंनगमिष्यति इदानींनोवियुंक्तेवियोगंनप्राप्नोति । मांगल्यसूत्रस्यरुक्मिणीकंठ

सन्नीलरत्नरुचिरं सततं श्रियै स्यान्मांगल्यसूत्रमिह मंगलदेवतायाः॥ यत्कंठदेशधृतमब्जदलायताक्ष्या न प्राग्व्ययुंक्त न वियोक्ष्यति नो वियुंक्ते ॥ ४७॥ दूरे विधूय हरिणं सुभगं तदीयनेत्रं स्वबिंबखचितं वितनोतु चंद्रः ॥ साम्यं तथाऽपि न समेति शुचिस्मितस्य लोलालकस्य कमलाच्युतसन्मुखस्य ॥ ४८॥ माणिक्यसंशोभिमुखं सदांतःशाणागमोद्भासितमौक्तिकाढ्यम् ॥ मानार्हनीलोत्पलसत्करंडं श्रीनाथगंडद्वयमाजिगाय ॥ ४९ ॥

वियोगःकालत्रयेपिनास्तीत्यर्थः । एकस्मिन्धातावेवप्रयोगत्रयस्यकृतत्वाच्छद्वचमत्कारोयम् ॥ ४७ ॥ दूरइति । चंद्रःस्वलांछनीभूतमृगंदूरेविधूयदूरतस्त्यक्त्वासुभगंमनोहरंतस्यहरिणस्यसंबंधितदीयंयन्नेत्रंतत्स्वस्ययद्बिंबमंडलंतेनखचितंसंबद्धंयदिवितनोतुतथापि शुचिस्मितंयस्यतत्तथोक्तंतस्यलोलाःअलकाःयस्यतत्तथोक्तंतस्यकमलाच्युतसन्मुखस्यरुक्मिणीकृष्णयोःशोभनमुखस्यसाम्यंसमत्वंतत्नसमेतिनप्राप्नोति । स्वमंडलस्थहरिणविधूननेनतन्नेत्रसंबंधोपादानेनचनैर्मल्यमनोहरनेत्रसंपादनेपिशुचिस्मितालकानामसंपादनादितिभावः ॥ ४८ ॥ माणिक्येति । श्रीनाथस्यश्रीकृष्णस्ययौगंडौतयोःद्वयंमाणिक्येनपद्मरागेणसम्यक्शोभतेतत्तच्छीलमितिसंशोभिताद्दशंमुखंवदनप्रदेशोयस्यतत्तथोक्तंतत्अंतःअभ्यंतरेसदाशाणायाःशाणोपलस्यआगमःसमागमःतेनउद्भासितानियानिमौक्तिकानितैराढ्यंसंपन्नंतत्मानस्यबहुमानस्यअर्हाःयेनी

लोत्पलाः अनर्घनीलरत्नानीत्यर्थः । तैरचितंसत्करंडमानार्हलीलोत्पलसत्करंडंततूआजिगाय।माणिक्यखचितमुखप्रदेशांतःपूरितमौक्तिकनीलरत्ननिर्मितकरंड वद्विभातीत्यर्थः । गंडद्वयस्यांतःशुभ्रदंतोपेतत्वाद्विंबाधरोष्ठसमन्वितत्वात्स्वस्यनीलवर्णत्वाच्चेतिभावः ॥ ४९ ॥ चंद्रोपममिति । चंद्रस्यउपमायस्यतच्चंद्रोपमंचं द्रसदृशमित्यर्थः । सुखान्येवसौख्यानितेषांसंदोहःसमूहःतंददातितथोक्तंओष्ठभासारंजितंअलंकृतं सौंदर्यमेवदुग्धांबुधिःश्यामावदातमुखस्थसौंदर्याणामपारत्वा त्दृष्टिप्रियत्वाच्चदुग्धांबुधित्वंतस्ययःफेनःतेनकल्पंसमानंश्रीरमणस्यश्रीकृष्णस्यमंदस्मितंनःअघंपापंततूमंदयतात् विनष्टंकुर्यादितिभावः ॥ ५० ॥ स्वच्छेति । स्व च्छाशुभ्रामृदुयत्स्मितंतस्यदशाअवस्थातयाआकलितःप्रकाशितःएकदेशोयस्याःसातथोक्ता लक्ष्म्याःयःकपोलःतस्मिन्ललितंमनोहरंयत्क्षतंतस्यहेतुभूता

चंद्रोपमं श्रीरमणस्य सौख्यसंदोहदं रंजितमोष्ठभासा ॥ सौंदर्यदुग्धांबुधिफेनकल्पं मंदस्मितं मंदयता दघं नः ॥ ५० ॥ स्वच्छा मृदुस्मितदशाकलितैकदेशा लक्ष्मीकपोलललितक्षतहेतुभूता ॥ सत्कुंदकुड्मलस मा निबिडा ममांतः कृष्णस्य रम्यरदनावलिराविरस्तु ॥ ५१ ॥ सन्मान्यलावण्यमरंदसांद्रमम्लानसच्चं पकसंपदंतः ॥ मन्मानसे स्याल्लसदुन्नताग्रं सौम्यस्य नासापुटमच्युतस्य ॥ ५२ ॥ व्यक्तातिकोमलमनो हरवर्णपूर्णं श्रुत्यर्थवृत्तिमधुरस्वरमत्यगाधम् ॥ सत्क्लेशदुर्विषशमेऽमृतवर्षकल्पं तत्त्वं निजं हरिवचः परिबो धयेन्माम् ॥ ५३ ॥

कारणभूता संतियानिकुंदकुड्मलानि तेषांसमासमानानिबिडाकृष्णस्यरम्याःयेरदनाःदशनाःदंताःतेषांआवलिःपरंपराममअंतर्हृदयेआविरस्तुआविर्भूताऽस्तु ॥५१॥ सन्मान्येति । सद्भिर्मान्यंयल्लावण्यं तदेवमकरंदःपुष्परसःतेनसांद्रंनिबिडंअम्लानंयत्सच्चंपकंतस्यसंपदिवसंपद्यस्यतत्तथोक्तंलसदुन्नताग्रंयस्यतत्तथोक्तंसौम्यस्यमनोहरस्यअच्युतस्यश्रीकृष्णस्य नासापुटंअंतःहृदयमध्येसंततंममममानसंमन्मानसंतस्मिन्मन्मनसीत्यर्थः ॥ ५२ ॥ व्यक्तेति । व्यक्ताःस्पष्टाःतेचतेअतिकोमलाःअकठिनाःतेचतेमनोहरवर्णाःम नोहराक्षराणितैःपूर्णंश्रुत्यर्थोवेदार्थःतस्मिन्वृत्तिर्वर्तनंयस्यतत्तथोक्तं मधुरःस्वरोयस्यतत्तथोक्तं अत्यगाधंअतिगंभीरंसतांयःक्लेशःसएवदुर्विषंदुष्टविषंतस्यशमः विनाशकारणंतस्मिन्नमृतस्ययोहर्षःतस्यकल्पंसमानंहरिवचःश्रीकृष्णवचनंनिजंस्वकीयंतत्त्वंपारमार्थिकस्वरूपंततूमांप्रतियत्रयत्रतत्रसर्वत्रपरिबोधयेत्॥५३॥

नानेति । नानाभिन्नाविधाप्रकारायेषांतानिनानाविधानियान्यनुपमरत्नानितैर्विचित्रितेखचितेताभ्यांमीनएवमत्स्यएवउपमाययोस्तेमीनोपमेयेउज्ज्वलहिरण्म
यकुंडलेताभ्यांसुभगंमनोहरंश्रीनाथस्यश्रीकृष्णस्यकर्णयुगलंभवार्त्यासंसारदुःखेनदीनस्यखिन्नस्यश्रितस्यत्वामाश्रितस्यमेइमांकाव्यरूपांगिरंशृणुतात्॥ ५४॥
अंभोजेति । अंभोजस्यारविंदस्ययत्कोमलविशालदीर्घपत्रंकोमलंमृदुतच्चतत्विशालंसुदीर्घंतच्चतत्पत्रंचतच्चतत्सद्भासमानंसम्यग्भासमानंविशालायतको
मलदलसदृशमित्यर्थः । अलिवत्भ्रमरवत्राजत्शोभमानंअधीरतारंचंचलत्वकनीनिकायस्यतत्तथोक्तंशंभूचतुर्मुखरुद्रौआदिप्रभृतीयेषांततेथोक्ताःतेचतेअ
मराश्चतैर्वांछिताप्रार्थितावल्गुवीक्षामनोहरावलोकनंयस्यतत्तत्जृंभत्विकासत्मुकुंदस्यकृष्णस्यनयनंमांमुहुरीक्षतात् ॥ ५५ ॥ वक्रेति । वक्राःअलकाःयस्य

नानाविधानुपमरत्नविचित्रिताभ्यां मीनोपमोज्ज्वलहिरण्मयकुंडलाभ्याम् ॥ श्रीनाथकर्णयुगलं सुभ
गं भवार्त्या दीनस्य मे गिरमिमां शृणुताच्छ्रितस्य ॥ ५४॥ अंभोजकोमल विशालसुदीर्घपत्रसंभासमा
नमलिराजदधीरतारम् ॥ शंभुप्रभृत्यमरवांछितवल्गुवीक्षं जृंभन्मुकुंदनयनं मुहुरीक्षतान्माम् ॥ ५५ ॥
वक्रालकं मणिमयोज्ज्वलपट्टबंधं कस्तूरिकातिलकभूषितमच्युतस्य ॥ विस्तीर्णमीषदुदितालिकयुग्ममि
ष्टमास्माकफाललिखितं कुरुताल्ललाटम् ॥ ५६ ॥ श्यामं त्रिवक्रं विधिमुख्यदेवसाम्राज्यविश्राणनहेतुली
लम् ॥ कामाग्र्यचापाकृतिकामताताद्भ्रूमंडलं कंपयतादघं नः ॥ ५७ ॥

तत्तथोक्तंमणिमयःउज्ज्वलपट्टबंधोयस्यतत्तथोक्तंतत्कस्तूरिकयायत्तिलकंपुंड्रंतेनभूषितंविस्तीर्णंईषदुदितंप्रकाशितंअलिकयोःललाटोर्ध्वभागयोःयुगंयुग
लंयस्यतत्तथोक्तंअच्युतस्यश्रीकृष्णस्यललाटंअस्माकंसंबंधिआस्माकंयत्फालेलिखितंललाटेलिखितंतत्इष्टंशुभफलप्रदंकुरुतात् । स्वस्यसदादुर्लेखरहित
त्वात्ममललाटंदुर्लेखमपिदुर्लेखरहितमेवकरोत्वितिभावः ॥ ५६ ॥ श्याममिति । श्यामंत्रिषुस्थलेषुवक्रंकुटिलंविधिश्चतुर्मुखोयेषांततेथोक्तास्तेचतेदेवाश्चते
षांयत्साम्राज्यंस्वावराधीश्वरत्वंतस्ययद्विश्राणनंदानंतस्मिन्हेतुःकारणीभूतालीलाविलासोयस्यतत्तथोक्तंकामस्यमदनस्ययदग्र्यचापःश्रेष्ठचापःतस्याकृतिरिव

र्यस्यतत्तथोक्तंकामतातस्यकामपितुःश्रीकृष्णभ्रूमंडलंनोस्माकंअघंखंडयतात्विनाशयतुखडिभेदनेलोट् ॥ ५७॥ सइति । प्रवालस्यविद्रुमस्यकांतिरिवकांति
र्यस्यसतथोक्तःमृदुलतरःअतिमृदुःसरसःअमृतरसोपेतःमुरारेःश्रीकृष्णस्यसःअधरःअधरोष्ठःयशसेभवतु । रमालक्ष्मीःयस्मादधरोष्ठात्उदितोव्यक्तोयोरसःतस्मि
न्लुब्धालोभयुक्ताधीश्चित्तंयस्याःसातथासतीउरसिवक्षस्थलेदैवादधरात्सुधामृतरसस्यअधोभागेस्थितायामपिपातोभवष्यतीत्याशयेनेत्यर्थः।आननंश्रीकृष्ण
मुखमेवपद्मंतत्चुंबतितच्छीलइतिआननपद्मचुंबीसचासौवेणुश्चतस्मिन्श्रीकृष्णमुखचुंबिवेणुवाद्येचेत्यर्थः । अवात्सीत्निवासमकरोत् ॥ ५८ ॥ सदिति ।
सात्वतानांयादवानांराजासात्वतराजःश्रीकृष्णस्तस्यराज्ञीमहिषीरुक्मिणीतस्याःसत्समीचीनंयत्पक्वंबिंबफलंतेनसमःसदृशःयःरम्यतमाधरोष्ठःसतांसंपदेविभूत्यै

स भवतु यशसे प्रवालकांतिर्मृदुलतरः सरसोऽधरो मुरारेः ॥ यदुदितरसलब्धधीरवात्सीदुरसि रमाननपद्मचुं
बिवेणौ ॥ ५८ ॥ सत्पक्वबिंबसमरम्यतमाधरोष्ठः सत्संपदे भवतु सात्वतराजराज्ञ्याः॥ यत्संभवामृतकणेन फ
णींद्रतल्पः कृष्णः स नित्यमजरामरणो बभूव ॥ ५९ ॥ सौवर्णरम्यफलकोपमितः कपोलः सौभाग्यदो भवतु
कुंडलरंजितश्रीः ॥ यच्चुंबनं विरचयन् विगतान्यतृष्णः कृष्णो बभूव सरसः किल नित्यतृप्तः ॥ ६० ॥ रोम्णां
हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायिनि ॥ संजाते भुवि
रुक्मिणीशविजये सद्वाजिराजोदिते संजातः सुरमंडलीषु महितः सर्गोऽयमष्टादशः ॥ ६१ ॥ इत्यष्टादशः सर्गः ॥ १८॥

भवतु । फणींद्रःतल्पोयस्यसतथोक्तःसःश्रीकृष्णःयस्मादधरात्संभवउत्पत्तिर्यस्यतत्तथोक्तंतच्चतदमृतंचतस्यकणोबिंदुस्तेननित्यंनविद्यतेजरामरणंयस्यसतथो
क्तःजरामरणरहितःबभूव ॥ ५९ ॥ सौवर्णेति । सुवर्णस्यविकारःसौवर्णंयत्रम्यफलकंतेनसंजाताउपमाअस्येतिउपमितःकुंडलाभ्यांताटंकाभ्यांरंजिताअलंकृ
ताश्रीःकांतिर्यस्यसतथोक्तःरुक्मिण्याःकपोलःसौभाग्यदोभवतु । सरसःसविलासःश्रीकृष्णःयच्चुंबनंयस्यकपोलस्यचुंबनंतत्विरचयन्कुर्वन्सन्विगताअन्यतृ
ष्णाअन्यस्मिन्इच्छायस्यसतथोक्तःनित्यंतृप्तःनित्यतृप्तश्चबभूवकिल । रुक्मिणीकपोलचुंबनलोलस्यततोन्यत्रउत्कंठारहितत्वादेवनित्यतृप्तत्वमित्युत्प्रेक्षा
॥ ६०॥रोम्णामितिउक्तएवार्थः॥ ६१ ॥ इतिश्रीवादिराजतीर्थपूज्यचरणविरचितश्रीरुक्मिणीशविजयटीकायांनारायणभट्टविरचितायामष्टादशःसर्गः॥ १८॥

॥ इति श्रीरुक्मिणीशविजयेऽष्टादशः सर्गः समाप्तः ॥

॥ श्रीः ॥ कामिनीकमलादेवीसूनुर्मीनध्वजःपुरी ॥ द्वारकायस्यमांपायात्सोयंसौंदर्यसागरः ॥ १ ॥ दंतक्षतैरिति । दंतैःकृतानिक्षतानितैःकृतंपदंस्थानंयस्यतत्कृतपदं नूतनरक्तार्द्रनखक्षतोपममित्यर्थः । अतएववश्यार्हरक्तरसतःवश्येवश्यकर्मणिअर्हःयोग्यःयःरक्तरसःतेनकुंकुमोदकेनेत्यर्थः । सार्वविभक्तिकस्तसिः । रचितानि लिखितानिअक्षराणिवश्यमंत्राक्षराणियस्यतत्तथोक्तंतस्यअतएवप्रियस्यभर्तुःयद्वशीकरणंतस्मिन्नुचितंयोग्यंतस्यकनकस्यसुवर्णस्ययद्यंत्रवरंयंत्रश्रेष्ठंतस्यप्र भांकांतिंमुष्णत्अपहरद्देव्याःरुक्मिण्याःगंडस्थलंप्रविभातिसुवर्णयंत्रवद्विभातीत्यर्थः ॥ १ ॥ अंतरिति । मुरवैरिपत्न्याःश्रीकृष्णपत्न्याःरुक्मिण्याःनासा याःनासिकायाःविभूषणमलंकारोयेनसनासाविभूषणःसचासौमणिश्चअंतःगर्भेरंध्रप्रदेशइत्यर्थः । निगूढंप्रविश्यस्थितंयत्कनकंशलाकात्मकंसुवर्णंतेनअंकुचि

दंतक्षतैः कृतपदं प्रविभाति देव्या गंडस्थलं प्रियवशीकरणोचितस्य ॥ मुष्णत्प्रभां कनकयंत्रवरस्य तस्या वश्यार्हरक्तरसतो रचिताक्षरस्य ॥ १ ॥ अंतर्निगूढकनकांकुरिताननोऽपि नासाविभूषणमणिर्मुरवैरिप त्न्याः ॥ मुक्तामयः किल मनोज्ञवधूसुधार्द्रबिंबोष्ठचुंबिवदनस्य वदामयः क्व ॥ २ ॥ मुक्तात्मकोऽपि मृदुलो ष्ठपुटानुषक्तो नित्यं यदुल्लसदपांगशरेण भिन्नः ॥ नासाविभूषणमणिः परिलंबतेऽस्या देव्याः किमच्युतव शीकरणे प्रयासः ॥ ३ ॥

तंआननंमुखंअग्रभागोयस्यसतथोक्तःरंध्रप्रदेशाद्बि र्निर्गतसुवर्णशलाकाग्रभागोपेतमुखप्रदेशोपीत्यर्थः । मुक्तामयःकिलमुक्ताफलात्मकःकिल । मुक्तःआमयोव्याधिर्येनसतथोक्तः । किलेत्याश्चर्यं । हृदिनिगूढ शरस्यव्याध्यभावःआश्चर्यमितिश्लेषःलभ्यध्वन्योर्थः । अर्थांतरंन्यस्यति । मनोज्ञाःमनोहराःयाःवध्वःस्त्रियस्तासांयासुधाअधरोष्ठसुधातयाआर्द्रःद्रवीभूतो यःबिंबोष्ठःबिंबसमानोष्ठःतंचुंबतितच्छीलमितिसुधार्द्रबिंबोष्ठचुंबितादृशंवदनंयस्यसतथोक्तस्तस्यकांताधरसुधापानासक्तमुखस्येत्यर्थः । नासामणेःअधरोष्ठो परिलंबमानत्वादितिभावः । आमयोव्याधिःक्वकुतःवद । अनेनवदनेनअमृतंपिबतःव्याधिःक्वेत्यर्थः ॥ २ ॥ मुक्तात्मकोपीति । मुक्तामुक्ताफलंआत्मास्वरूपंय स्यसमुक्तात्मकःमौक्तिकमण्यात्मकइत्यर्थः । विमुक्तोपीतिध्वनिः । मृदुलंयदोष्ठपुटंतस्मिन्ननुषक्तःमुक्तस्यकांताधरासक्तिर्गर्हितेत्यपिनासूचयति।तेनाधरस्यला

वर्ण्यातिशयोद्योत्यते ।नासाविभूषणमणिःनित्यंसर्वदायस्याःरुक्मिण्याःउल्लसदपांगएवशरस्तेनमनोहरकटाक्षबाणेनभिन्नःसन्कटाक्षकांत्यामिश्रितःसन्ईक्षित
ध्वनिः। परिलंबते। अनेनकामिनींहित्वान्यत्रगंतुमसमर्थस्यतत्रैवासक्तिर्द्योत्यते। अस्याःदेव्याःरुक्मिण्याःअच्युतवशीकरणप्रयासःकिं। श्रीकृष्णस्यापिमुक्त
त्वाविशेषात्सोप्येवंवशीकर्तुंशक्यतइतिभावः॥३॥ देव्याश्चंचलापांगचांचल्येनिमित्तमुत्प्रेक्षयन्भृंगसाम्येनवर्णयति। नासेति। नासानासिकेतिआख्यानामय
स्यतन्नासाख्यंयच्चंपकंचंपकपुष्पंतदितिभीर्भयंतयाचलितस्यनासिकसमीपमागतस्यचंपकमुकुलभ्रांत्योत्पन्नभयेनकटाक्षपर्यंतपलायितस्येत्यर्थः। नेत्रमेव
चार्वंबुजंमनोहरकमलंतस्मिन्नर्पितंयत्हृन्मनस्तेनचसमुत्सुकस्यआगमोद्युक्तस्यअंबुजाशयापुनःपरावृत्यागतस्येत्यर्थः। अधीरःचंचलःजवोवेगोयस्यसतथा
तस्यचंपकभियागमनंअंबुजलोभात्पुनरागमनंचवारंवारंकुर्वतइत्यर्थः। भृंगस्यभ्रमरस्यसंपदंशोभांमुष्णन्यदुपुंगवःश्रेष्ठःतस्यश्रीकृष्णस्यराज्ञ्याःमहिष्याःरु

नासाख्यचंपकभिया चलितस्य नेत्रचार्वंबुजार्पितहृदा च समुत्सुकस्य ॥ भृंगस्य संपदमधीरजवस्य मुष्णन् लक्ष्मीं तनोतु यदुपुंगवराज्ञ्यपांगः ॥ ४ ॥ स्वर्णांगी वरनीलरत्नसदृशापांगी प्रवालोल्लसत्पादा या स्मितमौक्तिकामरकतस्कंधाभलीलाजटा ॥ वैदूर्याग्र्यनखा नखक्षतलसन्माणिक्यपुष्पोष्ठसद्गोमेदा रदवज्ररुक्सुरतरुं नाऽस्यै ददौ श्रीपतिः ॥ ५ ॥

क्मिण्याःअपांगःकटाक्षः नःलक्ष्मींसंपदंतनोतुविस्तारयतु ॥ ४ ॥
स्वर्णांगीति। यारुक्मिणीस्वर्णवदंगशरीरंयस्याःसा पारिजातोपिसुवर्णात्मकः। यारुक्मिणीवरंउत्तमंयन्नीलरत्नंतस्यसदृशःआपांगोयस्याःसा असितापांगी
त्यर्थः। पारिजातोपिनीलरत्नात्मकपत्रवान्। यारुक्मिणीतिसर्वत्रसंबंधः। प्रवालवत्विद्रुमवत्उल्लसंतौपादौयस्याःसा पारिजातोपिप्रवालरूपमूलप्रदेशः। यारु
क्मिणीस्मितमेवमौक्तिकंयस्याःसा पारिजातोपिमुक्ताफलफलोपेतः।यारुक्मिणीमरकतात्मकःस्कंधः मरकतस्कंधःतस्यआभेवाआयासांताःमरकतस्कंधाभाः
लीलाजटाःविलासार्थंचतस्रोवेण्योयस्याःसातथोक्ता चतुष्कपर्दायुवतिःसुपेशेतिश्रुतेः।पारिजातोपिमरकतस्कंधोपेतः। यारुक्मिणीवैदूर्यवदग्र्याःश्रेष्ठाःनखाः
यस्याःसा पारिजातोपिनवरत्नभरितत्वाद्वैदूर्यरत्नोपेतः। यारुक्मिणीनखक्षतमेवलसन्माणिक्यपुष्पंयस्याःसा। यारुक्मिणीओष्ठएवसद्गोमेदःउत्तमगोमेदरत्नंय

स्याःसा । यारुक्मिणीरदाएवदंताएववज्राणिवज्राख्यरत्नानितेषांरुक्कांतिर्यस्याःसाइतिमत्वाश्रीपतिःश्रीकृष्णःअस्यैनवरत्नसदृशावयवोपेतरुक्मिण्यैसुरतरुं नवरत्नात्मकंपारिजातंनददौनदत्तवान् । एतादृशींरुक्मिणीमेवपारिजाततरुंमत्वाअस्यैपारिजाततरुंनदत्तवानित्यर्थः ॥ ५ ॥ कार्श्यमिति । लक्ष्म्याःरुक्मिण्याःमनोज्ञःमनोहरःतस्मिन्कायेशरीरेकार्श्यंकृशताअस्तिकृशांगीत्वादितिभाव । कचभरकरयोःकेशपाशबाह्वोःलंबमानत्वदैर्घ्येस्तःतिष्ठतः । केशपाशस्यलंबमानत्वात् करस्यदीर्घत्वाच्चेतिभावः । चक्षुषीचमध्यंचऊरुदेशौचतेषुअधिकाचसाचपलताचअधिकचपलताबहुचापल्यंसाचअदृश्यताचअल्पत्वेनदर्शनायोग्यतातनुत्वंसाचमार्दवंमृदुत्वंतच्चअधिकचपलतादृश्यतामार्दवानिक्रमेणसंति चपलाक्षीत्वाच्चक्षुषोश्चापल्यंकृशोदरीत्वान्मध्येअदृश्यतामृद्वंगीत्वादूरुदेशयोर्मार्दवमित्येवंक्रमेणसंतीत्यर्थः ।द्विरदस्यगजस्ययःपरिलसत्कुंभःमनोहरमस्तकंतस्यशोभाकांतिस्तांअपहरतीतितथोक्तंतस्मिन् रुक्मिण्याःकुचावेवकलशौतयोस्तटंतस्मिन्

काश्यं काये मनोज्ञे कचभरकरयोर्लंबमानत्वदैर्घ्ये चक्षुर्मध्योरुदेशेष्वधिकचपलतादृश्यतामार्दवानि ॥
तत्तेनाऽपि क्रमेण द्विरदपरिलसत्कुंभशोभापहारिण्यस्ति स्तः संति लक्ष्म्याः कुचकलशतटे नास्ति न स्तो
न संति ॥ ६ ॥ भ्रूमध्यलग्नमृगनाभिललामलेखा श्रीश्रीशयोरनुकरोति हि नीलनीला ॥ शाणोपलोप
रिगतं रणधीरमारचापानुषक्तमसितोत्पलचारुबाणम् ॥ ७ ॥

तत्कार्श्यंनास्तितेलंबमानत्वदैर्घ्येनस्तः । तानिअधिकचपलतादृश्यतामार्दवानिनसंति । कायकचभरहस्तेषुकार्श्यलंबमानत्वदैर्घ्याणांगुणत्वात्कुचयोर्दोषत्वादितिभावः । विषमसमस्यापूरणमिदम् ॥ ६ ॥ भ्रूमध्येति । नीलनीलाअत्यंतंनीलेत्यर्थः । श्रीश्चश्रीशश्चतयोःरुक्मिणीश्रीकृष्णयोःफालेललाटेलिखिताभ्रूवोर्यन्मध्यंतस्मिँल्लग्नंसंबद्धंयन्मृगनाभिललामंकस्तूरिकायाःपुंड्रंतस्यलेखारेखा । शाणायाःघर्षणस्ययःउपलःपाषाणःतस्यउपरिगतःउपरिविद्यमानःतं रणेधीरोयोमारःकामःतस्ययश्चापःतस्मिन्ननुषक्तःसंबद्धस्तंअसितंनीलंयदुत्पलंतदेवचारुबाणःतंअनुकरोतिहिभ्रूमध्यशाणोपलयोःभ्रूमध्यगतचापयोःकस्तूरिललामनीलोत्पलयोःसाम्यादितिभावः ॥ ७ ॥

नित्यमिति । नित्यमनवरतंपरस्परंअन्योन्यंमनोरमःमनोहरःयःगात्रसंगःतस्मात्परस्परनिरीक्षणजन्यशरीरसंबंधादितिभावः । मत्तालिःमदोपेतभ्रमरःसरक्तसरसी
रुहंरक्तपद्मंतच्चतयोःकांतिःतेययोस्तइतितथोक्तौश्रीकृष्णशरीरस्यनीलत्वात्तच्छरीरसंबंधेनदेव्याःकटाक्षस्यभ्रमरकांतिःदेव्याःशरीरस्यसुवर्णवर्णत्वात्तच्छरी
रसंबंधेनश्रीकृष्णकटाक्षस्यरक्तांबुजकांतिःसंपन्नेतिबोध्यं । जगदादिपित्रोःलक्ष्मीश्चरमारमणश्चतयोःश्रीरुक्मिणीश्रीकृष्णयोःकटाक्षौअस्माकंईप्सितफलं
अभीप्सितप्रयोजनंततकुरुताम् ॥ ८ ॥ रक्तेति । रमाचरामश्चरमारामौरुक्मिणीश्रीकृष्णौतयोर्यौकटाक्षौअपांगौतयोःलक्ष्मीःकांतिःरक्तासतीक्रोधेनरक्तास
तीअस्माकंयानिअमित्राणिशत्रवःतेषांवर्गःसमूहस्तंलक्ष्यीकरोतुलक्ष्यीभूतान्करोतु । तयोःक्रूरदृष्टिःअस्मच्छत्रून्हरत्वितिभावः । विधिशर्वौविरिंचिशिवौपूर्वौ
प्रथमौयेषांदेवानांतेविधिभवपूर्वास्तेषांयत्सौभाग्यंऐश्वर्यंतस्यदात्रीसैवकटाक्षलक्ष्मीःअनुरक्ताकृपायुक्तासतीशरणागतंमांलक्ष्यीकरोतुविषयीकुर्यात् ॥ ९ ॥

**नित्यं परस्परमनोरमगात्रसंगान्मत्तालिकांतिसरसीरुहकांतिमंतौ ॥ लक्ष्मीरमारमणयोर्जगदादिपित्रोरस्माक मीप्सितफलं कुरुतां कटाक्षौ ॥ ८ ॥ रक्ता रमारामकटाक्षलक्ष्मीर्लक्ष्यीकरोत्वस्मदमित्रवर्गम् ॥ सेवानुरक्ता विधिशर्वपूर्वसौभाग्यदात्री शरणागतं माम् ॥ ९ ॥ मुकुटरविभियाऽधोलंबमानं मुखेंदुप्रविलसदुरुभासा चोन्मुखं तन्मुखस्थम् ॥ कुटिलमलकराशिं कर्णनीलोत्पलश्रीः परिहृतनिजदैन्यं तर्कयाम्यंधकारम् ॥ १० ॥**

मुकुटेति । अहंअलकराशिंरुक्मिणीश्रीकृष्णयोःकुटिलालकसमूहंमुकुटमेवकिरीटमेवरविस्तस्यभियाभीत्यासूर्यांधकारयोर्विरोधादितिभावः । अधःशिरोधः
प्रदेशेललाटेइत्यर्थः । लंबमानंमुकुटरवेरुपरिविद्यमानत्वादधःपलायनंकर्तुंललाटदेशमागतमित्यर्थः । मुखमेवेंदुःतस्यप्रविलसंतीयाउरुभाउत्कृष्टकांतिस्तया
चऊर्ध्वंमुखंयस्यसउन्मुखस्तंतेजस्तिमिरयोर्विरोधादत्रापिमुखचंद्रतेजसाअधःप्रदेशंप्रतिगंतुमशक्यत्वात्पुनरुपरिगंतुमुन्मुखमित्यर्थः । कुटिलंवक्रंमुकुटरवेःभी
त्याउपर्यपिगंतुमशक्यतयातिर्यग्भूतमित्यर्थः । तन्मुखस्थंउभयत्रापिगंतुमक्यतयातयोःरुक्मिणीश्रीकृष्णयोःतेमुखेतयोस्तिष्ठतीतितथोक्तं यत्रकुत्रापिगंतु
मशक्यत्वात्तन्मुखयोरेवस्थितमित्यर्थः । ननुशत्रुद्वयमध्येकथंवांधकारेणस्थितमित्याशंक्यसहायसंपत्त्यास्थितमित्याह कर्णेति । कर्णयोर्येनीलोत्पलेअवतं

सीकृतेंदीवरेतयोःश्रियाअसितकांत्यापरिहृतंनिजदैन्यंस्वकीयकार्पण्यंयस्यसतथोक्तः।कर्णनीलोत्पलकांतिसहायेनजीवितमंधकारेणेतिभावः।अंधकारंतर्कया
मिऊहयामि ॥ १० ॥ उत्तुंगेति । उत्तुंगमुत्तमंतच्चततूनीलंचतत्चमरीमृगबालंचतस्यभारोतिशयःतेनकल्पःसमानःतंस्फुरंतियानिविविधरत्नानितैर्लसत्किरीटं
यस्यसतंउत्फुल्लानियानिपुष्पाणितेषांनिकरःसमूहःतस्याकरःआश्रयःतंउज्ज्वलंतंशोभमानंतंकमलाच्युतमौलिदेशंरुक्मिणीश्रीकृष्णयोःधम्मिल्लप्रदेशं धम्मि
ल्लेमुकुटेमौलिरितिभास्करः। नित्यंस्मरामि ॥ ११ ॥ इत्थमिति । विभुःद्वारावतीवल्लभःसश्रीकृष्णइत्थमुक्तप्रकारेणजांबवतींजांबवतीनाम्नींभार्यामुवाहवि
वाहयांबभूव । संतिशुभानिलक्षणानिअंगसंपदोयस्याःसातथोक्तातांलक्षणांलक्षणानाम्नींउवाहेतिप्रत्येकंसंबंधः। सर्वगुणाकरांसर्वगुणाश्रयांसत्यभामामुवाह।

उत्तुंगनीलचमरीमृगबालभारकल्पं स्फुरद्विविधरत्नलसत्किरीटम् ॥ उत्फुल्लपुष्पनिकराकरमुज्ज्वलंतं नि
त्यं स्मरामि कमलाच्युतमौलिदेशम् ॥ ११ ॥ इत्थं जांबवतीमुवाह स विभुः सल्लक्षणां लक्षणां सत्यां
सर्वगुणाकरां शशिमुखीं नीलां च नीलालकाम् ॥ कालिंदीं कलकंठकंठनिनदां स्वां मित्रविंदां तथा बा
ला भूमिसुताहृताश्च बहुशो द्वारावतीवल्लभः ॥ १२ ॥ कस्मान्मुह्यथ मानवा मुररिपोः सर्वोत्तमत्वे पु
रा यः पद्मासनधूर्जटिप्रभृतिभिः कार्याक्षमैः प्रार्थितः ॥ गीर्भिर्विष्णुमभिष्टुतः फणिफणे नृत्यंश्च यः सेवि
तः सद्वेणुं रणयंश्च नम्रतनुभिर्यो विस्मितैरीक्षितः ॥ १३ ॥

शशिवन्मुखंयस्याःसाशशिमुखीतांनीलांनी
लानाम्नींउवाह। नीलाःअलकाःयस्याःसातांकालिंदींकालिंदीनाम्नीमुवाह। कलकंठवत्कोकिलकंठवत्कंठोनिनदोध्वनिर्यस्याःसातांस्वांमातुलपुत्रीत्वेनस्वकी
यांमित्रविंदांमित्रविंदाख्यामुवाह। तथाभद्रांचउवाहेतिशेषः । भूमिसुतेननरकासुरेणआहृताःबहुशोबह्वीःबालाःनारीश्चउवाहेतिसंबंधः ॥ १२ ॥ विवाहवर्णनं
समाप्यकुमारोत्पादनंवर्णयिष्यन् प्रसंगात्कृष्णस्यसर्वोत्तमत्वेभागवतदशस्कंधोक्तकथामेवप्रमाणीकरोति।कस्मादिति। हेमानवाःमुरभिदःश्रीकृष्णस्यसर्वोत्तम
त्वेब्रह्मरुद्रादिसकलदेवेभ्यःउत्तमत्वेविषयेकस्मात्कारणात्मुह्यथमुग्धाभवथ।निर्णायकप्रमाणसद्भावात्किमर्थंसंदेहंकुरुथेत्यर्थः। प्रमाणंदर्शयति।पुरेति। पुराश्री

कृष्णावतारात्पूर्वंयःश्रीकृष्णःकार्याक्षमैःभूभारतरणरूपकार्यंकर्त्तुमसमर्थैः पद्मासनोब्रह्मासचधूर्जटिःशिवःसचएतौप्रभृतीआदीयेषांततथोक्ताःतैःदेवैःप्रार्थितः भूभारहरणायअवतारंकर्तुंस्तुतः ॥ ब्रह्मातदुपधार्यार्थंसहदेवैस्तयासह । जगामसत्रिनयनःतीरंक्षीरपयोनिधेः ॥ तत्रगत्वाजगन्नाथंदेवदेवंवृषाकपिम् । पुरुषंपुरुषसूक्तेनउपतस्थेसमाहितइतिवचनात् । यःकृष्णोदेवक्युदरेपद्मासनधूर्जटिप्रभृतिभिःगीर्भिःस्तुतिरूपाभिरभिष्टुतः । ब्रह्माशिवश्चतत्रेत्यमुनिभिर्नारदादिभिः । देवैःसानुचरैःसार्धंगीर्भिर्विष्णुमथास्तुवन्निितिवचनादयमर्थःसिद्धः । यःकृष्णःफणिनःकालियनागस्ययःफणःमस्तकंतस्मिन्नृत्यन्सन्पद्मासनधूर्जटिप्रभृतिभिःतालमर्दलसंगीतादिसेवयासेवितश्च । तंनर्तुमुद्यतमुपेत्यतदातदीयगंधर्वसिद्धमुनिचारणदेववध्वः।प्रीत्यामृदंगपणवानकचारुवाद्यपुष्पोपहारबलिभिःसहसोपसेदुः इतिवचनात् । यश्चसन्समीचीनोवेणुस्तंवेणुवाद्यंरणयन्गायन्सन् नम्रतनुभिःभक्तिवशादवनतशरीरैःविस्मितैःब्रह्मादिभिरीक्षितश्च । सुमनसस्तदुपधार्यसुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः । कवयआनतकंधरगात्राःकश्मलंययुरनिश्चिततत्त्वाइतिवचनादयमर्थःसिद्धः ॥ १३ ॥ कृष्णायापीति । अपिचश्वफल्कात्मजःश्वफ

**कृष्णायाऽपि च तैर्नतैः परिवृतं दृष्ट्वा श्वफल्कात्मजो यं तुष्टाव गुणैरबद्धमितरान् बद्धानुदीर्य स्फुटम् ॥**
**सेवातुष्टहृदोऽपि देवनिकरादप्राप्तमुक्तिं प्रभुः यः प्रादान्मुचुकुंदभूमिपतये तैर्निद्रितायाऽप्यलम् ॥ १४ ॥**

ल्कपुत्रोऽक्रूरःकृष्णायनतैर्नमस्कृतैस्तैःपरिवारभूतैर्ब्रह्मादिभिः परिवृतंसहितंयंकृष्णंदृष्ट्वागुणैःसत्त्वरजस्तमोगुणैःअबद्धंइतरान्श्रीकृष्णादन्यान्ब्रह्मादीन्बद्धान्सत्वरजस्तमोगुणैर्बद्धान्उदीर्यउक्त्वास्फुटंस्पष्टंतुष्टाव ॥ सुनंदनंदप्रमुखैःपार्षदैःसनकादिभिः॥ सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्चद्विजोत्तमैरिति । नतेस्वरूपंविदुरात्मनस्तेह्यजादयोह्यात्मतयागृहीताः । अजोनुबद्धःसगुणैरजाया गुणात्परंवेदनतेस्वरूपमित्यादिवचनादयमर्थःसिद्धः । किंचयःप्रभुःकृष्णःसेवयादेवानांयुद्धेसाहाय्यकरणलक्षणसेवयातुष्टंसंतुष्टंहृत्चेतोयस्यसतथोक्तस्तस्यापिदेवनिकरःदेवसमूहःतस्मात्अप्राप्ताचसामुक्तिश्चतां । वरंवृणीष्वभद्रंतेऋतेकैवल्यमात्मनः । एकएवेश्वरस्तस्यभगवान्विष्णुरव्ययइतिवचनादलब्धकैवल्यःसिद्धः । तैर्देवैरलमत्यर्थंसंजातानिद्राअस्येतिनिद्रितस्तस्मैनिद्रितायनिद्रांप्रापितायेत्यर्थः । मुचुकुंदश्चासौभूपतिश्चतस्मैप्रादात्दत्तवान् । जन्मन्यनंतरेराजन्सर्वभूतसुहृत्तमः । भूत्वाद्विजवरस्त्वंहिमामुपैष्यसिकेवलमितिवचनात् । देवैर्दातुमशक्यांमुक्तिंमुचुकुंदायप्रादादितियत्तत्तस्मात्श्रीकृष्णस्यसर्वोत्तमत्वेकिमर्थंमुद्यथेतिसंबंधः ॥ १४ ॥

यइति । यःकृष्णःकल्पयतीतिकल्पःसर्वाभीष्टकरइत्यर्थः । सचासावंघ्रिपश्चतंपारिजातवृक्षमित्यर्थः ।आहरन्सन्सेश्वरान्रुद्रसहितान्सुरवरानिंद्रादिदेवान्व्यद्रावयत्युद्धेविद्रावयामास । तूर्णंगृहीत्वापाणिभ्यांविषाणेतस्यनंदिनः । त्रिशूलपाणिंचिक्षेपवैनतेयोधनुःशतमितिवचनात् । यःश्रीकृष्णःपुराभस्मीकृतभस्मदानवपतिःनिर्दग्धभस्मासुरःसन्शंभुंशिवंअपालयत् । मुमुचुःपुष्पवर्षाणिहतेपापेवृकासुरे । देवर्षिपितृगंधर्वामोचितःसंकटाच्छिवइतिवचनादयमर्थःसिद्धः । योगींद्रैर्योगिश्रेष्ठैरादृतंमानितंवैभवमैश्वर्यंयस्यसतथोक्तः भृगुमुनिःयस्यश्रीकृष्णस्यश्रैष्ठ्यंब्रह्मरुद्राद्युत्तमत्वंतत्अस्पष्टयत्स्पष्टीचकार । पुनःस्वंसत्रमासाद्यमुनीनांब्रह्मवादिनाम् । स्वानुभूतमशेषेणराजन्भृगुरवर्णयत् । तन्निशम्याथमुनयोविस्मिता मुक्तसंशयाः।भूयांसमदधुर्विष्णुंयतःशांतिर्यतोऽभयंइतिवचनादयमर्थःसिद्धः । कैवल्येमोक्षेकामइच्छायेषांतेतथोक्ताःहेजनाःतंसर्वोत्तमंअजितंकेनाप्यपराजितंमधुंमधुनामकासुरंजयतीतिमधुजित्तंश्रीकृष्णंभक्त्याभजत १५

यः कल्पांघ्रिपमाहरन् सुरवरान् व्यद्रावयत्सेश्वरान्यो भस्मीकृतभस्मदानवपतिः शंभुं पुराऽपाल
यत्॥ योगींद्रादृतवैभवो भृगुमुनिर्यच्छ्रैष्ठ्यमस्पष्टयत् तद्भक्त्या भजताजितं मधुजितं कैवल्यकामा जनाः
॥ १५॥ कैलासयात्रादिभिरूनभावो यद्यस्य तव्द्यैकवचो वृथा स्यात् ॥ लीलेति वाच्यं भवता वयं तु
पौत्रालयप्राप्तिमुपेक्षयामः ॥ १६ ॥

ननुशिवश्रैष्ठ्येपि । आराध्यगिरिशंशंभुंदेवदेवमुमापतिमित्यादिकैलासयात्राकथारूपप्रमाणमस्तीत्याशंक्याह । कैलासेति । कैलासस्ययात्रागमनंआदिर्येषांतानितथोक्तानितैःकैलासगमनादिभिरित्यर्थः । तस्यश्रीकृष्णस्यऊनस्यन्यूनस्यभावःशिवान्नीचतेत्यर्थः । यदितर्हिशिवायविष्णुरूपायेतिभवदीयंविष्णुशिवयोरैक्यवचःऐक्यवाक्यंवृथाबाधितार्थकंस्यात् । नहिपूज्यापूज्ययोरैक्यंसंभवति । अतोहरिशंकरयोरैक्यंवदताभवताकृष्णकृतकैलासयात्रादिकंकेवलंलीला नतारतम्यप्रयोजकमितिवाच्यं।वयंतुपौत्रालयप्राप्तिंपौत्रस्यहरिपुत्रचतुर्मुखपुत्रस्यपौत्रस्यशिवस्ययःआलयःआवासभूतःकैलासस्तस्यप्राप्तिंस्नेहवशात्मत्वाशंकैवैवंनघटतइत्युपेक्षयामः तारतम्येप्रयोजकंनभवतीतिनिरूपयामइत्यर्थः । तथाचनिःशंकंपूर्वोक्तविष्णुसर्वोत्तमत्वमितिभावः ॥ १६ ॥

ननुमास्तुहरिशंकरयोरैक्यंकैलासयात्रादिमात्रेणकृष्णस्यनीचताऽस्त्वित्यतआह। युधिष्ठिरस्येति । एषःश्रीकृष्णःयुधिष्ठिरस्यपांडुज्येष्ठपुत्रस्यआलयआवासः तंइंद्रप्रस्थंप्रतिगच्छन् ततोयुधिष्ठिरान्नीचःकिं युधिष्ठिरादपिश्रीकृष्णस्यनीचत्वंपरस्याप्यनभिमतमितिकिंशब्देनाक्षिपति।यदिकैलासयात्रामात्रेणशिवादपि कृष्णोनीचःस्यात् इंद्रप्रस्थयात्रामात्रेणयुधिष्ठिरादपिनीचःस्यादितिभावः। ननुकैलासयात्रामात्रेणननीचतांब्रूमः किंतुशिवार्चनेनैवेवंवदामइत्यतआह। तथेति। यथाशिवार्चनंकृतंतथाद्विजातीन् ब्राह्मणान्यमिनःजितेंद्रियान्नारदादीन्समर्चयन् अयंश्रीकृष्णःततोपिद्विजातिभ्योपिनीचःकिं। अत्रापिकिंशब्दःपूर्ववदाक्षेपे। यदिशिवपूजाकरणेनशिवान्नीचःतर्हिद्विजातिपूजाकरणेनतेभ्योपिनीचःस्यादितिभावः। तर्हिकिमर्थंकैलासेंद्रप्रस्थयात्रादिकंकृतमित्यतआह। नृलोकइति । इदंकृष्णेनकृतंसर्वंकैलासेंद्रप्रस्थयात्रादिकंनृलोकेमनुष्यलोकेअवतीर्णस्यकृष्णस्यनराणांअनुकारोअनुकरणंतस्मैइतितदर्थंहि मनुष्यविडंबनार्थमेवेदंकृतमित्यर्थः ॥ १७ ॥

युधिष्ठिरस्यालयमेष गच्छन् तथा द्विजादीन्यमिनः समर्चयन् ॥ ततोऽपि नीचः किमयं नृलोके नरानुकारार्थमिदं हि सर्वम् ॥ १७ ॥ यदीह शंका विपरीतभावे तदा नराः संति किमात्मलोकात् ॥ पयोब्धितीरं व्रजतो विधातुः शिवस्य च स्वालयतो गतस्य ॥ १८ ॥ उक्ताः किमर्था नरदृष्टिगम्याः स्वस्थानसंस्थैरचिताः समस्ताः ॥ अत्राप्यदृश्याकृतिभिर्मुनींद्रविज्ञानदृष्टेरपि दूरदूरैः ॥ १९ ॥

नन्वेवंब्रह्मादीनांक्षीरसमुद्रयात्राहर्यर्चनादिकमपिनरानुकरणार्थंकिन्नस्यादित्याशंक्यतदाविडंबनीयमनुष्याभावान्नेत्याह। यदीति। इहप्रमेयेविपरीतभावःविपरीतस्यभावःतस्मिन्विपरीतभावेविपरीतत्वेब्रह्मादियात्रादेरेवनरानुकारार्थत्वेशंकासंशयः। यदिक्षीरसमुद्रयात्रादिकंनरानुकरणार्थंभवत्वितियदिशंकेत्यर्थः। तदा आत्मनोलोकस्तस्मात्सत्यलोकादित्यर्थः। पयोब्धितीरंक्षीरसमुद्रतीरंव्रजतःविधातुःब्रह्मणःस्वस्यआलयःतस्मादितिततःकैलासात्पयोब्धितीरंगतस्यशिवस्य चविडंबनीयाःविडंबनार्हाःनराःसंतिकिं। येनेदंनरवद्विडंबनार्थंस्यात्। नरवद्विडंबनंतुनरमध्यएवकर्त्तव्यंनराभावात्नरविडंबनार्थंनभवतिकिंतुकार्याक्षमैःभक्त्या कृतमिदंननीचतापरिहारकमितिभावः ॥ १८ ॥ ननुसत्यलोकादिषुनराभावेपिइतरलोकस्थनरविडंबनार्थंभवत्वितिआशंक्यस्वस्वलोकस्थदेवैःकृतस्यार्थ

स्यनरदर्शनायोग्यत्वान्नेत्याह।उक्ताइतिस्वेषांयानिस्थानानितेषुसंतिष्ठंतेतेतथोक्तास्तैःब्रह्मादिभिःरचिताःकृताःसमस्ताःउक्ताःपूर्वोक्ताःअर्थाःक्षीरसमुद्रयात्राहर्यु पासनादिप्रमेयाणिनरदृष्टिगम्याःकिं अत्रत्यनरैःलोकांतरकृतस्यद्रष्टुमशक्यत्वात्इतिभावः।ननुमाभवतुस्वलोकस्थैःकृतस्यअत्रत्यनरदृष्ट्ययोग्यत्वान्नरविडंब नार्थता। नरलोकमागत्यतैःस्वकृतनरविडंबनार्थतांप्रपद्यतइत्यतआह। अत्रापीति। अत्रापिमनुष्यलोकेपिअदृश्याःनरैर्द्रष्टुमशक्याःआकृतयःशरीराणियेषांते तथोक्ताःतैःमुनींद्राणांविज्ञानमेवदृष्टिस्तस्याअपिदूराद्दूराःदूरदूराःतैःसाकल्येनाविषयैरित्यर्थः। ब्रह्मादिभिःरचिताःकृताःअर्थाःगर्भस्थभगवत्स्तुत्यादिरूपार्थाः नरदृष्टिगम्याःकिं। अत्रापिकृतस्यनरविडंबनार्थतानसंभवतीतिभावः॥ १९ ॥ इतोपिनरानुकारार्थतानसंभवतीत्याह।पुरेति।पुरापूर्वंउग्रोयोभस्मासुरःतस्यमरणभी त्यापलायमानंशिवमनुधावतःक्रूरभस्मासुरस्ययःघातकालःविनाशकालःतस्मिन्नरानुकारःनराणामनुकरणंतस्ययुक्तिरुपपत्तिःकास्तिनकापीत्यर्थः। स्वप्राणसं

पुरोग्रभस्मासुरघातकाले नरानुकारस्य हि काऽस्ति युक्तिः॥ मुनेश्च सत्तत्त्वविचारहेतोर्गतस्य मर्त्यानुकृतिः किमर्था ॥ २० ॥ मर्त्यानुकारोऽपि हि मर्त्यलोकं प्राप्तस्य युक्तो नरदृष्टिमार्गे॥ कैलासशैलं स्वजनस्य मध्ये विज्ञाप्य कृष्णोऽगमदागमच्च॥ २१ ॥ यदा स पुत्रं निजनाभिजातं कुशेशयात्प्राग् जनयांबभूव॥ तदा शिवः कुत्र वरस्य दाता तदीयकालांतरजन्मभूमिः ॥ २२ ॥

कटेस्वसामर्थ्यस्यसर्वैःप्रदर्शनीयत्वात्इतिभावः।किंचसन्समीचीनोयस्तत्त्वविचारस्त्रिष्वधीशेषुकोमहानितिविचारःतस्यहेतोःकारणात्तत्त्वविचारार्थमित्यर्थः। गतस्यकैलाससत्यवैकुंठलोकान्प्रतिगतस्यमुनेश्चभृगुमुनेश्चमर्त्यानुकृतिःमर्त्यस्यानुकारः किंअर्थःप्रयोजनंयस्याःसाकिमर्थातत्त्वविचारकालेतत्त्वस्यैवनिरूप णीयत्वेनमनुष्यवदनुकरणस्यानुचितत्वात्इतिभावः। मुनेःसर्वोत्तमतयाकेनापिमनुष्येणत्रिष्वधीशेषुकोमहानित्यनाशंकितत्वादितिभावः ॥२०॥ श्रीकृष्णस्य मर्त्यानुकरणंघटतइत्याह। मर्त्यानुकारोपीति। हियस्मात्मर्त्यानुकारोपिमर्त्यवन्नटनमपिमर्त्यलोकःतंप्राप्तस्यश्रीकृष्णस्ययुक्तःउचितः। तस्मात्कृष्णःस्वजनम ध्येनरदृष्टिरेवमार्गस्तस्मिन्विज्ञाप्यमयाकैलासंप्रतिगम्यतेतावत्पुरीयंरक्षणीयेत्याघोष्येत्यर्थः। कैलासएवशैलःपर्वतःतंअगमत्जगाम। आगमच्चआजगामच। विडंबनीयनराणांविद्यमानत्वात्कैलासयात्रानरविडंबनायकृतेतिवक्तुंयुक्तमितिभावः ॥ २१ ॥ श्रीकृष्णायपुत्रप्राप्तिरूपवरदानात्शिवस्यश्रीकृष्णाधिक्यं

भवत्वित्याशंकायामाह । यदेति। सःश्रीकृष्णःप्राक्पूर्वंआदिकालेइत्यर्थः।निजोयोनाभिस्तस्मात्जातंयत्कुशेशयंपद्मंतस्मात्यदापुत्रंब्रह्माणंजनयांबभूवजनयामास।योब्रह्माणंविदधातिपूर्वमितिश्रुतेः।तदातस्यचतुर्मुखस्यसंबंधितदीयंयत्फालांतरंललाटमध्यंतदेवजन्मभूमिःउत्पत्तेःस्थानंयस्यसतथोक्तः वरस्यदाताशिवः कुत्रक्वत्यःचतुर्मुखोत्पत्तिकालेतत्पुत्रस्यशिवस्याभावादितिभावः । तस्मात्स्वतएवपुत्रजननसमर्थस्यश्रीकृष्णस्यअसमर्थात्शिवात्वरदानमपिविडंबनार्थमितिभावः ॥२२॥ शिवस्यवरदानेअसामर्थ्यंदर्शयति । यद्वाहिनीभूतेति । यस्यश्रीकृष्णस्यवाहिनीभूतोवाहनभूतोयःगरुत्मान्गरुडःतस्यओजःवेगः पिनाकःपिनाकाख्यचापःपाणौयस्यसतथोक्तस्तंशिवंयुद्धेविद्रावयामास।तूर्णंगृहीत्वापाणिभ्यांविषाणेतस्यनंदिनः । सशूलपाणिंचिक्षेपवैनतेयोधनुःशतमितिभागवतवचनात् । तस्यतादृशस्यशिवस्यप्रसादोनुग्रहस्तस्मात्सःश्रीकृष्णःसुतंजगामप्रापेत्युक्तिःवचनंविद्वज्जनमाननीयान बुधैःआदरणीयानभवति। नहिविद्वांसःअसमर्थःसम

यद्वाहिनीभूतगरुत्मतोजो विद्रावयामास पिनाकपाणिम् ॥ तस्य प्रसादात्स सुतं जगामेत्युक्तिर्न विद्वज्जनमाननीया ॥ २३ ॥ मदन्यसेवैहिकमात्रदात्रीत्युदीरयन् सर्वसुराग्रगण्यः ॥ स्वपौत्रयात्रां विरचय्य सूनुमवाप पापौघतमिस्रभानुः ॥२४॥ आनंदांबुधिमग्नमूर्तिरुदयन्मोदाश्रुधाराजलं भर्त्रंघ्रौ प्रणिधाय कायकनकं कृष्णार्पितं याऽकरोत् ॥ या तद्गात्रहरिन्मणिं करवशं चक्रे दधार स्मरं या गर्भे कमलाऽविमुक्तकबरी कोऽर्थोऽनवाप्तोऽनया ॥ २५ ॥

र्थायवरंदत्तवानित्युक्तंसहंतइत्यर्थः॥२३॥तर्हिशिवद्वारंकिमर्थंगृहीतवानित्यतआह।मदन्येति।मदन्यसेवामदन्यदेवतापूजाइहभवंऐहिकंकेवलंऐहिकमात्रंतस्यदात्रीपुत्रपौत्रैहिकफलमात्रदायिनीनतुमत्पूजावन्मोक्षदात्रीत्युदीरयन्दृष्टांतमुखेनस्पष्टयन्सर्वसुराग्रगण्यःसकलदेवतोत्तमःपापौघएवतमिस्रंतस्यभानुरिवभानुःश्रीकृष्णःस्वपौत्रयात्रांविरचय्यकृत्वासूनुंप्रद्युम्नाख्यपुत्रंअवाप ।श्रीकृष्णेनपुत्रप्राप्त्यर्थंनशिवपूजाकृताशिवस्यस्वपौत्रत्वात्।नचपुत्रप्राप्तौप्रतिबंधकीभूतपापपरिहारायअवद्यगंधविदूरत्वात्।अतएवपापौघतमिस्रभानुरित्युक्तिः।किंतुशिवादिदेवतांतरपूजाऐहिकापुत्रादिफलदेतिप्रदर्शनायशिवमाराध्यततःपुत्रंलेभेइत्येवेत्युक्तंयुक्तमितिभावः ॥२४॥ प्रासंगिकंसमाप्यकुमारोदयंवर्णयति । आनंदांबुधिरिति । आनंदएवांबुधिःतस्मिन्मग्नामूर्तिःस्वरूपंयस्याःसातथोक्ताकृष्णदर्शनेने

तिसर्वांगेजातपुलकेत्यर्थः । श्रीकृष्णेनस्वगृहंप्रत्यागतेसतिसमुद्रेकृतस्नेहेत्यपिध्वनिः । अविमुक्ताअनिर्मुक्ताकबरीयस्याःसातथोक्तानित्यसुवासिनीत्वादिति भावः । याकमलालक्ष्म्यात्मिकारुक्मिणीउदयद्रुत्पद्यमानंयन्मोदाश्रुआनंदाश्रुतस्ययाधारातस्याजलंभर्त्रेग्रौश्रीकृष्णस्यांग्रौप्रणिधायसमर्प्यकायएवस्वदेह एवकनकंसुवर्णंतत्कृष्णार्पितंश्रीकृष्णस्यार्पणमकरोत् । यारुक्मिणीतस्यश्रीकृष्णस्ययद्गात्रंशरीरंतदेवहरिन्मणिःइंद्रनीलरत्नंतंकरवशोहस्ताधीनस्तंचक्रेस्वाधी नंचक्रेइत्यर्थः । यारुक्मिणीस्मरंकामंगर्भेदधार । अनयाकमलयारुक्मिण्याकोवार्थःपुरुषार्थःअनवाप्तःनलब्धः । सर्वोपिमनोरथःप्राप्तएवेत्यर्थः ॥ २५ ॥ गर्भमिति।गजवद्रम्यागतिःयस्याःसाअब्धिपुत्रीतन्वीकृशांगीरुक्मिणीमध्येस्वोदरेमनोज्ञःयोमदनःकामःसआत्मास्वरूपंयस्यसमनोज्ञमदनात्मकस्तंगर्भंस्वस्याः

गर्भं बभार गजरम्यगतिः स्वकांतान्मध्येमनोज्ञमदनात्मकमब्धिपुत्री ॥ हृद्यस्य योगचकिते हृदयंगम

स्य मर्त्यानुकारिचरितस्य तमेव तन्वी ॥ २६ ॥ मारं कुमारं सुषुवेऽथ भैष्मी शौरेर्जितारेरनुरूपरूपम् ॥

प्राचीव रोचिश्शतपूरिताशं प्राचां सुवाचां विषयं निशेशम् ॥ २७ ॥ यः कर्णे निजचिह्नमुन्नतशरा

न् दंतोष्ठदृग्दोःपदे स्वांगं मध्यतनौ भ्रुवोर्वरधनुर्मौर्वीं लसत्कुंतले ॥ माल्ये मंत्रिणमानने च सुहृदं वा

क्येऽर्पयित्वा शुकं तद्गात्रं रचयांबभूव स सुतस्तस्य स्मरोऽभूत् किल ॥ २८ ॥ कांतोभर्ताश्रीकृष्णःतस्मात्बभारदध्रे ।

हृदयंगमस्यमनोहरस्यमर्त्याननुकर्तुंशीलमस्यास्तीतिमर्त्यानुकारितादृशंचरितंकर्मयस्यसतथोक्तस्तस्य । अनृतौगर्भिणीचैवगत्वाचांद्रायणंचरेदितिस्मृतेः । मर्त्यवन्निषिद्धाचारमकुर्वतइत्यर्थः । श्रीकृष्णस्यअयोगचकितंविरहेणभीतंतस्मिन्हृदिमनस्यपितमेवकामरूपमेवगर्भंबभार । गर्भधारणानंतरंसंभोगस्यनिषि द्धत्वात्स्वयमपिमर्त्यानुकारिचरितारुक्मिणीसदाश्रीकृष्णसंगममेवकामयमानातिष्ठतीत्यर्थः ॥ २६ ॥ मारमिति । अथअनंतरंभैष्मीरुक्मिणीजितारेःजितशत्रोः शौरेःश्रीकृष्णस्यअनुरूपंअनुगुणंरूपंयस्यसतथोक्तस्तंमारंबालकंसुषुवे । प्राचीदिक्रोचिषांकिरणानांयच्छतंतेनपूरिताःआशाःदिशोयेनसतथोक्तःतं प्राचां प्राचीनकवीनांसुवाचांवर्णानांविषयभूतंनिशेशंचंद्रमिवसुषुवे ॥ २७ ॥ यइति । यःस्मरः कर्णःश्रीकृष्णकर्णःतस्मिन्निजंचतच्चिह्नंचतत्स्वध्वजलांछनंमकरमि

त्यर्थः । कृष्णस्यमकरकुंडलत्वादित्यर्थः।अर्पयित्वानिधायउन्नतशरानूउत्तमशरान्मल्लिकाचूतेंदीवरारविंदाशोकाख्यानूबाणानूक्रमातूदंताश्चओष्ठौचदृशौचदोषश्चपदेचदंतोष्ठदृग्दोःपदंतस्मिनू।द्वंद्वश्चप्राणितूर्यसेनांगानामित्येकवद्भावः। अर्पयित्वादंतादीनांमल्लिकाकुड्मलादिसदृशत्वादितिभावः। मध्याचसातनुश्चतस्यांमध्यतनौस्वांगंशरीरंततूअर्पयित्वामध्यस्यातिसूक्ष्मत्वाभिप्रायेणअनंगस्यकामस्यश्रीकृष्णमध्येकामांगसमर्पणोक्तिः । भ्रुवोःवरधनुःअर्पयित्वेतिप्रत्येकंसंबंधः भ्रूमंडलस्यधनुराकारत्वादितिभावः । लसन्यःकुंतलःतस्मिनूमौर्वींभृंगमयींकुंतलानांअन्योन्यभृंगाकारत्वादितिभावः। अर्पयित्वा माल्येवनमालायां वनमालायाःनानाकुसुमकारित्वादितिभावः । मंत्रिणंकाममंत्रिणंवसंतंअर्पयित्वा आननेसुहृदंकाममित्रंचंद्रंअर्पयित्वा मुखस्यचंद्राकारत्वादितिभावः। वाक्येशुकंकीरमर्पयित्वाश्रीकृष्णस्यशुकवन्मधुरवचनत्वादितिभावः। तद्वात्रंश्रीकृष्णशरीरंरचयांबभूव सःस्मरःकामःतस्यश्रीकृष्णस्यसुतोऽभूतूकिल ध्वजशरादि

तारुण्यलावण्यसुवीर्यधैर्यकारुण्यमुख्यद्रविणैः प्रकृष्टः ॥ प्रद्युम्ननामार्थमसौ कुमारः प्रद्युम्नमुख्यांशयुतः
पिपर्ति ॥ २९ ॥ स रुक्मवत्यां किल रुक्मिपुत्र्यां हरेः सुतोऽजीजनदात्मजातम् ॥ असूत तं याऽमलहे
मकल्पमसौ स्वनामोचितमेव बभ्रे ॥ ३० ॥

स्वसन्नाहमुपादानीकृत्यकृष्णशरीरंकृतवतोमदनस्यकृष्णपुत्रत्वमनुचितं प्रत्युतवैपरीत्यस्यैवोचितत्वातूइतिकिलशब्दार्थः । कामसर्वसन्नाहवर्णनस्यकृष्णांगवर्णनस्यचयुगपदेवकृतत्वादितिचमत्कारोयम् ॥ २८ ॥ तारुण्येति । तारुण्यंतरुणत्वंतच्चलावण्यंसुंदरत्वंतच्चसुवीर्यंचधैर्यंचकारुण्यंचतानिमुख्यानियेषांतानितथोक्तानिद्रविणानिद्रव्याणितैःप्रकृष्टःश्रेष्ठःप्रद्युम्नस्यप्रद्युम्ननामकस्यविष्णोः मुख्यांशयुक्तःअसौकुमारःप्रद्युम्ननामार्थंप्रकृष्टंद्युम्नंद्रविणंयस्यसःप्रद्युम्नःप्रद्युम्नइतियन्नामतस्ययोर्थःयोगवृत्त्याभिहितोर्थः तंपिपर्तिपालयति । पॄपालनपूरणयोः । तारुण्यादिप्रकृष्टद्रव्योपेतत्वात्प्रद्युम्नांशयुतत्वाच्चास्यप्रद्युम्ननामान्वर्थमित्यर्थः ॥ २९ ॥ सइति । सःहरेःसुतःप्रद्युम्नःरुक्मिणःभीष्मकसुतस्यरुक्मिनामकस्यपुत्र्यांरुक्मवत्यांरुक्मवत्याख्यायांआत्मनःशरीराज्जातःआत्मजातःपुत्रस्तंअजीजनतूजनयामास। यारुक्मवतीअमलंशुद्धंयद्धेमसुवर्णंतस्यकल्पःसमानःतंसुतंअसूतप्रसूतवती। असौरुक्मवतीस्वस्यनामस्वनामरुक्मवतीतिस्वनामधेयंउचितंरुक्ममस्याअस्तीतिरुक्मवतीत्यन्वर्थंबभ्रे ॥ ३० ॥

सपत्नेतिआजौयुद्धेसपत्नसैन्यानिशत्रूणांसैन्यानितैः अनिरुद्धंअनिवारितंसदाआश्रितानांअभीप्सितानिअभीष्टानियानिवित्तानितेषांयःराशिःतस्ययत्प्रदानंतस्य यःकालःतस्मिन्नपिअन्यैःअनिरुद्धःअतएवयंकुमारमनिरुद्धसंज्ञंआमनंतिवदंतिअनेनशत्रुभिर्नेनिरुध्यतइतिवादानकालेअन्यैःननिरुध्यतइत्यनुरुद्धइत्युक्तंभव ति॥३१॥उषेति। सोनिरुद्धःउषेतिअभिधानामयस्याःसातस्यांभार्यायां वैरिणएवनगाःपर्वताःतेषामोघःसमूहःतस्यवज्रइववज्रस्तंअतएववज्रइतिसंज्ञायस्यस तथोक्तः तंसुतंउदयश्चासौअद्रिश्चउदयाद्रिःउदयाख्यपर्वतइत्यर्थः। उषसिउषःकालेतमसोंधकारस्यसमुन्मूलनंविनाशोयस्मात्सतथोक्तस्तमुज्ज्वलंतंप्रकाश मानंअशीताःउष्णाःअंशवोयस्यसतमिवसूर्यमिवेत्यर्थः। अजीजनज्जनयामास ॥३२॥ यइति। यःश्रीकृष्णःक्षितौपृथ्वीपतीनांराज्ञांयानिमौलिरत्नानिकिरीटर

सपत्नसैन्यैरनिरुद्धमाजौ यमामनंति ह्यनिरुद्धसंज्ञम्॥ सदाश्रिताभीप्सितवित्तराशिप्रदानकालेऽप्यनिरु
द्धमन्यैः॥ ३१ ॥ उषाभिधायां स च वज्रसंज्ञमजीजनद्वैरिजनौघवज्रम्॥ तमःसमुन्मूलनमुज्ज्वलंतं उ
षस्यशीतांशुमिवोदयाद्रिः ॥ ३२ ॥ यः पृथ्वीपतिमौलिरत्नघटितश्रीपादपीठः क्षितौ यः स्वर्गीश्वर
फालमंडनकरश्रीपादरेणुर्दिवि ॥ यः श्रेयःपथपांथसज्जनमनःपाथेयगेयोदयस्तस्य द्वारवती पुरी प्रियत
मा सेयं बभूवाऽसमा॥ ३३॥ मध्येसमुद्रं मणिमंजुमौलिविद्योतिताशादशकः स देवः॥ अद्यापि भैष्म्या
सह भासयंस्तामाद्यः पुमानार्यवृतः किलाऽऽस्ते॥ ३४ ॥

त्नानितैःघटितेसंघृष्यमाणेपादपीठेपादुकेयस्यसतथोक्तः समस्तपृथ्वीपतिभिर्नमस्कृतइत्यर्थः। यःदिविस्वर्गेस्वर्गीश्वराणांदेवश्रेष्ठानांयानिफालानिललाटानिते षांयत्मंडनंअलंकारस्तत्करोतीतितथोक्तःतादृशःश्रीपादरेणुःयस्यसतथोक्तः देवैरपिनमस्कृतइत्यर्थः। यःश्रेयएवपंथाःश्रेयःपथःमोक्षमार्गइत्यर्थः। तस्ययेपां थाःपथिकाःतेचतेसज्जनाश्चतेषांयन्मनःतस्यपथःसंबंधिपाथेयंपथिगमनसमयेस्वभोजनार्थंविक्रेयद्रव्यमित्यर्थः। पाथेयभूतोगेयोदयोयस्यसतथोक्तः। मो क्षमार्गनिरतैःसद्भिर्गेयइत्यर्थः। तस्यश्रीकृष्णस्यअसमाअसदृशीपुरीसेयंद्वारवतीप्रियतमाबभूव ॥ ३३ ॥ मध्येसमुद्रमिति। मणिभिःमंजुर्मनोहरोयोमौलिः किरीटंतेनविद्योतितंआशादशकंदिग्दशकंयस्यसतथोक्तःआद्यःपुराणःपुमान्पुरुषःआर्यैःश्रेष्ठैःऋष्यादिभिर्वृतःयुक्तः। सः देवःश्रीकृष्णःअद्यापिअधुनापिसमुद्र

स्यमध्येमध्येसमुद्रंसमुद्रस्यमध्यइत्यर्थः । पारेमध्येषष्ठ्यावेतिसमासः । तांद्वारकांभासयन्भैष्म्यारुक्मिण्यासहआस्तेतिष्ठति द्वारावत्यांअद्यापिश्रीकृष्णो रुक्मिण्यासहतिष्ठतीतिपौराणिकीकथा ॥ ३४॥कुशस्थलीति शरीरिणांसर्वैयेपुमर्थाःधर्मादिपुरुषार्थाःतेषांसार्थःसमूहःतंकरोतीतिसर्वपुमर्थसार्थकरीकुशलैःस ज्जनैःएकगम्या मुख्यगम्या प्रथितापुराणादिषुप्रसिद्धाप्रशस्ताउत्तमाकीर्तिर्यस्यसतथोक्तःतस्यश्रीकृष्णस्यसेयंकुशस्थलीद्वारवतीमदंतरंगंमन्मानसंतस्मिन्नूनं रीनर्तुंनृत्यतु सदाध्यानगोचरास्त्वित्यर्थः ॥ ३५ ॥ वंदारुद्विजेति । वंदारवोवंदनशीलाःयेद्विजवर्याःद्विजश्रेष्ठाःतैर्वांछितंयत्निजध्यानंश्रीकृष्णस्यध्यानंतस्य याक्षमाभूमिःतस्याःद्वारकायाःशंसुखंकरोतीतिशंकरः । स्वःस्वर्गेयेवाग्मिनोबृहस्पत्यादयःतेषांव्रजःसमूहःतेनवर्ण्यानितानिचतानिदिक्षुवितति‌र्विस्तारःतांकुर्वं तीतिदिग्विततिकृंतिदिक्षुविस्तृतानीत्यर्थः । तानिचतानिकर्माणिचतेषामोघाःसमूहाःतैराजन्करोऽस्यास्तीतिस्ववाग्मीव्रजवर्ण्यदिग्विततिकृत्कर्मौघराजत्करी । रुद्राणीपतिनापार्वतीपतिनाशिवेनमान्याराजितगतिःशोभितगतिःकैलासयात्रायस्यसतथोक्तः । सत्यासत्यभामासहायायस्यसतथोक्तः । सतांवरदःश्रीकृष्णः

**कुशस्थली सा कुशलैकगम्या प्रशस्तकीर्तेः प्रथिता पुरीयम् ॥ शरीरिणां सर्वपुमर्थसार्थकरी नरीनर्तु मदं तरंगे ॥३५॥ वंदारुद्विजवर्यवांछितनिजध्यानक्षमाशंकरः स्ववाग्मिव्रजवर्ण्यदिग्विततिकृत्कर्मौघराजत्करी ॥ रुद्राणीपतिमान्यराजितगतिः सत्यासहायःसतां तां रेमे वरदः स्वबंधुरुचिरां रक्षन् पुरीमद्भुताम् ॥३६॥**

स्वबंधुभिर्यादवैःरुचिरांअद्भुतांआश्चर्यभूतांपुरींरक्षन्रेमे ॥ चक्रबंधोयं श्लोकः । अस्मिन् श्लोकेवादिराजकृतिःरुग्मिणीशजयइतिकविनामकाव्यनामचास्तीतिद्रष्टव्यं । चक्रबंधोद्धारप्रकारस्तुमंडलाकारेणैकांरेखांलिखित्वामध्येपश्चिमभागस्थ रेखामाश्रित्यपूर्वभागस्थरेखापर्यंतंपूर्वस्यांरेखाद्वयंमध्येयथावीथीभवतितथालिखेत् । तथोत्तरस्थभागस्थरेखामारभ्यदक्षिणस्यांरेखाद्वयंदक्षिणभागस्थित रेखापर्यंतंयथावीथीभवतितथालिखेत् । तथावायव्यदिग्भागस्थितरेखामारभ्यआग्नेयदिग्भागस्थितरेखापर्यंतंदीर्घाकारेणरेखाद्वयंपूर्ववल्लिखेत् । एवंवीथी त्रयलेखनेषट्कोणचक्राकारताभवति । तत्रैकस्यांवीथ्यांएकोनविंशतिर्गृहाणियथाभवंतितथातिर्यग्रेखालिखेत् । तथाचक्रमध्येगृहमेकंसाधारणंमध्येविहा यअष्टादशगृहाणिभवंति । तत्रपुरोभागस्थितवीथीमारभ्यप्रादक्षिण्येनएकैकस्यांवीथ्यांएकैकस्मिन्गृहेएकैकाक्षरमित्येकोनविंशत्यक्षरात्मकंपादंलिखेत् ।

चक्रमध्यगृहाक्षरंपादत्रयस्यापिसाधारणमेकमेवभवेत् । अंत्यपादाक्षराणिवीथीत्रयस्याद्यंतयोरक्षराणिषड्विहायषट्सुकोणेषुद्वेद्वेलिखेत् । इत्यष्टादशाक्षराणिभवंति ।अंत्यपादस्याद्याक्षरमेवतदारभ्यगणनायांअंत्याक्षरमपिभवति।एवमेकोनविंशत्यक्षरात्मकंपादंभवेत् । एवंचक्रोद्धारेवीथीत्रयस्यप्रादक्षिण्यक्रमेणतृतीयतृतीयगृहगताक्षराणिसप्तदशसप्तदशगृहगताक्षराणिरुग्मिणीशजयइतिकाव्यनामात्मकानिभवंति । अष्टमाष्टमगृहगतानिद्वादशद्वादशगृहगतानिअक्षराणिवादिराजकृतिरितिकविनामात्मकानिभवंतीतिद्रष्टव्यम् ॥ ३६ ॥ कृष्णस्येति । कृष्णस्यउदयःउत्पत्तिःतस्यवर्णनानितैःअलौकिकाकारेणायमुदितोनतुलौकिकोबालइतिएवमादिवर्णनैःकृष्णस्यसुचरितानांनवनीतचौर्यादीनांस्तोमःसमूहःतस्यस्तवाःस्तुतयःतैःकृष्णस्यसूक्तिभिःसमीचीनवचनैःकृष्णस्यसुश्लोकाःशोभनयशांसितैःसुश्लोकैःसुभगामनोहरा । काव्यपक्षे केषुचित्सर्गेषुकृष्णस्योदयवर्णनैःश्रीकृष्णस्य ावतारवर्णनैःसुभगामनोहराकेषुचित्सर्गेषुसुचरितस्तोमस्त

कृष्णस्योदयवर्णनैः सुचरितस्तोमस्तवैः सूक्तिभिः सुश्लोकैः सुभगा रसैश्च विविधैः स्वानंदसर्गैर्वृता ॥
दुष्टागम्यनिजार्थतोषितखगा अस्याः कृतेर्वैखरीं बिभ्राणेव विभाति विठ्ठलपुरी विष्वक् सुवर्णोज्ज्वला ॥ ३७ ॥

वैःपूतनावधमारभ्यरुक्मिणीविवाहकुमारोदयपर्यंतंसुचरितानांसुचरित्राणांस्तोमस्यसमूहस्यस्तवैःसुभगामनोहरा सूक्तिभिःउत्प्रेक्षाद्यलंकारभरितवचनैःसुभगासुश्लोकैरनुप्रासाद्यलंकारभरितपद्यैःसुभगासुसमीचीनःआनंदःसुखंतस्यसर्गःउत्पत्तिःयेभ्यःतेतथोक्ताःविविधैःरसैःमधुरादिरसैर्वृत्ता । काव्यपक्षेविविधैःरसैःशृंगारादिभिःशोभनःआनंदोयेभ्यस्तेस्वानंदाःतेचतेसर्गाःपरिच्छेदाश्चतैर्वृतायुक्ता । दुष्टैर्दुर्जनैःअगम्याःअप्राप्याःयेनिजार्थाःस्वोपवनादिषुविद्यमानफलादिपदार्थास्तैस्तोषिताःखगाःपक्षिणोययासातथोक्ता । काव्यपक्षे । दुष्टैरव्युत्पन्नैरगम्याःज्ञातुमशक्याःनिजार्थाःस्वकीयशब्दार्थाःतैःतोषिताःखेआकाशेगच्छंतीतितेखगाःदेवाःययासातथोक्ताविष्वक्समंतात् सुवर्णेनहेम्नाउज्ज्वला । काव्यपक्षेतु । समीचीनाःयेवर्णाःअक्षराणितैरुज्ज्वला । साविठ्ठलपुरीश्रीकृष्णपुरीद्वारवतीअस्याःकृतेःकाव्यस्यवैखरींप्रौढींबिभ्राणेवविभाति ॥ ३७ ॥

एवंसमापितकाव्यः कविकुलाग्रेसरोवादिराजमुनिःस्वकृतस्यकाव्यस्यनायकीनायकौप्रदर्शयन्समुपादेयतामाह । यस्मिन्निति।यस्मिन्काव्येमंगलानांदेवताअभिमानीदेवता।मंगलदेवताअखिलजगन्मातारमारुक्मिणीनायकी।पद्मालक्ष्मीःसाचपद्मभवोब्रह्मासचतौआदीयेषांतेतथोक्ताः तेचतेदेवाश्चतैःसेव्यौचरणौयस्य सतथोक्तः । तस्यारुक्मिण्याःवल्लभः । प्रियःश्रीकृष्णःनायकः । अश्वग्रीवस्यहयग्रीवस्यदयाकृपासैवपयोब्धिःक्षिरसमुद्रःतेनफलितानिउत्पन्नानियानिअग्र्योक्तिरत्नानितैरुज्ज्वलंशोभमानंतस्यहयग्रीवस्यदासाःश्रीमध्वाचार्यादयःतेषामनुगोभृत्यस्तेनरचितंतत्काव्यंबुधैविद्वद्भिःभाव्यंउपादेयंप्रतिपाद्यं । नायकीनायकयोरत्युत्तमत्वात्कवेर्वैष्णवाग्रेसरत्वात्तत्कृतंकाव्यंविद्वद्भिरुपादेयंभवेदित्यर्थः ॥ ३८ ॥ इदानींकविःकाव्यकर्तास्वस्यकाव्यनायकादभीप्सितफलंप्रार्थयतेकृष्णइति। प्रभुःकाव्यनायकःश्रीकृष्णः । काव्यंकृतवानितिकाव्यकृत्तस्मैकाव्यकृतेमह्यंस्वस्ययोहस्तः सएवकमलंतदेवच्छत्रंतत्प्रदद्यात् । स्वहस्तकमलंमच्छिरसिनिदध्यादित्यर्थः । सत्निर्दोषंयच्छास्त्रंवेदांतशास्त्रमित्यर्थः । तदितिअभिधानामयस्यतत्तथोक्तंयद्रम्यराज्यंतदेवपदवीपदंतां सुशोभनंचतत्ज्ञानं

**यस्मिन्मंगलदेवताखिलजगन्माता रमा नायकी पद्मापद्मभवादिसेव्यचरणस्तद्वल्लभो नायकः॥अश्वग्रीवदयापयोब्धिफलितप्राग्र्योक्तिरत्नोज्ज्वलं तद्दासानुगवादिराजरचितं काव्यं विभाव्यं बुधैः॥३८॥कृष्णः काव्यकृते स्वहस्तकमलच्छत्रं प्रदद्यात्प्रभुः सच्छास्त्राभिधरम्यराज्यपदवीं सुज्ञानयानं मुदा॥स्वांघ्र्याराधनकंकणं करयुगे कैंकर्यहारं गले स्वात्मानं हृदि नित्यचिंतनधनं सद्युक्तिरत्नान्यपि॥३९॥हंसानां हृदयंगमं कविलसद्भृंगादृतं मौक्तिकप्रख्याग्र्योक्ति नवं प्रबंधजलजं पादेऽर्पितं स्याद्धरेः॥ लक्ष्मीरम्यकरे वरामरततेः सन्मानसे शारदानंदं तत्पवनः स्वहृत्कृतगुणं विस्तारयत्वंजसा ॥४०॥**

चसुज्ञानंतदेवयानमांदोलिकातत्करयुगंहस्तयुगंतस्मिन्स्वांघ्र्याराधनमेवकंकणंरत्नखचितकटकंतत्गलेकंठे किंकरस्यभावःकैंकर्यंतदेवहारःतंदास्यरूपकंठमालामित्यर्थः । हृदिस्वात्मानंनित्यंयच्चिंतनंध्यानंतदेवधनंसदाध्यानलक्षणमित्यर्थः । सत्योनिर्दुष्टाःयाःयुक्तयःताएवरत्नानितान्यपिश्रीहरिसर्वोत्तमत्वसाधकयुक्तिरत्नान्यपित्यर्थः । मुदाप्रदद्यात् । प्रदद्यादितिप्रत्येकंसंबंधः ॥ ३९ ॥ इदानींस्वकृतंकाव्यंश्रीपरिवारसहितकृष्णार्पितंकुर्वन्काव्यस्यप्रचयंप्रार्थयते । हंसानामिति । नवंअपर्युषितंछायापहाररहितमित्यर्थः । हंसानांपरमहंसानांहृदयंगमंहरिविषयकत्वात्परमहंसप्रियमित्यर्थः । कमलमपिहंसपक्षिप्रियं । कव

यएवज्ञानिनएवलसद्भृंगाःलसद्भ्रमराःतैरादृतंसत्कृतंमौक्तिकानांमुक्ताफलानांप्रख्याःसमानाःअग्र्योक्तयःउत्तमोक्तयोयस्यतन्मौक्तिकप्रख्याग्र्योक्ति कमलं आप । मुक्ताफलजन्मभूमित्वात् । मौक्तिकोपेतंप्रबंधमेवकाव्यमेवजलजंकमलंहरेःश्रीकृष्णस्यपादेचरणेअर्पितंसमर्पितंस्यात् । कमलेनश्रीहरिचरणार्चनस्योचितत्वादितिभावः । जलाज्जातमितिव्युत्पत्तेःजलजमितिवदतास्वगर्वपरिहारोद्योत्यते । पुनश्चलक्ष्म्याःयःरम्यकरस्तस्मिन्नर्पितंस्यादितिसंबंधः । इदंप्रबंधजलजंलक्ष्मीपरिगृह्णात्वित्यर्थः । लक्ष्मीकरस्यपद्मयोग्यस्थानत्वादितिभावः । अनंतरंवरामरततेःउत्तमब्रह्मादिदेवसमूहस्यसच्चतन्मानसंतस्मिन्समीचीनमनस्यर्पितंस्यादित्यन्वयः । मानसेसरोवरेकमलावस्थितेरौचित्यादितिभावः । ब्रह्मादयोदेवाःइदंकाव्यंस्वमनस्यानीयसंतोषंकुर्वंत्वित्यर्थः । वागभिमानित्वात् विशिष्यसरस्वतीपरियाह्यत्वंमुख्यप्राणमतानुवर्त्तित्वात्तेनप्रचयंप्रार्थयमानआह । शारदेत्यादिना । पवनःमुख्यप्राणःशारदायाःसरस्वत्याःआनंदोयस्मात्तच्छार

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि प्रेम्णा चिंतयतां विचित्रविमलश्लाघ्यार्थसंदायिनि ॥
संजाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते सर्गोऽभूत्सुरमंडलीषु सुतरामेकोनविंशो मुदाम् ॥
॥४१॥ इति श्रीमद्वादिराजतीर्थपूज्यचरणविरचिते रुक्मिणीशविजये महाकाव्ये एकोनविंशः सर्गः॥१९॥

दानंदंशरदिशरत्कालेभवःशारदःआनंदोयस्मादितिशारदानंदमितिकमलपक्षेस्वस्यमुख्यप्राणस्ययत्हृत्अभिप्रायःतस्मिन्कृताःगुणाःयस्मिन्ततस्वाभीप्सितविष्णुसर्वोत्तमत्वप्रतिपादनरूपगुणप्रतिपादकंइत्यर्थः । कमलपक्षेस्वहृदिस्वांतभागेकृतःस्थापितःगुणःसौरभादिगुणोयेनततूकाव्यजलजंअंजसासम्यक्विस्तारयतु । यथावायुःकमलोदरस्थसौरभ्यगुणंसंगृह्यदिक्षुविस्तारयतितथाश्रीमुख्यप्राणःएतत्काव्यंविस्तारयत्वित्यर्थः । हरिचरणसमर्पणानंतरंलक्ष्म्यादीनांप्रियत्वोक्तेःतेषांतदासंतोषोपिसूचितमितिसर्वमवदातम् ॥ ४० ॥ रोम्णामिति । सुरमंडलीषुमुदांएकोनविंशःसर्गरूपःसर्गःअभूदित्यर्थः ॥ ४१ ॥ इतिश्रीरुक्मिणीशविजयस्यटीकायांनारायणभट्टेनविरचितायांभावप्रकाशिकायामेकोनविंशःसर्गःसमाप्तः ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥

